स्वस्तिको दक्षिणं पादं वामपादं तु कुञ्चितम् ।
प्राञ्जलीकृतदोर्युग्मं गरुडं हरिवल्लभम् ॥

अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः ।
तक्षकः कटिसूत्रं तु हारः कार्कोट उच्यते ॥

पद्मो दक्षिणकर्णे तु महापद्मस्तु वामके ।
शङ्खः शिरःप्रदेशे तु गुलिकस्तु भुजान्तरे ॥

पाण्डुकालिकनागाभ्यां चामराभ्यां सुवीजितम् ।
एलापुत्रकनागाद्यैः सेव्यमानं मुदाऽन्वितम् ॥

कपिलाक्षं गरुत्मन्तं सुवर्णसदृशप्रभम् ।
दीर्घबाहुं बृहत्स्कन्धं नागाभरणभूषितम् ॥

आजानुतः सुवर्णाभमाकट्योस्तुहिनप्रभम् ।
कुङ्कुमारुणमाकन्धं शतचन्द्रनिभाननम् ॥

नीलाग्रनासिकावक्त्रं सुमहच्चारुकुण्डलम् ।
दंष्ट्राकरालवदनं किरीटमुकुटोज्ज्वलम् ॥

कुङ्कुमारुणसर्वाङ्गं कुन्देन्दुधवलाननम् ।
विष्णुवाह नमस्तुभ्यं क्षेमं कुरु सदा मम ॥

एवं ध्यायेत्त्रिसंध्यासु गरुडं नागभूषणम् ।
विषं नाशयते शीघ्रं तूलराशिमिवानलः ॥ ५

ओं ईं ओं नमो भगवते श्रीमहागरुडाय पक्षीन्द्राय विष्णुवल्लभाय त्रैलोक्यपरिपूजिताय उग्रभयंकरकालानलरूपाय वज्रनखाय वज्रतुण्डाय वज्रदन्ताय वज्रदंष्ट्राय वज्रपुच्छाय वज्रपक्षालक्षितशरीराय ओमीमेह्येहि श्रीमहागरुडाप्रतिशासना-स्मिन्नाविशाविश दुष्टानां विषं दूषय दूषय स्पृष्टानां विषं नाशय

नाशय दन्दशूकानां विषं दारय दारय प्रलीनं विषं प्रणाशय प्रणाशय सर्वविषं नाशय नाशय हन हन दह दह पच पच भस्मीकुरु भस्मीकुरु हुं फट् स्वाहा ।। ७

चन्द्रमण्डलसंकाश सूर्यमण्डलमुष्टिक ।
पृथ्वीमण्डलमुद्राङ्ग श्रीमहागरुड विषं हर हर हुं फट् स्वाहा ।।

ओं क्षिप स्वाहा ।। ८ (गरुडपञ्चाक्षरी ।)

ओमीं स चरति स चरति तत्कारि मत्कारि विषाणां च विषरूपिणी विषदूषिणी विषशोषणी विषनाशिनी विषहारिणी हतं विषं नष्टं विषमन्तः प्रलीनं विषं प्रनष्टं विषं हतं ते ब्रह्मणा विषं हतमिन्द्रस्य वज्रेण स्वाहा ।। ९

ओं नमो भगवते महागरुडाय विष्णुवाहनाय त्रैलोक्यपरिपूजिताय वज्रनखवज्रतुण्डाय वज्रपक्षालंकृतशरीराय एह्येहि महागरुड विषं छिन्धि छिन्धि आवेशयावेशय हुं फट् स्वाहा ।। १०

सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दांस्यङ्गानि धिष्णियाः शफा यजूंषि नाम । सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत ।। ११

ओं ईं ब्रह्मविद्याममावास्यायां पुरोवाच स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं प्रणष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ।। १२

तत् सत्यम् । यद्यनन्तकदूतोऽसि यदि वाऽनन्तकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी

हतं विषं नष्टं विषं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १३

यदि वासुकिदूतोऽसि यदि वा वासुकिः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १४

यदि तक्षकदूतोऽसि यदि वा तक्षकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १५

यदि कर्कोटकदूतोऽसि यदि वा कर्कोटकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १६

यदि पद्मकदूतोऽसि यदि वा पद्मकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १७

यदि महापद्मकदूतोऽसि यदि वा महापद्मकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १८

यदि शङ्खकदूतोऽसि यदि वा शङ्खकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी

हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १९

यदि गुलिकदूतोऽसि यदि वा गुलिकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २०

यदि पौण्ड्रकालिकदूतोसि यदि वा पौण्ड्रकालिकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २१

यदि नागकदूतोऽसि यदि वा नागकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २२

यदि लूतानां प्रलूतानां यदि वृश्चिकानां यदि घोटकानां यदि स्थावरजङ्गमानां स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २३

अनन्तवासुकितक्षककर्कोटकपद्मकमहापद्मकशङ्खक-गुलिकपौण्ड्रकालिकनागक इत्येषां दिव्यानां महानागानां महानागादिरूपाणां विषतुण्डानां विषदन्तानां विषदंष्ट्राणां विषाङ्गानां विषपुच्छानां विश्वचाराणां वृश्चिकानां लूतानां प्रलूतानां मूषिकाणां गृहगौलिकानां गृहगोधिकानां घ्रणासानां गृहगिरि-गह्वरकालानलवल्मीकोद्भूतानां तार्णानां पार्णानां

काष्ठदारुवृक्षकोटररतानां मूलत्वग्दारुनिर्यासपत्रपुष्पफलोद्भूतानां दुष्टकीटकपिश्वानमार्जारजम्बूकव्याघ्रवराहाणां जरायुजाण्डजोद्भिज्जस्वेदजानां शस्त्रबाणक्षतस्फोटव्रण महाव्रणकृतानां कृत्रिमाणामन्येषां भूतवेतालकूष्माण्डपिशाचप्रेतराक्षसयक्षभयप्रदानां विषतुण्डदंष्ट्राणां विषाङ्गानां विषपुच्छानां विषाणां विषरूपिणी विषदूषिणी विषशोषिणी विषनाशिनी विषहारिणी हतं विषं नष्टं विषमन्तःप्रलीनं विषं प्रणष्टं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ।। २४

य इमां ब्रह्मविद्याममावास्यायां पठेच्छृणुयाद्वा यावज्जीवं न हिंसन्ति सर्पाः । अष्टौ ब्राह्मणान् ग्राहयित्वा तृणेन मोचयेत् । शतं ब्राह्मणान् ग्राहयित्वा चक्षुषा मोचयेत् । सहस्रं ब्राह्मणान् ग्राहयित्वा मनसा मोचयेत् । सर्पान् जले न मुञ्चन्ति । तृणे न मुञ्चन्ति । काष्ठान् मुञ्चन्तीत्याह भगवान् ब्रह्मेत्युपनिषत् ।। २५

# १४.सीतोपनिषत्

(अथर्वणवेदीया)

भद्रं कर्णेभिः-इति शान्तिः

सीताया मूलप्रकृतित्वम्

देवा ह वै प्रजापतिमब्रुवन् का सीता किं रूपमिति ।। १

स होवाच प्रजापतिः सा सीतेति-

मूलप्रकृतिरूपत्वात् सा सीता प्रकृतिः स्मृता ।
प्रणवप्रकृतिरूपत्वात् सा सीता प्रकृतिरुच्यते ।। २

सीता इति त्रिवर्णात्मा साक्षान्मायामया भवेत् ।
विष्णुः प्रपञ्चबीजं च माया ईकार उच्यते ।। ३

सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते।
तकारस्तारलक्ष्म्या च वैराजः प्रस्तरः स्मृतः ॥ ४

सीताया व्यक्ताव्यक्तस्वरूपम्

ईकाररूपिणी सोमाऽमृतावयव देव्यलंकारस्रङ्मौक्तिकाद्या-भरणालंकृता महामायाऽव्यक्तरूपिणी व्यक्ता भवति ॥ ५ ॥ प्रथमा शब्दब्रह्ममयी स्वाध्यायकाले प्रसन्ना। उद्भवा नरकात्मिका द्वितीया भूतले हलाग्रे समुत्पन्ना। तृतीया ईकाररूपिणी अव्यक्तस्वरूपा भवतीति सीता इत्युदाहरन्ति शौनकीये ॥ ६

श्रीरामसान्निध्यवशाज्जगदाधारकारिणी।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥ ७

सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता।
प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ इति ॥ ८

अथातो ब्रह्मजिज्ञासेति च ॥ ९ ॥ सेयं सर्ववेदमयी सर्वदेवमयी सर्वलोकमयी सर्वकीर्तिमयी सर्वधर्ममयी सर्वाधारकार्यकारणमयी महालक्ष्मीर्देवेशस्य भिन्नाभिन्नरूपा चेतनाचेतनात्मिका ब्रह्मस्थावरात्मा तद्गुणकर्मविभागभेदात् शरीररूपादेवर्षिमनुष्यगन्धर्वरूपा असुरराक्षसभूतप्रेतपिशाचभूतादि भूतशरीररूपा भूतेन्द्रियमनःप्राण-रूपेति विज्ञायते ॥ १०

सा देवी त्रिविधा भवति शक्त्यात्मना इच्छाशक्तिः क्रियाशक्तिः साक्षाच्छक्तिरिति ॥ ११

इच्छाशक्तिस्त्रिविधा भवति श्रीभूमिनीलाऽऽत्मिका भद्ररूपिणी प्रभावरूपिणी सोमसूर्याग्निरूपा भवति ॥ १२

सोमात्मिका ओषधीनां प्रभवति कल्पवृक्षपुष्पफललता-गुल्मात्मिका औषधभेषजात्मिका अमृतरूपा देवानां महस्तोमफलप्रदा

अमृतेन तृप्तिं जनयन्ती देवानामन्नेन पशूनां तृणेन तत्तज्जीवानाम् ॥ १३

सूर्यादिसकलभुवनप्रकाशिनी दिवा रात्रिः कालकलानिमेषमारभ्य घटिकाऽष्टयामदिवसवाररात्रिभेदेन पक्षमासर्त्वयनसंवत्सरभेदेन मनुष्याणां शतायुःकल्पनया प्रकाशमाना चिरक्षिप्रव्यपदेशा निमेषमारभ्य परार्धपर्यन्तं कालचक्रं जगच्चक्रमित्यादिप्रकारेण चक्रवत् परिवर्तमाना। सर्वस्यैतस्यैव कालस्य विभागविशेषाः प्रकाशरूपाः कालरूपा भवन्ति ॥ १४

अग्निरूपा अन्नपानादि प्राणिनां क्षुत्तृष्णाऽऽत्मिका देवानां मखरूपा वनौषधीनां शीतोष्णरूपा काष्ठेष्वन्तर्बहिश्च नित्यानित्यरूपा भवति ॥ १५

श्रीदेवी त्रिविधं रूपं कृत्वा भगवत्संकल्पानुगुण्येन लोकरक्षणार्थं रूपं धारयति श्रीरिति लक्ष्मीरिति लक्ष्यमाणा भवतीति विज्ञायते ॥ १६

भूदेवी ससागराम्भस्सप्तद्वीपा वसुन्धरा भूरादिचतुर्दशभुवनानामाधाराधेया प्रणवात्मिका भवति ॥ १७

नीला च विद्युन्मालिनी सर्वौषधीनां सर्वप्राणिनां पोषणार्थं सर्वरूपा भवति ॥ १८

समस्तभुवनस्याधोभागे जलाकारात्मिका मण्डूकमयेति भुवनाधारेति विज्ञायते ॥ १९

क्रियाशक्तिस्वरूपम् । हरेर्मुखान्नादः । तन्नादाद्बिन्दुः । बिन्दोरोंकारः । ओंकारात् परतो रामवैखानसपर्वतः । तत्पर्वते कर्मज्ञानमयीभिर्बहुशाखा भवन्ति ॥ २०

तत्र त्रयीमयं शास्त्रमाद्यं सर्वार्थदर्शनम् ।
ऋग्यजुःसामरूपत्वात् त्रयीति परिकीर्तिता ॥ २१

(हेतुना) कार्यसिद्धेन चतुर्धा परिकीर्तिता ।
ऋचो यजूंषि सामान्यथर्वाङ्गिरसस्तथा ॥ २२

चातुर्होत्रप्रधानत्वाल्लिङ्गादित्रितयं त्रयी ।
अथर्वाङ्गिरसं रूपं सामऋग्यजुरात्मकम् ॥ २३

तथाऽऽदिशन्त्याभिचारसामान्येन पृथक् पृथक् ।
एकविंशतिशाखायामृग्वेदः परिकीर्तितः ॥ २४

शतं च नव शाखासु यजुषामेव जन्मनाम् ।
साम्नः सहस्रशाखाः स्युः पञ्चशाखा अथर्वणः ॥ २५

वैखानसमतं तस्मिन्नादौ प्रत्यक्षदर्शनम् ।
स्मर्यते मुनिभिर्नित्यं वैखानसमतः परम् ॥ २६

कल्पो व्याकरणं शिक्षा निरुक्तं ज्योतिषं छन्दः एतानि षडङ्गानि ॥ २७

उपाङ्गमयनं चैव मीमांसा न्यायविस्तरः ।
धर्मज्ञसेवितार्थं च वेदवेदोऽधिकं तथा ॥ २८

निबन्धाः सर्वशाखा च समयाचारसङ्गतिः ।
धर्मशास्त्रं महर्षीणामन्तःकरणसंभृतम् ।
इतिहासपुरणाख्यमुपाङ्गश्च प्रकीर्तितः ॥ २९

वास्तुवेदो धनुर्वेदो गान्धर्वो दैविकस्तथा ।
आयुर्वेदश्च पञ्चैते उपवेदाः प्रकीर्तिताः ॥ ३०

दण्डो नीतिश्च वार्ता च विद्या वायुजयः परः ।
एकविंशतिभेदोऽयं स्वप्रकाशः प्रकीर्तितः ॥ ३१

वैखानसऋषेः पूर्वं विष्णोर्वाणी समुद्भवेत् ।
त्रयीरूपेण संकल्प्य इत्थं देही विजृम्भते ।। ३२

संख्यारूपेण संकल्प्य वैखानसऋषेःपुरा ।
उदितो यादृशः पूर्वं तादृशं शृणु मेऽखिलम् ।।
शश्वद्ब्रह्ममयं रूपं क्रियाशक्तिरुदाहृता ।। ३३

साक्षाच्छक्तिर्भगवतः स्मरणमात्ररूपाऽऽविर्भावप्रादुर्भावात्मिका निग्रहानुग्रहरूपा शान्तितेजोरूपा व्यक्ताव्यक्तकारणचरणसमग्रावयवमुखवर्णभेदाभेदरूपा भगवत्सहचारिणी अनपायिनी अनवरतसहाश्रयिणी उदितानुदिताकारा निमेषोन्मेषसृष्टिस्थितिसंहारतिरोधानानुग्रहादिसर्वशक्तिसामर्थ्यात् साक्षाच्छक्तिरिति गीयते ।। ३४

इच्छाशक्तिस्त्रिविधा । प्रलयावस्थायां विश्रमणार्थं भगवतो दक्षिणवक्षःस्थले श्रीवत्साकृतिर्भूत्वा विश्रम्यतीति सा योगशक्तिः ।। ३५

भोगशक्तिर्भोगरूपा कल्पवृक्षकामधेनुचिन्तामणिशङ्खपद्मनिध्यादिनवनिधिसमाश्रिता भगवदुपासकानां कामनया अकामनया वा भक्तियुक्ता नरं नित्यनैमित्तिककर्मभिरग्निहोत्रादिभिर्वा यम नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिर्वा गोपुरप्राकारादिभिर्विमानादिभिः सह भगवद्विग्रहार्चापूजोपकरणैरर्चनैः स्नानादिभिर्वा पितृपूजादिभिरन्नपानादिभिर्वा भगवत्प्रीत्यर्थमुक्त्वा सर्वं क्रियते ।। ३६

अथातो वीरशक्तिश्चतुर्भुजाऽभयवरदपद्मधरा किरीटाभरणयुता सर्वदेवैः परिवृता कल्पतरुमूले चतुर्भिर्गजैः रत्नघटैरमृतजलैरभिषिच्यमाना सर्वदैवतैर्ब्रह्मादिभिर्वन्द्यमाना अणिमाद्यष्टैश्वर्ययुता

संमुखे कामधेनुना स्तूयमाना वेदशास्त्रादिभिः स्तूयमाना जया-द्यप्सरःस्त्रीभिः परिचर्यमाणा आदित्यसोमाभ्यां दीपाभिः प्रकाश्यमाना तुम्बुरुनारदादिभिर्गीयमाना राकासिनीवालीभ्यां छत्रेण ह्लादिनी-मयाभ्यां चामरेण स्वाहास्वधाभ्यां व्यजनेन भृगुपुण्यादिभिरभ्यर्च्य-माना देवी दिव्यसिंहासने पद्मासनारूढा सकलकारणकार्यकरी लक्ष्मीर्देवस्य पृथग्भवनकल्पानलंचकार स्थिरा प्रसन्नलोचना सर्वदेवतैः पूज्यमाना वीरलक्ष्मीरिति विज्ञायत इत्युपनिषत् ॥ ३७

## १८. सौभाग्यलक्ष्म्युपनिषत्

(ऋग्वेदीया)

वाङ्मे मनसि-इति शान्तिः

प्रथमः खण्डः

सौभाग्यलक्ष्मीविद्याजिज्ञासा

अथ भगवन्तं देवा ऊचुर्हे भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम् ॥ १

तथेत्यवोचद्भगवानादिनारायणः सर्वे देवा यूयं सावधाना भूत्वा शृणुत । तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवतापरिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चदशर्ग्भिर्ध्यायथ ॥ २

अथ पञ्चदशर्गात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः । श्रीरित्याद्या ऋचः । चतुर्दशानामृचा-मानन्दाद्यृषयः । हिरण्यवर्णामित्याद्यृक्त्रयस्यानुष्टुप् छन्दः । कांसोऽस्मीत्यस्य बृहती छन्दः । तदन्ययोर्द्वयोस्त्रिष्टुप् । पुनरष्टकस्या-नुष्टुप् । शेषस्य प्रस्तारपंक्तिः । श्यग्निर्देवता । हिरण्यवर्णामिति बीजम् । कांसोऽस्मीति शक्तिः । हिरण्मया चन्द्रा रजतस्रजा

हिरण्यस्रजा हिरण्या हिरण्यवर्णेति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तै-रङ्गन्यासः। अथ वक्त्रत्रयैरङ्गन्यासः। मस्तकलोचनश्रुतिघ्राणवदन कण्ठबाहुद्वयहृन्नाभिगुह्यपायूरुजानुजङ्घेषु श्रीसूक्तैरेव क्रमशो न्यसेत् ॥ ३

अमलकमलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीतियुग्माम्बुजा च।
मणिमकुटविचित्रालंकृताकल्पजालैः
सकलभुवनमाता संततं श्रीः श्रियै नः ॥ ४

सौभाग्यलक्ष्मीचक्रम्

तत्पीठम्। कर्णिकायां ससाध्यं श्रीबीजम्। वस्वादित्यकलापद्मेषु श्रीसूक्तगतार्धार्धर्चा तद्बहिर्यः शुचिरिति मातृकया च श्रियं यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ॥ ५ ॥ अङ्गैः प्रथमावृतिः। पद्मादिभिर्द्वितीया। लोकेशैस्तृतीया। तदायुधैस्तुरीयावृतिर्भवति। श्रीसूक्तैरावाहनादि। षोडशसहस्रजपः ॥ ६

एकाक्षरीमन्त्रस्य ऋष्यादि

सौभाग्यरमैकाक्षर्या भृगुनृचद्गायत्रीश्रिय ऋष्यादयः। श्रमीं बीजशक्तिः। श्रामित्यादि षडङ्गम् ॥ ७

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना।
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै नः ॥ ८

एकाक्षरीचक्रम्

तत्पीठम्। अष्टपत्रं वृत्तत्रयं द्वादशराशिखण्डं चतुरश्रं रमापीठं भवति। कर्णिकायां ससाध्यं श्रीबीजम्। विभूतिरुन्नतिः कान्तिः सृष्टिः

कीर्तिः सन्नतिर्व्युष्टिरुत्कृष्टिर्ऋद्धिरिति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैर्नव-शक्तिं यजेत् ॥ ९ ॥ अङ्गैः प्रथमावृतिः । वासुदेवादिर्द्वितीया । बालक्यादिस्तृतीया। इन्द्रादिभिश्चतुर्थी भवति। द्वादशलक्षजपः ॥१०

लक्ष्मीमन्त्रविशेषाः

श्रीलक्ष्मीर्वरदा विष्णुपत्नी वसुपत्नी हिरण्यरूपा स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राकारा पद्मवासिनी पद्महस्ता पद्मप्रिया मुक्तालंकारा चन्द्रा सूर्या बिल्वप्रिया ईश्वरी भुक्तिर्मुक्तिर्विभूतिर्ऋद्धिः समृद्धिः कृष्टिः पुष्टिर्धनदा धनेश्वरी श्रद्धा भोगिनी भोगदा धात्री विधात्रीत्यादिप्रणवादिनमोऽन्ताश्चतुर्थ्यन्ता मन्त्राः। एकाक्षरवदङ्गादि पीठम्। लक्षजपः । दशांशं तर्पणम्। शतांशं हवनम्। सहस्रांशं द्विजतृप्तिः ॥ ११ ॥ निष्कामानामेव श्रीविद्यासिद्धिः । न कदाऽपि सकामानामिति ॥ १२ ॥

द्वितीयः खण्डः

उत्तमाधिकारिणां ज्ञानयोगः

अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं तत्त्वं ब्रूहीति ।

तथेति स होवाच-

योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्धते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ १

समापय्य निद्रां सुजीर्णेऽल्पभोजी
श्रमत्याज्यबाधे विविक्ते प्रदेशे ।
सदाऽऽसीत निस्तृष्ण एष प्रयत्नोऽथ
वा प्राणरोधो निजाभ्यासमार्गात् ॥ २

वक्त्रेणापूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा
स्वाङ्गुष्ठाद्यङ्गुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य ।

श्रोत्रे नेत्रे च नासापुटयुगलमथोऽनेन मार्गेण सम्यक्
पश्यन्ति प्रत्ययांसं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३

नादाविर्भावपूर्वको ग्रन्थित्रयभेदः

श्रवणमुखनयननासानिरोधनेनैव कर्तव्यम् ।
शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४

विचित्रघोषसंयुक्ताऽनाहते श्रूयते ध्वनिः ।
दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५

संपूर्णहृदयः शून्ये त्वारंभे योगवान् भवेत् ।
द्वितीयां विघटीकृत्य वायुर्भवति मध्यगः ॥ ६

दृढासनो भवेद्योगी पद्माद्यासनसंस्थितः ।
विष्णुग्रन्थेस्ततो भेदात् परमानन्दसंभवः ॥ ७

अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् ।
तृतीयां यत्नतो भित्त्वा निनादो मद्दलध्वनिः ॥ ८

अखण्डब्रह्माकारवृत्तिः

महाशून्यं ततो याति सर्वसिद्धिसमाश्रयम् ।
चित्तानन्दं ततो भित्त्वा सर्वपीठगतानिलः ॥ ९

निष्पत्तौ वैष्णवः शब्दः क्वणतीति क्वणो भवेत् ।
एकीभूतं तदा चित्तं सनकादिमुनीडितम् ॥ १०

अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन् ।
भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत् ॥ ११

निर्विकल्पभावः

योगेन योगं संरोध्य भावं भावेन चाञ्जसा ।
निर्विकल्पं परं तत्त्वं सदा भूत्वा परं भवेत् ॥ १२

अहंभावं परित्य जगद्भावमनीदृशम् ।
निर्विकल्पे स्थितो विद्वान् भूयो नाप्यनुशोचति ॥ १३

सलिले सैन्धवं यद्वत् साम्यं भवति योगतः ।
तयाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ १४

यदा संक्षीयते प्राणो मानसं च प्रलीयते ।
तदा समरसत्वं यत् समाधिरभिधीयते ॥ १५

यत् समत्वं तयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ १६

प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ १७

स्वयमुज्ज्वलिते देहे देही नित्यसमाधिना ।
निश्चलं तं विजानीयात् समाधिरभिधीयते ॥ १८

यत्रयत्र मनो याति तत्रतत्र परं पदम् ।
तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९

## तृतीयः खण्डः

### आधारचक्रम्

अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति ।

तथेति स होवाच-आधारे ब्रह्मचक्रं त्रिरावृत्तभङ्गिमण्डलाकारं तत्र मूलकन्दे शक्तिः पावकाकारं ध्यायेत् तत्रैव कामरूपपीठं सर्वकामप्रदं भवति इत्याधारचक्रम् ॥ १

द्वितीयं स्वाधिष्ठानचक्रं षड्दलं तन्मध्ये पश्चिमाभिमुख्यं लिङ्गं प्रवालाङ्कुरसदृशं ध्यायेत् तत्रैवोड्याणपीठं जगदाकर्षणसिद्धिदं भवति ॥२

तृतीयं नाभिचक्रं पञ्चावर्तं सर्पकुटिलाकारं तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां तटित्संनिभां ध्यायेत् सामर्थ्यशक्तिः सर्वसिद्धिप्रदा भवति मणिपूरकचक्रम् ।। ३

हृदयचक्रमष्टदलमधोमुखं तन्मध्ये ज्योतिर्मयलिङ्गाकारं ध्यायेत् सैव हंसकला सर्वप्रिया सर्वलोकवश्यकरी भवति ।। ४

कण्ठचक्रं चतुरङ्गुलं तत्र वामे इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नां श्वेतवर्णां ध्यायेत् य एवं वेदानाहतसिद्धिदा भवति ।। ५

तालुचक्रं तत्रामृतधाराप्रवाहो घण्टिकालिङ्गं मूलचक्ररन्ध्रे राजदन्तावलम्बिनीविवरं दशमद्वारं तत्र शून्यं ध्यायेत् चित्तलयो भवति ।। ६

सप्तमं भ्रूचक्रमङ्गुष्ठमात्रं तत्र ज्ञाननेत्रं दीपशिखाऽऽकारं ध्यायेत् तदेव कपालकन्दं वाक्सिद्धिदं भवत्याज्ञाचक्रम् ।। ७

ब्रह्मरन्ध्रं निर्वाणचक्रं तत्र सूचिकागृहेतरं धूम्रशिखाऽऽकारं ध्यायेत् तत्र जालन्धरपीठं मोक्षप्रदं भवतीति परब्रह्मचक्रम् ।। ८

नवममाकाशचक्रं तत्र षोडशदलपद्ममूर्ध्वमुखं तन्मध्यकर्णि-कात्रिकूटाकारं तन्मध्ये ऊर्ध्वशक्तितां परशून्यं ध्यायेत् तत्रैव पूर्णगिरिपीठं सर्वेच्छासिद्धिसाधनं भवति ।। ९

सौभाग्यलक्ष्म्युनिषदं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदा-सयोगज्ञानवान् भवति न स पुनरावर्तत इत्युपनिषत् ।। १०

हरिः ओं

द्वितीयो भागः

# श्रीविष्णुनामस्तोत्राणि नामावल्यश्च

## श्रीविष्णुसहस्रनामस्तोत्रम्

(महाभारते आनुशासनिकपर्वणि)

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् (वन्दे) सर्वविघ्नोपशान्तये ॥१

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम्।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥२

(नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् (ये) )॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम्॥३

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥४

अविकाराय शुद्धाय नित्याय परमात्मने।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥५

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात्।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥६

ओं नमो विष्णवे प्रभविष्णवे।

श्री वैशंपायन उवाच —

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः।
युधिष्ठिरश्शान्तनवं पुनरेवाभ्यभाषत ॥ १

युधिष्ठिर उवाच —

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ॥ २

को धर्मस्सर्वधर्माणां भवतः परमो मतः ।
किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ? ॥ ३

श्रीभीष्म उवाच—

जगत्प्रभुं देवदेवं अनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषस्सततोत्थितः ॥ ४

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥ ८

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १०

यतस्सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ! ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥१२

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥१३

ऋषिर्नाम्नां सहस्रस्य[1] वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥१४

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥१५

विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥१६

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य, श्रीवेदव्यासो भगवान् ऋषिः । अनुष्टुप् छन्दः । श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता । अमृतांशूद्भवो भानुरिति बीजम् । देवकीनन्दनस्स्रष्टेति शक्तिः । उद्भवः क्षोभणो देव इति परमो मन्त्रः । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । रथाङ्गपाणिरक्षोभ्य इति नेत्रम् । त्रिसामा सामगस्सामेति कवचम् ।आनन्दं परब्रह्मेति योनिः । ऋतुस्सुदर्शनः काल इति दिग्बन्धः । श्रीविश्वरूप इति ध्यानम् । श्रीमहाविष्णुप्रीत्यर्थे सहस्रनामजपे विनियोगः ।

करन्यासः- विश्वं विष्णुर्वषट्कार इति अङ्गुष्ठाभ्यां नमः । अमृतांशूद्भवो भानुरिति तर्जनीभ्यां नमः । ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा इति मध्यमाभ्यां नमः । सुवर्णबिन्दुरक्षोभ्य इति अनामिकाभ्यां नमः । निमिषोऽनिमिषः स्रग्वी इति कनिष्ठिकाभ्यां नमः ।

हृदयादिन्यासः- सुव्रतः सुमुखः सूक्ष्म इति ज्ञानाय हृदयाय नमः । सहस्रमूर्धा विश्वात्मेति ऐश्वर्याय शिरसे स्वाहा । सहस्रार्चिः

१.विष्णोर्नामसहस्रस्य

सप्तजिह्व इति शक्त्यै शिखायै वषट्। त्रिसामा सामगः सामेति बलाय कवचाय हुम्। रथाङ्गपाणिरक्षोभ्य इति तेजसे नेत्रत्रयाय वौषट्। शार्ङ्गधन्वा गदाधर इति वीर्याय अस्त्राय फट्। ऋतुः सुदर्शनः काल इति (भूर्भुवस्सुवरोमिति) दिग्बन्धः।

(शुक्लध्यानम्)

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकते मौक्तिकानां
मालाक्लृप्तासनस्थस्स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षैः
आनन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥१७

(विराड्रूपध्यानम्)

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाश्शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः।
अन्तस्स्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैः
चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ १८ ॥
ओं नमो भगवते वासुदेवाय।

(निरायुधध्यानम्)

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधा(का)रं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १९
मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम्।
पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥ २०

(विष्णुध्यानम्)

सशङ्खचक्रं सकिरीटकुण्डलं
सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षस्स्थलशोभिकौस्तुभं
नमामि विष्णुं शिरसा चतुर्भुजम् ॥ २१

(कृष्णध्यानम्)

छायायां पारिजातस्य हेमसिंहासनोपरि ।
आसीनमंबुदश्याममायताक्षमलङ्कृतम् ॥ २२

चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कितवक्षसम् ।
रुक्मिणीसत्यभामाभ्यां सहितं कृष्णमाश्रये ॥ २३

लमित्यादिपञ्चपूजाः- लं पृथिव्यात्मने विष्णवे पृथिव्यात्मकं गन्धं समर्पयामि । हं आकाशात्मने विष्णवे आकाशात्मकं पुष्पं समर्पयामि । यं वाय्वात्मने विष्णवे वाय्वात्मकं धूपं समर्पयामि । रं अग्न्यात्मने विष्णवे अग्न्यात्मकं दीपं दर्शयामि । वं अमृतात्मने विष्णवे अमृतात्मकं नैवेद्यं निवेदयामि । (सं सर्वात्मने विष्णवे तांबूलं समर्पयामि ।)

हरिः ओं

ओं - विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषस्साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुश्श्रीमान् केशवः पुरुषोत्तमः ॥ ३

सर्वःशर्वःशिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४

स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठस्स्थविरो ध्रुवः ॥ ६

अग्राह्यश्शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम[1] पवित्रं मङ्गळं परम् ॥ ७

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहस्संवत्सरो व्यालः प्रत्ययस्सर्वदर्शनः ॥ १०

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ ११

वसुर्वसुमनाः सत्यः समात्मा संमितः[2] समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥ १३

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ १४

---

१. त्रिककुद्धाम, त्रिककुब्धामा २. असंमितः

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६

उपेन्द्रो वामनः प्रांशुरमोघश्शुचिरूर्जितः ।
अतीन्द्रस्संग्रहस्सर्गो धृतात्मा नियमो यमः ॥ १७

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक्[1] ॥ १९

महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥ २०

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ २१

अमृत्युस्सर्वदृक् सिंहस्सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषस्स्रग्वी वाचस्पतिरुदारधीः ॥ २३

अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४

---

१. महाद्रिधृत्

आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहस्संवर्तको वह्निरनिलो धरणीधरः ॥ २५

सुप्रसादः प्रसन्नात्मा[1] विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः[2]साधुर्जह्नुर्नारायणो नरः ॥ २६

असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ २७

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ २८

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ २९

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ३०

अमृतांशूद्भवो भानुः शशबिन्दुस्सुरेश्वरः ।
औषधं जगतस्सेतुस्सत्यधर्मपराक्रमः ॥ ३१

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ३२

युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३

[3]इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ३४

---

१.विश्वसृड् २.सत्कृतिः ३.इष्टो विशि

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५

स्कन्दः स्कन्द[1]धरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८

अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ३९

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ४०

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ४२

रामो विरामो विरतो[2] मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ४३

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः[3] पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४

---

१. स्कन्धधरो २. विरजो ३. प्रणमः

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ।। ४५

विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ।। ४६

अनिर्विण्णः स्थविष्ठोऽभू[१]र्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ।। ४७

यज्ञ इज्यो महेज्यश्च क्रतुस्सत्रं सतां गतिः ।
सर्वदर्शी निवृत्तात्मा[२] सर्वज्ञो ज्ञानमुत्तमम् ।। ४८

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ।। ४९

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ।। ५०

धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम्[३] ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ।। ५१

गभस्तिनेमिः सत्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ।। ५२

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ।। ५३

सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ।। ५४

---

१.भूर्ध २.विमुक्तात्मा ३.सदक्षरमसत्क्षरम्

जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५५

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५६

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८

वेधाः स्वाङ्गोऽजितः कृष्णो दृढस्सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९

भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यस्सहिष्णुर्गतिसत्तमः ॥ ६०

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिविस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१

त्रिसामा सामगस्साम निर्वाणं भेषजं भिषक् ।
सन्न्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम्[1] ॥ ६२

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३

अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ६४

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिःश्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः ॥ ६५

---

१. परायणः

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।
भूशयो भूषणो भूतिर्विशोकः[1] शोकनाशनः ॥ ६७

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८

कालनेमिनिहा[2] वीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥७०

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥७१

महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥७२

स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः[3]स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥७३

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥७४

सद्गतिःसत्कृतिः सत्ता सद्भूतिः सत्परायणम्[4] ।
शूरसेनो यदुश्रेष्ठः सन्निवासस्सुयामुनः ॥७५

---

१. भूतिरशोकः, २. वीरः शूरः, शौरिः शूरः, शौरिर्वीरः, ३. स्तुतः ४. परायणः

भूतावासो वासुदेवःसर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥७६

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥७७

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥७८

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥७९

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृत्[1] ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥८०

तेजोवृषो द्युतिधरस्सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥८१

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥८२

समावर्तोऽ[2] निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गोदुरावासो[3] दुरारिहा ॥८३

शुभाङ्गो लोकसारङ्गस्सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥८४

उद्भवः सुन्दरः सुन्दो रत्ननाभस्सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥८५

---

१.धृक्, २.निवृत्तात्मा, ३.दूरावासो

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥८६

कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनो[1]ऽनिलः ।
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥८७

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥८८

सहस्रार्चिःसप्तजिह्वःसप्तैधाःसप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥८९

अणुर्बृहत्कृशस्स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतस्स्वधृतस्स्वास्यः प्राग्वंशो वंशवर्धनः ॥९०

भारभृत्कथितो योगी योगीशस्सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥९१

धनुर्धरो धनुर्वेदो दण्डो दमयिता[2] दमः ।
अपराजितः सर्वसहो नियन्ताऽ नियमोऽ यमः[3] ॥९२

सत्ववान् सात्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥९३

विहायसगतिर्ज्योतिस्सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनस्सूर्यः सविता रविलोचनः ॥९४

अनन्तो हुत[4]भुग्भोक्ता[5] सुखदो नैकजोऽग्रजः ।
अनिर्विण्णस्सदामर्षी लोकाधिष्ठानमद्भुत[6]ः ॥९५

---

१. पवनो, २. ऽदमः, ३. यमः, ४. अनन्तहुत, ५.ऽसुखदो ६.मद्भुतम्
७.रव्ययः

सनात्सनातनतमः कपिलः कपिरप्ययः ।
स्वस्तिदस्स्वस्तिकृत्स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥९६

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगःशब्दसहःशिशिरःशर्वरीकरः ॥९७

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥९८

उत्तारणो दुष्कृतिहा पुण्यो दुस्स्वप्ननाशनः ।
वीरहा रक्षणस्सन्तो जीवनः पर्यवस्थितः ॥९९

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥१००

अनादिर्भूर्भुवो लक्ष्मीस्सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥१०१

आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगस्सत्पथाचारः प्राणदः प्रणवः पणः ॥१०२

प्रमाणं प्राणनिलयः प्राणभृत्[1] प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥१०३

भूर्भुवस्स्वस्तरुस्तारस्सविता[2] प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥१०४

यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥१०५

आत्मयोनिःस्वयंजातो वैखानस्सामगायनः ।
देवकीनन्दनस्स्रष्टा क्षितीशः पापनाशनः ॥१०६

---

१. प्रणधृत् २.सपिता

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यस्सर्वप्रहरणायुधः ॥१०७

श्री सर्वप्रहरणायुध ओं नम इति

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान्नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥

श्री वासुदेवोऽभिरक्षत्वों नम इति ।

फलश्रुतिः

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥१०८

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचित् सोऽमुत्रेह च मानवः ॥१०९

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥११०

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाः ॥१११

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥११२

यशः प्राप्नोति विपुलं याति[1] प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥११३

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥११४

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥११५

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥११६

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥११७

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥११८

इमं स्तवमधीयानश्श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥११९

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥१२०

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१२१

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१२२

इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥१२३

सर्वागमानामाचारः प्रथमं परिकल्पितः ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१२४

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥१२५

योगो ज्ञानं तथा सांख्यं विद्याश्शिल्पादिकर्म च ।
वेदाश्शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥१२६

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥१२७

---

१.ज्ञाति

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषश्श्रेयः प्राप्तुं सुखानि च ॥१२८

विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥१२९
न ते यान्ति पराभवं ओं नम इति

अर्जुन उवाच —

पद्मपत्र ! विशालाक्ष ! पद्मनाभ ! सुरोत्तम ! ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ! ॥ १३०

श्री भगवानुवाच —

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ! ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥ १३१
स्तुत एव न संशय ओं नम इति

व्यास उवाच —

वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव ! नमोऽस्तु ते ॥ १३२
श्रीवासुदेव नमोऽस्तु त ओं नम इति ।

पार्वत्युवाच—

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ! ॥ १३३

ईश्वर उवाच —

श्रीराम ! राम ! रामेति रमे रामे मनोरमे।
सहस्रनाम तत्तुल्यं रामनाम वरानने ! ॥ १३४

श्री रामनाम वरानन ओं नम इति।

ब्रह्मोवाच—

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥ १३५

श्री सहस्रकोटियुगधारिण ओं नम इति।

सञ्जय उवाच—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ १३६

श्री भगवानुवाच—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ १३७

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।

धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ १३८

आर्ता विषण्णाः शिथिलाश्च भीताःघोरेषु च व्याधिषु वर्तमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखास्सुखिनो भवन्ति ॥ १३९

पारायणान्ते पुनः अङ्गन्यासः, भूर्भुवस्सुवरोमिति दिग्विमोकः । ध्यानं, लमित्यादिपूजा च। गुह्यातिगुह्यगोप्ता त्वं गृहाणात्म कृतं स्तवम्। सिद्धिर्भवतु देवेश त्वं प्रसादान्मयि स्थिरा।

श्रीमन्नारायणार्पणमस्तु। ओं तत्सत्।

अनुबन्धः

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।। १४०

आर्तानामार्तिहन्तारं भीतानां भीतिनाशनम् ।
द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम् ।। १४१

अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ ।
आकर्णपूर्ण धन्वानौ रक्षेतां रामलक्ष्मणौ ।। १४२

सन्नद्धः कवची खड्गी चापबाणधरो युवा ।
गच्छन्ममाग्रतो नित्यं रामः पातु सलक्ष्मणः ।। १४३

नमः कोदण्डहस्ताय सन्धीकृतशराय च ।
खण्डिताखिलदैत्याय रामायापन्निवरिणे ।। १४४

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ।। १४५

अच्युतानन्त गोविन्द नामोच्चारण भेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ।। १४६

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
वेदाच्छास्त्रं परं नास्ति न दैवं केशवात् परम् ।। १४७

शरीरे जर्झरीभूते व्याधिग्रस्ते कलेबरे ।
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ।। १४८

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणो हरिः ।। १४९

---

१. विश्वाय

यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत्।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥ १५०

अन्यथा शरणं नास्ति त्वमेव शरणं मम।
तस्मात् कारुण्यभावेन रक्ष रक्ष जनार्दन ॥ १५१

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात्।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि ॥ १५२

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १५३

## श्रीविष्णुसहस्रनामावलिः

ओं विश्वस्मै[1] नमः । विष्णवे । वषट्काराय । भूतभव्यभवत्प्रभवे । भूतकृते । भूतभृते । भावाय । भूतात्मने । भूतभावनाय । पूतात्मने । परमात्मने । मुक्तानां परमायै गतये । अव्ययाय । पुरुषाय । साक्षिणे । क्षेत्रज्ञाय । अक्षराय । योगाय । योगविदां नेत्रे । प्रधानपुरुषेश्वराय नमः ॥ २०

ओं नारसिंहवपुषे नमः । श्रीमते । केशवाय । पुरुषोत्तमाय । सर्वस्मै[1] । शर्वाय । शिवाय । स्थाणवे । भूतादये । निधयेऽव्ययाय । संभवाय । भावनाय । भर्त्रे । प्रभवाय । प्रभवे । ईश्वराय । स्वयंभुवे । शंभवे । आदित्याय । पुष्कराक्षाय नमः ॥ ४०

---

१.सर्वाय

ओं महास्वनाय नमः । अनादिनिधनाय । धात्रे । विधात्रे । धातव उत्तमाय[1] । अप्रमेयाय । हृषीकेशाय । पद्मनाभाय । अमरप्रभवे । विश्वकर्मणे । मनवे । त्वष्ट्रे । स्थविष्ठाय । स्थविराय ध्रुवाय[2] । अग्राह्याय । शाश्वताय । कृष्णाय । लोहिताक्षाय । प्रतर्दनाय । प्रभूताय नमः ॥ ६० ॥

ओं त्रिककुब्धाम्ने[3] नमः । पवित्राय । मङ्गळाय परस्मै[4] । ईशानाय । प्राणदाय । प्राणाय । ज्येष्ठाय । श्रेष्ठाय । प्रजापतये । हिरण्यगर्भाय । भूगर्भाय । माधवाय । मधुसूदनाय । ईश्वराय । विक्रमिणे । धन्विने । मेधाविने । विक्रमाय । क्रमाय । अनुत्तमाय नमः ॥ ८०

ओं दुराधर्षाय नमः । कृतज्ञाय । कृतये । आत्मवते । सुरेशाय । शरणाय । शर्मणे । विश्वरेतसे । प्रजाभवाय । अह्ने । संवत्सराय । व्यालाय । प्रत्ययाय । सर्वदर्शनाय । अजाय । सर्वेश्वराय । सिद्धाय । सिद्धये । सर्वादये । अच्युताय नमः ॥ १००

ओं वृषाकपये नमः । अमेयात्मने । सर्वयोग-विनिस्सृताय । वसवे । वसुमनसे । सत्याय । समात्मने । संमिताय[4] । समाय । अमोघाय । पुण्डरीकाक्षाय । वृषकर्मणे । वृषाकृतये । रुद्राय । बहुशिरसे । बभ्रवे । विश्वयोनये । शुचिश्रवसे । अमृताय । शाश्वतस्थाणवे नमः ॥ १२० ॥

ओं वरारोहाय नमः । महातपसे । सर्वगाय । सर्वविद्भानवे[5] । विष्वक्सेनाय । जनार्दनाय । वेदाय । वेदविदे ।

---

१. धातुरुत्तमाय २. स्थविराय ३. त्रिककुद्धाम्ने ४. असंमिताय ५. सर्वविदे भानवे

अव्यङ्गाय । वेदाङ्गाय । वेदविदे । कवये । लोकाध्यक्षाय । सुराध्यक्षाय । धर्माध्यक्षाय । कृताकृताय । चतुरात्मने । चतुर्व्यूहाय । चतुर्दंष्ट्राय । चतुर्भुजाय नमः ।। १४०

ओं भ्राजिष्णवे नमः । भोजनाय । भोक्त्रे । सहिष्णवे । जगदादिजाय । अनघाय । विजयाय । जेत्रे । विश्वयोनये । पुनर्वसवे । उपेन्द्राय । वामनाय । प्रांशवे । अमोघाय । शुचये । ऊर्जिताय । अतीन्द्राय । सङ्ग्रहाय । सर्गाय । धृतात्मने नमः ।। १६०

ओं नियमाय नमः । यमाय । वेद्याय । वैद्याय । सदायोगिने । वीरघ्ने । माधवाय । मधवे । अतीन्द्रियाय । महामायाय । महोत्साहाय । महाबलाय । महाबुद्धये । महावीर्याय । महाशक्तये । महाद्युतये । अनिर्देश्यवपुषे । श्रीमते । अमेयात्मने । महाद्रिधृषे[1] नमः ।। १८० ।।

ओं महेष्वासाय नमः । महीभर्त्रे । श्रीनिवासाय । सतां गतये । अनिरुद्धाय । सुरानन्दाय । गोविन्दाय । गोविदां पतये । मरीचये । दमनाय । हंसाय । सुपर्णाय । भुजगोत्तमाय । हिरण्यनाभाय । सुतपसे । पद्मनाभाय । प्रजापतये । अमृत्यवे । सर्वदृशे । सिंहाय नमः ।। २०० ।।

ओं सन्धात्रे नमः । सन्धिमते । स्थिराय । अजाय । दुर्मर्षणाय । शास्त्रे । विश्रुतात्मने । सुरारिघ्ने । गुरवे । गुरुतमाय । धाम्ने । सत्याय । सत्यपराक्रमाय । निमिषाय । अनिमिषाय । स्रग्विणे । वाचस्पतये उदारधिये[2] । अग्रण्ये । ग्रामण्ये । श्रीमते

---

१. महाद्रिधृते २.वाचस्पतये उदारधिये

नमः ॥ २२० ॥

ओं न्यायाय नमः । नेत्रे । समीरणाय । सहस्रमूर्ध्ने । विश्वात्मने । सहस्राक्षाय । सहस्रपदे । आवर्तनाय । निवृत्तात्मने । संवृताय । संप्रमर्दनाय । अहस्संवर्तकाय । वह्नये । अनिलाय । धरणीधराय । सुप्रसादाय । प्रसन्नात्मने । विश्वधृषे[1] । विश्वभुजे । विभवे नमः ॥ २४० ॥

ओं सत्कर्त्रे नमः । सत्कृताय[2] । साधवे । जह्नवे । नारायणाय । नराय । असङ्ख्येयाय । अप्रमेयात्मने । विशिष्टाय । शिष्टकृते । शुचये । सिद्धार्थाय । सिद्धसङ्कल्पाय । सिद्धिदाय । सिद्धिसाधनाय । वृषाहिणे । वृषभाय । विष्णवे । वृषपर्वणे । वृषोदराय नमः ॥ २६० ॥

ओं वर्धनाय नमः । वर्धमानाय । विविक्ताय । श्रुति-सागराय । सुभुजाय । दुर्धराय । वाग्मिने । महेन्द्राय । वसुदाय । वसवे । नैकरूपाय । बृहद्रूपाय । शिपिविष्टाय । प्रकाशनाय । ओजस्तेजोद्युतिधराय[3] । प्रकाशात्मने । प्रतापनाय । ऋद्धाय । स्पष्टाक्षराय । मन्त्राय नमः ॥ २८० ॥

ओं चन्द्रांशवे नमः । भास्करद्युतये । अमृतांशूद्भवाय । भानवे । शशबिन्दवे । सुरेश्वराय । औषधाय । जगतस्सेतवे । सत्यधर्मपराक्रमाय । भूतभव्यभवन्नाथाय । पवनाय । पावनाय । अनलाय । कामघ्ने । कामकृते । कान्ताय । कामाय । कामप्रदाय । प्रभवे । युगादिकृते नमः ॥ ३०० ॥

---

१. विश्वसृजे २.सत्कृतये ३. ओजसे । तेजसे । द्युतिधराय

ओं युगावर्ताय नमः । नैकमायाय । महाशनाय । अदृश्याय । व्यक्तरूपाय । सहस्रजिते । अनन्तजिते । इष्टाय अविशिष्टाय[1] । शिष्टेष्टाय । शिखण्डिने । नहुषाय । वृषाय । क्रोधघ्ने । क्रोधकृते । कर्त्रे[2] । विश्वबाहवे । महीधराय । अच्युताय । प्रथिताय । प्राणाय नमः ।। ३२० ।।

ओं प्राणदाय नमः । वासवानुजाय । अपान्निधये । अधिष्ठानाय । अप्रमत्ताय । प्रतिष्ठिताय । स्कन्दाय । स्कन्दधराय[3] । धुर्याय । वरदाय । वायुवाहनाय । वासुदेवाय । बृहद्भानवे । आदिदेवाय । पुरन्दराय । अशोकाय । तारणाय । ताराय । शूराय । शौरये नमः ।। ३४० ।।

ओं जनेश्वराय नमः । अनुकूलाय । शतावर्ताय । पद्मिने । पद्मनिभेक्षणाय । पद्मनाभाय । अरविन्दाक्षाय । पद्मगर्भाय । शरीरभृते । महर्द्धये । ऋद्धाय । वृद्धात्मने । महाक्षाय । गरुडध्वजाय । अतुलाय । शरभाय । भीमाय । समयज्ञाय । हविर्हरये[4] । सर्वलक्षणलक्षण्याय नमः ।। ३६० ।।

ओं लक्ष्मीवते नमः । समितिञ्जयाय । विक्षराय । रोहिताय । मार्गाय । हेतवे । दामोदराय । सहाय । महीधराय । महाभागाय । वेगवते । अमिताशनाय । उद्भवाय । क्षोभणाय । देवाय । श्रीगर्भाय । परमेश्वराय । करणाय । कारणाय । कर्त्रे नमः ।। ३८० ।।

ओं विकर्त्रे नमः । गहनाय । गुहाय । व्यवसायाय । व्यवस्थानाय । संस्थानाय । स्थानदाय । ध्रुवाय । परर्द्धये । परमस्पष्टाय । तुष्टाय । पुष्टाय । शुभेक्षणाय । रामाय । विरामाय ।

---

१. इष्टाय, विशिष्टाय, २. क्रोधकृत्कर्त्रे ३. स्कन्धधराय ४. हविषे । हरये ।

विरताय[1] । मार्गाय । नेयाय । नयाय । अनयाय नमः ॥४००॥

ओं वीराय नमः । शक्तिमतां श्रेष्ठाय । धर्माय । धर्मविदुत्तमाय । वैकुण्ठाय । पुरुषाय । प्राणाय । प्राणदाय । प्रणवाय[2] । पृथवे । हिरण्यगर्भाय । शत्रुघ्नाय । व्याप्ताय । वायवे । अधोक्षजाय । ऋतवे । सुदर्शनाय । कालाय । परमेष्ठिने । परिग्रहाय नमः ॥ ४२० ॥

ओं उग्राय नमः । संवत्सराय । दक्षाय । विश्रामाय । विश्वदक्षिणाय । विस्ताराय । स्थावरस्थाणवे । प्रमाणाय । बीजायाव्ययाय । अर्थाय । अनर्थाय । महाकोशाय । महाभोगाय । महाधनाय । अनिर्विण्णाय । स्थविष्ठाय । भुवे[3] । धर्मयूपाय । महामखाय । नक्षत्रनेमये नमः ॥ ४४० ॥

ओं नक्षत्रिणे नमः । क्षमाय । क्षामाय । समीहनाय । यज्ञाय । इज्याय । महेज्याय । क्रतवे । सत्राय । सतां गतये । सर्वदर्शिने । निवृत्तात्मने[4] । सर्वज्ञाय । ज्ञानाय उत्तमाय । सुव्रताय । सुमुखाय । सूक्ष्माय । सुघोषाय । सुखदाय । सुहृदे नमः ॥ ४६० ॥

ओं मनोहराय नमः । जितक्रोधाय । वीरबाहवे । विदारणाय । स्वापनाय । स्ववशाय । व्यापिने । नैकात्मने । नैककर्मकृते । वत्सराय । वत्सलाय । वत्सिने । रत्नगर्भाय । धनेश्वराय । धर्मगुपे । धर्मकृते । धर्मिणे । सते । असते[5] । क्षराय[6] नमः ॥ ४८० ॥

---

१. विरजाय, विरजाय मार्गाय, विरजसे, २.प्रणमाय ३.अभुवे ४. विमुक्तात्मने ५.अक्षराय । ६.असते ।

ओं अक्षराय नमः[1] । अविज्ञात्रे । सहस्रांशवे । विधात्रे । कृतलक्षणाय । गभस्तिनेमये । सत्त्वस्थाय । सिंहाय । भूतमहेश्वराय । आदिदेवाय । महादेवाय । देवेशाय । देवभृद्गुरवे[2] । उत्तराय । गोपतये । गोप्त्रे । ज्ञानगम्याय । पुरातनाय । शरीरभूतभृते । भोक्त्रे नमः ॥ ५०० ॥

ओं कपीन्द्राय नमः । भूरिदक्षिणाय । सोमपाय । अमृतपाय । सोमाय । पुरुजिते । पुरुसत्तमाय । विनयाय । जयाय । सत्यसन्धाय । दाशार्हाय । सात्वतां पतये । जीवाय । विनयितासाक्षिणे[3] । मुकुन्दाय । अमितविक्रमाय । अम्भोनिधये । अनन्तात्मने । महोदधिशयाय । अन्तकाय नमः ॥ ५२० ॥

ओं अजाय नमः । महार्हाय । स्वाभाव्याय । जितामित्राय । प्रमोदनाय । आनन्दाय । नन्दनाय । नन्दाय[4] । सत्यधर्मणे । त्रिविक्रमाय । महर्षये कपिलाचार्याय । कृतज्ञाय । मेदिनीपतये । त्रिपदाय । त्रिदशाध्यक्षाय । महाशृङ्गाय । कृतान्तकृते । महावराहाय । गोविन्दाय । सुषेणाय नमः ॥ ५४०

ओं कनकाङ्गदिने नमः । गुह्याय । गभीराय । गहनाय । गुप्ताय । चक्रगदाधराय । वेधसे । स्वाङ्गाय । अजिताय । कृष्णाय । दृढाय । सङ्कर्षणाय अच्युताय[5] । वरुणाय । वारुणाय । वृक्षाय । पुष्कराक्षाय । महामनसे । भगवते । भगघ्ने । आनन्दिने नमः ॥ ५६० ॥

ओं वनमालिने नमः । हलायुधाय । आदित्याय । ज्योतिरादित्याय । सहिष्णवे । गतिसत्तमाय । सुधन्वने ।

१.क्षराय, २. देवभृते गुरवे । ३. विनयित्रे साक्षिणे, ४. अनन्दाय, ५. संकर्षणाय । अच्युताय ।

खण्डपरशवे । दारुणाय । द्रविणप्रदाय । दिवःस्पृशे । सर्वदृग्व्यासाय[1] । वाचस्पतयेऽयोनिजाय[1,2]। त्रिसाम्ने । सामगाय ।साम्ने। निर्वाणाय। भेषजाय। भिषजे। सन्यासकृते नमः ॥ ५८० ॥

ओं शमाय नमः । शान्ताय । निष्ठायै । शान्तये । परायणाय । शुभाङ्गाय । शान्तिदाय । स्रष्ट्रे । कुमुदाय । कुवलेशयाय । गोहिताय । गोपतये । गोप्त्रे । वृषभाक्षाय । वृषप्रियाय । अनिवर्तिने । निवृत्तात्मने । संक्षेप्त्रे । क्षेमकृते । शिवाय नमः ॥ ६०० ॥

ओं श्रीवत्सवक्षसे नमः । श्रीवासाय । श्रीपतये । श्रीमतां वराय । श्रीदाय । श्रीशाय । श्रीनिवासाय । श्रीनिधये । श्रीविभावनाय । श्रीधराय । श्रीकराय । श्रेयसे । श्रीमते[3] । लोकत्रयाश्रयाय । स्वक्षाय । स्वङ्गाय । शतानन्दाय । नन्दये । ज्योतिर्गणेश्वराय । विजितात्मने नमः ॥ ६२० ॥

ओं विधेयात्मने[4] नमः । सत्कीर्तये । छिन्नसंशयाय । उदीर्णाय । सर्वतश्चक्षुषे । अनीशाय । शाश्वतस्थिराय । भूशयाय । भूषणाय । भूतये । अशोकाय[5] । शोकनाशनाय । अर्चिष्मते । अर्चिताय । कुम्भाय । विशुद्धात्मने । विशोधनाय । अनिरुद्धाय । अप्रतिरथाय । प्रद्युम्नाय नमः ॥ ६४० ॥

ओं अमितविक्रमाय नमः । कालनेमिनिघ्ने । वीराय[6] । शौरये[7] । शूरजनेश्वराय । त्रिलोकात्मने । त्रिलोकेशाय । केशवाय । केशिघ्ने । हरये । कामदेवाय । कामपालाय ।

---

१.सर्वदृशो व्यसाय। २. अयोनिजाय। श्रेयः श्रीमते। ४. अविधेयात्मने । ५. विशोकाय। ६. शौरये। ७. शूराय

कामिने । कान्ताय । कृतागमाय । अनिर्देश्यवपुषे । विष्णवे । वीराय । अनन्ताय । धनञ्जयाय नमः ॥ ६६० ॥

ओं ब्रह्मण्याय नमः । ब्रह्मकृते । ब्रह्मणे[1] । ब्रह्मणे । ब्रह्मविवर्धनाय । ब्रह्मविदे । ब्राह्मणाय । ब्रह्मिणे । ब्रह्मज्ञाय । ब्राह्मणप्रियाय । महाक्रमाय । महाकर्मणे । महातेजसे । महोरगाय । महाक्रतवे । महायज्वने । महायज्ञाय । महाहविषे । स्तव्याय । स्तवप्रियाय नमः ॥ ६८० ॥

ओं स्तोत्राय नमः । स्तुतये[2] । स्तोत्रे । रणप्रियाय । पूर्णाय । पूरयित्रे । पुण्याय । पुण्यकीर्तये । अनामयाय । मनोजवाय । तीर्थकराय । वसुरेतसे । वसुप्रदाय । वसुप्रदाय । वासुदेवाय । वसवे । वसुमनसे । हविषे । सद्गतये । सत्कृतये नमः ॥ ७०० ॥

ओं सत्तायै नमः । सद्भूतये । सत्परायणाय । शूरसेनाय । यदुश्रेष्ठाय । सन्निवासाय । सुयामुनाय । भूतावासाय । वासुदेवाय । सर्वासुनिलयाय । अनलाय । दर्पघ्ने । दर्पदाय । दृप्ताय । दुर्धराय । अपराजिताय । विश्वमूर्तये । महामूर्तये । दीप्तमूर्तये । अमूर्तिमते नमः ॥ ७२० ॥

ओं अनेकमूर्तये नमः । अव्यक्ताय । शतमूर्तये । शताननाय । एकाय । नैकाय । सवाय । काय । कस्मै । यस्मै[3] । तस्मै । पदाया[1]नुत्तमाय । लोकबन्धवे । लोकनाथाय । माधवाय । भक्तवत्सलाय । सुवर्णवर्णाय । हेमाङ्गाय । वराङ्गाय । चन्दनाङ्गदिने नमः ॥ ७४० ॥

ओं वीरघ्ने नमः । विषमाय । शून्याय । घृताशिषे । अचलाय । चलाय । अमानिने । मानदाय । मान्याय । लोकस्वामिने । त्रिलोकधृते[4] । सुमेधसे । मेधजाय । धन्याय ।

---

१. ब्रह्मकृद्ब्रह्मणे २. स्तुताय ३. साय । वाय काय । किमे । यते । तते । ४. त्रिलोकधृषे

सत्यमेधसे। धराधराय। तेजोवृषाय। द्युतिधराय। सर्वशस्त्रभृतां वराय। प्रग्रहाय नमः ।। ७६० ।।

ओं निग्रहाय नमः । व्यग्राय। नैकशृङ्गाय। गदाग्रजाय। चतुर्मूर्तये। चतुर्बाहवे नमः। चतुर्व्यूहाय। चतुर्गतये। चतुरात्मने। चतुर्भावाय। चतुर्वेदविदे। एकपदे। समावर्ताय। अनिवृत्तात्मने[1]। दुर्जयाय। दुरतिक्रमाय। दुर्लभाय। दुर्गमाय। दुर्गाय। दुरावासाय[2] नमः ।। ७८० ।।

ओं दुरारिघ्ने नमः । शुभाङ्गाय । लोकसारङ्गाय । सुतन्तवे । तन्तुवर्धनाय । इन्द्रकर्मणे। महाकर्मणे। कृतकर्मणे। कृतागमाय । उद्भवाय । सुन्दराय । सुन्दाय । रत्ननाभाय । सुलोचनाय । अर्काय । वाजसनये। शृङ्गिणे । जयन्ताय । सर्वविज्जयिने[3]। सुवर्णबिन्दवे नमः ।। ८०० ।।

ओं अक्षोभ्याय नमः । सर्ववागीश्वरेश्वराय। महाह्रदाय। महागर्ताय। महाभूताय। महानिधये। कुमुदाय। कुन्दराय। कुन्दाय । पर्जन्याय । पावनाय[4] । अनिलाय । अमृताशाय । अमृतवपुषे। सर्वज्ञाय। सर्वतोमुखाय। सुलभाय। सुव्रताय। सिद्धाय। शत्रुजिते नमः ।। ८२० ।।

ओं शत्रुतापनाय नमः । न्यग्रोधाय । उदुम्बराय । अश्वत्थाय। चाणूरान्ध्रनिषूदनाय। सहस्रार्चिषे। सप्तजिह्वाय। सप्तैधसे । सप्तवाहनाय । अमूर्तये । अनघाय । अचिन्त्याय । भयकृते । भयनाशनाय । अणवे । बृहते । कृशाय । स्थूलाय । गुणभृते। निर्गुणाय नमः ।। ८४० ।।

---

१. निवृत्तात्मने २. दूरावासिने ३. सर्वविदे। जयिने ४. पवनाय

ओं महते नमः । अधृताय । स्वधृताय । स्वास्याय । प्राग्वंशाय । वंशवर्धनाय । भारभृते । कथिताय । योगिने । योगीशाय । सर्वकामदाय । आश्रमाय । श्रमणाय । क्षामाय । सुपर्णाय । वायुवाहनाय । धनुर्धराय । धनुर्वेदाय । दण्डाय । दमयित्रे नमः ।। ८६० ।।

ओं दमाय[1] नमः । अपराजिताय । सर्वसहाय । नियन्त्रे । अनियमाय[2] । अयमाय[3] । सत्ववते । सात्विकाय । सत्याय । सत्यधर्मपरायणाय । अभिप्रायाय । प्रियार्हाय । अर्हाय । प्रियकृते । प्रीतिवर्धनाय । विहायसगतये । ज्योतिषे । सुरुचये । हुतभुजे । विभवे[4] नमः ।। ८८० ।।

ओं रवये नमः । विरोचनाय । सूर्याय । सवित्रे । रविलोचनाय । अनन्ताय । हुतभुजे । भोक्त्रे[5] । सुखदाय[6] । नैकदाय । अग्रजाय । अनिर्विण्णाय । सदामर्षिणे । लोकाधिष्ठानाय । अद्भुताय । सनाते । सनातनतमाय । कपिलाय । कपये । अप्ययाय[7] नमः ।। ९०० ।।

ओं स्वस्तिदाय । स्वस्तिकृते । स्वस्तिने । स्वस्तिभुजे । स्वस्तिदक्षिणाय । अरौद्राय । कुण्डलिने । चक्रिणे । विक्रमिणे । ऊर्जितशासनाय । शब्दातिगाय । शब्दसहाय । शिशिराय । शर्वरीकराय । अक्रूराय । पेशलाय । दक्षाय । दक्षिणाय । क्षमिणां वराय । विद्वत्तमाय नमः ।। ९२० ।।

ओं वीतभयाय नमः । पुण्यश्रवणकीर्तनाय । उत्तारणाय । दुष्कृतिघ्ने । पुण्याय । दुस्स्वप्ननाशनाय । वीरघ्ने । रक्षणाय । सद्भ्यः[8] । जीवनाय । पर्यवस्थिताय । अनन्तरूपाय ।

---

१. अदमाय २. नियमाय ३. यमाय ४. हुतभुग्विभवे ५. अनन्तहुत भग्भोक्त्रे ६. अवरदाय ७. अव्ययाय ८. सन्ताय

अनन्तश्रिये । जितमन्यवे । भयापहाय । चतुरश्राय । गभीरात्मने । विदिशाय । व्यादिशाय । दिशाय नमः ॥९४०॥

ओं अनादये नमः । भुवो भुवे । लक्ष्म्यै[1] । सुवीराय । रुचिराङ्गदाय । जननाय । जनजन्मादये । भीमाय । भीमपराक्रमाय । आधारनिलयाय । धात्रे । पुष्पहासाय । प्रजागराय । ऊर्ध्वगाय । सत्पथाचाराय । प्राणदाय । प्रणवाय । पणाय । प्रमाणाय । प्राणनिलयाय नमः ॥ ९६० ॥

ओं प्राणभृते[2] नमः । प्राणजीवनाय । तत्वाय । तत्वविदे । एकात्मने । जन्ममृत्युजरातिगाय । भूर्भुवस्स्वस्तरवे । ताराय । सवित्रे[3]। प्रपितामहाय । यज्ञाय । यज्ञपतये । यज्वने । यज्ञाङ्गाय । यज्ञवाहनाय । यज्ञभृते । यज्ञकृते । यज्ञिने । यज्ञभुजे । यज्ञसाधनाय नमः ॥ ९८० ॥

ओं यज्ञान्तकृते नमः । यज्ञगुह्याय । अन्नाय । अन्नादाय । आत्मयोनये । स्वयंजाताय । वैखानाय । सामगायनाय । देवकीनन्दनाय । स्रष्ट्रे । क्षितीशाय । पापनाशनाय । शङ्खभृते । नन्दकिने । चक्रिणे । शार्ङ्गधन्वने । गदाधराय । रथाङ्गपाणये । अक्षोभ्याय । सर्वप्रहरणायुधाय नमः ॥ १००० ॥

## विष्णुचतुर्विंशतिनामावलिः

ओं केशवाय नमः । नारायणाय । माधवाय । गोविन्दाय । विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय । दामोदराय । संकर्षणाय । प्रद्युम्नाय । अनिरुद्धाय । पुरुषोत्तमाय । अधोक्षजाय । नारसिंहाय । अच्युताय । जनार्दनाय । उपेन्द्राय । हरये । श्रीकृष्णाय नमः ॥

---

१. भूर्भवो लक्ष्म्यै, भुवोलक्ष्म्यै २. प्राणधृते ३. सपित्र, तस्मै पित्रे

## श्री द्वादशनामपञ्जरस्तोत्रम्

पुरस्तात् केशवः पातु चक्री जाम्बूनदप्रभः ।
पश्चान्नारायणः शङ्खी नीलजीमूतसन्निभः ॥ १

इन्दीवरदळश्यामो माधवोर्ध्वं गदाधरः ।
गोविन्दो दक्षिणे पार्श्वे धन्वी चन्द्रप्रभो महान् ॥ २

उत्तरे हलभृद्विष्णुः पद्मकिञ्जल्कसन्निभः ।
आग्नेय्यामरविन्दाभो मुसली मधुसूदनः ॥ ३

त्रिविक्रमः खड्गपाणिर्निर्ऋत्यां ज्वलनप्रभः ।
वायव्यां वामनो वज्री तरुणादित्यदीप्तिमान् ॥ ४

ऐशान्यां पुण्डरीकाभः श्रीधरः पट्टसायुधः ।
विद्युत्प्रभो हृषीकेशो ह्यवाच्यां दिशि मुद्गरी ॥ ५

हृत्पद्मे पद्मनाभो मे सहस्रार्कसमप्रभः ।
सर्वायुधः सर्वशक्तिः सर्वज्ञः सर्वतोमुखः ॥ ६

इन्द्रगोपकसङ्काशः पाशहस्तोऽपराजितः ।
स बाह्याभ्यन्तरं देहं व्याप्य दामोदरः स्थितः ॥ ७

एवं सर्वत्र मच्छिद्रं नामद्वादशपञ्जरम् ।
प्रविष्टोऽहं न मे किञ्चिद् भयमस्ति कदाचन ॥ ८

भयं नास्ति कदाचन ओं नम इति ॥

*——*——*

# श्री पञ्चायुधस्तोत्रम्

स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटि तुल्यम् ।
सुरद्विषां प्राणविनाशि विष्णोः चक्रं सदाऽहं शरणं प्रपद्ये ।। १

विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्पहन्ता ।
तं पाञ्चजन्यं शशिकोटि शुभ्रं शङ्खं सदाऽहं शरणं प्रपद्ये ।। २

हिरण्मयीं मेरुसमानसारां कौमोदकीं दैत्यकुलैकहन्त्रीम् ।
वैकुण्ठवामाग्रकराभिमृष्टां गदां सदाऽहं शरणं प्रपद्ये ।। ३

रक्षोऽसुराणां कठिनोग्रकण्ठ च्छेदक्षरच्छोणितदिग्धधारम् ।
तं नन्दकं नाम हरेः प्रदीप्तं खड्गं सदाऽहं शरणं प्रपद्ये ।। ४

यज्ज्यानिनादश्रवणात् सुराणां चेतांसि निर्मुक्तभयानि सद्यः ।
भवन्ति दैत्याशनिबाणवर्षि शार्ङ्गं सदाऽहं शरणं प्रपद्ये ।। ५

इमं हरेः पञ्चमहायुधानां स्तवं पठेद्योऽनुदिनं प्रभाते ।
समस्तदुःखानि भयानि सद्यः पापानि नश्यन्ति सुखानि सन्ति ।।६

वने रणे शत्रुजलाग्निमध्ये यदृच्छयापत्सु महाभयेषु ।
इदं पठन् स्तोत्रमनाकुलात्मा सुखी भवेत् तत्कृतसर्वरक्षः ।। ७

।। श्रीः ।।

# विष्ण्वष्टोत्तरशतनामस्तोत्रम्

ध्यानम्–

वेत्तारं वेदपुरुषं यज्ञेशं यज्ञवाहकम् ।
चक्रपाणिं गदापाणिं शंखपाणिं नरोत्तमम् ।। १

दामोदरं दमोपेतं केशवं केशिसूदनम् ।
वरेण्यं वरदं विष्णुं आश्रये वसुदेवजम् ।। २

विष्णुर्लक्ष्मीपतिः कृष्णो वैकुण्ठो गरुडध्वजः ।
परब्रह्म जगन्नाथो वासुदेवस्त्रिविक्रमः ।। ३

दैत्यान्तको मधुरिपुस्ताक्ष्यर्वाहः सनातनः ।
नारायणः पद्मनाभो हृषीकेशः सुधाप्रदः ।। ४

माधवः पुण्डरीकाक्षः स्थितिकर्ता परात्परः ।
वनमाली यज्ञरूपः चक्रपाणिर्गदाधरः ।। ५

उपेन्द्रः केशवो हंसः समुद्रमथनो हरिः ।
गोविन्दो ब्रह्मजनकः कैटभासुरमर्दनः ।। ६

श्रीधरः कामजनकः तथा शेषश्चतुर्भुजः ।
पाञ्चजन्यधरः श्रीमान् शार्ङ्गपाणिर्जनार्दनः ।। ७

पीतांबरधरो देवः सूर्यचन्द्रविलोचनः ।
मत्स्यरूपः कूर्मतनुः क्रोडरूपो नृकेसरी ।। ८

वामनो भार्गवो रामो बली कल्की हयाननः ।
विश्वंभरः शिंशुमारः श्रीकरः कपिलो ध्रुवः ।। ९

दत्तात्रेयोऽच्युतोऽनन्तो मुकुन्दो दधिवामनः ।
धन्वन्तरिः श्रीनिवासः प्रद्युम्नः पुरुषोत्तमः ।। १०

श्रीवत्सकौस्तुभधरो मुरारातिरधोक्षजः ।
ऋषभो मोहिनीरूपधरः सङ्कर्षणः प्रभुः ।। ११

क्षीराब्धिशायी भूतात्माऽनिरुद्धो भक्तवत्सलः ।
नरो गजेन्द्रवरदस्त्रिधामा भूतभावनः ।। १२

श्वेतद्वीपेषु वास्तव्यः सूर्यमण्डलमध्यगः ।
सनकादिमुनिध्येयो भगवान् शङ्करप्रियः ।। १३

नीलाकान्तो धराकान्तो वेदात्मा बादरायणः ।
भागीरथीजन्मभूमिपादपद्मः सतां प्रभुः ।। १४

स्वभूर्विभुर्घनश्यामो जगत्कारणमव्ययम् ।
बुद्धावतारः शान्तात्मा लीलामानुषविग्रहः ।। १५

दामोदरो विराड्रूपो भूतभव्यभवत्प्रभुः ।
आदिदेवो देवदेवः प्रह्लादपरिपालकः ।। १६

इति नाम्नां शतं विष्णोः पुण्यमायुष्यवर्धनम् ।
श्रीकीर्तिपुष्टिदं वंश्यं पठेद्भक्तियुतो नरः ।। १७

।।श्रीः।।

# श्री विष्णवष्टोत्तरशतनामावलिः

विष्णवे नमः । लक्ष्मीपतये । कृष्णाय । वैकुण्ठाय । गरुडध्वजाय । परब्रह्मणे । जगन्नाथाय । वासुदेवाय । त्रिविक्रमाय । दैत्यान्तकाय । मधुरिपवे । ताक्ष्यर्वाहाय । सनातनाय । नारायणाय । पद्मनाभाय । हृषीकेशाय । सुधाप्रदाय । माधवाय । पुण्डरीकाक्षाय । स्थितिकर्त्रे नमः ।। २०

परात्पराय नमः । वनमालिने । यज्ञरूपाय । चक्रपाणये । गदाधराय । उपेन्द्राय । केशवाय । हंसाय । समुद्रमथनाय । हरये । गोविन्दाय । ब्रह्मजनकाय । कैटभासुरमर्दनाय । श्रीधराय । कामजनकाय । शेषाय । चतुर्भुजाय । पाञ्चजन्यधराय । श्रीमते । शार्ङ्गपाणये नमः ।। ४०

जनार्दनाय नमः । पीतांबरधराय । देवाय । सूर्यचन्द्रविलोचनाय । मत्स्यरूपाय । कूर्मतनवे । क्रोडरूपाय । नृकेसरिणे । वामनाय । भार्गवाय । रामाय । बलिने । कल्किने । हयाननाय । विश्वंभराय । शिंशुमाराय । श्रीकराय । कपिलाय । ध्रुवाय । दत्तात्रेयाय नमः ।। ६०

अच्युताय नमः । अनन्ताय । मुकुन्दाय । दधिवामनाय । धन्वन्तरये । श्रीनिवासाय । प्रद्युम्नाय । पुरुषोत्तमाय । श्रीवत्सकौस्तुभधराय । मुरारातये । अधोक्षजाय । ऋषभाय । मोहिनीरूपधराय। सङ्कर्षणाय। प्रभवे। क्षीराब्धिशायिने। भूतात्मने। अनिरुद्धाय। भक्तवत्सलाय। नराय नमः ॥ ८०

गजेन्द्रवरदाय नमः । त्रिधाम्ने । भूतभावनाय । श्वेतद्वीपेषु वास्तव्याय। सूर्यमण्डलमध्यगाय। सनकादिमुनिध्येयाय। भगवते। शङ्करप्रियाय । नीलाकान्ताय । धराकान्ताय । वेदात्मने । बादरायणाय । भागीरथीजन्मभूमिपादपद्माय। सतां प्रभवे। स्वभुवे। विभवे । घनश्यामाय । जगत्कारणाय । अव्ययाय । बुद्धावताराय नमः । १००

शान्तात्मने नमः । लीलामानुषविग्रहाय । दामोदराय । विराड्रूपाय । भूतभव्यभवत्प्रभवे । आदिदेवाय । देवदेवाय । प्रह्लादपरिपालकाय नमः ॥ १०८

## श्रीविष्णवष्टोत्तरशतनामस्तोत्रम्

नमाम्यहं हृषीकेशं केशवं मधुसूदनम्।
सूदनं सर्वदैत्यानां नारायणमनामयम्॥ १ ॥

जयन्तं विजयं कृष्णं अनन्तं वामनं तथा।
विष्णुं विश्वेश्वरं पुण्यं विश्वात्मानं सुरार्चितम्॥ २ ॥

अनघं त्वघहर्तारं नारसिंहं श्रियः प्रियम्।
श्रीपतिं श्रीधरं श्रीदं श्रीनिवासं महोदयम्॥ ३ ॥

श्रीरामं माधवं मोक्षक्षमारूपं जनार्दनम्।
सर्वज्ञं सर्ववेत्तारं सर्वेशं सर्वदायकम्॥ ४ ॥

हरिं मुरारिं गोविन्दं पद्मनाभं प्रजापतिम्।
आनन्दज्ञानसंपन्नं ज्ञानदं ज्ञानदायकम्॥ ५ ॥

अच्युतं सबलं चन्द्रवक्त्रं व्याप्तपरावरम्।
योगेश्वरं जगद्योनिं ब्रह्मरूपं महेश्वरम्॥ ६ ॥

मुकुन्दं चापि वैकुण्ठमेकरूपं कविं ध्रुवम्।
वासुदेवं महादेवं ब्रह्मण्यं ब्राह्मणप्रियम्॥ ७ ॥

गोप्रियं गोहितं यज्ञं यज्ञाङ्गं यज्ञवर्धनम्।
यज्ञस्यापि च भोक्तारं वेदवेदाङ्गपारगम्॥ ८ ॥

वेदज्ञं वेदरूपं तं विद्यावासं सुरेश्वरम्।
प्रत्यक्षं च महाहंसं शंखपाणिं पुरातनम्॥ ९ ॥

पुष्करं पुष्कराक्षं च वराहं धरणीधरम्।
प्रद्युम्नं कामपालं च व्यासध्यातं महेश्वरम्॥ १० ॥

सर्वसौख्यं महासौख्यं सांख्यं च पुरुषोत्तमम्।
योगरूपं महाज्ञानं योगीशमजितप्रियम्॥ ११ ॥

असुरारिं लोकनाथं पद्महस्तं गदाधरम्।
गुहावासं सर्ववासं पुण्यवासं महाजनम्॥ १२ ॥

बृन्दानाथं बृहत्कायं पावनं पापनाशनम्।
गोपीनाथं गोपसखं गोपालं च गणाश्रयम्॥ १३ ॥

परात्मानं पराधीशं कापिलं कार्यमानुषम्।
नमामि निखिलं नित्यं मनोवाक्कायकर्मभिः ॥ १४ ॥

नाम्नां शतेनापि तु पुण्यकर्ता
यः स्तौति विष्णुं मनसा स्थिरेण।
स याति लोकं मधुसूदनस्य
विहाय दोषानिह पुण्यभूतः ॥ १५ ॥

नाम्नां शतं महापुण्यं सर्वपातकशोधनम्।
अनन्यमनसा ध्यायेज्जपेद्ध्यानसमन्वितः ॥ १६ ॥

नित्यमेव नरः पुण्यं गङ्गास्नानफलं लभेत्।
तस्मात्तु सुस्थिरो भूत्वा समाहितमना जपेत् ॥ १७ ॥

## श्री विष्ण्वष्टोत्तरशतनामावलिः

हृषीकेशाय नमः । केशवाय । मधुसूदनाय । सर्वदैत्यानां सूदनाय । नारायणाय । अनामयाय । जयन्ताय । विजयाय । कृष्णाय । अनन्ताय । वामनाय । विष्णवे । विश्वेश्वराय । पुण्याय । विश्वात्मने । सुरार्चिताय । अनघाय । अघहर्त्रे । नारसिंहाय । श्रियः प्रियाय नमः ॥ २०

श्रीपतये नमः । श्रीधराय । श्रीदाय । श्रीनिवासाय । महोदयाय । श्रीरामाय । माधवाय । मोक्षक्षमारूपाय । जनार्दनाय । सर्वज्ञाय । सर्ववेत्त्रे । सर्वेशाय । सर्वदायकाय । हरये । मुरारये । गोविन्दाय । पद्मनाभाय । प्रजापतये । आनन्दज्ञानसंपन्नाय । ज्ञानदाय नमः ॥ ४०

ज्ञानदायकाय नमः । अच्युताय । सबलाय । चन्द्रवक्त्राय । व्याप्तपरावराय । योगेश्वराय । जगद्योनये । ब्रह्मरूपाय । महेश्वराय । मुकुन्दाय । वैकुण्ठाय । एकरूपाय । कवये । ध्रुवाय । वासुदेवाय । महादेवाय । ब्रह्मण्याय । ब्राह्मणप्रियाय । गोप्रियाय । गोहिताय नमः ॥ ६०

यज्ञाय नमः । यज्ञाङ्गाय । यज्ञवर्धनाय । यज्ञस्य भोक्त्रे । वेदवेदाङ्गपारगाय । वेदज्ञाय । वेदरूपाय । विद्यावासाय । सुरेश्वराय । प्रत्यक्षाय । महाहंसाय । शंखपाणये । पुरातनाय । पुष्कराय । पुष्कराक्षाय । वराहाय । धरणीधराय । प्रद्युम्नाय । कामपालाय । व्यासध्याताय नमः ॥ ८०

महेश्वराय नमः । सर्वसौख्याय । महासौख्याय । सांख्याय पुरुषोत्तमाय । योगरूपाय । महाज्ञानाय । योगीशाय । अजितप्रियाय । असुरारये । लोकनाथाय । पद्महस्ताय । गदाधराय । गुहावासाय । सर्ववासाय । पुण्यवासाय । महाजनाय । बृन्दानाथाय । बृहत्कायाय । पावनाय । पपनाशनाय नमः ॥ १००

गोपीनाथाय नमः । गोपसखाय । गोपालाय । गणाश्रयाय । परात्मने । पराधीशाय । कपिलाय । कार्यमानुषाय नमः ॥ १०८

# श्रीविष्णुशतनामस्तोत्रम्

विष्णुपुराणतः

नारद उवाच-

वासुदेवं हृषीकेशं वामनं जलशायिनम् ।
जनार्दनं हरिं कृष्णं श्रीवक्षं गरुडध्वजम् ॥ १ ॥

वराहं पुण्डरीकाक्षं नृसिंहं नरकान्तकम् ।
अव्यक्तं शाश्वतं विष्णुमनन्तमजमव्ययम् ॥ २ ॥

नारायणं गदाध्यक्षं गोविन्दं कीर्तिभाजनम् ।
गोवर्धनोद्धरं देवं भूधरं भुवनेश्वरम् ॥ ३ ॥

वेत्तारं यज्ञपुरुषं यज्ञेशं यज्ञवाहकम् ।
चक्रपाणिं गदापाणिं शंखपाणिं नरोत्तमम् ॥ ४ ॥

वैकुण्ठं दुष्टदमनं भूगर्भं पीतवाससम् ।
त्रिविक्रमं त्रिकालज्ञं त्रिमूर्तिं नन्दिकेश्वरम् ॥ ५ ॥

रामं रामं हयग्रीवं भीमं रौद्रं भवोद्भवम् ।
श्रीपतिं श्रीधरं श्रीशं मङ्गलं मङ्गलायुधम् ॥ ६ ॥

दामोदरं दमोपेतं केशवं केशिसूदनम् ।
वरेण्यं वरदं विष्णुमानन्दं वसुदेवजम् ॥ ७ ॥

हिरण्यरेतसं दीप्तं पुराणं पुरुषोत्तमम् ।
सकलं निष्कलं शुद्धं निर्गुणं गुणशाश्वतम् ॥ ८ ॥

हिरण्यतनुसङ्काशं सूर्ययुतसमप्रभम् ।
मेघश्यामं चतुर्बाहुं कुशलं कमलेक्षणम् ॥ ९ ॥

ज्योतीरूपमरूपं च स्वरूपं रूपसं स्थितम् ।
सर्वज्ञं सर्वरूपस्थं सर्वेशं सर्वतोमुखम् ॥ १० ॥

ज्ञानं कूटस्थमचलं ज्ञानदं परमं प्रभुम् ।
योगीशं योगनिष्णातं योगिनं योगरूपिणम् ॥ ११ ॥

ईश्वरं सर्वभूतेशं वन्दे भूतमयं प्रभुम् ।
इति नामशतं दिव्यं वैष्णवं खलु पापहम् ॥ १२ ॥

व्यासेन कथितं पूर्वं सर्वपापप्रणाशनम् ।
यः पठेत्प्रातरुत्थाय स भवेद्वैष्णवो नरः ॥ १३ ॥

सर्वपापविशुद्धात्मा विष्णुसायुज्यमाप्नुयात् ।
चान्द्रायणसहस्राणि कन्यादानशतानि च ॥ १४ ॥

गवां लक्षसहस्राणि मुक्तिभागी भवेन्नरः ।
अश्वमेधायुतं पुण्यं फलं प्राप्नोति मानवः ॥ १५ ॥

## श्री विष्णुशतनामावलिः

ओं वासुदेवाय नमः । हृषीकेशाय । वामनाय । जलशायिने । जनार्दनाय । हरये । कृष्णाय । श्रीवक्षाय । गरुडध्वजाय । वराहाय । पुण्डरीकाक्षाय । नृसिंहाय । नरकान्तकाय । अव्यक्ताय । शाश्वताय । विष्णवे । अनन्ताय ।

अजाय। अन्ययाय। नारायणाय नमः। २०

ओं गदाध्यक्षाय नमः। गोविन्दाय। कीर्तिभाजनाय। गोवर्धनोद्धराय। देवाय। भूधराय। भुवनेश्वराय। वेत्त्रे। यज्ञपुरुषाय। यज्ञेशाय। यज्ञवाहकाय। चक्रपाणये। गदापाणये। शंखपाणये। नरोत्तमाय। वैकुण्ठाय। दुष्टदमनाय। भूगर्भाय। पीतवाससे। त्रिविक्रमाय नमः। ४०

ओं त्रिकालज्ञाय नमः। त्रिमूर्तये। नन्दिकेश्वराय। रामाय। रामाय। हयग्रीवाय। भीमाय। रौद्राय। भवोद्भवाय। श्रीपतये। श्रीधराय। श्रीशाय। मङ्गलाय। मङ्गलायुधाय। दामोदराय। दमोपेताय। केशवाय। केशिसूदनाय। वरेण्याय। वरदाय नमः॥ ६०

ओं विष्णवे नमः। आनन्दाय। वसुदेवजाय। हिरण्यरेतसे। दीप्ताय। पुराणाय। पुरुषोत्तमाय। सकलाय। निष्कलाय। शुद्धाय। निर्गुणाय। गुणशाश्वताय। हिरण्यतनुसङ्काशाय। सूर्यायुतसमप्रभाय। मेघश्यामाय। चतुर्बाहवे। कुशलाय। कमलेक्षणाय। ज्योतीरूपाय। अरूपाय नमः। ८०

ओं स्वरूपाय नमः। रूपसंस्थिताय। सर्वज्ञाय। सर्वरूपस्थाय। सर्वेशाय। सर्वतोमुखाय। ज्ञानाय। कूटस्थाय। अचलाय। ज्ञानदाय। परमाय। प्रभवे। योगीशाय। योगनिष्णाताय। योगिने। योगरूपिणे। ईश्वराय। सर्वभूतेशाय। भूतमयाय। प्रभवे नमः। १००

## श्रीविष्णुद्वादशनामन्यासः

केशवः पातु मे पादौ जंघे नारायणो मम।
माधवो मे कटिं पातु गोविन्दो गुह्यमेव च॥

नाभिं विष्णुस्तु मे पातु जठरं मधुसूदनः ।
उरस्त्रिविक्रमः पातु हृदयं पातु वामनः ॥

श्रीधरः पातु मे कण्ठं हृषीकेशो मुखं मम ।
पद्मनाभस्तु नयने शिरो दामोदरो मम ॥

एवमेतानि नामानि जपकाले विशेषतः ।
विन्यसेदात्मरक्षार्थं सर्वमङ्गलसिद्धये ॥

## श्री विष्णोः अष्टनामस्तोत्रम्

अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् ।
हंसं नारायणं चैवमेतन्नामाष्टकं जपेत् ॥

त्रिसन्ध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति ।
शत्रुसैन्यं क्षयं याति दुःस्वप्नः सुखदो भवेत् ॥

गङ्गायां मरणं चैव दृढा भक्तिस्तु केशवे ।
ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः ॥

नामावलिः- अच्युताय नमः । केशवाय । विष्णवे । हरये । सत्याय । जनार्दनाय । हंसाय । नारायणाय नमः

(वामनपुराणतः)

## श्रीविष्णोः षोडशनामस्तोत्रम्

औषधे चिन्तयेद्विष्णुं भोजने च जनार्दनम् ।
शयने पद्मनाभं च विवाहे च प्रजापतिम् ॥

युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमम् ।
नारायणं तनुत्यागे श्रीधरं प्रियसङ्गमे ॥

दुःस्वप्ने स्मर गोविन्दं सङ्कटे मधुसूदनम् ।
कानने नारसिंहं च पावके जलशायिनम् ॥

जलमध्ये वराहं च पर्वते रघुनन्दनम्।
गमने वामनं चैव सर्वकार्येषु माधवम्॥

षोडशैतानि नामानि प्रातरुत्थाय यः पठेत्।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते॥

नामावलिः— विष्णवे नमः। जनार्दनाय। पद्मनाभाय। प्रजापतये। चक्रधराय। त्रिविक्रमाय। नारायणाय। श्रीधराय। गोविन्दाय। मधुसूदनाय। नारसिंहाय। जलशायिने। वराहाय। रघुनन्दनाय। वामनाय। माधवाय नमः॥ १६

## विष्णोः अष्टाविंशतिनामस्तोत्रम्

अर्जुन उवाच-

किं नु नामसहस्राणि जपान्ते च पुनःपुनः।
यानि नामानि दिव्यानि तानि चाचक्ष्व केशव॥

श्रीभगवानुवाच-

मत्स्यं कूर्मं वराहं च वामनं च जनार्दनम्।
गोविन्दं पुण्डरीकाक्षं माधवं मधुसूदनम्॥
पद्मनाभं सहस्राक्षं वनमालिं हलायुधम्।
गोवर्धनं हृषीकेशं वैकुण्ठं पुरुषोत्तमम्॥
विश्वरूपं वासुदेवं रामं नारायणं हरिम्।
दामोदरं श्रीधरं च वेदाङ्गं गरुडध्वजम्।
अनन्तं कृष्णगोपालं जपतो नास्ति पातकम्॥
गवां कोटिप्रदानस्य अश्वमेधशतस्य च।
कन्यादानसहस्राणां फलं प्राप्नोति मानवः॥
अमायां वा पौर्णमास्यां एकादश्यां तथैव च।
सन्ध्यकाले स्मरन्नित्यं प्रातःकाले तथैव च॥
मध्याह्ने च जपन्नित्यं सर्वपापैः प्रमुच्यते।

नामावलिः- मत्स्याय नमः । कूर्माय । वराहाय । वामनाय । जनार्दनाय । गोविन्दाय । पुण्डरीकाक्षाय । माधवाय । मधुसूदनाय । पद्मनाभाय । सहस्राक्षाय । वनमालिने । हलायुधाय । गोवर्धनाय । हृषीकेशाय । वैकुण्ठाय । पुरुषोत्तमाय । विश्वरूपाय । वासुदेवाय । रामाय । नारायणाय । हरये । दामोदराय । श्रीधराय । वेदाङ्गाय । गरुडध्वजाय । अनन्ताय । कृष्णगोपालाय नमः २८

## श्री विष्णोः एकादशनामस्तोत्रम्

राम नारायणानन्त मुकुन्द मधुसूदन ।
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन ।।
इत्येकादशनामानि पठेद्वा पाठयेद्यतः ।
जन्मकोटिसहस्राणां पातकादेव मुच्यते ।।

नामावलिः- रामाय नमः । नारायणाय । अनन्ताय । मुकुन्दाय । मधुसूदनाय । कृष्णाय । केशवाय । कंसारये । हरये । वैकुण्ठाय । वामनाय नमः ।।

हरे मुरारे मधुकैटभारे गोपाल गोविन्द मुकुन्द शौरे ।
यज्ञेश नारायण कृष्ण विष्णो निराश्रयं मां जगदीश रक्ष ।।

नामावलिः- हरये नमः । मुरारये । मधुकैटभारये । गोपालाय । गोविन्दाय । मुकुन्दाय । शौरये । यज्ञेशाय । नारायणाय । कृष्णाय । विष्णवे नमः ।। ११

## विष्णुद्वादशनामस्तोत्रम्

।। श्रीकृष्ण उवाच ।।

किं ते नामसहस्रेण विज्ञातेन तवार्जन ।
तानि नामानि विज्ञाय नरः पापैः प्रमुच्यते ।। १ ।।
प्रथमं तु हरिं विन्द्याद्द्वितीयं केशवं तथा ।
तृतीयं पद्मनाभं च चतुर्थं वामनं स्मरेत् ।। २ ।।



१.केशवः - स्वर्णवर्णः, चतुश्चक्रधरः, श्री देवीयुतः ।



२. नारायणः - श्यामः, चतुःशङ्खधरः, अमृतोद्भवायुतः ।



३.माधवः - नीलाभः, चतुर्गदाधरः, कमलायुतः ।



४.गोविन्दः - चन्द्रवर्णः चतुःशार्ङ्गधरः चन्द्रसोदरीयुतः ।

पञ्चमं वेदगर्भं षष्ठं च मधुसूदनम्।
सप्तमं वासुदेवं च वराहं चाष्टमं तथा ।। ३ ।।
नवमं पुण्डरीकाक्षं दशमं हि जनार्दनम्।
कृष्णमेकादशं विन्द्याद्द्वादशं श्रीधरं तथा ।। ४ ।।
द्वादशैतानि नामानि विष्णुप्रोक्तान्यनेकशः ।
सायंप्रातः पठेन्नित्यं तस्य पुण्यफलं शृणु ।। ५ ।।
चान्द्रायणसहस्राणि कन्यादानशतानि च ।
अश्वमेधसहस्राणि फलं प्राप्नोत्यसंशयः ।। ६ ।।
अमायां पौर्णमास्यां च द्वादश्यां तु विशेषतः ।
प्रातःकाले पठेन्नित्यं सर्वपापैः प्रमुच्यते ।। ७ ।।

—महाभारते अरण्यपर्वणि

## विष्णुद्वादशनामावलिः

ओं हरये नमः । केशवाय । पद्मनाभाय । वामनाय । वेदगर्भाय । मधुसूदनाय । वासुदेवाय । वराहाय । पुण्डरीकाक्षाय । जनार्दनाय । कृष्णाय । श्रीधराय नमः ।। १२

श्रीरस्तु

# लक्ष्मीसहस्रनामस्तोत्रम् - १

(स्कान्दे सनत्कुमारसंहितातः)

हरिः ओं ।

नाम्नां साष्टसहस्रञ्च ब्रूहि गार्ग्य महामते ।
महालक्ष्म्या महादेव्या भुक्तिमुक्त्यर्थसिद्धये ।। १

गार्ग्य उवाच–

सनत्कुमारमासीनं द्वादशादित्यसन्निभम् ।
अपृच्छन्योगिनो भक्त्या योगिनामर्थसिद्धये ।। २

सर्वलौकिककर्मभ्यो विमुक्तानां हिताय वै ।
भुक्तिमुक्तिप्रदं जप्यमनुब्रूहि दयानिधे ।। ३

सनत्कुमार भगवन्सर्वज्ञोऽसि विशेषतः ।
आस्तिक्यसिद्धये नॄणां क्षिप्रधर्मार्थसाधनम् ।। ४

खिद्यन्ति मानवास्सर्वे धनाभावेन केवलम् ।
सिद्ध्यन्ति धनिनोऽन्यस्य नैव धर्मार्थकामनाः ।। ५

दारिद्र्यध्वंसिनी नाम केन विद्या प्रकीर्तिता ।
केन वा ब्रह्मविद्याऽपि केन मृत्युविनाशिनी ।। ६

सर्वासां सारभूतैका विद्यानां केन कीर्तिता ।
प्रत्यक्षसिद्धिदा ब्रह्मन् तामाचक्ष्व दयानिधे ।। ७

सनत्कुमार उवाच ।

साधु पृष्टं महाभागास्सर्वलोकहितैषिणः ।
महतामेष धर्मश्च नान्येषामिति मे मतिः ।। ८

ब्रह्मविष्णुमहादेवमहेन्द्रादिमहात्मभिः ।
संप्रोक्तं कथयाम्यद्य लक्ष्मीनामसहस्रकम् ॥ ९

यस्योच्चारणमात्रेण दारिद्र्यान्मुच्यते नरः ।
किं पुनस्तज्जपाज्जापी सर्वेष्टार्थानवाप्नुयात् ॥ १०

अस्य श्रीलक्ष्मीदिव्यसहस्रनामस्तोत्रमहामन्त्रस्य, आनन्दकर्दमचिक्लीतेंदिरासुतादयो महात्मानो महर्षयः, अनुष्टुप्छन्दः, विष्णुमाया शक्तिः, महालक्ष्मीः परा देवता, श्रीमहालक्ष्मीप्रसादद्वारा सर्वेष्टार्थसिद्ध्यर्थे जपे विनियोगः । श्रीमित्यादि षडङ्गन्यासः । ध्यानं ।

पद्मनाभप्रियां देवीं पद्माक्षीं पद्मवासिनीं ।
पद्मवक्त्रां पद्महस्तां वन्दे पद्मामहर्निशम् ॥

पूर्णेंदुवदनां दिव्यरत्नाभरणभूषिताम् ।
वरदाभयहस्ताढ्यां ध्यायेच्चन्द्रसहोदरीम् ॥

इच्छारूपां भगवतस्सच्चिदानन्दरूपिणीम् ।
सर्वज्ञां सर्वजननीं विष्णुवक्षस्स्थलालयाम् ।
दयाळुमनिशं ध्यायेत्सुखसिद्धिस्वरूपिणीम् ॥

यथोपदेशं जपित्वा, यथाक्रमं देव्यै समर्प्य, ततश्शांभवीमुद्रया लक्ष्मीमनुसन्धाय, नामसहस्रं जपेत् ।

नित्यागतानन्तनित्या नन्दिनी जनरञ्जनी ।
नित्यप्रकाशिनी चैव स्वप्रकाशस्वरूपिणी ॥ १

महालक्ष्मीर्महाकाळी महाकन्या सरस्वती ।
भोगवैभवसंधात्री भक्तानुग्रहकारिणी ॥ २

ईशावास्या महामाया महादेवी महेश्वरी ।
हृल्लेखा परमा शक्तिर्मातृकाबीजरूपिणी ॥ ३

नित्यानन्दा नित्यबोधा नादिनी जनमोदिनी।
सत्यप्रत्ययनी चैव स्वप्रकाशात्मरूपिणी ॥ ४

त्रिपुरा भैरवी विद्या हंसा वागीश्वरी शिवा।
वाग्देवी च महारात्रिः काळरात्रिस्त्रिलोचना ॥ ५

भद्रकाळी कराळी च महाकाळी तिलोत्तमा।
काळी कराळवक्त्रांता कामाक्षी कामदा शुभा ॥ ६

चण्डिका चण्डरूपेशा चामुण्डा चक्रधारिणी।
त्रैलोक्यजयिनी देवी त्रैलोक्यविजयोत्तमा ॥ ७

सिद्धलक्ष्मीः क्रियालक्ष्मीर्मोक्षलक्ष्मीः प्रसादिनी।
उमा भगवती दुर्गा चांद्री दाक्षायणी शिवा ॥ ८

प्रत्यङ्गिरा धरा वेला लोकमाता हरिप्रिया।
पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी ॥ ९

अरूपा बहुरूपा च विरूपा विश्वरूपिणी।
पञ्चभूतात्मिका वाणी पञ्चभूतात्मिका परा ॥ १०

काळी मा पञ्चिका वाग्मी हविःप्रत्यधिदेवता।
देवमाता सुरेशाना वेदगर्भाऽम्बिका धृतिः ॥ ११

सङ्ख्या जातिः क्रियाशक्तिः प्रकृतिर्मोहिनी मही।
यज्ञविद्या महाविद्या गुह्यविद्या विभावती ॥ १२

ज्योतिष्मती महामाता सर्वमन्त्रफलप्रदा।
दारिद्र्यध्वंसिनी देवी हृदयग्रन्थिभेदिनी ॥ १३

सहस्रादित्यसङ्काशा चन्द्रिका चन्द्ररूपिणी।
गायत्री सोमसंभूतिस्सावित्री प्रणवात्मिका ॥ १४

शाङ्करी वैष्णवी ब्राह्मी सर्वदेवनमस्कृता ।
सेव्यदुर्गा कुबेराक्षी करवीरनिवासिनी ॥ १५

जया च विजया चैव जयन्ती चाऽपराजिता ।
कुब्जिका काळिका शास्त्री वीणापुस्तकधारिणी ॥ १६

सर्वज्ञशक्तिः श्रीशक्तिर्ब्रह्मविष्णुशिवात्मिका ।
इडापिङ्गळिकामध्यमृणाळीतन्तुरूपिणी ॥ १७

यज्ञेशानी प्रथा दीक्षा दक्षिणा सर्वमोहिनी ।
अष्टाङ्गयोगिनी देवी निर्बीजध्यानगोचरा ॥ १८

सर्वतीर्थस्थिता शुद्धा सर्वपर्वतवासिनी ।
वेदशास्त्रप्रमा देवी षडङ्गादिपदक्रमा ॥ १९

शिवा धात्री शुभानन्दा यज्ञकर्मस्वरूपिणी ।
व्रतिनी मेनका देवी ब्रह्माणी ब्रह्मचारिणी ॥ २०

एकाक्षरपरा तारा भवबन्धविनाशिनी ।
विश्वंभरा धराधारा निराधाराऽधिकस्वरा ॥ २१

राका कुहूरमावास्या पूर्णिमाऽनुमतिर्द्युतिः ।
सिनीवाली शिवाऽवश्या वैश्वदेवी पिशङ्गिला ॥ २२

पिप्पला च विशालाक्षी रक्षोघ्नी वृष्टिकारिणी ।
दुष्टविद्राविणी देवी सर्वोपद्रवनाशिनी ॥ २३

शारदा शरसन्धाना सर्वशस्त्रस्वरूपिणी ।
युद्धमध्यस्थिता देवी सर्वभूतप्रभञ्जनी ॥ २४

अयुद्धा युद्धरूपा च शान्ता शान्तिस्वरूपिणी ।
गङ्गा सरस्वतीवेणीयमुनानर्मदापगा ॥२५

समुद्रवसनावासा ब्रह्माण्डश्रेणिमेखला ।
पञ्चवक्त्रा दशभुजा शुद्धस्फटिकसन्निभा ॥ २६

रक्ता कृष्णा सिता पीता सर्ववर्णा निरीश्वरी ।
काळिका चक्रिका देवी सत्या तु वटुकास्थिता ॥ २७

तरुणी वारुणी नारी ज्येष्ठादेवी सुरेश्वरी ।
विश्वंभराधरा कर्त्री गळार्गळविभञ्जनी ॥ २८

सन्ध्यारात्रिदिवाज्योत्स्ना कलाकाष्ठा निमेषिका ।
उर्वी कात्यायनी शुभ्रा संसारार्णवतारिणी ॥ २९

कपिला कीलिकाऽशोका मल्लिकानवमल्लिका ।
देविका नन्दिका शान्ता भञ्जिका भयभञ्जिका ॥ ३०

कौशिकी वैदिकी देवी सौरी रूपाधिकऽतिभा ।
दिग्वस्त्रा नववस्त्रा च कन्यका कमलोद्भवा ॥ ३१

श्रीस्सौम्यलक्षणाऽतीतदुर्गा सूत्रप्रबोधिका ।
श्रद्धा मेधा कृतिः प्रज्ञा धारणा कान्तिरेव च ॥ ३२

श्रुतिः स्मृतिर्धृतिर्धन्या भूतिरिष्टिर्मनीषिणी ।
विरक्तिर्व्यापिनी माया सर्वमायाप्रभञ्जनी ॥ ३३

माहेंद्री मंत्रिणी सिंही चेन्द्रजालस्वरूपिणी ।
अवस्थात्रयनिर्मुक्ता गुणत्रयविवर्जिता ॥ ३४

ईषणात्रयनिर्मुक्ता सर्वरोगविवर्जिता ।
योगिध्यानान्तगम्या च योगध्यानपरायणा ॥ ३५

त्रयीशिखा विशेषज्ञा वेदान्तज्ञानरूपिणी ।
भारती कमला भाषा पद्मा पद्मवती कृतिः ॥ ३६

गौतमी गोमती गौरी ईशाना हंसवाहनी ।
नारायणी प्रभाधारा जाह्नवी शङ्करात्मजा ॥ ३७

चित्रघण्टा सुनन्दा श्रीर्मानवी मनुसंभवा ।
स्तंभिनी क्षोभिणी मारी भ्रामिणी शत्रुमारिणी ॥ ३८

मोहिनी द्वेषिणी वीरा अघोरा रुद्ररूपिणी ।
रुद्रैकादशिनी पुण्या कल्याणी लाभकारिणी ॥ ३९

देवदुर्गा महादुर्गा स्वप्नदुर्गाऽष्टभैरवी ॥ ४०

सूर्यचन्द्राग्निरूपा च ग्रहनक्षत्ररूपिणी ।
बिंदुनादकळातीता बिंदुनादकळात्मिका ॥ ४१

दशवायुजयाकारा कळाषोडशसंयुता ।
काश्यपी कमलादेवी नादचक्रनिवासिनी ॥ ४२

मृडाधारा स्थिरा गुह्या देविका चक्ररूपिणी ।
अविद्या शार्वरी भुञ्जा जंभासुरनिबर्हिणी ॥ ४३

श्रीकाया श्रीकला शुभ्रा कर्मनिर्मूलकारिणी ।
आदिलक्ष्मीर्गुणाधारा पञ्चब्रह्मात्मिका परा ॥ ४४

श्रुतिर्ब्रह्ममुखावासा सर्वसंपत्तिरूपिणी ।
मृतसञ्जीविनी मैत्री कामिनी कामवर्जिता ॥ ४५

निर्वाणमार्गदा देवी हंसिनी काशिका क्षमा ।
सपर्या गुणिनी भिन्ना निर्गुणा खण्डिताशुभा ॥ ४६

स्वामिनी वेदिनी शक्या शांबरी चक्रधारिणी ।
दण्डिनी मुण्डिनी व्याघ्री शिखिनी सोमसंहतिः ॥ ४७

चिन्तामणिश्चिदानन्दा पञ्चबाणप्रबोधिनी ।
बाणश्रेणिस्सहस्राक्षी सहस्रभुजपादुका ॥ ४८

सन्ध्यावलिस्त्रिसन्ध्याख्या ब्रह्माण्डमणिभूषणा ।
वासवी वारुणीसेना कुळिका मन्त्ररञ्जनी ॥ ४९

जितप्राणस्वरूपा च कान्ता काम्यवरप्रदा ।
मन्त्रब्राह्मणविद्यार्था नादरूपा हविष्मती ॥ ५०

आथर्वणी श्रुतिश्शून्या कल्पनावर्जिता सती ।
सत्ताजातिः प्रमाऽमेयाऽप्रमितिः प्राणदा गतिः ॥ ५१

अवर्णा पञ्चवर्णा च सर्वदा भुवनेश्वरी ।
त्रैलोक्यमोहिनी विद्या सर्वभर्त्री क्षराऽक्षरा ॥ ५२

हिरण्यवर्णा हरिणी सर्वोपद्रवनाशिनी ।
कैवल्यपदवीरेखा सूर्यमण्डलसंस्थिता ॥ ५३

सोममण्डलमध्यस्था वह्निमण्डलसंस्थिता ।
वायुमण्डलमध्यस्था व्योममण्डलसंस्थिता ॥ ५४

चक्रिका चक्रमध्यस्था चक्रमार्गप्रवर्तिनी ।
कोकिलाकुलचक्रेशा पक्षतिः पंक्तिपावनी ॥ ५५

सर्वसिद्धांतमार्गस्था षड्वर्णावरवर्जिता ।
शररुद्रहरा हन्त्री सर्वसंहारकारिणी ॥ ५६

पुरुषा पौरुषी तुष्टिस्सर्वतन्त्रप्रसूतिका ।
अर्धनारीश्वरी देवी सर्वविद्याप्रदायिनी ॥ ५७

भार्गवी याजुषीविद्या सर्वोपनिषदास्थिता ।
व्योमकेशाखिलप्राणा पञ्चकोशविलक्षणा ॥ ५८

पञ्चकोशात्मिका प्रत्यक्पञ्चब्रह्मात्मिका शिवा ।
जगज्जराजनित्री च पञ्चकर्मप्रसूतिका ॥ ५९

वाग्देव्याभरणाकारा सर्वकाम्यस्थितस्थिति : ।
अष्टादशाचतुष्षष्टिपीठिका विद्यया युता ॥ ६०

काळिकाकर्षणश्यामा यक्षिणी किन्नरेश्वरी ।
केतकी मल्लिकाशोका वाराही धरणी ध्रुवा ॥ ६१

नारसिंही महोग्रास्या भक्तानामार्तिनाशिनी ।
अन्तर्बला स्थिरा लक्ष्मीर्जरामरणनाशिनी ॥ ६२

श्रीरञ्जिता महाकाया सोमसूर्याग्निलोचना ।
अदितिर्देवमाता च अष्टपुत्राऽष्टयोगिनी ॥ ६३

अष्टप्रकृतिरष्टाष्टविभ्राजद्विकृताकृतिः ।
दुर्भिक्षध्वंसिनी देवी सीता सत्या च रुक्मिणी ॥ ६४

ख्यातिजा भार्गवी देवी देवयोनिस्तपस्विनी ।
शाकंभरी महाशोणा गरुडोपरिसंस्थिता ॥ ६५

सिंहगा व्याघ्रगा देवी वायुगा च महाद्रिगा ।
अकारादिक्षकारान्ता सर्वविद्याधिदेवता ॥ ६६

मन्त्रव्याख्याननिपुणा ज्योतिश्शास्त्रैकलोचना ।
इडापिङ्गळिकामध्यसुषुम्ना ग्रन्थिभेदिनी ॥ ६७

कालचक्राश्रयोपेता कालचक्रस्वरूपिणी ।
वैशारदी मतिश्श्रेष्ठा वरिष्ठा सर्वदीपिका ॥ ६८

वैनायकी वरारोहा श्रोणिवेला बहिर्वळिः ।
जंभिनी जृंभिणी जृंभकारिणी गणकारिका ॥ ६९

शरणी चक्रिकाऽनन्ता सर्वव्याधिचिकित्सकी।
देवकी देवसङ्काशा वारिधिः करुणाकरा ॥ ७०

शर्वरी सर्वसंपन्ना सर्वपापप्रभञ्जिनी।
एकमात्रा द्विमात्रा च त्रिमात्रा च तथा परा ॥ ७१

अर्धमात्रा परा सूक्ष्मा सूक्ष्मार्थार्थपराऽपरा।
एकवीरा विशेषाख्या षष्ठीदेवी मनस्विनी ॥ ७२

नैष्कर्म्या निष्कळालोका ज्ञानकर्माधिका गुणा।
सबन्ध्वानन्दसन्दोहा व्योमाकाराऽनिरूपिता ॥ ७३

गद्यपद्यात्मिका वाणी सर्वालङ्कारसंयुता।
साधुबन्धपदन्यासा सर्वौको घटिकावळिः ॥ ७४

षट्कर्मा कर्कशाकारा सर्वकर्मविवर्जिता।
आदित्यवर्णा चापर्णा कामिनी वररूपिणी ॥ ७५

ब्रह्माणी ब्रह्मसन्ताना वेदवागीश्वरी शिवा।
पुराणन्यायमीमांसाधर्मशास्त्रागमश्रुता ॥ ७६

सद्योवेदवती सर्वा हंसी विद्याधिदेवता।
विश्वेश्वरी जगद्धात्री विश्वनिर्माणकारिणी ॥ ७७

वैदिकी वेदरूपा च काळिका कालरूपिणी।
नारायणी महादेवी सर्वतत्त्वप्रवर्तिनी ॥ ७८

हिरण्यवर्णरूपा च हिरण्यपदसंभवा।
कैवल्यपदवी पुण्या कैवल्यज्ञानलक्षिता ॥ ७९

ब्रह्मसंपत्तिरूपा च ब्रह्मसंपत्तिकारिणी।
वारुणी वारुणाराध्या सर्वकर्मप्रवर्तिनी ॥ ८०

एकाक्षरपराऽऽयुक्ता सर्वदारिद्यभञ्जिनी।
पाशांकुशान्विता दिव्या वीणाव्याख्याक्षसूत्रभृत्॥ ८१

एकमूर्तिस्त्रयीमूर्तिर्मधुकैटभभञ्जिनी।
सांख्या सांख्यवती ज्वाला ज्वलन्ती कामरूपिणी॥ ८२

जाग्रन्ती सर्वसंपत्तिस्सुषुप्ता स्वेष्टदायिनी।
कपालिनी महादंष्ट्रा भ्रुकुटीकुटिलानना॥ ८३

सर्वावासा सुवासा च बृहत्यष्टिश्च शक्वरी।
छन्दोगणप्रतिष्ठा च कल्माषी करुणात्मिका॥ ८४

चक्षुष्मती महाघोषा खड्गचर्मधराऽशनिः।
शिल्पवैचित्र्यविद्योता सर्वतोभद्रवासिनी॥ ८५

अचिन्त्यलक्षणाकारा सूत्रभाष्यनिबन्धना।
सर्ववेदार्थसपंत्तिस्सर्वशास्त्रार्थमातृका॥ ८६

अकारादिक्षकारांतसर्ववर्णकृतस्थला।
सर्वलक्ष्मीस्सदानन्दा सारविद्या सदाशिवा॥ ८७

सर्वज्ञा सर्वशक्तिश्च खेचरीरूपगोच्छ्रिता।
अणिमादिगुणोपेता परा काष्ठा परा गतिः॥ ८८

हंसयुक्तविमानस्था हंसारूढा शशिप्रभा।
भवानी वासनाशक्तिराकृतिस्थाखिलाऽखिला॥ ८९

तन्त्रहेतुर्विचित्राङ्गी व्योमगङ्गाविनोदिनी।
वर्षा च वार्षिका चैव ऋग्यजुस्सामरूपिणी॥ ९०

महानदी नदीपुण्याऽगण्यपुण्यगुणक्रिया।
समाधिगतलभ्यार्था श्रोतव्या स्वप्रिया घृणा॥ ९१

नामाक्षरपरा देवी उपसर्गनखाश्चिता।
निपातोरुद्वयीजङ्घा मातृका मन्त्ररूपिणी ॥ ९२

आसीना च शयाना च तिष्ठन्ती धावनाधिका।
लक्ष्यलक्षणयोगाढ्या ताद्रूप्यगणनाकृतिः ॥ ९३

सैकरूपा नैकरूपा सेंदुरूपा तदाकृतिः ।
समासतद्धिताकारा विभक्तिवचनात्मिका ॥ ९४

स्वाहाकारा स्वधाकारा श्रीपत्यर्धाङ्गनन्दिनी।
गंभीरा गहना गुह्या योनिलिङ्गार्धधारिणी ॥ ९५

शेषवासुकिसंसेव्या चषाला वरवर्णिनी।
कारुण्याकारसंपत्तिः कीलकृन्मन्त्रकीलिका ॥ ९६

शक्तिबीजात्मिका सर्वमंत्रेष्टाक्षयकामना।
आग्नेयी पार्थिवा आप्या वायव्या व्योमकेतना ॥ ९७

सत्यज्ञानात्मिका नन्दा ब्राह्मी ब्रह्म सनातनी।
अविद्यावासना मायाप्रकृतिस्सर्वमोहिनी ॥ ९८

शक्तिर्धारणशक्तिश्च चिदचिच्छक्तियोगिनी।
वक्त्रारुणा महामाया मरीचिर्मदमर्दिनी ॥ ९९

विराट् स्वाहा स्वधा शुद्धा निरुपास्तिस्सुभक्तिगा।
निरूपिताद्वयी विद्या नित्यानित्यस्वरूपिणी ॥ १००

वैराजमार्गसंचारा सर्वसत्पथदर्शिनी।
जालन्धरी मृडानी च भवानी भवभञ्जनी ॥ १०१

त्रैकालिकज्ञानतन्तुस्त्रिकालज्ञानदायिनी।
नादातीता स्मृतिः प्रज्ञा धात्रीरूपा त्रिपुष्करा ॥ १०२

पराजिता विधानज्ञा विशेषितगुणात्मिका ।
हिरण्यकेशिनी हेमब्रह्मसूत्रविचक्षणा ॥ १०३

असंख्येयपरार्धांतस्वरव्यञ्जनवैखरी ।
मधुजिह्वा मधुमती मधुमासोदया मधुः ॥ १०४

माधवी च महाभागा मेघगंभीरनिस्वना ।
ब्रह्मविष्णुमहेशादिज्ञातव्यार्थविशेषगा ॥ १०५

नाभौ वह्निशिखाकारा ललाटे चन्द्रसन्निभा ।
भ्रूमध्ये भास्कराकारा सर्वताराकृतिर्हृदि ॥ १०६

कृत्तिकादिभरण्यन्तनक्षत्रेष्ट्यर्चितोदया ।
ग्रहविद्यात्मिका ज्योतिर्ज्योतिर्विन्मतिजीविका ॥ १०७

ब्रह्माण्डगर्भिणी बाला सप्तावरणदेवता ।
वैराजोत्तमसाम्राज्या कुमारकुशलोदया ॥ १०८

बगळा भ्रमरांबा च शिवदूती शिवात्मिका ।
मेरुविन्ध्यादिसंस्थाना काश्मीरपुरवासिनी ॥ १०९

योगनिद्रा महानिद्रा विनिद्रा राक्षसाश्रिता ।
सुवर्णदा महागङ्गा पञ्चाख्या पञ्चसंहतिः ॥ ११०

सुप्रजाता सुवीरा च सुपोषा सुपतिश्शिवा ।
सुगृहा रक्तबीजान्ता हतकन्दर्पजीविका ॥ १११

समुद्रव्योममध्यस्था समबिंदुसमाश्रया ।
सौभाग्यरसजीवातुस्सारासारविवेकदृक् ॥ ११२

त्रिवळ्यादिसुपुष्टाङ्गा भारती भरताश्रिता ।
नादब्रह्ममयीविद्या ज्ञानब्रह्ममयीपरा ॥ ११३

ब्रह्मनाडी निरुक्तिश्च ब्रह्मकैवल्यसाधना।
काळिकेयमहोदारवीर्यविक्रमरूपिणी ॥ ११४

बडबाग्निशिखावक्त्रा महाकबळतर्पणा।
महाभूता महादर्पा महासारा महाक्रतुः ॥ ११५

पञ्चभूतमहाग्रासा पञ्चभूताधिदेवता।
सर्वप्रमाणा संपत्तिस्सर्वरोगप्रतिक्रिया ॥ ११६

ब्रह्माण्डांतर्बहिर्व्याप्ता विष्णुवक्षोविभूषणी।
शाङ्करी विधिवक्त्रस्था प्रवरा वरहेतुकी ॥ ११७

हेममाला शिखामाला त्रिशिखा पञ्चलोचना।
सर्वागमसदाचारमर्यादा यातुभञ्जनी ॥ ११८

पुण्यश्लोकप्रबन्धाढ्या सर्वान्तर्यामिरूपिणी।
सामगानसमाराध्या श्रोत्रकर्णरसायनम् ॥ ११९

जीवलोकैकजीवातुर्भद्रोदारविलोकना।
तटित्कोटिलसत्कांतिस्तरुणी हरिसुन्दरी ॥ १२०

मीननेत्रा च सेंद्राक्षी विशालाक्षी सुमङ्गळा।
सर्वमङ्गळसंपन्ना साक्षान्मङ्गळदेवता ॥ १२१

देहहृद्दीपिका दीप्तिर्जिह्मपापप्रणाशिनी।
अर्धचन्द्रोल्लसद्दंष्ट्रा यज्ञवाटीविलासिनी ॥ १२२

महादुर्गा महोत्साहा महादेवबलोदया।
डाकिनीड्या शाकिनीड्या साकिनीड्या समस्तजुट् ॥ १२३

निरङ्कुशा नाकिवन्द्या षडाधाराधिदेवता।
भुवनज्ञानिनिश्श्रेणी भुवनाकारवल्लरी ॥ १२४

शाश्वती शाश्वताकारा लोकानुग्रहकारिणी ।
सारसी मानसी हंसी हंसलोकप्रदायिनी ॥ १२५

चिन्मुद्रालङ्कृतकरा कोटिसूर्यसमप्रभा ।
सुखप्राणिशिरोरेखा सदद्दष्टप्रदायिनी ॥॥ १२६

सर्वसाङ्कर्यदोषघ्नी ग्रहोपद्रवनाशिनी ।
क्षुद्रजन्तुभयघ्नी च विषरोगादिभञ्जनी ॥ १२७

सदाशान्ता सदाशुद्धा गृहच्छिद्रनिवारिणी ।
कलिदोषप्रशमनी कोलाहलपुरस्थिता ॥ १२८

गौरी लाक्षणिकी मुख्या जघन्याकृतिवर्जिता ।
माया विद्या मूलभूता वासवी विष्णुचेतना ॥ १२९

वादिनी वसुरूपा च वसुरत्नपरिच्छदा ।
छांदसी चन्द्रहृदया मन्त्रस्वच्छन्दभैरवी ॥ १३०

वनमाला वैजयन्ती पञ्चदिव्यायुधात्मिका ।
पीतांबरमयी चञ्चत्कौस्तुभा हरिकामिनी ॥ १३१

नित्या तथ्या रमा रामा रमणी मृत्युभञ्जिनी ।
ज्येष्ठा काष्ठा धनिष्ठान्ता शराङ्गी निर्गुणप्रिया ॥ १३२

मैत्रैया मित्रविन्दा च शेष्यशेषकळाशया ।
वाराणसीवासरता चार्यावर्तजनस्तुता ॥ १३३

जगदुत्पत्तिसंस्थानसंहारत्रयकारणम् ।
त्वमंब विष्णुसर्वस्वं नमस्तेऽस्तु महेश्वरि ॥ १३४

नमस्ते सर्वलोकानां जनन्यै पुण्यमूर्तये ।
सिद्धलक्ष्मीर्महाकाळि महालक्ष्मि नमोऽस्तु ते ॥ १३५

सद्योजातादिपञ्चाग्निरूपा पञ्चकपञ्चकम् ।
यन्त्रलक्ष्मीर्भवत्यादिराद्याद्ये ते नमो नमः ॥ १३६

सृष्ट्यादिकारणाकारवितते दोषवर्जिते ।
जगल्लक्ष्मि जगन्मातर्विष्णुपत्नि नमोऽस्तु ते ॥ १३७

नवकोटिमहाशक्तिसमुपास्यपदांबुजे ।
कनत्सौवर्णरत्नाढ्ये सर्वाभरणभूषिते ॥ १३८

अनन्तनित्यमहिषीप्रपञ्चेश्वरनायकि ।
अत्युच्छ्रितपदांतस्थे परमव्योमनायकि ॥ १३९

नाकपृष्ठगताराध्ये विष्णुलोकविलासिनि ।
वैकुण्ठराजमहिषि श्रीरङ्गनगराश्रिते ॥ १४०

रङ्गनायकि भूपुत्रि कृष्णे वरदवल्लभे ।
कोटिब्रह्मादिसंसेव्ये कोटिरुद्रादिकीर्तिते ॥ १४१

मातुलुङ्गमयं खेटं सौवर्णचषकं तथा ।
पद्मद्वयं पूर्णकुंभं कीरञ्च वरदाभये ॥ १४२

पाशमङ्कुशकं शंखं चक्रं शूलं कृपाणिकाम् ।
धनुर्बाणौ चाक्षमालां चिन्मुद्रामपि बिभ्रती ॥ १४३

अष्टादशभुजे लक्ष्मीर्महाष्टादशपीठगे ।
भूमिनीळादिसंसेव्ये स्वामिचित्तानुवर्तिनि ॥ १४४

पद्मे पद्मालये पद्मि पूर्णकुंभाभिषेचिते ।
इन्दिरेन्दीवराभाक्षि क्षीरसागरकन्यके ॥ १४५

भार्गवि त्वं स्वतंत्रेच्छा वशीकृतजगत्पतिः ।
मङ्गळं मङ्गळानां त्वं देवतानां च देवता ॥ १४६

त्वमुत्तमोत्तमानाञ्च त्वं श्रेयः परमामृतम् ।
धनधान्याभिवृद्धिश्च सार्वभौमसुखोच्छ्रया ॥ १४७

आंदोळिकादिसौभाग्यं मत्तेभादिमहोदयः ।
पुत्रपौत्राभिवृद्धिश्च विद्याभोगबलादिकम् ॥ १४८

आयुरारोग्यसंपत्तिरष्टैश्वर्यं त्वमेव हि ।
परमेशविभूतिश्च सूक्ष्मात्सूक्ष्मतरा गतिः ॥ १४९

सदयापाङ्गसंदत्तब्रह्मेंद्रादिपदस्थितिः ।
अव्याहतमहाभाग्यं त्वमेवाक्षोभ्यविक्रमः ॥ १५०

समन्वयश्च वेदानामविरोधस्त्वमेव हि ।
निःश्रेयसपदप्राप्तिसाधनं फलमेव च ॥ १५१

श्रीमन्त्रराजराज्ञी च श्रीविद्या क्षेमकारिणी ।
श्रींबीजजपसंतुष्टा ऐं ह्रीं श्रीं बीजपालिका ॥ १५२

प्रपत्तिमार्गसुलभा विष्णुप्रथमकिङ्करी ।
क्लीङ्कारार्थसवित्री च सौमङ्गल्याधिदेवता ॥ १५३

श्रीषोडशाक्षरीविद्या श्रीयन्त्रपुरवासिनी ।
सर्वमङ्गळमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ १५४

शरण्ये त्र्यंबके देवि नारायणि नमोऽस्तु ते ।
पुनःपुनर्नमस्तेऽस्तु साष्टाङ्गमयुतं पुनः ॥ १५५

सनत्कुमार उवाच ।

एवं स्तुता महालक्ष्मीर्ब्रह्मरुद्रादिभिस्सुरैः ।
नमद्भिरार्तैर्दीनैश्च निस्सत्वैर्भोगवर्जितैः ॥ १

ज्येष्ठाजुष्टैश्च निश्श्रीकैस्संसारात्स्वपरायणैः ।
विष्णुपत्नी ददौ तेषां दर्शनं दृष्टितर्पणम् ॥ २

शरत्पूर्णेन्दुकोट्याभधवळापाङ्गवीक्षणैः ।
सर्वान् सत्वसमाविष्टांश्चक्रे हृष्टा वरं ददौ ॥ ३

महालक्ष्मीरुवाच–

नाम्नां साष्टसहस्रं मे प्रमादाद्वापि यस्सकृत् ।
कीर्तयेत्तत्कुले सत्यं वसाम्याचन्द्रतारकम् ॥ ४

किं पुनर्नियमाज्जप्तुर्मदेकशरणस्य च ।
मातृवत्सानुकंपाहं पोषकी स्यामहर्निशम् ॥ ५

मन्नाम स्तुवतां लोके दुर्लभं नास्ति चिंतितम् ।
मत्प्रसादेन सर्वेऽपि स्वस्वेष्टार्थमवाप्स्यथ ॥ ६

लुप्तवैष्णवधर्मस्य मद्व्रतेष्ववकीर्तिनः ।
भक्तिप्रपत्तिहीनस्य वन्ध्यो नाम्नां जरापि मे ॥ ७

तस्मादवश्यं तै दोषैर्विहीनः पापवर्जितः ।
जपेत्साष्टसहस्रं मे नाम्नां प्रत्यहमादरात् ॥ ८

साक्षादलक्ष्मीपुत्रोऽपि दुर्भाग्योऽप्यलसोऽपि वा ।
अप्रयत्नोपि मूढोऽपि विकलः पतितोऽपि च ॥ ९

अवशात्प्राप्नुयाद्भाग्यं मत्प्रसादेन केवलम् ।
स्पृहेयमचिराद्देवाः वरदानाय जापिनः ॥ १०

ददामि सर्वमिष्टार्थं लक्ष्मीति स्मरतां ध्रुवं ।
सनत्कुमार उवाच–
इत्युक्त्वाऽन्तर्दधे लक्ष्मीर्वैष्णवी भगवत्कला ॥ ११

इष्टापूर्ता च सुकृतं भागधेयं च चिंतितम् ।
स्वं स्वं स्थानं च भोगं च विजयं लेभिरे सुराः ॥ १२

तदेतद्वो ददाम्यद्य लक्ष्मीनामसहस्रकम् ।
योगिनः पठत क्षिप्रं चिन्तितार्थानिवाप्स्यथ ॥ १३

गार्ग्य उवाच ।–

सनत्कुमारयोगींद्र इत्युक्त्वा स दयानिधिः ।
अनुगृह्य ययौ क्षिप्रं तांश्च द्वादशयोगिनः ॥ १४

तस्मादेतद्रहस्यञ्च गोप्यं जप्यं प्रयत्नतः ।
अष्टम्यां च चतुर्दश्यां नवम्यां भृगुवासरे ॥ १५

पौर्णमास्याममायां च पर्वकाले विशेषतः ।
जपेद्वा नित्यकार्येषु सर्वान्कामानवाप्नुयात् ॥ १६

इति श्रीस्कान्दपुराणे सनत्कुमारसंहितायां
लक्ष्मीसहस्रनामस्तोत्रं संपूर्णम्

***

श्रीरस्तु

## श्रीलक्ष्मीसहस्रनामावळिः–१

ओं नित्यागतायै नमः । अनन्तनित्यायै । नन्दिन्यै । जनरञ्जन्यै । नित्यप्रकाशिन्यै । स्वप्रकाशस्वरूपिण्यै । महालक्ष्म्यै । महाकाळ्यै । महाकन्यायै । सरस्वत्यै । भोगवैभवसन्धात्र्यै । भक्तानुग्रहकारिण्यै । ईशावास्यायै । महामायायै । महादेव्यै । महेश्वर्यै । हृल्लेखायै । परमायै । शक्तये । मातृकाबीजरूपिण्यै नमः ॥ २०

ओं नित्यानन्दायै नमः । नित्यबोधायै । नादिन्यै । जनमोदिन्यै । सत्यप्रत्ययिन्यै । स्वप्रकाशात्मरूपिण्यै । त्रिपुरायै । भैरव्यै । विद्यायै । हंसायै । वागीश्वर्यै । शिवायै । वाग्देव्यै । महारात्र्यै । काळरात्र्यै त्रिलोचनायै । भद्रकाळ्यै । कराळ्यै । महाकाळ्यै । तिलोत्तमायै नमः ।४०

ओं काळ्यै नमः। कराळवक्त्रांतायै । कामाक्ष्यै । कामदायै । शुभायै । चण्डिकायै । चण्डरूपेशायै । चामुण्डायै ।चक्रधारिण्यै । त्रैलोक्यजनन्यै । देव्यै । त्रैलोक्यविजयोत्तमायै । सिद्धलक्ष्म्यै । क्रियालक्ष्म्यै । मोक्षलक्ष्म्यै । प्रसादिन्यै । उमायै । भगवत्यै । दुर्गायै । चांद्र्यै नमः ।। ६०

ओं दाक्षायण्यै नमः । शिवायै । प्रत्यङ्गिरायै । धरायै । वेलायै । लोकमात्रे । हरिप्रियायै । पार्वत्यै । परमायै । देव्यै । ब्रह्मविद्याप्रदायिन्यै । अरूपायै । बहुरूपायै । विरूपायै । विश्वरूपिण्यै । पञ्चभूतात्मिकायै । वाण्यै । पञ्चभूतात्मिकायै । परायै । काळ्यै । मायै । पञ्चिकायै नमः ।। ८०

ओं वाग्म्यै नमः । हविःप्रत्यधिदेवतायै । देवमात्रे । सुरेशानायै । वेदगर्भायै । अंबिकायै । धृत्यै । संख्यायै । जातये । क्रियाशक्त्यै । प्रकृत्यै । मोहिन्यै । मह्यै । यज्ञविद्यायै । महाविद्यायै । गुह्यविद्यायै । विभावर्यै । ज्योतिष्मत्यै । महामात्रे । सर्वमन्त्रफलप्रदायै नमः ।। १००

ओं दारिद्र्यध्वंसिन्यै नमः । देव्यै । हृदयग्रन्थिभेदिन्यै । सहस्रादित्यसङ्काशायै । चन्द्रिकायै । चन्द्ररूपिण्यै । गायत्र्यै । सोमसंभूत्यै । सावित्र्यै । प्रणवात्मिकायै । शांकर्यै । वैष्णव्यै । ब्राह्म्यै । सर्वदेवनमस्कृतायै । सेव्यदुर्गायै । कुबेराक्ष्यै । करवीरनिवासिन्यै । जयायै । विजयायै । जयन्त्यै नमः ।। १२०

ओं अपराजितायै । कुब्जिकायै । काळिकायै । शास्त्र्यै । वीणापुस्तकधारिण्यै । सर्वज्ञशक्तये । श्रीशक्त्यै । ब्रह्मविष्णुशिवात्मि-

कायै । इडापिङ्गळिकामध्यमृणाळीतन्तुरूपिण्यै । यज्ञेशान्यै । प्रथायै । दीक्षायै । दक्षिणायै । सर्वमोहिन्यै । अष्टाङ्गयोगिन्यै देव्यै । निर्बीजध्यानगोचरायै । सर्वतीर्थस्थितायै । शुद्धायै । सर्वपर्वतवासिन्यै । वेदशास्त्रप्रमायै नमः ॥ १४०

ओं देव्यै नमः । षडङ्गादिपदक्रमायै । शिवायै । धात्र्यै । शुभानन्दायै । यज्ञकर्मस्वरूपिण्यै । व्रतिन्यै । मेनकायै । देव्यै । ब्रह्माण्यै । ब्रह्मचारिण्यै । एकाक्षरपरायै । तारायै । भवबन्धविनाशिन्यै । विश्वंभधरायै । धराधारायै । निराधारायै । अधिकस्वरायै । राकायै । कुह्वे नमः ॥ १६०

ओं अमावास्यायै नमः । पूर्णिमायै । अनुमत्यै । द्युतये । सिनीवाल्यै । शिवायै । अवश्यायै । वैश्वदेव्यै । पिशङ्गिलायै । पिप्पलायै । विशालाक्ष्यै । रक्षोघ्न्यै । वृष्टिकारिण्यै । दुष्टविद्राविण्यै । देव्यै । सर्वोपद्रवनाशिन्यै । शारदायै । शरसन्धानायै । सर्वशस्त्रस्वरूपिण्यै । युद्धमध्यस्थितायै नमः ॥ १८०

ओं देव्यै । सर्वभूतप्रभञ्जन्यै । अयुद्धायै । युद्धरूपायै । शान्तायै । शान्तिस्वरूपिण्यै । गङ्गायै । सरस्वतीवेणीयमुनानर्मदापगायै । समुद्रवसनावासायै । ब्रह्माण्डश्रेणिमेखलायै । पञ्चवक्त्रायै । दशभुजायै । शुद्धस्फटिकसन्निभायै । रक्तायै । कृष्णायै । सितायै । पीतायै । सर्ववर्णायै । निरीश्वर्यै । काळिकायै नमः ॥ २००

ओं चक्रिकायै नमः । देव्यै । सत्यायै । वटुकास्थितायै । तरुण्यै । वारुण्यै । नार्यै । ज्येष्ठादेव्यै । सुरेश्वर्यै । विश्वंभराधरायै । कर्त्र्यै । गळार्गळविभञ्जिन्यै । सन्ध्यारात्रिदिवाज्योत्स्नायै । कलाकाष्ठायै । निमेषिकायै । उर्व्यै । कात्यायन्यै । शुभ्रायै । संसारार्णवतारिण्यै । कपिलायै नमः ॥ २२०

ओं कीलिकायै नमः । अशोकायै । मल्लिकानवमालिकायै । देविकायै । नन्दिकायै । शान्तायै । भञ्जिकायै । भयभञ्जिकायै । कौशिक्यै । वैदिक्यै । देव्यै । सौर्यै । रूपाधिकायै । अतिभायै । दिग्वस्त्रायै । नववस्त्रायै । कन्यकायै । कमलोद्भवायै । श्रियै । सौम्यलक्षणायै नमः ॥ २४०

ओं अतीतदुर्गायै नमः । सूत्रप्रबोधिकायै । श्रद्धायै । मेधायै । कृतये । प्रज्ञायै । धारणायै । कांत्यै । श्रुतये । स्मृतये । धृतये । धन्यायै । भूतये । इष्ठ्यै । मनीषिण्यै । विरक्तये । व्यापिन्यै । मायायै । सर्वमायाप्रभञ्जन्यै । माहेन्द्र्यै नमः ॥ २६०

ओं मन्त्रिण्यै नमः । सिंह्यै । इन्द्रजालस्वरूपिण्यै । अवस्थात्रयनिर्मुक्तायै । गुणत्रयविवर्जितायै । ईषणात्रयनिर्मुक्तायै । सर्वरोगविवर्जितायै । योगिध्यानान्तगम्यायै । योगध्यानपरायणायै । त्रयीशिखायै । विशेषज्ञायै । वेदान्तज्ञानरूपिण्यै । भारत्यै । कमलायै । भाषायै । पद्मायै । पद्मावत्यै । कृतये । गौतम्यै । गोमत्यै नमः ॥ २८०

ओं गौर्यै नमः । ईशानायै । हंसवाहिन्यै । नारायण्यै । प्रभाधारायै । जाह्नव्यै । शङ्करात्मजायै । चित्रघण्टायै । सुनन्दायै । श्रियै । मानव्यै । मनुसंभवायै । स्तम्भिन्यै । क्षोभिण्यै । मार्यै । भ्रामिण्यै । शत्रुमारिण्यै । मोहिन्यै । द्वेषिण्यै । वीरायै नमः ॥ ३००

अघोरायै । रुद्ररूपिण्यै । रुद्रैकादशिन्यै । पुण्यायै । कल्याण्यै । लाभकारिण्यै । देवदुर्गायै । महादुर्गायै । स्वप्नदुर्गायै । अष्टभैरव्यै । सूर्यचन्द्राग्निरूपायै । ग्रहनक्षत्ररूपिण्यै । बिन्दुनादकळातीतायै । बिन्दुनादकळात्मिकायै । दशवायुजयाकारायै । कळाषोडशसंयुतायै । काश्यप्यै । कमलादेव्यै । नादचक्रनिवासिन्यै । मृडाधारायै नमः । ३२०

ओं स्थिरायै नमः। गुह्यायै। देविकायै। चक्ररूपिण्यै। अविद्यायै। शार्वर्यै। भुञ्जायै। जम्भासुरनिबर्हिण्यै। श्रीकायायै। श्रीकलायै। शुभ्रायै। कर्मनिर्मूलकारिण्यै। आदिलक्ष्म्यै। गुणाधारायै। पञ्चब्रह्मात्मिकायै। परायै। श्रुतये। ब्रह्ममुखावासायै। सर्वसंपत्तिरूपिण्यै। मृतसञ्जीविन्यै नमः ॥ ३४०

ओं मैत्र्यै नमः। कामिन्यै। कामवर्जितायै। निर्वाणमार्गदायै देव्यै। हंसिन्यै। काशिकायै। क्षमायै। सपर्यायै। गुणिन्यै। भिन्नायै। निर्गुणायै। खण्डिताशुभायै। स्वामिन्यै। वेदिन्यै। शक्यायै। शाम्बर्यै। चक्रधारिण्यै। दण्डिन्यै। मुण्डिन्यै। व्याघ्र्यै नमः ॥ ३६०

शिखिन्यै नमः। सोमसंहतये। चिन्तामणये। चिदानन्दायै। पञ्चबाणप्रबोधिन्यै। बाणश्रेणये। सहस्राक्ष्यै। सहस्रभुजपादुकायै। सन्ध्यावलये। त्रिसन्ध्याख्यायै। ब्रह्माण्डमणिभूषणायै। वासव्यै। वारुणीसेनायै। कुळिकायै। मन्त्ररञ्जिन्यै। जितप्राणस्वरूपायै। कान्तायै। काम्यवरप्रदायै। मन्त्रब्राह्मणविद्यार्थायै। नादरूपायै नमः ॥ ३८०

ओं हविष्मत्यै नमः। आथर्वणीश्रुतयै। शून्यायै। कल्पनावर्जितायै। सत्यै। सत्ताजातयै। प्रमायै। अमेयायै। अप्रमित्यै। प्राणदायै। गतयै। अवर्णायै। पञ्चवर्णायै। सर्वदायै। भुवनेश्वर्यै। त्रैलोक्यमोहिन्यै। विद्यायै। सर्वभर्त्र्यै। क्षरायै। अक्षरायै नमः ॥ ४००

ओं हिरण्यवर्णायै नमः। हरिण्यै। सर्वोपद्रवनाशिन्यै। कैवल्यपदवीरेखायै। सूर्यमण्डलसंस्थितायै। सोममण्डलमध्यस्थायै। वह्निमण्डलसंस्थितायै। वायुमंडलमध्यस्थायै। व्योममण्डलसंस्थितायै। चक्रिकायै। चक्रमध्यस्थायै। चक्रमार्गप्रवर्तिन्यै। कोकिलाकुलचक्रेशायै। पक्षतये। पंक्तिपावनायै। सर्वसिद्धान्तमार्गस्थायै। षड्वर्णावरवर्जितायै। शतरुद्रहरायै। हन्त्र्यै। सर्वसंहारकारिण्यै नमः ॥ ४२०

ओं पुरुषायै नमः । पौरुष्यै । तुष्टये । सर्वतन्त्रप्रसूतिकायै । अर्धनारीश्वर्यै देव्यै । सर्वविद्याप्रदायिन्यै । भार्गव्यै । याजुषीविद्यायै । सर्वोपनिषदास्थितायै । व्योमकेशायै । अखिलप्राणायै । पञ्चकोशविलक्षणायै । पञ्चकोशात्मिकायै । प्रतीच्यै । पञ्चब्रह्मात्मिकायै । शिवायै । जगज्जराजनित्र्यै । पञ्चकर्मप्रसूतिकायै । वाग्देव्यै । आभरणाकारायै नमः ॥ ४४०

ओं सर्वकाम्यस्थितस्थितये नमः । अष्टादशाचतुष्षष्टिपीठिकाविद्यया युतायै । काळिकाकर्षणश्यामायै । यक्षिण्यै । किन्नरेश्वर्यै । केतक्यै । मल्लिकायै । अशोकायै । वाराह्यै । धरण्यै । ध्रुवायै । नारसिंह्यै । महोग्रास्यायै । भक्तानामार्तिनाशिन्यै । अन्तर्बलायै । स्थिरायै । लक्ष्म्यै । जरामरणनाशिन्यै । श्रीरञ्जितायै । महाकायायै नमः ॥ ४६०

ओं सोमसूर्याग्निलोचनायै नमः । अदितये । देवमात्रे । अष्टपुत्रायै । अष्टयोगिन्यै । अष्टप्रकृतये । अष्टाष्टविभ्राजद्विकृताकृतये । दुर्भिक्षध्वंसिन्यै देव्यै । सीतायै । सत्यायै । रुक्मिण्यै । ख्यातिजायै । भार्गव्यै देव्यै । देवयोनये । तपस्विन्यै । शाकंभर्यै । महाशोणायै । गरुडोपरिसंस्थितायै । सिंहगायै । व्याघ्रगायै नमः ॥ ४८०

ओं वायुगायै नमः । महाद्रिगायै । अकारादिक्षकारान्तायै । सर्वविद्याधिदेवतायै । मन्त्रव्याख्याननिपुणायै । ज्योतिश्शास्त्रैकलोचनायै । इडापिङ्गळिकामध्यसुषुम्नायै । ग्रन्थिभेदिन्यै । कालचक्राश्रयोपेतायै । कालचक्रस्वरूपिण्यै । वैशारद्यै । मतिश्रेष्ठायै । वरिष्ठायै । सर्वदीपिकायै । वैनायक्यै । वरारोहायै । श्रोणिवेलायै । बहिर्वळये । जम्भिन्यै । जृम्भिण्यै नमः ॥ ५००

ओं जृम्भकारिण्यै नमः । गणकारिकायै । शरण्यै । चक्रिकायै । अनन्तायै । सर्वव्याधिचिकित्सक्यै । देवक्यै । देवसंकाशायै । वारिधये ।

करुणाकरायै । शर्वर्यै । सर्वसंपन्नायै । सर्वपापप्रभञ्जिन्यै । एकमात्रायै । द्विमात्रायै । त्रिमात्रायै । परायै । अर्धमात्रायै । परायै सूक्ष्मायै । सूक्ष्मार्थार्थपरायै नमः ॥ ५२०

ओं अपरायै नमः । एकवीरायै । विशेषाख्यायै । षष्ठीदेव्यै । मनस्विन्यै । नैष्कर्म्यायै । निष्कलालोकायै । ज्ञानकर्माधिकगुणायै । सबन्ध्वानन्दसन्दोहायै । व्योमाकारायै । अनिरूपितायै । गद्यपद्यात्मिकवाण्यै । सर्वालङ्कारसंयुतायै । साधुबन्धपदन्यासायै । सर्वौकसे । घटिकावळये । षट्कर्मायै । कर्कशाकारायै । सर्वकर्मविवर्जितायै । आदित्यवर्णायै नमः ॥ ५४०

ओं अपर्णायै नमः । कामिन्यै । वररूपण्यै । ब्रह्माण्यै । ब्रह्मसन्तानायै । वेदवागीश्वर्यै । शिवायै । पुराणन्यायमीमांसाधर्मशास्त्रागमश्रुतायै । सद्योवेदवत्यै । सर्वायै । हंस्यै । विद्याधिदेवतायै । विश्वेश्वर्यै । जगद्धात्र्यै । विश्वनिर्माणकारिण्यै । वैदिक्यै । वेदरूपायै । काळिकायै । काळरूपिण्यै । नारायण्यै नमः ॥ ५६०

ओं महादेव्यै नमः । सर्वतत्त्वप्रवर्तिन्यै । हिरण्यवर्णरूपायै । हिरण्यपदसंभवायै । कैवल्यपदव्यै । पुण्यायै । कैवल्यज्ञानलक्षितायै । ब्रह्मसंपत्तिरूपायै । ब्रह्मसंपत्तिकारिण्यै । वारुण्यै । वारुणाराध्यायै । सर्वकर्मप्रवर्तिन्यै । एकाक्षरपरायै । आयुक्तायै । सर्वदारिद्र्यभञ्जिन्यै । पाशाङ्कुशान्वितायै । दिव्यायै । वीणाव्याख्याक्षसूत्रभृते । एकमूर्तये । त्रयीमूर्तये नमः ॥ ५८०

ओं मधुकैटभभञ्जिन्यै नमः । सांख्यायै । सांख्यवत्यै । ज्वालायै । ज्वलन्त्यै । कामरूपिण्यै । जाग्रन्त्यै । सर्वसंपत्तये । सुषुप्तायै । स्वेष्टदायिन्यै । कपालिन्यै । महादंष्ट्रायै । भ्रुकुटीकुटिलाननायै । सर्वावासायै । सुवासायै । बृहत्यै । अष्टये । शक्वर्यै । छन्दोगणप्रतिष्ठायै । कल्माष्यै नमः ॥ ६००

करुणात्मिकायै नमः । चक्षुष्मत्यै । महाघोषायै । खड्गचर्मधरायै । अशनये । शिल्पवैचित्र्यविद्योतायै । सर्वतोभद्रवासिन्यै । अचिन्त्य-लक्षणाकारायै । सूत्रभाष्यनिबन्धनायै । सर्ववेदार्थसंपत्तये । सर्वशास्त्रार्थ-मातृकायै । अकारादिक्षकारन्तमातृवर्णकृतस्थलायै । सर्वलक्ष्म्यै । सदानन्दायै । सारविद्यायै । सदाशिवायै । सर्वज्ञायै । सर्वशक्त्यै । खेचरीरूपगायै । उच्छ्रितायै नमः ॥ ६२०

अणिमादिगुणोपेतायै नमः । परायै काष्ठायै । परायै गतयै । हंसयुक्तविमानस्थायै । हंसारूढायै । शशिप्रभायै । भवान्यै । वासनाशक्तये । आकृतिस्थाखिलायै । अखिलायै । तन्त्रहेतवे । विचित्रांग्यै । व्योमगङ्गाविनोदिन्यै । वर्षायै । वार्षिकायै । ऋग्यजुस्सामरूपिण्यै । महानद्यै । नदीपुण्यायै । अगण्यपुण्यगुणक्रियायै । समाधिगतलभ्यार्थायै नमः ॥ ६४०

श्रोतव्यायै नमः । स्वप्रियायै । घृणायै । नामाक्षरपरायै देव्यै । उपसर्गनखाञ्चितायै । निपातोरुद्वयीजङ्घायै । मातृकायै । मन्त्ररूपिण्यै । आसीनायै । शयानायै । तिष्ठन्त्यै । धावनाधिकायै । लक्ष्यलक्षण-योगाढ्यायै । ताद्रूप्यगणनाकृतये । तस्यै । एकरूपायै । नैकरूपायै । तस्यै इन्दुरूपायै । तदाकृतये । समासतद्धिताकारायै । विभक्तिवचनात्मिकायै नमः ॥ ६६०

स्वाहाकारायै नमः । स्वधाकारायै । श्रीपत्यर्धाङ्गनन्दिन्यै । गम्भीरायै । गहनायै । गुह्यायै । योनिलिङ्गार्धधारिण्यै । शेषवासुकिसं-सेव्यायै । चपलायै । वरवर्णिन्यै । कारुण्याकारसंपत्तये । कीलकृते । मन्त्रकीलिकायै । शक्तिबीजात्मिकायै । सर्वमन्त्रेष्टायै । अक्षयकामनायै । आग्नेय्यै । पार्थिवायै । आप्यायै । वायव्यायै नमः॥ ६८०

व्योमकेतनायै नमः । सत्यज्ञानात्मिकायै । नन्दायै । ब्राह्म्यै । ब्रह्मणे । सनातन्यै । अविद्यावासनायै । मायाप्रकृतये । सर्वमोहिन्यै । शक्तये । धारणशक्तये । चिदचिच्छक्तियोगिन्यै । वक्त्रारुणायै । महामायायै । मरीचये । मदमर्दिन्यै । विराजे । स्वाहायै । स्वधायै । शुद्धायै नमः ॥ ७००

निरुपास्तये नमः । सुभक्तिगायै । निरूपिताद्वय्यै । विद्यायै । नित्यानित्यस्वरूपिण्यै । वैराजमार्गसञ्चारायै । सर्वसत्पथदर्शिन्यै । जालन्धर्यै । मृडान्यै । भवान्यै । भवभञ्जन्यै । त्रैकालिकज्ञानतन्तवे । त्रिकालज्ञानदायिन्यै । नादातीतायै । स्मृतये । प्रज्ञायै । धात्रीरूपायै । त्रिपुष्करायै । पराजितायै । विधानज्ञायै नमः ॥ ७२०

ओं विशेषितगुणात्मिकायै नमः । हिरण्यकेशिन्यै । हेमब्रह्मसूत्र-विचक्षणायै । असङ्ख्येयपरार्धान्तस्वरव्यञ्जनवैखर्यै । मधुजिह्वायै । मधुमत्यै । मधुमासोदयायै । मधवे । माधव्यै । महाभागायै । मेघगम्भीरनिस्वनायै । ब्रह्मविष्णुमहेशादिज्ञातव्यार्थविशेषगायै । नाभौ वह्निशिखाकारायै । ललाटे चन्द्रसन्निभायै । भ्रूमध्ये भास्कराकारायै । हृदि सर्वताराकृतये । कृत्तिकादिभरण्यन्तनक्षत्रेष्टचर्चितोदयायै । ग्रहविद्यात्मिकायै । ज्योतिषे । ज्योतिर्विदे नमः ॥ ७४०

मतिजीविकायै नमः । ब्रह्माण्डगर्भिण्यै । बालायै । सप्तावरणदेवतायै । वैराजोत्तमसाम्राज्यायै । कुमारकुशलोदयायै । बगळायै । भ्रमरांबायै । शिवदूत्यै । शिवात्मिकायै । मेरुविन्ध्यादि-संस्थानायै । काश्मीरपुरवासिन्यै । योगनिद्रायै । महानिद्रायै । विनिद्रायै । राक्षसाश्रितायै । सुवर्णदायै । महागङ्गायै । पञ्चाख्यायै । पञ्चसंहतये नमः ॥ ७६०

सुप्रजातायै नमः । सुवीरायै । सुपोषायै । सुपतये । शिवायै । सुगृहायै । रक्तबीजान्तायै । हतकन्दर्पजीविकायै । समुद्रव्योम-

मध्यस्थायै । समबिन्दुसमाश्रयायै । सौभाग्यरसजीवातवे । सारासारविवेकदृशे । त्रिवळ्यादिसुपुष्टाङ्गायै । भारत्यै । भरताश्रितायै । नादब्रह्ममयीविद्यायै । ज्ञानब्रह्ममयीपरायै । ब्रह्मनाड्यै । निरुक्तये । ब्रह्मकैवल्यसाधनायै नमः ॥ ७८०

कालकेयमहोदारवीर्यविक्रमरूपिण्यै नमः । बडबाग्निशिखा-वक्त्रायै । महाकबळतर्पणायै । महाभूतायै । महादर्पायै । महासारायै । महाक्रतवे । पञ्चभूतमहाग्रासायै । पञ्चभूताधिदेवतायै । सर्वप्रमाणायै । संपत्तये । सर्वरोगप्रतिक्रियायै । ब्रह्माण्डान्तर्बहिर्व्याप्तायै । विष्णुवक्षो-विभूषिण्यै । शाङ्कर्यै । विधिवक्त्रस्थायै । प्रवरायै । वरहेतुक्यै । हेममालायै । शिखामालायै नमः ॥ ८००

त्रिशिखायै नमः । पञ्चलोचनायै । सर्वागमसदाचारमर्यादायै । यातुभञ्जन्यै । पुण्यश्लोकप्रबन्धाढ्यायै । सर्वान्तर्यामिरूपिण्यै । सामगानसमाराध्यायै । श्रोतृकर्णरसायनाय । जीवलोकैकजीवातवे । भद्रोदारविलोकनायै । तटित्कोटिलसत्कान्त्यै । तरुण्यै । हरिसुन्दर्यै । मीननेत्रायै । इन्द्राक्ष्यै । विशालाक्ष्यै । सुमङ्गळायै । सर्वमङ्गळसंपन्नायै । साक्षान्मङ्गळदेवतायै । देहिहृद्दीपिकायै नमः ॥ ८२०

ओं दीप्तये नमः । जिह्मपापप्रणाशिन्यै । अर्धचन्द्रोल्लसद्दंष्ट्रायै । यज्ञवाटीविलासिन्यै । महादुर्गायै । महोत्साहायै । महादेवबलोदयायै । डाकिनीड्यायै । शाकिनीड्यायै । साकिनीड्यायै । समस्तजुषे । निरङ्कुशायै । नाकिवन्द्यायै । षडाधाराधिदेवतायै । भुवनज्ञानिनिश्रेणये । भुवनाकारवल्लर्यै । शाश्वत्यै । शाश्वताकारायै । लोकानुग्रहकारिण्यै । सारस्यै नमः ॥ ८४०

मानस्यै नमः । हंस्यै । हंसलोकप्रदायिन्यै । चिन्मुद्रालङ्कृतकरायै । कोटिसूर्यसमप्रभायै । सुखप्राणिशिरोरेखायै । सदद्दृष्टप्रदायिन्यै ।

सर्वसाङ्कर्यदोषघ्न्यै । ग्रहोपद्रवनाशिन्यै । क्षुद्रजन्तुभयघ्न्यै । विषरोगादिभञ्जन्यै । सदाशान्तायै । सदाशुद्धायै । गृहच्छिद्रनिवारिण्यै । कलिदोषप्रशमन्यै । कोलाहलपुरस्थितायै । गौर्यै । लाक्षणिक्यै । मुख्यायै । जघन्याकृतिवर्जितायै ॥ ८६०

मायायै नमः । विद्यायै । मूलभूतायै । वासव्यै । विष्णुचेतनायै । वादिन्यै । वसुरूपायै । वसुरत्नपरिच्छदायै । छान्दस्यै । चन्द्रहृदयायै । मन्त्रस्वच्छन्दभैरव्यै । वनमालायै । वैजयन्त्यै । पञ्चदिव्यायुधात्मिकायै । पीताम्बरमय्यै । चञ्चत्कौस्तुभायै । हरिकामिन्यै । नित्यायै । तथ्यायै । रमायै नमः ॥ ८८०

ओं रामायै नमः । रमण्यै । मृत्युभञ्जन्यै । ज्येष्ठायै । काष्ठायै । धनिष्ठान्तायै । शराङ्ग्यै । निर्गुणप्रियायै । मैत्रेयायै । मित्रविन्दायै । शेष्यशेषकळाशयायै । वाराणसीवासरतायै । आर्यावर्तजनस्तुतायै । जगदुत्पत्तिसंस्थानसंहारत्रयकारणायै । तुभ्यं । अम्बायै । विष्णुसर्वस्वायै । महेश्वर्यै । सर्वलोकजनन्यै । पुण्यमूर्तये नमः ॥ ९००

सिद्धलक्ष्म्यै नमः । महाकाळ्यै । महालक्ष्म्यै । सद्योजातादिपञ्चाग्निरूपायै । पञ्चकपञ्चकाय । यन्त्रलक्ष्म्यै । भवत्यै । आदये । आद्याद्यायै । सृष्ट्यादिकारणाकारविततये । दोषवर्जितायै । जगल्लक्ष्म्यै । जगन्मात्रे । विष्णुपत्न्यै । नवकोटिमहाशक्तिसमुपास्यपदाम्बुजायै । कनत्सौवर्णरत्नाढ्यसर्वाभरणभूषितायै । अनन्तनित्यमहिष्यै । प्रपञ्चेश्वरनायक्यै । अत्युच्छ्रितपदान्तस्थायै । परमव्योमनायक्यै नमः ॥ ९२०

नाकपृष्ठगताराध्यायै नमः । विष्णुलोकविलासिन्यै । वैकुण्ठराजमहिष्यै । श्रीरङ्गनगराश्रितायै । रङ्गनायक्यै । भूपुत्र्यै । कृष्णायै । वरदवल्लभायै । कोटिब्रह्मादिसंसेव्यायै । कोटिरुद्रादिकीर्तितायै । मातुलुङ्गमयखेटं बिभ्रत्यै । सौवर्णचषकं बिभ्रत्यै । पद्मद्वयं बिभ्रत्यै ।

पूर्णकुम्भं बिभ्रत्यै । कीरं बिभ्रत्यै । वरदाभये बिभ्रत्यै । पाशं बिभ्रत्यै । अङ्कुशाकं बिभ्रत्यै । शङ्खं बिभ्रत्यै । चक्रं बिभ्रत्यै नमः ॥ ९४०

शूलं बिभ्रत्यै नमः । कृपाणिकां बिभ्रत्यै । धनुर्बाणौ बिभ्रत्यै । अक्षमालां बिभ्रत्यै । चिन्मुद्रां बिभ्रत्यै । अष्टादशभुजायै । लक्ष्म्यै । महाष्टादशपीठगायै । भूमिनीळादिसंसेव्यायै । स्वामिचित्तानुवर्तिन्यै । पद्मायै । पद्मालयायै । पद्मिन्यै । पूर्णकुम्भाभिषेचितायै । इन्दिरायै । इंदीवराभाक्ष्यै । क्षीरसागरकन्यकायै । भार्गव्यै । स्वतन्त्रेच्छायै । वशीकृतजगत्पतये नमः ॥ ९६०

मङ्गळानां मङ्गलाय नमः । देवतानां देवतायै । उत्तमानामुत्तमायै । श्रेयसे । परमामृताय । धनधान्याभिवृद्धये । सार्वभौमसुखोच्छ्रयायै । आन्दोळिकादिसौभाग्याय । मत्तेभादिमहोदयाय । पुत्रपौत्राभिवृद्धये । विद्याभोगबलादिकाय । आयुरारोग्यसंपत्तये । अष्टैश्वर्याय । परमेश-विभूतये । सूक्ष्मात्सूक्ष्मतरगतये । सदयापाङ्गसन्दत्तब्रह्मेन्द्रादिपद स्थितये । अव्याहतमहाभाग्याय । अक्षोभ्यविक्रमाय । वेदानां समन्वयाय । वेदानामविरोधायै नमः॥ ९८०

निःश्रेयसपदप्राप्तिसाधनाय नमः। निःश्रेयसपदप्राप्तिफलाय । श्रीमन्त्रराजराज्ञ्यै । श्रीविद्यायै । क्षेमकारिण्यै । श्रींबीजजपसंतुष्टायै । ऐंह्रींश्रींबीजपालिकायै । प्रपत्तिमार्गसुलभायै । विष्णुप्रथमकिङ्कर्यै । क्लींकारार्थसवित्र्यै । सौमङ्गल्याधिदेवतायै । श्रीषोडशाक्षरीविद्यायै । श्रीयन्त्रपुरवासिन्यै । सर्वमङ्गळमाङ्गल्यायै । शिवायै । सर्वार्थसाधिकायै । शरण्यायै । त्र्यम्बकायै । देव्यै । नारायण्यै नमः ॥ १०००

। श्रीरस्तु ॥

# श्री लक्ष्मीसहस्रनामस्तोत्रम् - २

(नारदीयोपपुराणतः)

मित्रसह उवाच -

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद।
पावनानां हि महसां निदानं त्वं महामुने॥ १

अतर्कितेनागमेन तव तुष्टोऽस्मि सर्वदा।
हृदयं निर्वृतं मेऽद्य महादुःखौघपीडितम्॥ २
देवा गृहेषु सन्तुष्टाः तारिताः पितरश्च ये।
चिराय मे मनस्यस्ति संशयो बलवत्तरः॥ ३
पृच्छामि त्वामहं तं वै उत्तरं दातुमर्हसि।
इष्टं मया च बहुभिः यज्ञैस्सम्पूर्णदक्षिणैः॥ ४
दानानि च महार्हाणि पात्रेषु स्पर्शितानि च।
अनृतं नोक्तपूर्वं मे प्रजा धर्मेण पालिताः॥ ५
पतिव्रता महाभागा नित्यं सुस्निग्धभाषिणी।
पूज्यान्गृहागतान् सर्वान् आराधयति नित्यदा॥ ६
तथाहि सेवते देवान् यथाऽहमपि नाशकम्।
भार्याऽनुकूला मे देवी मदयन्ती मनस्विनी॥ ७
तथापि दुःखं संप्राप्तं मया द्वादशवार्षिकम्।
राक्षसत्वं महाघोरं संपूर्णनरकोपमम्॥ ८
तत्र वृत्तानि कार्याणि स्मृत्वा मे वेपते मनः।
भक्षिताः कति वा तत्र द्विपदाश्च चतुष्पदाः॥ ९
तत्सर्वमस्तु तत्रैव चिन्त्यते शापहेतुकम्।
गुरुपुत्रो गुरुसमः शक्तिः संभक्षितो मया॥ १०
ब्रह्महत्याकृतं पापं कथं मे न भविष्यति।
शापाद्राक्षसता काले प्राप्ता यद्यपि तन्मया॥ ११

रात्रिन्दिवं मे दहति हृदयं हि सबन्धनम् ।
न रोचते मे भुक्तिर्वा सुप्तिर्वाऽपि गतिर्बहिः ॥ १२
महाबन्धनमेतन्मे राज्यं हि मनुते मनः ।
किन्नु तत्कारणं येन प्राप्तोऽहं तादृशीं शुचम् ॥ १३
वक्तुमर्हसि सर्वज्ञ तत्प्रायश्चित्तविस्तरम् ।
उपादिश महामन्त्रतन्त्रज्ञ प्रणताय मे ॥ १४
श्रीनारद उवाच-
शृणु राजन्प्रवक्ष्यामि प्राग्जन्म चरितं तव ।
येनेदृशं त्वया प्राप्तं दुःखमत्यन्तदुस्सहम् ॥ १५
पुराभूद्ब्राह्मणः कश्चित् ताम्रपर्णीनदीतटे ।
दरिद्रोऽत्यन्तदुर्भाग्यः बहुपुत्रकुटुम्बवान् ॥ १६
कृष्णशर्मेति विख्यातः वेदवेदाङ्गतत्वविद् ।
तव भार्याऽभवत्पुण्या सदा चण्डी कुरूपिणी ॥ १७
किन्तु शक्तिव्रताचारेऽप्रतिमा शुद्धमानसा ।
कटुवाङ्मानिनी नाम्ना क्षुत्पिपासार्दिता सदा ॥ १८
दारिद्र्यशमनार्थं त्वं सर्वलक्षणलक्षितम् ।
कल्पयित्वा श्रियो मूर्तिं भक्त्या पूजितवान्गृहे ॥ १९
मानिन्यप्यन्वहं भक्त्या गोमयालेपनादिभिः ।
रङ्गवल्याप्यलङ्कृत्य पूजास्थानं गृहे तव ॥ २०
पायसापूपनैवेद्यैः सा त्वां पर्यचरन्मुदा ।
एकदा भृगुवारे त्वां सहस्रकमलार्चनम् ॥ २१
विधातुं विष्णुपत्न्यास्तु पद्मान्यानयितुं गतः ।
गतेऽर्धदिवसे गेहं प्राप्य खिन्नोऽनयोदितः ॥ २२

हन्तार्धदिवसोऽतीतः कदा देवानसंख्यकान्।
अभ्यर्च्याथ श्रियो देव्याः सहस्रकमलार्चनम्॥ २३
कृत्वा भुक्त्वा कदाऽन्नं नो दर्शयिष्यसि ताम्यताम्।
बाला रुदन्ति क्षुधिताः पक्वं भवति शीतलम्॥ २४
इति तस्यां भर्त्सयन्त्यां तूष्णीं पूजामधाद्भवान्।
सहस्रपद्मपूजायां चलन्त्यां मध्यतस्तु सा॥ २५
असमर्था क्षुधं सोढुं बालैस्सह बुभोज ह।
तदा त्वं कुपितोऽप्येनां न च किञ्चिदपि ब्रुवन्॥ २६
गृहान्निर्गत्य शान्तात्मा किं कृत्यमिति चिन्तयन्।
निर्यान्तं त्वां तु सा प्राह क गच्छसि सुदुर्मते॥ २७
अनिर्वर्त्य श्रियः पूजां प्रारब्धां सुमहादरम्।
पृथङ्नैवेद्यमस्तीह नास्माभिर्भक्षितं हि तत्॥ २८
कालात्ययात्क्षुधार्तानां भुक्तिं देवी सहिष्यते।
तद्विधेहि श्रियः पूजां मा स्म निष्कारणं क्रुधः॥ २९
नरके मा पतो बुद्ध्या मां च पातय मा वृथा।
इति तस्यां ब्रुवाणायां त्वं गृहान्निरगाः क्रुधा॥ ३०
सद्यः सन्यस्य विपिनेऽवात्सीस्त्वं विधिना किल।
यतित्वेऽपि सदा बुद्ध्या पूर्वाश्रमकथां स्मरन्॥ ३१
दारिद्र्यं सर्वधर्माणां प्रत्यूहाय प्रवर्तते।
सत्यप्यस्मिन्धर्मपत्नी अनुकूला भवेद्यदि॥ ३२
नरस्य जन्म सुखितं नान्यथाऽर्थशतैरपि।
वन्ध्याजानिस्स भवतु अनुकूलकलत्रवान्॥ ३३

लभते जन्मसाफल्यमेतद्देव्याः प्रसादजम् ।
इत्येवं चिन्तयन्नेव त्यक्त्वा देहं तरोस्तले ॥ ३४
इक्ष्वाकुवंशे जातस्त्वं राजा मित्रसहाभिधः ।
रुषा परवशो यस्मात् असमाप्य श्रियोऽर्चनम् ॥ ३५
निर्गतोसि गृहात्तस्माद्दुःखमेतदुपस्थितम् ।
सापि त्वयि विनिर्याते पश्चात्तापवती भृशम् ॥ ३६
प्रक्षालिताङ्घ्रिहस्ताऽथ प्रयताऽऽचम्य सत्वरम् ।
नैवेद्यं स्वयमीश्वर्यै प्रणम्य च निवेद्य च ॥ ३७
अम्ब सर्वस्य लोकस्य जनन्यसि सहस्व तत् ।
आगांसि मम नागारिकेतनोरःस्थलालये ॥ ३८
यस्यां जातौ तु मे भर्ता तत्पूजापुण्यतो भवेत् ।
भवेयमहमप्यत्र जातौ तं चाप्नुयां यथा ॥ ३९
कामक्रोधादिहीना स्यां तथाम्बानुग्रहं कुरु ।
इति देवीं प्रार्थयन्ती जीवन्ती कृच्छ्रतो भुवि ॥ ४०
त्यक्त्वा देहं पुनर्जाता राजवंशे सुपावने ।
मदयन्तीति नाम्ना वै तव भार्याऽभवत्पुनः ॥ ४१
अभुक्ते त्वयि भुक्त्या सा वन्ध्या जाता वधूमणिः ।
उभयोर्भवतोर्लक्ष्मीपूजायामपराधतः ॥ ४२
उभावपि महादुःखं प्राप्तौ द्वादशवर्षिकम् ।
त्यक्त्वा राज्यं च कोशश्च दरिद्रावतिदुःखितौ ॥ ४३
मा ब्रह्महत्यादोषात्त्वं भैषी राजन् कथंचन ।
यां जातिमनुविष्टो हि तादृशीं त्वं क्रियामधाः ॥ ४४

किन्तु भूयश्च्युते राज्यात् भेतव्यं श्रीप्रकोपतः ।
नाम्नां तदद्य श्रीदेव्याः सहस्रेण शतेन च ॥ ४५
अष्टोत्तरेण पद्मानां पुञ्जतस्तां प्रपूजय ।
भवेत्तव स्थिरं राज्यं दुःखं नाण्वपि ते भवेत् ॥ ४६
भार्या ते सापि शुश्रूषां स्वयमेव करोतु ते ।
वर्षमात्रं पूजिता सा लक्ष्मीर्नारायणप्रिया ॥ ४७
युवयोस्सर्वकामानां दात्री स्यान्नात्र संशयः ।
स्त्रीसङ्गप्रतिहन्ताऽस्ति शापो यद्यपि ते प्रभो ॥ ४८
प्रसोष्यते च तनयं तव भार्या कथंचन ।
पुत्रपौत्राभिवृद्ध्या त्वं मोदिष्यसि महेन्द्रवत् ॥ ४९
यथा पृष्टं महाभाग दुःखहेतुस्तवोदितः ।
उक्तस्तत्परिहारोपि किमिच्छसि पुनर्वद ॥ ५०
राजोवाच—
धन्योस्म्यनुगृहीतोऽस्मि महर्षे कृपया तव ।
मत्तो न विद्यते कश्चित् लोकेऽस्मिन् भाग्यवत्तरः ॥ ५१
तव पादाब्जयुगले प्रणामानां शतं शतम् ।
करोमि पाहि मां विप्र कुलोत्तंस दयानघ ॥ ५२
नाम्नां सहस्रं श्रीदेव्या अष्टोत्तरशताधिकम् ।
प्रब्रूहि मे मुनिश्रेष्ठ पूजाया विधिमप्यथ ॥ ५३
जपस्य च विधिं तेषां नाम्नां शुश्रूषवे वद ।
सूत उवाच-
इति राज्ञा मुनिश्रेष्ठः पृष्टस्सविनयं ततः ॥ ५४
नमस्कृत्य श्रियै पश्चात् ध्यात्वोवाच महीपतिम् ।
श्रीनारद उवाच-
सम्यक् पृष्टं महाराज सर्वलोकहितं त्वया ॥ ५५

वक्ष्यामि तानि नामानि पूजाञ्चापि यथाक्रमम् ।
पलमानसुवर्णेन रजतेनाथ ताम्रतः ॥ ५६

चतुर्भुजां पद्मधरां वराभयविशोभिनीम् ।
निषण्णां फुल्लकमले चतुर्दन्तैः सितैर्गजैः ॥ ५७

सुवर्णघण्टामुखरैः कृतक्षीराभिषेचनाम् ।
कटकाङ्गदमंजीररशनादिविभूषणैः ॥ ५८ ॥
विभूषितां क्षौमवस्त्रां सिन्दूरतिलकाञ्चिताम् ।
प्रसन्नवदनाम्भोजां प्रपन्नार्तिविनाशिनीम् ॥ ५९ ॥
छत्रचामरहस्ताढ्यैः सेवितामप्सरोगणैः ।
कृत्वैवं प्रतिमां तां च प्रतिष्ठाप्य यथाविधि ॥ ६०
श्रीं लक्ष्म्यै नम इत्येव ध्यानावाहनपूर्वकान् ।
उपचारांश्चतुष्षष्टिं कल्पयेत गृहे सुधीः ॥ ६१ ॥
प्रतिमाया अलाभे तु लक्ष्म्यास्सम्प्राप्य चालयम् ।
कारयेदुपचारांस्तु यथाविध्यर्चकैर्मुदा ॥ ६२
तस्याप्यभावे त्वालेख्ये लिखितां वर्णकैस्तथा ।
पूजयेत्तस्य चाभावे कृतां चन्दनदारुणा ॥ ६३ ॥
तदभावे चन्दनेन रचितां पूजयेद्रमाम् ।
एषामभावे विकचे कमले कर्णिकागताम् ॥ ६४ ॥
ध्यात्वा तथाविधां देवीं आदरेण प्रपूजयेत् ।
कमलानां सहस्रेणाप्यष्टोत्तरशतेन च ॥ ६५
अर्चयेदिन्दिरापादौ ध्यात्वाऽभीष्टानि चेतसि ।
श्रीदेव्या नामसाहस्रं अष्टोत्तरशताधिकम् ॥ ६६ ॥
अथातस्सम्प्रवक्ष्यामि शृणु नान्यमना नृप ।

पारायणप्रकारः ॥

ओं अस्य श्रीमहालक्ष्मीसहस्रनामस्तोत्रमहामन्त्रस्य । नारद ऋषिः । अनुष्टुपछन्दः । श्रीमहालक्ष्मीर्देवता । ह्रां बीजं । ह्रीं शक्तिः । ह्रूं कीलकम् । श्रीमहालक्ष्मीप्रसादसिद्ध्यर्थे श्रीमहालक्ष्मीसहस्रनाममन्त्रजपे विनियोगः ॥

ओं ह्लां हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।अंगुष्ठाभ्यां नमः ।
मं ह्लीं चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह । तर्जनीभ्यां नमः ।
हां ह्लूं = तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । मध्यमाभ्यां नमः ।
लं ह्लें यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् । अनामिकाभ्यां नमः ।
क्ष्म्यैं ह्लौं अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । कनिष्ठिकाभ्यां नमः ।
नमः ह्लः श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् । करतलकरपृष्ठाभ्यां नमः ।
ओं ह्लां कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । हृदयाय नमः । मं ह्लीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् । शिरसे स्वाहा । हां ह्लूं चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् शिखायै वषट् । लं ह्लैं तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे । कवचाय हुम् । क्ष्म्यैं ह्लौं आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । नेत्रत्रयाय वौषट् । नमः ह्लः तस्य फलानि तपसा नुदान्तु मायान्तरायाश्च बाह्या अलक्ष्मीः । अस्त्राय फट् ॥ भूर्भुवस्सुवरोमिति दिग्बन्धः ॥ ध्यानम् -

लक्ष्मीदेवीं द्विपद्माभयवरदकरां तप्तकार्तस्वराभां
शुभ्राभ्राभेभयुग्म द्वयकरधृतकुंभाद्भिरासिच्यमानाम् ।
रत्नौघाबद्धमौलिं विमलतरदुकूलार्तवालेपनाढ्यां
पद्माक्षीं पद्मनाभोरसि कृतवसतिं पद्मगां चिन्तयामि ॥

लं पृथिव्यात्मिकायै गन्धं समर्पयामि । हं आकाशात्मिकायै पुष्पाणि समर्पयामि । यं वाय्वात्मिकायै. धूपमाघ्रापयामि । रं वह्न्यात्मिकायै. दीपं दर्शयामि । वं अमृतात्मिकायै. अमृतं निवेदयामि । सं सर्वात्मिकायै सर्वोपचारान् समर्पयामि ।

पारायणान्ते ओं ह्लां = उपैतु मां देवसखः कीर्तिश्च मणिना सह । हृदयाय नमः । मं ह्लीं = प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे । शिरसे स्वाहा । हां ह्लूं क्षुत्पिपासामलां ज्येष्ठां अलक्ष्मीं नाशयाम्यहम् । शिखायै वषट् । लं ह्लैं अभूतिमसमृद्धिश्च सर्वां निर्णुद मे गृहात् । कवचाय हुम् । क्ष्म्यैं ह्लौं गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । नेत्रत्रयाय वौषट् । नमः ह्लः ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । अस्त्राय फट् ॥ भूर्भुवस्सुवरोमिति दिग्विमोकः । ध्यानम् । लमित्यादि पञ्चपूजा ।

॥ श्री लक्ष्मीसहस्रनामस्तोत्रम् ॥

श्री नारद उवाच -ः

महालक्ष्मीर्महेशाना महामाया मलापहा ।
विष्णुपत्नी विधीशार्च्या विश्वयोनिर्वरप्रदा ॥ १ ॥

धात्री विधात्री धर्मिष्ठा धम्मिलोद्भासिमल्लिका ।
भार्गवी भक्तिजननी भवनाथा भवार्चिता ॥ २ ॥

भद्रा भद्रप्रदा भव्या भक्ताभीष्टफलप्रदा ।
प्रळयस्था प्रसिद्धा मा प्रकृष्टैश्वर्यदायिनी ॥ ३ ॥

विष्णुशक्तिर्विष्णुमाया विष्णुवक्षःस्थलस्थिता ।
वाग्रूपा वाग्विभूतिज्ञा वाक्प्रदा वरदा वरा ॥ ४ ॥

सम्पत्प्रदा सर्वशक्तिः संविद्रूपा समाऽसमा ।
हरिद्राभा हरिन्नाथपूजिता हरिमोहिनी ॥ ५ ॥

हतपापा हतखला हिताहितविवर्जिता ।
हिताहितपराऽहेया हर्षदा हर्षरूपिणी ॥ ६ ॥

वेदशास्त्रालिसंसेव्या वेदरूपा विधिस्तुता।
श्रुतिः स्मृतिर्मतिः साध्वी श्रुताऽश्रुतधरा धरा॥ ७॥
श्रीः श्रिताघध्वान्तभानुः श्रेयसी श्रेष्ठरूपिणी।
इन्दिरा मन्दिरान्तस्था मन्दुरावासिनी मही॥ ८॥
धनलक्ष्मीर्धनकरी धनिप्रीता धनप्रदा।
धानासमृद्धिदा धुर्या धुताघा धौतमानसा॥ ९॥
धान्यलक्ष्मीर्दारिताघा दारिद्र्यविनिवारिणी।
वीरलक्ष्मीर्वीरवन्द्या वीरखड्गाग्रवासिनी॥ १०॥
अक्रोधनाऽलोभपरा ललिता लोभनाशिनी।
लोकवन्द्या लोकमाता लोचनाधःकृतोत्पला॥ ११॥
हस्तिहस्तोपमानोरुः हस्तद्वयधृताम्बुजा।
हस्तिकुम्भोपमकुचा हस्तिकुम्भस्थलस्थिता॥ १२॥
राजलक्ष्मी राजराजसेविता राज्यदायिनी।
राकेन्दुसुन्दरी रस्या रसालरसभाषणा॥ १३
कोशवृद्धिः कोटिदात्री कोटिकोटिरविप्रभा।
कर्माराध्या कर्मगम्या कर्मणां फलदायिनी॥ १४॥
धैर्यप्रदा धैर्यरूपा धीरा धीरसमर्चिता।
पतिव्रता परतरपुरुषार्थप्रदाऽपरा॥ १५॥
पद्मालया पद्मकरा पद्माक्षी पद्मधारिणी।
पद्मिनी पद्मदा पद्मा पद्मशंखादिसेविता॥ १६॥
दिव्या दिव्याङ्गरागाढ्या दिव्यादिव्यस्वरूपधृत्।
दयानिधिर्दानपरा दानवारातिभामिनी॥ १७॥

देवकार्यपरा देवी दैत्येन्द्रपरिपूजिता ।
नारायणी नादगता नाकराजसमर्चिता ॥ १८ ॥

नक्षत्रनाथवदना नरसिंहप्रियाऽनला ।
जगद्रूपा जगन्नाथा जङ्गमाजङ्गमाकृतिः ॥ १९ ॥

कविता कञ्जनिलया कम्रा कलिनिषेधिनी ।
कारुण्यसिन्धुः कमला कमलाक्षी कुचोन्नता ॥ २० ॥

बलिप्रिया बलिहरी बलिनी बलिसंस्तुता ।
हीरभूषा हीनदोषा हानिहर्त्री हतासुरा ॥ २१ ॥

हव्यकव्यार्चिता हत्यादिकपातकनाशिनी ।
विशुद्धसत्वा विवशा विश्वबाधाहरी वधूः ॥ २२ ॥

ब्रह्माणी ब्रह्मजननी ब्रह्मरूपा बृहद्वपुः ।
बन्दीकृतामरवधूमोचिनी बन्धुरालका ॥ २३ ॥

बिलेशयाङ्गनावन्द्या बीभत्सरहिताऽबला ।
भोगिनी भुवनाधीशा भोगिभोगशयाऽभया ॥ २४ ॥

दामोदरप्रिया दान्ता दाशेशपरिसेविता ।
जामदग्न्यप्रिया जह्नुतनया पावनाङ्घ्रिका ॥ २५ ॥

क्षीरोदमथनोद्भूता क्षीराक्ता क्षितिरूपिणी ।
क्षेमङ्करी क्षयकरी क्षेत्रज्ञा क्षेत्रदायिनी ॥ २६ ॥

स्वयंवृताच्युता स्वीयरक्षिणी स्वत्वदायिनी ।
तारकेशमुखी तार्क्ष्यस्वामिनी तारिताश्रिता ॥ २७ ॥

गुणातीता गुणवती गुण्या गरुडसंस्थिता ।
गेया गयाक्षेत्रगता गानतुष्टा गतिप्रदा ॥ २८ ॥

शेषरूपा शेषशायिभामिनी शिष्टसम्मता।
शेवधिः शोषिताशेषभुवना शोभनाकृतिः ॥ २९ ॥

पाञ्चरात्रार्चिता पाञ्चजन्यधार्यङ्कवासिनी।
पाषण्डद्वेषिणी पाशमोचनी पामरप्रिया ॥ ३०

भयङ्करी भयहरी भर्तृभक्ता भवापहा।
ह्रीर्ह्रीमती हृततमाः हतमाया हताशुभा ॥ ३१

रघुवंशस्नुषा रामा रम्या रामप्रिया रमा।
सीरध्वजसुता सीता सीमातीतगुणोज्ज्वला ॥ ३२

जानकी जगदानन्ददायिनी जगतीभवा।
भूगर्भसम्भवा भूतिः भूषिताङ्गी भृतानता ॥ ३३

वेदस्तवा वेदवती वैदेही वेदवित्प्रिया।
वेदान्तवेद्या वीर्याढ्या वीरपत्नी विशिष्टधीः ॥ ३४

शिवचापारोपपणा शिवा शिवपरार्चिता।
साकेतवासिनी साधुस्वान्तगा स्वादुभक्षिणी ॥ ३५

गुहागता गुहनता गुहागतमुनिस्तुता।
दरस्मिता दनुजसंहर्त्री दशरथस्नुषा ॥ ३६

दायप्रदा दानफला दक्षा दाशरथिप्रिया।
कान्ता कान्तारगा काम्या कारणातीतविग्रहा ॥ ३७

वीरा विराधसंहर्त्री विश्वमायाविधायिनी।
वेद्या वैद्यप्रिया वैद्या वेधोविष्णुशिवाकृतिः ॥ ३८

खरदूषणकालाग्निः खरभानुकुलस्नुषा।
शूरा शूर्पणखाभङ्गकारिणी श्रुतवल्लभा ॥ ३९

सुवर्णमृगतृष्णाढ्या सुवर्णसदृशाङ्गका ।
सुमित्रा सुखदा सूतसंस्तुता सुतदारदा ॥ ४०

सुमित्रानुग्रहपरा सुमन्त्रा सुप्रतिष्ठिता ।
श्यामा श्यामलनेत्रान्ता श्यामन्यग्रोधसेविनी ॥ ४१

तुङ्गस्थानप्रदा तुङ्गा गङ्गाप्रार्थनतत्परा ।
गतिप्रिया गर्भरूपा गतिर्गतिमती च गौः ॥ ४२

गर्वदूरा गर्वहरी गतिनिर्जितहंसिका ।
दशाननवधोद्युक्ता दयासिन्धुर्दशातिगा ॥ ४३

सेतुहेतुर्हेतुहीना हेतुहेतुमदात्मिका ।
हनूमत्स्वामिनी हृष्टा हृष्टपुष्टजनस्तुता ॥ ४४

वामकेशी वामनेत्री वाद्या वादिजयप्रदा ।
धनधान्यकरी धर्म्या धर्माधर्मफलप्रदा ॥ ४५

समुद्रतनया स्तुत्या समुद्रा सद्रसप्रदा ।
सामप्रिया सामनुता सान्त्वोक्तिः सायुधा सती ॥ ४६

शीतीकृताग्निः शीतांशुमुखी शीलवती शिशुः ।
भस्मीकृतासुरपुरा भरताग्रजभामिनी ॥ ४७

राक्षसीदुःखदा राज्ञी राक्षसीगणरक्षिणी ।
सरस्वती सरिद्रूपा सन्नुता सद्गतिप्रदा ॥ ४८

क्षमावती क्षमाशीला क्षमापुत्री क्षमाप्रदा ।
भर्तृभक्तिपरा भर्तृदैवता भरतस्तुता ॥ ४९

दूषणारातिदयिता दयितालिङ्गनोत्सुका ।
अल्पमध्याऽल्पधीदूरा कल्पवल्ली कलाधरा ॥ ५०

सुग्रीववन्द्या सुग्रीवा व्यग्रीभावावितानता।
नीलाश्मभूषा नीलादिस्तुता नीलोत्पलेक्षणा ॥ ५१
न्याय्या न्यायपराऽऽराध्या न्यायान्यायफलप्रदा।
पुण्यदा पुण्यलभ्या च पुरुषोत्तमभामिनी ॥ ५२
पुरुषार्थप्रदा पुण्या पण्या फणिपतिस्तुता।
अशोकवनिकास्थानाऽशोका शोकविनाशिनी ॥ ५३
शोभारूपा शुभा शुभ्रा शुभ्रदन्ता शुचिस्मिता।
पुरुहूतस्तुता पूर्णा पूर्णरूपा परेशया ॥ ५४
दर्भाग्रधीः दहरगा दर्भब्रह्मास्त्रभामिनी।
त्रैलोक्यमाता त्रैलोक्यमोहिनी त्रातवायसा ॥ ५५
त्राणैककार्या त्रिदशा त्रिदशाधीशसेविता।
लक्ष्मणा लक्ष्मणाराध्या लक्ष्मणाग्रजनायिका ॥ ५६
लङ्काविनाशिनी लक्ष्या ललना ललिताशया।
तारकाख्यप्रिया तारा तारिका तार्क्ष्यगा तरिः ॥ ५७
ताटकारातिमहिषी तापत्रयकुठारिका।
ताम्राधरा तार्क्ष्यनुता ताम्राक्षी तारितानता ॥ ५८
रघुवंशपताका श्रीरघुनाथसधर्मिणी।
वनप्रिया वनपरा वनजाक्षी विनीतिदा ॥ ५९
विद्याप्रिया विद्वदीड्या विद्याऽविद्याविनाशिनी।
सर्वाधारा शमपरा शरभङ्गमुनिस्तुता ॥ ६०
बिल्वप्रिया बलिमती बलिसंस्तुतवैभवा।
बलिराक्षससंहर्त्री बहुका बहुविग्रहा ॥ ६१

क्षत्रियान्तकरारातिभार्या क्षत्रियवंशजा ।
शरणागतसंरक्षा शरचापासिपूजिता ॥ ६२

शरीरभाजितरतिः शरीरजहरस्तुता ।
कल्याणी करुणामूर्तिः कलुषघ्नी कविप्रिया ॥ ६३

अचक्षुरश्रुतिरपादप्राणा चामना अधीः ।
अपाणिपादाऽप्यव्यक्ता व्यक्ता व्यञ्जितविष्टपा ॥ ६४

शमिप्रिया सकलदा शर्मदा शर्मरूपिणी ।
सुतीक्ष्णवन्दनीयाङ्घ्रिः सुतवद्वत्सला सुधीः ॥ ६५

सुतीक्ष्णदण्डा सुव्यक्ता सुतीभूतजगत्त्रया ।
मधुरा मधुरालापा मधुसूदनभामिनी ॥ ६६

माध्वी च माधवसती माधवीकुसुमप्रिया ।
परा परभृतालापा परापरगतिप्रदा ॥ ६७

वाल्मीकिवदनाम्भोधिसुधा बलिरिपुस्तुता ।
नीलाङ्गदादिविनुता नीलाङ्गदविभूषिता ॥ ६८

विद्याप्रदा वियन्मध्या विद्याधरकृतस्तवा ।
कुल्या कुशलदा कल्या कला कुशलवप्रसूः ॥ ६९

वशिनी विशदा वश्या वन्द्या वन्दारुवत्सला ।
माहेन्द्री महदा मह्या मीनाक्षी मीनकेतना ॥ ७०

कमनीया कलामूर्तिः कुपिताऽकुपिता कृपा ।
अनसूयाङ्गरागाङ्काऽनसूया सूरिवन्दिता ॥ ७१

अम्बा बिम्बाधरा कम्बुकन्धरा मन्थरा उमा ।
रामानुगाऽऽरामचरी रात्रिञ्चरभयङ्करी ॥ ७२

एकवेणीधरा भूमिशयना मलिनाम्बरा ।
रक्षोहरी गिरिलसद्वक्षोजा ज्ञानविग्रहा ।। ७३

मेधा मेधाविनी मेध्या मैथिली मातृवर्जिता ।
अयोनिजा वयोनित्या पयोनिधिसुता पृथुः ।। ७४

वानरर्क्षपरीवारा वारिजास्या वरान्विता ।
दयार्द्राऽभयदा भद्रा निद्रामुद्रा मुदायतिः ।। ७५

गृध्रमोक्षप्रदा गृध्नुः गृहीतवरमालिका ।
श्वश्रेयसप्रदा शश्वद्भवा शतधृतिप्रसूः ।। ७६

शरत्पद्मपदा शान्ता श्वशुरार्पितभूषणा ।
लोकाधारा निरानन्दा नीरागा नीरजप्रिया ।। ७७

नीरजा निस्तमा निस्वा नीरीतिर्नीतिनैपुणा ।
नारीमणिर्नराकारा निराकाराऽनिराकृता ।। ७८

कौमारी कौशलनिधिः कौशिकी कौस्तुभस्वसा ।
सुधाकरानुजा सुभ्रूः सुजाता सोमभूषणा ।। ७९

काली कलापिनी कान्तिः कौशेयाम्बरमण्डिता ।
शशाक्षतजसंरक्तचन्दनालिप्तगात्रका ।। ८०

मञ्जीरमण्डितपदा मञ्जुवाक्या मनोरमा ।
गायत्र्यर्थस्वरूपा च गायत्री गोगतिप्रदा ।। ८१

धन्याऽक्षरात्मिका धेनुः धार्मिका धर्मवर्धिनी ।
एलालकाऽप्येधमानकृपा कृसरतर्पिता ।। ८२

कृष्णा कृष्णालका कृष्टा कष्टघ्नी खण्डिताशरा ।
कलालापा कलहकृद्दूरा काव्याब्धिकौमुदी ।। ८३

अकारणा कारणात्मा कारणाविनिवर्तिनी।
कविप्रिया कवनदा कृतार्था कृष्णभामिनी॥ ८४

रुक्मिणी रुक्मिभगिनी रुचिरा रुचिदा रुचिः।
रुक्मप्रिया रुक्मभूषा रूपिणी रूपवर्जिता॥ ८५

अभीष्मा भीष्मतनया भीतिहृद्भूतिदायिनी।
सत्या सत्यव्रता सह्या सत्यभामा शुचिव्रता॥ ८६

सम्पन्ना संहिता सम्पत् सवित्री सवितृस्तुता।
द्वारकानिलया द्वारभूता द्विपदगा द्विपात्॥ ८७

एकैकात्मैकरूपैकपत्नी चैकेश्वरी प्रसूः।
अज्ञानध्वान्तसूर्यार्चिः दारिद्र्याग्निघनावली॥ ८८

प्रद्युम्नजननी प्राप्या प्रकृष्टा प्रणतिप्रिया।
वासुदेवप्रिया वास्तुदोषघ्नी वार्धिसंश्रिता॥ ८९

वत्सला कृत्स्नलावण्या वर्ण्या गण्या स्वतन्त्रिका।
भक्ता भक्तपराधीना भवानी भवसेविता॥ ९०

राधापराधसहनी राधिताशेषसज्जना।
कोमला कोमलमतिः कुसुमाहितशेखरा॥ ९१

कुरुविन्दमणिश्रेणीभूषणा कौमुदीरुचिः।
अम्लानमाल्या सम्मानकारिणी सरयूरुचिः॥ ९२

कटाक्षनृत्यत्करुणा कनकोज्ज्वलभूषणा।
निष्टप्तकनकाभाङ्गी नीलकुञ्चितमूर्धजा॥ ९३

विशृङ्खला वियोनिस्था विद्यमाना विदांवरा।
शृङ्गारिणी शिरीषाङ्गी शिशिरा शिरसि स्थिता॥ ९४

सूर्यात्मिका सूरिनम्या सूर्यमण्डलवासिनी ।
वह्निशैत्यकरी वह्निप्रविष्टा वह्निशोभिता ॥ ९५

निर्हेतुरक्षिणी निष्काभरणा निष्कदायिनी ।
निर्ममा निर्मितजगत् निस्तमस्का निराश्रया ॥ ९६

निरयार्तिहरी निघ्ना निहिता निहतासुरा ।
राज्याभिषिक्ता राज्येशी राज्यदा राजिताश्रिता ॥ ९७

राकेन्दुवदना रात्रिचरघ्नी राष्ट्रवल्लभा ।
श्रिताच्युतप्रिया श्रोत्री श्रीदामसखवल्लभा ॥ ९८

रमणी रमणीयाङ्गी रमणीयगुणाश्रया ।
रतिप्रिया रतिकरी रक्षोघ्नी रक्षिताण्डका ॥ ९९

रसरूपा रसात्मैकरसा रसपराश्रिता ।
रसातलस्थिता रासतत्परा रथगामिनी ॥ १००

अश्वारूढा गजारूढा शिबिकातलशायिनी ।
चलत्पादा चलद्वेणी चतुरङ्गबलानुगा ॥ १०१

चञ्चच्चन्द्रकराकारा चतुर्थी चतुराकृतिः ।
चूर्णीकृताशरा चूर्णालिका चूतफलप्रिया ॥ १०२

शिखाशीघ्रा शिखाकारा शिखाविधृतमल्लिका ।
शिक्षाशिक्षितमूर्खालिः शीताऽशीता शताकृतिः ॥ १०३

वैष्णवी विष्णुसदृशी विष्णुलोकप्रदा वृषा ।
वीणागानप्रिया वीणा वीणाधरमुनिस्तुता ॥ १०४

वैदिकी वैदिकाचारप्रीता वैदूर्यभूषणा ।
सुन्दराङ्गी सुहृत् स्फीता साक्षिणी साक्षमालिका ॥ १०५

क्रिया क्रियापरा क्रूरा क्रूरराक्षसहारिणी ।
तल्पस्था तरणिस्थाना तापत्रयनिवारिणी ॥ १०६

तीर्णप्रतिज्ञा तीर्थेशी तीर्थपादा तिथिप्रिया ।
चर्या चरणदा चीर्णा चीराङ्का चत्वरस्थिता ॥ १०७

लता लताङ्गी लावण्या लघ्वी लक्ष्याशराऽलया ।
लीला लीलाहृतखला लीना लीढा शुभावलिः ॥ १०८

लूतोपमाना लूनाघा लोलाऽलोलविभूतिदा ।
अमर्त्या मर्त्यसुलभा मानुषी मानवी मनुः ॥ १०९

सुगन्धा सुहिता सूक्ष्मा सूक्ष्ममध्या सुतोज्ज्वला ।
मणिर्मणिमती मञ्जुगमना महिता मुनिः ॥ ११०

मिताऽमितसुखाकारा मीलिता मीनलोचना ।
गोमती गोकुलस्थाना गोदा गोकुलवासिनी ॥ १११

गजेन्द्रगामिनी गम्या माद्री मायाविनी मधुः ।
त्रिलोचननुता त्रिष्टुबनुष्टुप्पङ्क्तिरूपिणी ॥ ११२

द्विपात्त्रिपादष्टपदी नवपाच्च चतुष्पदी ।
पङ्क्त्याननोपदेष्ट्रीच शारदा पङ्क्तिपावनी ॥ ११३

शेखरीभूतशीतांशुः शेषतल्पाधिशायिनी ।
शेमुषी मुषिताशेषपातका मातृकामयी ॥ ११४

शिववन्द्या शिखरिणी हरिणी करिणी सृणिः ।
जगच्चक्षुर्जगन्माता जङ्गमाजङ्गमप्रसूः ॥ ११५

सर्वशब्दा सर्वमुक्तिः सर्वभक्तिस्समाहिता ।
क्षीरप्रिया क्षालिताघा क्षीराम्बुधिसुताऽक्षया ॥ ११६

मायिनी मथनोद्भूता मुग्धा दुग्धोपमस्थिता।
वशगा वामनयना हंसिनी हंससेविता ॥ ११७

अनङ्गाऽनङ्गजननी सुतुङ्गपददायिनी।
विश्वा विश्वेडिता विश्वधात्री विश्वाधिकार्थदा ॥ ११८

गद्यपद्यस्तुता गन्त्री गच्छन्ती गरुडासना।
पश्यन्ती शृण्वती स्पर्शकर्त्री रसनिरूपिणी ॥ ११९

भृत्यप्रिया भृतिकरी भरणीया भयापहा।
प्रकर्षदा प्रसिद्धेशा प्रमाणं प्रमितिः प्रमा ॥ १२०

आकाशरूपिण्यध्यस्ता मध्यस्था मध्यमा मितिः।
तलोदरी तलकरी तटिद्रूपा तरङ्गिणी ॥ १२१

अकम्पा कम्पितरिपुः जम्भारिसुखदायिनी।
दयाविष्टा शिष्टसुहृत् विष्टरश्रवसःप्रिया ॥ १२२

हृषीकसुखदा हृद्याऽभीता भीतार्तिहारिणी।
माता मनुमुखाराध्या मातङ्गी मानिताखिला ॥ १२३

भृगुप्रिया भृगुसुता भार्गवेड्या महाबला।
अनुकूलाऽमलतनुः लोपहीना लिपिस्तुता ॥ १२४

अन्नदाऽन्नस्वरूपाऽन्नपूर्णाऽपर्णा ऋणापहा।
बृन्दा बृन्दावनरतिः बन्दीभूतामरीस्तुता ॥ १२५

तेजस्विनी तुर्यपूज्या तेजस्त्रितयरूपिणी।
षडास्यजयदा षष्ठी षडूर्मिपरिवर्जिता ॥ १२६

षड्जप्रिया सत्वरूपा सव्यमार्गप्रपूजिता।
सनातनतनुस्सन्ना सम्पन्मूर्तिः सरीसृपा ॥ १२७

जिताशा जन्मकर्मादिनाशिनी ज्येष्ठरूपिणी।
जनार्दनहृदावासा जनानन्दा जयाऽजनिः ॥ १२८

वासना वासनाहन्त्री वामा वामविलोचना ।
पयस्विनी पूततनुः पात्री परिषदर्चिता ॥ १२९

महामोहप्रमथिनी महाहर्षा महाधृतिः ।
महावीर्या महाचर्या महाप्रीता महागुणा ॥ १३०

महाशक्तिर्महासक्तिः महाज्ञाना महारतिः ।
महापूज्या महेज्या च महालाभप्रदा मही ॥ १३१

महासम्पन्महाकम्पा महालक्ष्या महाशया ।
महारूपा महाधूपा महामतिर्महामहा ॥ १३२

महारोगहरी मुक्ता महालोभहरी मृडा ।
मेदस्विनी मातृपूज्या मेया मा मातृरूपिणी ॥ १३३

नित्यमुक्ता नित्यबुद्धा नित्यतृप्ता निधिप्रदा ।
नीतिज्ञा नीतिमद्वन्द्या नीता प्रीताच्युतप्रिया ॥ १३४

मित्रप्रिया मित्रविन्दा मित्रमण्डलशोभिनी ।
निरङ्कुशा निराधारा निरास्थाना निरामया ॥ १३५

निर्लेपा निस्पृहा नीलकबरी नीरजासना ।
निराबाधा निराकर्त्री निस्तुला निष्कभूषिता ॥ १३६

निरञ्जना निर्मथना निष्क्रोधा निष्परिग्रहा ।
निर्लोभा निर्मला नित्यतेजा नित्यकृपान्विता ॥ १३७

धनाढ्या धर्मनिलया धनदा धनदार्चिता ।
धर्मकर्त्री धर्मगोप्त्री धर्मिणी धर्मदेवता ॥ १३८

धारा धरित्री धरणिः धुतपापा धुताशरा ।
स्त्रीदेवताऽक्रोधनाथाऽमोहाऽलोभाऽमितार्थदा ॥ १३९

कालरूपाऽकालवशा कालज्ञा कालपालिनी ।
ज्ञानिध्येया ज्ञानिगम्या ज्ञानदानपरायणा ॥ १४०

# श्रीलक्ष्म्यष्टोत्तरशतनामस्तोत्रम्

(एतत्स्तोत्रं महालक्ष्मीर्महेशाना इत्यारब्धस्य सहस्रनामस्तोत्रस्य अङ्गभूतम् ।)

ब्रह्मजा ब्रह्मसुखदा ब्रह्मण्या ब्रह्मरूपिणी ।
सुमतिः सुभगा सुन्दा प्रयतिर्नियतिर्यतिः ॥ १ ॥

सर्वप्राणस्वरूपा च सर्वेन्द्रियसुखप्रदा ।
संविन्मयी सदाचारा सदातुष्टा सदानता ॥ २ ॥

कौमुदी कुमुदानन्दा कुः कुत्सिततमोहरी ।
हृदयार्तिहरी हारशोभिनी हानिवारिणी ॥ ३ ॥

संभाज्या संविभज्याऽऽज्ञा ज्यायसी जनिहारिणी ।
महाक्रोधा महातर्षा महर्षिजनसेविता ॥ ४ ॥

कैटभारिप्रिया कीर्तिः कीर्तिता कैतवोज्झिता ।
कौमुदी शीतलमनाः कौसल्यासुतभामिनी ॥ ५ ॥

कासारनाभिः का सा याऽऽप्येषेयत्ताविवर्जिता ।
अन्तिकस्थाऽतिदूरस्था हृदयस्थाऽम्बुजस्थिता ॥६

मुनिचित्तस्थिता मौनिगम्या मान्धातृपूजिता ।
मतिस्थिरीकर्तृकार्यनित्यनिर्वहणोत्सुका ॥ ७

महीस्थिता च मध्यस्था द्युस्थिताऽधःस्थितोर्ध्वगा ।
भूतिर्विभूतिः सुरभिः सुरसिद्धार्तिहारिणी ॥ ८

अतिभोगाऽतिदानाऽतिरूपाऽतिकरुणाऽतिभाः ।
विज्वरा वियदाभोगा वितन्द्रा विरहासहा ॥ ९

शूर्पकारातिजननी शून्यदोषा शुचिप्रिया ।
निःस्पृहा सस्पृहा नीळासपत्नी निधिदायिनी ॥ १०

कुम्भस्तनी कुन्दरदा कुङ्कुमालेपिता कुजा।
शास्त्रज्ञा शास्त्रजननी शास्त्रज्ञेया शरीरगा ॥ ११

सत्यभास्सत्यसङ्कल्पा सत्यकामा सरोजिनी।
चन्द्रप्रिया चन्द्रगता चन्द्रा चन्द्रसहोदरी ॥ १२

औदर्यौपयिकी प्रीता गीता चौता गिरिस्थिता।
अनन्विताऽप्यमूलार्तिध्वान्तपुञ्जरविप्रभा ॥ १३

मङ्गला मङ्गलपरा मृग्या मङ्गलदेवता।
कोमला च महालक्ष्मीः नाम्नामष्टोतरं शतम्।

फलश्रुतिः

नारद उवाच-

इत्येवं नामसाहस्रं साष्टोत्तरशतं श्रियः।
कथितं ते महाराज भुक्तिमुक्तिफलप्रदम्॥।

भूतानां अवताराणां तथा विष्णोर्भविष्यताम्।
लक्ष्म्या नित्यानुगामिन्याः गुणकर्मानुसारतः ॥२

उदाहृतानि नामानि सारभूतानि सर्वतः।
इदन्तु नामसाहस्रं ब्रह्मणा कथितं मम ॥ ३

उपांशुवाचिकजपैः प्रीयेतास्य हरिप्रिया।
लक्ष्मीनामसहस्रेण श्रुतेन पठितेन वा ॥ ४

धर्मार्थी धर्मलाभी स्यात् अर्थार्थी चार्थवान् भवेत्।
कामार्थी लभते कामान् सुखार्थी लभते सुखम् ॥ ५

इहामुत्र च सौख्याय लक्ष्मीभक्तिर्हितङ्करी।
इदं श्रीनामसाहस्रं रहस्यानां रहस्यकम् ॥ ६

गोप्यं त्वया प्रयत्नेन अपचारभयाच्छ्रियः।
नैतद्व्रात्याय वक्तव्यं न मूर्खाय न दम्भिने ॥ ७

न नास्तिकाय नो वेदशास्त्रविक्रयकारिणे।
वक्तव्यं भक्तियुक्ताय दरिद्राय च सीदते ॥ ८

सकृत् पठित्वा श्रीदेव्याः नामसाहस्रमुत्तमम्।
दारिद्र्यान्मुच्यते पूर्वं जन्मकोटिभवान्नरः ॥ ९

त्रिवारपठनादस्याः सर्वपापक्षयो भवेत्।
पञ्चचत्वारिंशदहं सायं प्रातः पठेत्तु यः ॥ १०

तस्य सन्निहिता लक्ष्मीः किमतोऽधिकमाप्यते।
अमायां पौर्णमास्यां च भृगुवारेषु सङ्क्रमे ॥ ११

प्रातः स्नात्वा नित्यकर्म यथाविधि समाप्य च
स्वर्णपात्रेऽथ रजते कांस्यपात्रेऽथवा द्विजः ॥ १२

निक्षिप्य कुङ्कुमं तत्र लिखित्वाऽष्टदलाम्बुजम्।
कर्णिकामध्यतो लक्ष्मीं बीजं साधु विलिख्य च ॥ १३

प्रागादिषु दलेष्वस्य वाणीब्राह्म्यादिमातृमातृकाः।
विलिख्य वर्णतोऽथेदं नामसाहस्रमादरात् ॥ १४

यः पठेत् तस्य लोकास्तु सर्वेऽपि वशगास्ततः।
राज्यलाभः पुत्रपौत्रलाभः शत्रुजयस्तथा ॥ १५

सङ्कल्पादेव तस्य स्यात् नात्र कार्या विचारणा।
अनेन नामसहस्रेणार्चयेत् कमलां यदि ॥ १६

कुङ्कुमेनाथ पुष्पैर्वा न तस्य स्यात् पराभवः।
उत्तमोत्तमता प्रोक्ता कमलानामिहार्चने ॥ १७

तदभावे कुङ्कुमं स्यात् मल्लीपुष्पाञ्जलिस्ततः ।
जातीपुष्पाणि च ततः ततो मरुवकावलिः ॥ १८

पद्मानामेव रक्तत्वं श्लाघितं मुनिसत्तमैः ।
अन्येषां कुसुमानान्तु शौक्ल्यमेव शिवार्चने ॥ १९

प्रशस्तं नृपतिश्रेष्ठ तस्माद्यत्नपरो भवेत् ।
किमिहात्र बहूक्तेन लक्ष्मीनामसहस्रकम् ॥ २०

वेदानां सरहस्यानां सर्वशास्त्रगिरामपि ।
तन्त्राणामपि सर्वेषां सारभूतं न संशयः ॥ २१

सर्वपापक्षयकरं सर्वशत्रुविनाशनम् ।
दारिद्र्यध्वंसनकरं पराभवनिवर्तकम् ॥ २२

विश्लिष्टबन्धुसंश्लेषकारकं सद्गतिप्रदम् ।
तन्वन्ते चिन्मयात्म्यैक्यबोधादानन्ददायकम् ॥ २३

लक्ष्मीनामसहस्रं तत् नरोऽवश्यं पठेत्सदा ।
योऽसौ तात्पर्यतःपाठी सर्वज्ञः सुखितो भवेत् ॥ २४

अकारादिक्षकारान्तनामभिःपूजयेत्सुधीः ।
तस्य सर्वेप्सितार्थसिद्धिर्भवति निश्चितम् ॥ २५

श्रियं वर्चसमारोग्यं शोभनं धान्यसंपदः ।
पशूनां बहुपुत्राणां लाभश्च संभवेत् ध्रुवम् ॥ २६

शतसंवत्सरं विंशत्युतरं जीवितं भवेत् ।
मंगलानि तनोत्येषा श्रीविद्यामंगला शुभा ॥ २७

(नारदीयोपपुराणतः)

# लक्ष्मीसहस्रनामावलिः

महालक्ष्म्यै नमः । महेशानायै । महामायायै । मलापहायै । विष्णुपत्न्यै । विधीशार्च्यायै । विश्वयोनये । वरप्रदायै । धात्र्यै । विधात्र्यै । धर्मिष्ठायै । धम्मिल्लोद्भासिमल्लिकायै । भार्गव्यै । भक्तिजनन्यै । भवनाथायै । भवार्चितायै । भद्रायै । भद्रप्रदायै । भव्यायै । भक्ताभीष्टफलप्रदायै नमः । २०

प्रलयस्थायै नमः । प्रसिद्धायै । मायै । प्रकृष्टैश्वर्यदायिन्यै । विष्णुशक्त्यै । विष्णुमायायै । विष्णुवक्षःस्थलस्थितायै । वाग्रूपायै । वाग्विभूतिज्ञायै । वाक्प्रदायै । वरदायै । वरायै । संपत्प्रदायै । सर्वशक्त्यै । संविद्रूपायै । समायै । असमायै । हरिद्राभायै । हरिन्नाथपूजितायै । हरिमोहिन्यै नमः । ४०

हतपापायै नमः । हतखलायै । हिताहितविवर्जितायै । हिताहितपरायै । अहेयायै । हर्षदायै । हर्षरूपिणै । वेदशास्त्रालिसंसेव्यायै । वेदरूपाय । विधिस्तुतायै । श्रुत्यै । स्मृत्यै । मत्यै । साध्व्यै । श्रुतायै । अश्रुतधरायै । धरायै । श्रियै । श्रिताघध्वान्तभानवे । श्रेयस्यै नमः । ६०

श्रेष्ठरूपिण्यै नमः । इन्दिरायै । मन्दिरान्तस्थायै । मन्दुरावासिन्यै । मह्यै । धनलक्ष्म्यै । धनकर्यै । धनिप्रीतायै । धनप्रदायै । धानासमृद्धिदायै । धुर्यायै । धुताघायै । धौतमानसायै । धान्यलक्ष्म्यै । दारिताघायै । दारिद्र्यविनिवारिण्यै । वीरलक्ष्म्यै । वीरवन्द्यायै । वीरखड्गाग्रवासिन्यै । अक्रोधनायै नमः । ८०

अलोभपरायै नमः । ललितायै । लोभनाशिन्यै । लोकवन्द्यायै । लोकमात्रे । लोचनाधःकृतोत्पलायै । हस्तिहस्तोपमानोरवे । हस्तद्वयधृतांबुजायै । हस्तिकुंभोपमकुचायै । हस्तिकुंभस्थलस्थितायै ।

राजलक्ष्म्यै । राजराजसेवितायै । राज्यदायिन्यै । राकेन्दुसुन्दर्यै । रस्यायै । रसालरसभाषणायै । कोशवृद्ध्यै । कोटिदात्र्यै । कोटिकोटिरविप्रभायै । कर्माराध्यायै नमः । १००

कर्मगम्यायै नमः । कर्मणां फलदायिन्यै । धैर्यप्रदायै । धैर्यरूपायै । धीरायै । धीरसमर्चितायै । पतिव्रतायै । परतरपुरुषार्थप्रदायै । अपरायै । पद्मालयायै । पद्मकरायै । पद्माक्ष्यै । पद्मधारिण्यै । पद्मिन्यै । पद्मदायै । पद्मायै । पद्मशंखादिसेवितायै । दिव्यायै । दिव्याङ्गरागाढ्यायै । दिव्यादिव्यस्वरूपधृते नमः । १२०

दयानिधये नमः । दानपरायै । दानवारातिभामिन्यै । देवकार्यपरायै । देव्यै । दैत्येन्द्रपरिपूजितायै । नारायण्यै । नादगतायै । नाकराजसमर्चितायै । नक्षत्रनाथवदनायै । नरसिंहप्रियायै । अनलायै । जगद्रूपायै । जगन्नाथायै । जङ्गमाजङ्गमाकृतये । कवितायै । कञ्जनिलयायै । कम्रायै । कलिनिषेधिन्यै । कारुण्यसिन्धवे नमः । १४०

कमलायै नमः । कमलाक्ष्यै । कुचोन्नतायै । बलिप्रियायै । बलिहर्यै । बलिन्यै । बलिसंस्तुतायै । हीरभूषायै । हीनदोषायै । हानिहर्त्र्यै । हतासुरायै । हव्यकव्यार्चितायै । हत्यादिकपातकनाशिन्यै । विशुद्धसत्वायै । विवशायै । विश्वबाधाहर्यै । वध्वै । ब्रह्माण्यै । ब्रह्मजनन्यै । ब्रह्मरूपायै नमः । १६०

बृहद्वपुषे नमः । बन्दीकृतामरवधूमोचिन्यै । बन्धुरालकायै । बिलेशयाङ्गनावन्द्यायै । बीभत्सरहितायै । अबलायै । भोगिन्यै । भुवनाधीशायै । भोगिभोगशयायै । अभयायै । दामोदरप्रियायै । दान्तायै । दाशेशपरिसेवितायै । जामदग्न्यप्रियायै । जह्नुतनयायै । पावनांघ्रिकायै । क्षीरोदमथनोद्भूतायै । क्षीराक्तायै । क्षितिरूपिण्यै । क्षेमङ्कर्यै नमः । १८०

क्षयकर्यै नमः । क्षेत्रज्ञयै । क्षेत्रदायिन्यै । स्वयंवृताच्युतायै । स्वीयराक्षिण्यै । स्वत्वदायिन्यै । तारकेशमुख्यै । तार्क्ष्यस्वामिन्यै । तारिताश्रितायै । गुणातीतायै । गुणवत्यै । गुण्यायै । गरुडसंस्थितायै । गेयायै । गयाक्षेत्रगतायै । गानतुष्टायै । गतिप्रदायै । शेषरूपायै । शेषशायिभामिन्यै । शिष्टसंमतायै नमः ॥ २००

शेवधये नमः । शोषिताशेषभुवनायै । शोभनाकृत्यै । पाञ्चरात्रार्चितायै । पाञ्चजन्यधार्यङ्कवासिन्यै । पाषण्डद्वेषिण्यै । पाशमोचन्यै । पामरप्रियायै । भयङ्कर्यै । भयहर्यै । भर्तृभक्तायै । भवापहायै । ह्रियै । ह्रीमत्यै । हृततमसे । हतमायायै । हताशुभायै । रघुवंशस्नुषायै । रामायै । रम्यायै नमः ॥ २२०

रामप्रियायै नमः । रमायै । सीरध्वजसुतायै । सीतायै । सीमातीतगुणोज्ज्वलायै । जानक्यै । जगदानन्ददायिन्यै । जगतीभवायै । भूगर्भसंभवायै । भूत्यै । भूषिताङ्ग्यै । भूतानतायै । वेदस्तवायै । वेदवत्यै । वैदेह्यै । वेदवित्प्रियायै । वेदान्तवेद्यायै । वीर्याढ्यायै । वीरपत्न्यै । विशिष्टधियै नमः ॥ २४०

शिवचापारोपपणायै नमः । शिवायै । शिवपरार्चितायै । साकेतवासिन्यै । साधुस्वान्तगायै । स्वादुभक्षिण्यै । गुहागतायै । गुहनतायै । गुहागतमुनिस्तुतायै । दरस्मितायै । दनुजसंहर्त्र्यै । दशरथस्नुषायै । दायप्रदायै । दानफलायै । दक्षायै । दाशरथिप्रियायै । कान्तायै । कान्तारगायै । काम्यायै । कारणातीतविग्रहायै नमः ॥ २६०

वीरायै नमः । विराधसंहर्त्र्यै । विश्वमायाविधायिन्यै । वेद्यायै । वैद्यप्रियायै । वैद्यायै । वेधोविष्णुशिवाकृत्यै । खरदूषणकालाग्नये । खरभानुकुलस्नुषायै । शूरायै । शूर्पणखाभङ्गकारिण्यै । श्रुतवल्लभायै । सुवर्णमृगतृष्णाढ्यायै । सुवर्णसदृशाङ्गकायै । सुमित्रायै । सुखदायै ।

सूतसंस्तुतायै । सुतदारदायै । सुमित्रानुग्रहपरायै । सुमन्त्रायै नमः ॥२८०

सुप्रतिष्ठितायै नमः । श्यामायै । श्यामलनेत्रान्तायै । श्यामन्यग्रोधसेविन्यै । तुङ्गस्थानप्रदायै । तुङ्गायै । गंगाप्रार्थनतत्परायै । गतिप्रियायै । गर्मरूपायै । गत्यै । गतिमत्यै । गवे । गर्वदूरायै । गर्वहर्यै । गतिनिर्जितहंसिकायै । दशाननवधोद्युक्तायै । दयासिन्धवे । दशातिगायै । सेतुहेतवे । हेतुहीनायै नमः ॥ ३००

हेतुहेतुमदात्मिकायै नमः । हनुमत्स्वामिन्यै । हृष्टायै । हृष्टपुष्टजनस्तुतायै । वामकेश्यै । वामनेत्र्यै । वाद्यायै । वादिजयप्रदायै । धनधान्यकर्यै । धर्म्यायै । धर्माधर्मफलप्रदायै । समुद्रतनयायै । स्तुत्यायै । समुद्रायै । सद्रसप्रदायै । सामप्रियायै । सामनुतये । सान्त्वोक्त्यै । सायुधायै । सत्यै नमः ॥ ३२०

शीतीकृताग्नये नमः । शीतांशुमुख्यै । शीलवत्यै । शिशवे । भस्मीकृतासुरपुरायै । भरताग्रजभामिन्यै । राक्षसीदुःखदायै । राज्ञ्यै । राक्षसीगणरक्षिण्यै । सरस्वत्यै । सरिद्रूपायै । सन्नुतायै । सद्गतिप्रदायै । क्षमावत्यै । क्षमाशीलायै । क्षमापुत्र्यै । क्षमाप्रदायै । भर्तृभक्तिपरायै । भर्तृदैवतायै । भरतस्तुतायै नमः ॥ ३४०

दूषणारातिदयितायै नमः । दयितालिङ्गनोत्सुकायै । अल्पमध्यायै । अल्पधीदूरायै । कल्पवल्ल्यै । कलाधरायै । सुग्रीववन्द्यायै । सुग्रीवायै । व्यग्रीभावावितानतायै । नीलाश्मभूषायै । नीलादिस्तुतायै । नीलोत्पलेक्षणायै । न्याय्यायै । न्यायपरायै । आराध्यायै । न्यायान्यायफलप्रदायै । पुण्यदायै । पुण्यलभ्यायै । पुरुषोत्तमभामिन्यै । पुरुषार्थप्रदायै नमः ॥ ३६०

पुण्यायै नमः । पण्यायै । फणिपतिस्तुतायै । अशोकवनिकास्थानायै । अशोकायै । शोकविनाशिन्यै । शोभारूपायै ।

शुभायै। शुभ्रायै। शुभ्रदन्तायै। शुचिस्मितायै। पुरुहूतस्तुतायै। पूर्णायै। पूर्णरूपायै। परेशयायै। दर्भाग्रधियै। दहरगायै। दर्भब्रह्मास्त्रभामिन्यै। त्रैलोक्यमात्रे। त्रैलोक्यमोहिन्यै नमः॥ ३८०

त्रातवायसायै नमः। त्राणैककार्यायै। त्रिदशायै। त्रिदशाधीशसेवितायै। लक्ष्मणायै। लक्ष्मणाराध्यायै। लक्ष्मणाग्रजनायिकायै। लङ्काविनाशिन्यै। लक्ष्यायै। ललनायै। ललिताशयायै। तारकाख्यप्रियायै। तारायै। तारिकायै। तार्क्ष्यगायै। तर्यै। तारकारातिमहिष्यै। तापत्रयकुठारिकायै। ताम्राधरायै। तार्क्ष्यनुतायै नमः। ४००

ताम्राक्ष्यै नमः। तारितानतायै। रघुवंशपताकायै। श्रीरघुनाथसधर्मिण्यै। वनप्रियायै। वनपरायै। वनजाक्ष्यै। विनीतिदायै। विद्याप्रियायै। विद्वदीड्यायै। विद्यायै। अविद्याविनाशिन्यै। सर्वाधारायै। शमपरायै। शरभङ्गमुनिस्तुतायै। बिल्वप्रियायै। बलिमत्यै। बलिसंस्तुतवैभवायै। बलिराक्षससंहर्त्र्यै। बहुकायै नमः॥ ४२०

बहुविग्रहायै नमः। क्षत्रियान्तकरारातिभार्यायै। क्षत्रियवंशजायै। शरणागतसंरक्षायै। शरचापासिपूजितायै। शरीरभाजितरतये। शरीरजहरस्तुतायै। कल्याण्यै। करुणामूर्तये। कलुषघ्न्यै। कविप्रियायै। अचक्षुषे। अश्रुत्यै। अपादे। अप्राणायै। अमनसे। अधियै। अपाणिपादायै। अव्यक्तायै। व्यक्तायै नमः॥ ४४०

व्यञ्जितविष्टपायै नमः। शमिप्रियायै। सकलदायै। शर्मदायै। शर्मरूपिण्यै। सुतीक्ष्णवन्दनीयांघ्रये। सुतवद्वत्सलायै। सुधियै। सुतीक्ष्णदण्डायै। सुव्यक्तायै। सुतीभूतजगत्त्रयायै। मधुरायै। मधुरालापायै। मधुसूदनभामिन्यै। माध्व्यै। माधवसत्यै।

माधवीकुसुमप्रियायै । परायै । परभृतालापायै । परापरगति-प्रदायै नमः ॥ ४६०

वाल्मीकिवदनांभोधिसुधायै नमः । बलिरिपुस्तुतायै । नीलाङ्गदादिविनुतायै । नीलाङ्गदविभूषितायै । विद्याप्रदायै । वियन्मध्यायै । विद्याधरकृतस्तवायै । कुल्यायै । कुशलदायै । कल्यायै । कलायै । कुशलवप्रसुवे । वशिन्यै । विशदायै । वश्यायै । वन्द्यायै । वन्दारुवत्सलायै । माहेन्द्र्यै । महदायै । महद्यायै नमः ॥ ४८०

मीनाक्ष्यै नमः । मीनकेतनायै । कमनीयायै । कलामूर्त्यै । कुपितायै । अकुपितायै । कृपायै । अनसूयाङ्गरागाङ्कायै । अनसूयायै । सूरिवन्दितायै । अंबायै । बिम्बाधरायै । कम्बुकन्धरायै । मन्थरायै । उमायै । रामानुगायै । आरामचर्यै । रात्रिञ्चरभयङ्कर्यै । एकवेणीधरायै । भूमिशयनायै नमः ॥ ५००

मलिनांबरायै नमः । रक्षोहर्यै । गिरिलसद्वक्षोजायै । ज्ञानविग्रहायै । मेधायै । मेधाविन्यै । मेध्यायै । मैथिल्यै । मातृवर्जितायै । अयोनिजायै । वयोनित्यायै । पयोनिधिसुतायै । पृथवे । वानरर्क्षपरीवारायै । वारिजास्यायै । वरान्वितायै । दयार्द्रायै । अभयदायै । भद्रायै । निद्रामुद्रायै नमः ॥ ५२०

मुदायत्यै नमः । गृध्रमोक्षप्रदायै । गृध्वे । गृहीतवरमालिकायै । श्वश्रेयसप्रदायै । शश्वद्भवायै । शतधृतिप्रसुवे । शरत्पद्मपदायै । शान्तायै । श्वशुरार्पितभूषणायै । लोकाधारायै । निरानन्दायै । नीरागायै । नीरजप्रियायै । नीरजायै । निस्तमसे । निस्वायै । नीरीतये । नीतिनैपुणायै । नारीमणये नमः ॥ ५४०

नराकारायै नमः । निराकारायै । अनिराकृतायै । कौमार्यै । कौशलनिधये । कौशिक्यै । कौस्तुभस्वस्त्रे । सुधाकरानुजायै । सुभ्रुवे । सुजातायै । सोमभूषणायै । काल्यै । कलापिन्यै । कान्त्यै ।

कौशेयांबरमण्डितायै । शशाक्षतजसंरक्तचन्दनालिप्तगात्रकायै । मञ्जीरमण्डितपदायै । मञ्जुवाक्यायै । मनोरमायै । गायत्र्यर्थस्वरूपायै नमः ॥ ५६०

गायत्र्यै नमः । गोगतिप्रदायै । धन्यायै । अक्षरात्मिकायै । धेनवे । धार्मिकायै । धर्मवर्धिन्यै । एलालकायै । एधमानकृपायै । कृसरतर्पितायै । कृष्णायै । कृष्णालकायै । कृष्टायै । कष्टघ्न्यै । खण्डिताशरायै । कलालापायै । कलहकृद्दूरायै । काव्याब्धिकौमुद्यै । अकारणायै । कारणात्मने नमः ॥ ५८०

कारणाविनिवर्तिन्यै नमः । कविप्रियायै । कवनदायै । कृतार्थायै । कृष्णभामिन्यै । रुक्मिण्यै । रुक्मिभगिन्यै । रुचिरायै । रुचिदायै । रुच्यै । रुक्मप्रियायै । रुक्मभूषायै । रूपिण्यै । रूपवर्जितायै । अभीष्मायै । भीष्मतनयायै । भीतिहृते । भूतिदायिन्यै । सत्यायै । सत्यव्रतायै नमः ॥ ६००

सह्यायै नमः । सत्यभामायै । शुचिव्रतायै । संपन्नायै । संहितायै । संपदे । सवित्र्यै । सवितृस्तुतायै । द्वारकानिलयायै । द्वारभूतायै । द्विपदगायै । द्विपादे । एकैकात्मने । एकरूपायै । एकपत्न्यै । एकेश्वर्यै । प्रसवे । अज्ञानध्वान्तसूर्यार्चिषे । दारिद्र्याग्निघनावल्यै । प्रद्युम्नजनन्यै नमः ॥ ६२०

प्राप्यायै नमः । प्रकृष्टायै । प्रणतिप्रियायै । वासुदेवप्रियायै । वास्तुदोषघ्न्यै । वार्धिसंश्रितायै । वत्सलायै । कृत्स्नलावण्यायै । वर्ण्यायै । गण्यायै । स्वतन्त्रिकायै । भक्तायै । भक्तपराधीनायै । भवान्यै । भवसेवितायै । राधापराधसहन्यै । राधिताशेषसज्जनायै । कोमलायै । कोमलमत्यै । कुसुमाहितशेखरायै नमः ॥ ६४०

कुरुविन्दमणिश्रेणीभूषणायै नमः । कौमुदीरुचये । अम्लानमाल्यायै । संमानकारिण्यै । सरयूरुचये । कटाक्षनृत्यत्करुणायै ।

कनकोज्ज्वलभूषणायै । निष्टप्तकनकाभाङ्ग्यै । नीलकुञ्चितमूर्धजायै । विशृङ्खलायै । वियोनिस्थायै । विद्यमानायै । विदांवरायै । शृङ्गारिण्यै । शिरीषाङ्ग्यै । शिशिरायै । शिरसिस्थितायै । सूर्यात्मिकायै । सूरिनम्यायै । सूर्यमण्डलवासिन्यै नमः ।। ६६०

वह्निशैत्यकर्यै नमः । वह्निप्रविष्टायै । वह्निशोभितायै । निर्हेतुरक्षिण्यै । निष्काभरणायै । निष्कदायिन्यै । निर्ममायै । निर्मितजगते । निस्तमस्कायै । निराश्रयायै । निरयार्तिहर्यै । निघ्नायै । निहितायै । निहतासुरायै । राज्याभिषिक्तायै । राज्येश्यै । राज्यदायै । राजिताश्रितायै । राकेन्दुवदनायै । रात्रिचरघ्न्यै नमः ।। ६८०

राष्ट्रवल्लभायै नमः । श्रिताच्युताप्रियायै । श्रोत्र्यै । श्रीदामसखवल्लभायै । रमण्यै । रमणीयाङ्ग्यै । रमणीयगुणाश्रयायै । रतिप्रियायै । रतिकर्यै । रक्षोघ्न्यै । रक्षिताण्डकायै । रसरूपायै । रसात्मैकरसायै । रसपराश्रितायै । रसातलस्थितायै । रासतत्परायै । रथगमिन्यै । अश्वारूढायै । गजारूढायै । शिबिकातलशायिन्यै नमः ।। ७००

चलत्पादायै नमः । चलद्वेण्यै । चतुरङ्गबलानुगायै । चञ्चच्चन्द्रकराकारायै । चतुर्थ्यै । चतुराकृतये । चूर्णीकृताशरायै । चूर्णालिकायै । चूतफलप्रियायै । शिखाशीघ्रायै । शिखाकारायै । शिखाविधृतमल्लिकायै । शिक्षाशिक्षितमूर्खालये । शीतायै । अशीतायै । शताकृतये । वैष्णव्यै । विष्णुसदृश्यै । विष्णुलोकप्रदायै । वृषायै नमः ।। ७२०

वीणागानप्रियायै नमः । वीणायै । वीणाधरमुनिस्तुतायै । वैदिक्यै । वैदिकाचारप्रीतायै । वैदूर्यभूषणायै । सुन्दराङ्ग्यै । सुहृदे । स्फीतायै । साक्षिण्यै । साक्षमलिकायै । क्रियायै । क्रियापरायै । क्रूरायै । क्रूरराक्षसहारिण्यै । तल्पस्थायै । तरणिस्थानायै । तापत्रयनिवारिण्यै । तीर्णप्रतिज्ञायै । तीर्थेश्यै नमः ।। ७४०

तीर्थपादायै नमः । तिथिप्रियायै । चर्यायै । चरणदायै । चीर्णायै । चीराङ्कायै । चत्वरस्थितायै । लतायै । लताङ्ग्यै । लावण्यायै । लघ्व्यै । लक्ष्याशरायै । अलयायै । लीलायै । लीलाहतखलायै । लीनायै । लीढायै । शुभावल्यै । लूतोपमानायै । लूनाघायै नमः ।। ७६०

लोलायै नमः। अलोलविभूतिदायै । अमर्त्यायै । मर्त्यसुलभायै । मानुष्यै । मानव्यै । मनवे । सुगन्धायै । सुहितायै । सूक्ष्मायै । सूक्ष्ममध्यायै । सुतोज्ज्वलायै । मणये । मणिमत्यै । मञ्जुगमनायै । महितायै । मुनये । मितायै । अमितसुखाकारायै । मीलितायै नमः ।। ७८०

मीनलोचनायै नमः । गोमत्यै । गोकुलस्थानायै । गोदायै । गोकुलवासिन्यै । गजेन्द्रगामिन्यै । गम्यायै । माद्र्यै । मायाविन्यै । मधवे । त्रिलोचननुतायै । त्रिष्टुबनुष्टुप्पंक्तिरूपिण्यै । द्विपादे । त्रिपादे । अष्टपद्यै । नवपदे । चतुष्पद्यै । पंक्त्याननोपदेष्ट्र्यै । शारदायै । पंक्तिपावन्यै नमः ।। ८००

शेखरीभूतशीतांशवे नमः । शेषतल्पाधिशायिन्यै । शेमुष्यै । मुषिताशेषपातकायै । मातृकामय्यै । शिववन्द्यायै । शिखरिण्यै । हरिण्यै । करिण्यै । सृण्यै । जगच्चक्षुषे । जगन्मात्रे । जङ्गमाजङ्गमप्रसुवे । सर्वशब्दायै । सर्वमुक्त्यै । सर्वभक्त्यै । समाहितायै । क्षीरप्रियायै । क्षालिताघायै । क्षीरांबुधिसुतायै नमः ।।८२०

अक्षयायै नमः । मायिन्यै । मथनोद्भूतायै । मुग्धायै । दुग्धोपमस्थितायै । वशगायै । वामनयनायै । हंसिन्यै । हंससेवितायै । अनङ्गायै । अनङ्गजनन्यै । सुतुङ्गपददायिन्यै । विश्वायै । विश्वेडितायै । विश्वधात्र्यै । विश्वाधिकार्थदायै । गद्यपद्यस्तुतायै । गन्त्र्यै । गच्छन्त्यै । गरुडासनायै नमः ।। ८४०

पश्यन्त्यै नमः । शृण्वत्यै । स्पर्शकर्त्र्यै । रसनिरूपिण्यै । भृत्यप्रियायै । भृतिकर्यै । भरणीयायै । भयापहायै । प्रकर्षदायै । प्रसिद्धेशायै । प्रमाणाय । प्रमित्यै । प्रमायै । आकाशरूपिण्यै । अध्यस्तायै । मध्यस्थायै । मध्यमायै । मित्यै । तलोदर्यै । तलकर्यै नमः ॥ ८६०

तटिद्रूपायै नमः । तरङ्गिण्यै । अकम्पायै । कंपितरिपवे । जंभारिसुखदायिन्यै । दयाविष्टायै । शिष्टसुहृदे । विष्टरश्रवसःप्रियायै । हृषीकसुखदायै । हृद्यायै । अभीतायै । भीतार्तिहारिण्यै । मात्रे । मनुमुखाराध्यायै । मातङ्ग्यै । मानिताखिलायै । भृगुप्रियायै । भृगुसुतायै । भार्गवेड्यायै । महाबलायै नमः ॥ ८८०

अनुकूलायै नमः । अमलतनवे । लोपहीनायै । लिपिस्तुतायै । अन्नदायै । अन्नस्वरूपायै । अन्नपूर्णायै । अपर्णायै । ऋणापहायै । वृन्दायै । बृन्दावनरत्यै । बन्दीभूतामरीस्तुतायै । तेजस्विन्यै । तुर्यपूज्यायै । तेजस्त्रितयरूपिण्यै । षडास्यजयदायै । षष्ठ्यै । षडूर्मिपरिवर्जितायै । षड्जप्रियायै । सत्वरूपायै नमः ॥ ९००

सव्यमार्गप्रपूजितायै नमः । सनातनतन्वै । सन्नायै । संपन्मूर्त्यै । सरीसृपायै । जिताशायै । जन्मकर्मादिनाशिन्यै । ज्येष्ठरूपिण्यै । जनार्दनहृदावासायै । जनानन्दायै । जयायै । अजन्यै । वासनायै । वासनाहन्त्र्यै । वामायै । वामविलोचनायै । पयस्विन्यै । पूततन्वे । पात्र्यै । परिषदर्चितायै नमः ॥ ९२०

महामोहप्रमथिन्यै नमः । महाहर्षायै । महाधृत्यै । महावीर्यायै । महाचर्यायै । महाप्रीतायै । महागुणायै । महाशक्त्यै । महासक्त्यै । महाज्ञानायै । महारत्यै । महापूज्यायै । महेज्यायै । महालाभप्रदायै । मह्यै । महासंपदे । महाकंपायै । महालक्ष्म्यायै । महाशयायै । महारूपायै नमः ॥ ९४०

महाधूपायै नमः । महामत्यै । महामहायै । महारोगहर्यै । मुक्तायै । महालोभहर्यै । मृडायै । मेदास्विन्यै । मातृपूज्यायै । मेयायै । मायै । मातृरूपिण्यै । नित्यमुक्तायै । नित्यबुद्धायै । नित्यतृप्तायै । निधिप्रदायै । नीतिज्ञायै । नीतिमद्वन्द्यायै । नीतायै । प्रीताच्युतप्रियायै ।। ९६०

मित्रप्रियायै नमः । मित्रविन्दायै । मित्रमण्डलशोभिन्यै । निरङ्कुशायै । निराधारायै । निरास्थानायै । निरामयायै । निर्लेपायै । निस्पृहायै । नीलकबर्यै । नीरजासनायै । निराबाधायै । निराकर्त्र्यै । निस्तुलायै । निष्कभूषितायै । निरञ्जनायै । निर्मथनायै । निष्क्रोधायै । निष्परिग्रहायै । निर्लोभायै नमः ।। ९८०

निर्मलायै नमः । नित्यतेजसे । नित्यकृपान्वितायै । धनाढ्यायै । धर्मनिलयायै । धनदायै । धनदार्चितायै । धर्मकर्त्र्यै । धर्मगोप्त्र्यै । धर्मिण्यै । धर्मदेवतायै । धारायै । धरित्र्यै । धरण्यै । धुतपापायै । धुताशरायै । स्त्रीदेवतायै । अक्रोधनाथायै । अमोहायै । अलोभायै नमः ।। १०००

अमितार्थदायै नमः । कालरूपायै । अकालवशायै । कालज्ञायै । कालपालिन्यै । ज्ञानिध्येयायै । ज्ञानिगम्यायै । ज्ञानदानपरायणायै नमः ।। १००८

# श्रीलक्ष्म्यष्टोत्तरशतनामावलिः

(एषा नामावलिः ''महालक्ष्म्यै नम'' इत्यारब्धायाः सहस्रनामावल्या अङ्गभूता ।)

ब्रह्मज्ञायै नमः । ब्रह्मसुखदायै । ब्रह्मण्यायै । ब्रह्मरूपिण्यै । सुमत्यै । सुभगायै । सुन्दायै । प्रयत्यै । नियत्यै । यत्यै । सर्वप्राणस्वरूपायै । सर्वेन्द्रियसुखप्रदायै । संविन्मय्यै । सदाचारायै । सदातुष्टायै । सदानतायै । कौमुद्यै । कुमुदानन्दायै । कै नमः । कुत्सिततमोहर्यै नमः ।। २०

हृदयार्तिहर्यै नमः । हारशोभिन्यै । हानिवारिण्यै । संभाज्यायै । संविभाज्यायै । आज्ञायै । ज्यायस्यै । जनिहारिण्यै । महाक्रोधायै । महातर्षायै । महर्षिजनसेवितायै । कैटभारिप्रियायै । कीर्त्यै । कीर्तितायै । कैतवोज्झितायै । कौमुद्यै । शीतलमनसे । कौसल्यासुतभामिन्यै । कासारनाभ्यै । कस्यै नमः ॥ ४०

तस्यै नमः । यस्यै । एतस्यै । इयत्ताविवर्जितायै । अन्तिकस्थायै । अतिदूरस्थायै । हृदयस्थायै । अम्बुजस्थितायै । मुनिचित्तस्थितायै । मौनिगम्यायै । मान्धातृपूजितायै । मतिस्थिरीकर्तृकार्यनित्यनिर्वहणोत्सुकायै । महीस्थितायै । मध्यस्थायै । द्युस्थितायै । अधःस्थितायै । ऊर्ध्वगायै । भूत्यै । विभूत्यै । सुरभ्यै नमः ॥ ६०

सुरसिद्धार्तिहारिण्यै नमः । अतिभोगायै । अतिदानायै । अतिरूपायै । अतिकरुणायै । अतिभासे । विज्वरायै । वियदाभोगायै । वितन्द्रायै । विरहासहायै । शूर्पकारातिजनन्यै । शून्यदोषायै । शुचिप्रियायै । निःस्पृहायै । सस्पृहायै । नीलासपत्न्यै । निधिदायिन्यै । कुंभस्तन्यै । कुन्दरदायै । कुंकुमालेपितायै नमः ॥ ८०

कुजायै नमः । शास्त्रज्ञायै । शास्त्रजनन्यै । शास्त्रज्ञेयायै । शरीरगायै । सत्यभासे । सत्यसंकल्पायै । सत्यकामायै । सरोजिन्यै । चन्द्रप्रियायै । चन्द्रगतायै । चन्द्रायै । चन्द्रसहोदर्यै । औदर्यै । औपयिक्यै । प्रीतायै । गीतायै । ओतायै । गिरिस्थितायै । अनन्वितायै नमः ॥ १००

अमूलायै नमः । आर्तिध्वान्तपुञ्जरविप्रभायै । मङ्गलायै । मङ्गलपरायै । मृग्यायै । मङ्गलदेवतायै । कोमलायै । महालक्ष्म्यै नमः ॥ १०८

---

कमलासन कमलेक्षण कमलारिकिरीट कमलभृद्वाहैः ।
नुतपद कमला कमला करधृत कमला करोतु कमलम् ॥

# श्री लक्ष्मीसहस्रनामस्तोत्रम् - ३

अस्य श्रीमहालक्ष्मीसहस्रनामस्तोत्रमहामन्त्रस्य श्रीमहाविष्णु-र्भगवान् ऋषिः, अनुष्टुप् छन्दः, श्रीमहालक्ष्मीः देवता। श्रीं बीजम्, ह्रीं शक्तिः, ह्रैं कीलकम्, श्रीमहालक्ष्मीप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ध्यानम्

पद्मानने पद्मकरे सर्वलोकैकपूजिते।
सान्निध्यं कुरु मे चित्ते विष्णुवक्षःस्थलस्थिते ॥ १।

भगवद्दक्षिणे पार्श्वे श्रियं देवीमवस्थिताम्।
ईश्वरीं सर्वभूतानां जननीं सर्वदेहिनाम् ॥ २

चारुस्मितां चारुदतीं चारुनेत्राननभ्रुवम्।
सुकपोलां सुकर्णाग्र-न्यस्त-मौक्तिक कुण्डलाम् ॥ ३

सुकेशां चारुबिंबोष्ठीं रत्नतुंगघनस्तनीम्।
अलकाग्रैरलिनिभैः अलंकृतमुखांबुजाम् ॥ ४

लसत्कनकसंकाशां पीनसुन्दरकन्धराम्।
निष्ककण्ठीं स्तनालंबिमुक्ताहारविराजिताम् ॥ ५

नीलकुन्तल मध्यस्थ माणिक्य मकुटोज्ज्वलाम्।
शुक्लमाल्यांबरधरां तप्तहाटकवर्णिनीम् ॥ ६

अनन्यसुलभैस्तैस्तैर्गुणैः सौम्यमुखैर्निजैः।
अनुरूपानवद्यांगीं हरेर्नित्यानपायिनीम् ॥ ७

श्रीर्वासुदेव महिषी पुंप्रधानेश्वरेश्वरी।
अचिन्त्यानन्तविभवा भावाभावविभाविनी ॥ १

अहंभावात्मिका पद्मा शान्तानन्तचिदात्मिका।
ब्रह्मभावं गता त्यक्तभेदा सर्वजगन्मयी ॥ २

षाड्गुण्यपूर्णा त्रय्यन्तरूपाऽऽत्मानपगामिनी।
एकयोग्याऽशून्यभावाकृतिस्तेजःप्रभाविनी ॥ ३

भाव्यभावकभावाऽऽत्मभाव्या कामधुगात्मभूः।
भावाभावमयी दिव्या भेद्यभेदकभावनी ॥ ४

जगत्कुटुम्बिन्यखिलाधारा कामविजृंभिणी।
पञ्चकृत्यकरी पञ्चशक्तिमय्यात्मवल्लभा ॥ ५

भावाभावानुगा सर्वसम्मताऽऽत्मोपगूहिनी।
अपृथक्चारिणी सौम्या सौम्यरूपव्यवस्थिता ॥ ६

आद्यन्तरहिता देवी भवभाव्यस्वरूपिणी।
महाविभूतिः समतां गता ज्योतिर्गणेश्वरी ॥ ७

सर्वकार्यकरी धर्मस्वभावात्माग्रतः स्थिता।
आज्ञासमविभक्ताङ्गी ज्ञानानन्दक्रियामयी ॥ ८

स्वातन्त्र्यरूपा देवोरःस्थिता तद्धर्मधर्मिणी।
सर्वभूतेश्वरी सर्वभूतमाताऽऽत्ममोहिनी ॥ ९

सर्वाङ्गसुन्दरी सर्वव्यापिनी प्राप्तयोगिनी।
विमुक्तिदायिनी भक्तिगम्या संसारतारिणी ॥ १०

धर्मार्थसाधिनी व्योमनिलया व्योमविग्रहा।
पञ्चव्योमपदी रक्षव्यावृतिः प्राप्यपूरिणी ॥ ११

आनन्दरूपा सर्वाप्तिशालिनी शक्तिनायिका।
हिरण्यवर्णा हैरण्यप्राकारा हेममालिनी ॥ १२

प्रत्नरत्ना भद्रपीठा वेशिनी रजतस्रजा।
स्वाज्ञाकार्यमरा नित्या सुरभिर्व्योमचारिणी ॥ १३

योगक्षेमवहा सर्वसुलभेच्छाक्रियात्मिका।
करुणाग्रानतमुखी कमलाक्षी शशिप्रभा॥ १४

कल्याणदायिनी कल्या कलिकल्मषनाशिनी।
प्रज्ञापरिमिताऽऽत्मानुरूपा सत्योपयाचिता॥ १५

मनोज्ञेया ज्ञानगम्या नित्यमुक्तात्मसेविनी।
कर्तृशक्तिः सुगहना भोक्तृशक्तिर्गुणप्रिया॥ १६

ज्ञानशक्तिरनौपम्या निर्विकल्पा निरामया।
अकलङ्काऽमृताधारा महाशक्तिर्विकासिनी॥ १७

महामाया महानन्दा निःसङ्कल्पा निरामया।
एकस्वरूपा त्रिविधा संख्यातीता निरञ्जना॥ १८

आत्मसत्ता नित्यशुचिः परशक्तिः सुखोचिता।
नित्यशान्ता निस्तरङ्गा निर्भिन्ना सर्वभेदिनी॥ १९

असङ्कीर्णाऽविधेयात्मा निषेव्या सर्वपालिनी।
निष्कामना सर्वरसाऽभेद्या सर्वार्थ साधिनी॥ २०

अनिर्देश्याऽपरिमिता निर्विकारा त्रिलक्षणा।
भयङ्करी सिद्धिरूपाऽव्यक्ता सदसदाकृतिः॥ २१

अप्रतर्क्याऽप्रतिहता नियन्त्री यन्त्रवाहिनी।
हार्दमूर्तिर्महामूर्तिः अव्यक्ता विश्वगोपिनी॥ २२

वर्धमानाऽनवद्याङ्गी निरवद्या त्रिवर्गदा।
अप्रमेयाऽक्रिया सूक्ष्मा परनिर्वाणदायिनी॥ २३

अविगीता तन्त्रसिद्धा योगसिद्धाऽमरेश्वरी।
विश्वसूतिस्तर्पयन्ती नित्यतृप्ता महौषधिः॥ २४

शब्दाह्वया शब्दसहा कृतज्ञा कृतलक्षणा।

त्रिवर्तिनी त्रिलोकस्था भूर्भुवःस्वरयोनिजा ॥ २५

अग्राह्याऽग्राहिकाऽनन्ताह्वया सर्वातिशायिनी ।
व्योमपद्मा कृतधुरा पूर्णकामा महेश्वरी ॥ २६

सुवाच्या वाचिका सत्यकथना सर्वपालिनी ।
लक्ष्यमाणा लक्षयन्ती जगज्ज्येष्ठा शुभावहा ॥ २७

जगत्प्रतिष्ठा भुवनभर्त्री गूढप्रभावती ।
क्रियायोगात्मिका मूर्तिः हृदब्जस्था महाक्रमा ॥ २८

परमद्यौः प्रथमजा परमाप्ता जगन्निधिः ।
आत्मानपायिनी तुल्यस्वरूपा समलक्षणा ॥ २९

तुल्यवृत्ता समवया मोदमाना खगध्वजा ।
प्रियचेष्टा तुल्यशीला वरदा कामरूपिणी ॥ ३०

समग्रलक्षणाऽनन्ता तुल्यभूतिः सनातनी ।
महर्द्धिः सत्यसङ्कल्पा बह्वृचा परमेश्वरी ॥ ३१

जगन्माता सूत्रवती भूतधात्री यशस्विनी ।
महाभिलाषा सावित्री प्रधाना सर्वभासिनी ॥ ३२

नानावपुर्बहुभिदा सर्वज्ञा पुण्यकीर्तना ।
भूताश्रया हृषीकेश्वर्यशोका वाजिवाहिका ॥ ३३

ब्रह्मात्मिका पुण्यजनिः सत्यकामा समाधिभूः ।
हिरण्यगर्भा गंभीरा गोधूलिः कमलासना ॥ ३४

जितक्रोधा कुमुदिनी वैजयन्ती मनोजवा ।
धनलक्ष्मीः स्वस्तिकरी राज्यलक्ष्मीर्महासती ॥ ३५

जयलक्ष्मीर्महागोष्ठी मघोनी माधवप्रिया ।
पद्मगर्भा वेदवती विविक्ता परमेष्ठिनी ॥ ३६

सुवर्णबिन्दुर्महती महायोगिप्रियाऽनघा ।
पद्मेस्थिता वेदमयी कुमुदा जयवाहिनी ॥ ३७

संहतिर्निर्मिता ज्योतिः नियतिर्विविधोत्सवा ।
रुद्रवन्द्या सिन्धुमती वेदमाता मधुव्रता ॥ ३८

विश्वंभरा हैमवती समुद्रेच्छाविहारिणी ।
अनुकूला यज्ञवती शतकोटिः सुपेशला ॥ ३९

धर्मोदया धर्मसेव्या सुकुमारी सभावती ।
भीमा ब्रह्मस्तुता मध्यप्रभा देवर्षिवन्दिता ॥ ४०

देवभोग्या महाभागा प्रतिज्ञा पूर्णशेवधिः ।
सुवर्णरुचिरप्रख्या भोगिनी भोगदायिनी ॥ ४१

वसुप्रदोत्तमवधूः गायत्री कमलोद्भवा ।
विद्वत्प्रिया पद्मचिह्ना वरिष्ठा कमलेक्षणा ॥ ४२

पद्मप्रिया सुप्रसन्ना प्रमोदा प्रियपार्श्वगा ।
विश्वभूषा कान्तिमती कृष्णा वीणारवोत्सुका ॥ ४३

रोचिष्करी स्वप्रकाशा शोभमानविहङ्गमा ।
देवाङ्कस्था परिणतिः कामवत्सा महामतिः ॥ ४४

इल्वलोत्पलनाभाऽधिशमनी वरवर्णिनी ।
स्वनिष्ठा पद्मनिलया सद्गतिः पद्मगन्धिनी ॥ ४५

पद्मवर्णा कामयोनिः चण्डिका चारुकोपना ।
रतिस्नुषा पद्मधरा पूज्या त्रैलोक्यमोहिनी ॥ ४६

नित्यकन्या बिन्दुमालिन्यक्षया सर्वमातृका ।
गन्धात्मिका सुरसिका दीप्तमूर्तिः सुमध्यमा ॥ ४७

पृथुश्रोणी सौम्यमुखी सुभगा विष्टरश्रुतिः ।
स्मिताननना चारुदती निम्ननाभिर्महास्तनी ॥ ४८

स्निग्धवेणी भगवती सुकान्ता वामलोचना ।
पल्लवाङ्घ्रिः पद्ममनाः पद्मबोधा महाप्सराः ॥ ४९

विद्वत्प्रिया चारुहासा शुभदृष्टिः ककुद्मिनी ।
कम्बुग्रीवा सुजघना रक्तपाणिर्मनोरमा ॥ ५०

पद्मिनी मन्दगमना चतुर्दंष्ट्रा चतुर्भुजा ।
शुभरेखा विलासभ्रूः शुकवाणी कलावती ॥ ५१

ऋजुनासा कलरवा वरारोहा तलोदरी ।
सन्ध्या बिंबाधरा पूर्वभाषिणी स्त्रीसमाह्वया ॥ ५२

इक्षुचापा सुमशरा दिव्यभूषा मनोहरा ।
वासवी पाण्डरच्छत्रा करभोरुस्तिलोत्तमा ॥ ५३

सीमन्तिनी प्राणशक्तिः विभीषिण्यसुधारिणी ।
भद्रा जयावहा चन्द्रवदना कुटिलालका ॥ ५४

चित्रांबरा चित्रगन्धा रत्नमौलिसमुज्ज्वला ।
दिव्यायुधा दिव्यमाल्या विशाखा चित्रवाहना ॥ ५५

अंबिका सिन्धुतनया सुश्रोणिः सुमहासना ।
सामप्रिया नम्रिताङ्गी सर्वसेव्या वराङ्गना ॥ ५६

गन्धद्वारा दुराधर्षा नित्यपुष्टा करीषिणी ।
देवजुष्टाऽऽदित्यवर्णा दिव्यगन्धा सुहृत्तमा ॥ ५७

अनन्तरूपाऽनन्तस्था सर्वदानन्तसङ्गमा ।
यज्ञाशिनी महावृष्टिः सर्वपूज्या वषट्क्रिया ॥ ५८

योगप्रिया वियन्नाभिः अनन्तश्रीरतीन्द्रिया ।
योगिसेव्या सत्यरता योगमाया पुरातनी ॥ ५९

सर्वेश्वरी सुतरणिः शरण्या धर्मदेवता ।
सुतरा संवृतज्योतिः योगिनी योगसिद्धिदा ॥ ६०

सृष्टिशक्तिः द्योतमाना भूता मङ्गलदेवता ।
संहारशक्तिः प्रबला निरुपाधिः परावरा ॥ ६१

उत्तारिणी तारयन्ती शाश्वती समितिञ्जया ।
महाश्रीरजहत्कीर्तिः योगश्रीः सिद्धिसाधिनी ॥ ६२

पुण्यश्रीः पुण्यनिलया ब्रह्मश्रीर्ब्राह्मणप्रिया ।
राजश्री राजकलिता फलश्रीः स्वर्गदायिनी ॥ ६३

देवश्रीरद्भुतकथा वेदश्रीः श्रुतिमार्गिणी ।
तमोपहाऽव्ययनिधिः लक्षणा हृदयंगमा ॥ ६४

मृतसञ्जीविनी शुभ्रा चन्द्रिका सर्वतोमुखी ।
सर्वोत्तमा मित्रविन्दा मैथिली प्रियदर्शना ॥ ६५

सत्यभामा वेदवेद्या सीता प्रणतपोषिणी ।
मूलप्रकृतिरीशाना शिवदा दीप्रदीपिनी ॥६६

अभिप्रिया स्वैरवृत्तिः रुक्मिणी सर्वसाक्षिणी ।
गान्धारिणी परगतिः तत्वगर्भा भवाभवा ॥ ६७

अन्तर्वृत्तिर्महारुद्रा विष्णुदुर्गा महाबला ।
मदयन्ती लोकधारिण्यदृश्या सर्वनिष्कृतिः ॥ ६८

देवसेनाऽऽत्मबलदा वसुधा मुख्यमातृका ।
क्षीरधारा घृतमयी जुह्वती यज्ञदक्षिणा ॥ ६९

योगनिद्रा योगरता ब्रह्मचर्या दुरत्यया।
सिंहपिञ्छा महादुर्गा जयन्ती खड्गधारिणी ॥ ७०

सर्वार्तिनाशिनी हृष्टा सर्वेच्छापरिपूरिका।
आर्या यशोदा वसुदा धर्मकामार्थमोक्षदा ॥ ७१

त्रिशूलिनी पद्मचिह्ना महाकालीन्दुमालिनी।
एकवीरा भद्रकाली स्वानन्दिन्युल्लसद्गदा ॥ ७२

नारायणी जगत्पूरिण्युर्वरा द्रुहिणप्रसूः।
यज्ञकामा लेलिहाना तीर्थकर्युग्रविक्रमा ॥ ७३

गरुत्मदुदयाऽत्युग्रा वाराही मातृभाषिणी।
अश्वक्रान्ता रथक्रान्ता विष्णुक्रान्तोरुचारिणी ॥ ७४

वैरोचनी नारसिंही जीमूता शुभदेक्षणा।
दीक्षाविदा विश्वशक्तिः बीजशक्तिः सुदर्शनी ॥ ७५

प्रतीता जगती वन्यधारिणी कलिनाशिनी।
अयोध्याऽच्छिन्नसन्ताना महारत्ना सुखावहा ॥ ७६

राजवत्यप्रतिभया विनयित्री महाशना।
अमृतस्यन्दिनी सीमा यज्ञगर्भा समेक्षणा ॥ ७७

आकूतिर्ऋग्यजुस्सामघोषाऽऽरामवनोत्सुका।
सोमपा माधवी नित्यकल्याणी कमलार्चिता ॥ ७८

योगरूढा स्वार्थजुष्टा वह्निवर्णा जितासुरा।
यज्ञविद्या गुह्यविद्याऽध्यात्मविद्या कृतागमा ॥ ७९

आप्यायनी कलातीता सुमित्रा परभक्तिदा।
कांक्षमाणा महामाया कोलकामाऽमरावती ॥ ८०

सुवीर्या दुःस्वप्नहरा देवकी वसुदेवता ।
सौदामिनी मेघरथा दैत्यदानवमर्दिनी ॥ ८१

श्रेयस्करी चित्रलीलैकाकिनी रत्नपादुका ।
मनस्यमाना तुलसी रोगनाशिन्युरुप्रदा ॥ ८२

तेजस्विनी सुखज्वाला मन्दरेखाऽमृताशिनी ।
ब्रह्मिष्ठा वह्निशमनी जुषमाणा गुणात्यया ॥ ८३

कादम्बरी ब्रह्मरता विधात्र्युज्ज्वलहस्तिका ।
अक्षोभ्या सर्वतोभद्रा वयस्या स्वस्तिदक्षिणा ॥ ८४

सहस्रास्या ज्ञानमाता वैश्वानर्यक्षवर्तिनी ।
प्रत्यग्वरा वारणवत्यनसूया दुरासदा ॥ ८५

अरुन्धती कुण्डलिनी भव्या दुर्गतिनाशिनी ।
मृत्युञ्जया त्रासहरी निर्भया शत्रुसूदिनी ॥ ८६

एकाक्षरा सत्पुरन्ध्री सुरपक्षा सुरातुला ।
सकृद्विभाता सर्वार्तिसमुद्रपरिशोषिणी ॥ ८७

बिल्वप्रियाऽवनी चक्रहृदया कम्बुतीर्थगा ।
सर्वमन्त्रात्मिका विद्युत् सुवर्णा सर्वरञ्जिनी ॥ ८८

ध्वजछत्राश्रया भूतिः वैष्णवी सद्गुणोज्ज्वला ।
सुषेणा लोकविदिता कामसूर्जगदादिभूः ॥ ८९

वेदान्तयोनिर्जिज्ञासा मनीषा समदर्शिनी ।
सहस्रशक्तिरावृत्तिः सुस्थिरा श्रेयसां निधिः ॥ ९०

रोहिणी रेवती चन्द्रसोदरी भद्रमोहिनी ।
सूर्या कन्याप्रिया विश्वभाविनी सुविभाविनी ॥ ९१

सुप्रदृश्या कामचारिण्यप्रमत्ता ललन्तिका।
मोक्षलक्ष्मीर्जगद्योनिः व्योमलक्ष्मीः सुदुर्लभा ॥ ९२

भास्करी पुण्यगेहस्था मनोज्ञा विभवप्रदा।
लोकस्वामिन्यच्युतार्था पुष्कला जगदाकृतिः ॥ ९३

विचित्रहारिणी कान्ता वाहिनी भूतवासिनी।
प्राणिनी प्राणदा विश्वा विश्वब्रह्माण्डवासिनी ॥ ९४

संपूर्णा परमोत्साहा श्रीमती श्रीपतिः श्रुतिः।
श्रयन्ती श्रीयमाणा क्ष्मा विश्वरूपा प्रसादिनी ॥ ९५

हर्षिणी प्रथमा शर्वा विशाला कामवर्षिणी।
सुप्रतीका पृश्निमती निवृत्तिर्विविधा परा ॥ ९६

सुयज्ञा मधुरा श्रीदा देवरातिर्महामनाः।
स्थूला सर्वाकृतिः स्थेमा निम्नगर्भा तमोनुदा ॥ ९७

तुष्टिर्वागीश्वरी पुष्टिः सर्वादिः सर्वशोषिणी।
शक्त्यात्मिका शब्दशक्तिः विशिष्टा वायुमत्युमा ॥ ९८

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिर्नयात्मिका।
व्याली संकर्षिणी द्योता महादेव्यपराजिता ॥ ९९

कपिला पिंगला स्वस्था बलाकी घोषनन्दिनी।
अजिता कर्षिणी नीतिः गरुडा गरुडासना ॥ १००

ह्लादिन्यनुग्रहा नित्या ब्रह्मविद्या हिरण्मयी।
मही शुद्धविधा पृथ्वी सन्तानिन्यंशुमालिनी ॥ १०१

यज्ञाश्रया ख्यातिपरा स्तव्या वृष्टिस्त्रिकालगा।
संबोधिनी शब्दपूर्णा विजयांऽशुमती कला ॥ १०२

शिवा स्तुतिप्रिया ख्यातिः जीवयन्ती पुनर्वसुः ।
दीक्षा भक्तार्तिहा रक्षा परीक्षा यज्ञसंभवा ॥ १०३

आर्द्रा पुष्करिणी पुण्या गण्या दारिद्र्यभञ्जिनी ।
धन्या मान्या पद्मनेमिः भार्गवी वंशवर्धनी ॥ १०४

तीक्ष्णप्रवृत्तिः सत्कीर्तिः निषेव्याऽघविनाशिनी ।
संज्ञा निःसंशया पूर्वा वनमाला वसुन्धरा ॥ १०५

पृथुर्महोत्कटाऽहल्या मण्डलाऽऽश्रितमानदा ।
सर्वा नित्योदितोदारा जृंभमाणा महोदया ॥ १०६

चन्द्रकान्तोदिता चन्द्रा चतुरश्रा मनोजवा ।
बाला कुमारी युवतिः करुणा भक्तवत्सला ॥ १०७

मेदिन्युपनिषन्मिश्रा सुमवीरुर्धनेश्वरी ।
दुर्मर्षणी सुचरिता बोधा शोभा सुवर्चला ॥ १०८

यमुनाऽक्षौहिणी गङ्गा मन्दाकिन्यमरालया ।
गोदा गोदावरी चन्द्रभागा कावेर्युदन्वती ॥ १०९

सिनीवाली कुहू राका वारणा सिन्धुमत्यमा ।
वृद्धिः स्थितिर्ध्रुवा बुद्धिः त्रिगुणा गुणगह्वरा ॥ ११०

पूर्तिर्मायात्मिका स्फूर्तिः व्याख्या सूत्रा प्रजावती ।
विभूतिर्निष्कला रंभा रक्षा सुविमला क्षमा ॥ १११

प्राप्तिर्वासन्तिकालेखा भूरिबीजा महागदा ।
अमोघा शान्तिदा स्तुत्या ज्ञानदोत्कर्षिणी शिखा ॥ ११२

प्रकृतिर्गोमती लीला कमला कामधुग्विधिः ।
प्रज्ञा रामा परा सन्ध्या सुभद्रा सर्वमंगला ॥ ११३

नन्दा भद्रा जया रिक्ता तिथिपूर्णाऽमृतंभरा।
काष्ठा कामेश्वरी निष्ठा काम्या रम्या वरा स्मृतिः ॥ ११४

शंखिनी चक्रिणी श्यामा समा गोत्रा रमा दितिः।
शान्तिर्दान्तिः स्तुतिः सिद्धिः विरजाऽत्युज्ज्वलाऽव्यया ॥ ११५

वाणी गौरीन्दिरा लक्ष्मीः मेधा श्रद्धा सरस्वती।
स्वधा स्वाहा रतिरुषा वसुविद्या धृतिः सहा ॥ ११६

शिष्टेष्टा च शुचिर्धात्री सुधा रक्षोघ्नचजाऽमृता।
रत्नावली भारतीडा धीरधीः केवलाऽत्मदा ॥ ११७

या सा शुद्धिः सस्मिता का नीला राधाऽमृतोद्भवा।
परधुर्यास्पदा ह्रीर्भूः कामिनी शोकनाशिनी ॥ ११८

मायाकृती रसघना नर्मदा गोकुलाश्रया।
अर्कप्रभा रथेभाश्वनिलयेन्दुप्रभाऽद्भुता ॥ ११९

श्रीः कृशानुप्रभा वज्रलंभना सर्वभूमिदा।
भोगप्रिया भोगवती भोगीन्द्रशयनासना ॥ १२०

अश्वपूर्वा रथमध्या हस्तिनादप्रबोधिनी।
सर्वलक्षणलक्षण्या सर्वलोकप्रियङ्करी ॥ १२१

सर्वोत्कृष्टा सर्वमयी भवभङ्गापहारिणी।
वेदान्तस्था ब्रह्मनीतिः ज्योतिष्मत्यमृतावहा ॥ १२२

भूताश्रया निराधारा संहिता सुगुणोत्तरा।
सर्वातिशायिनी प्रीतिः सर्वभूतस्थिता द्विजा।

सर्वमंगलमांगल्या दृष्टादृष्टफलप्रदा ॥ १२३

* * *

# श्री लक्ष्मीसहस्रनामावलिः

ओं श्रियै नमः। वासुदेव महिष्यै। पुंप्रधानेश्वरेश्वर्यै। अचिन्त्यानन्त विभवायै। भावाभाव विभाविन्यै। अहंभावात्मिकायै। पद्मायै। शान्तानन्त चिदात्मिकायै। ब्रह्मभावं गतायै। त्यक्तभेदायै। सर्वजगन्मय्यै। षाड्गुण्य पूर्णायै। त्रय्यन्तरूपायै। आत्मानपगामिन्यै। एकयोग्यायै। अशून्य-भावाकृत्यै। तेजःप्रभाविन्यै। भाव्यभावकभावायै। आत्मभाव्यायै। कामदुहे नमः ॥ २०

ओं आत्मभुवे नमः। भावाभावमय्यै। दिव्यायै। भेद्यभेदक-भावन्यै। जगत्कुटुम्बिन्यै। अखिलाधारायै। कामविजृंभिण्यै। पञ्चकृत्यकर्यै। पञ्चशक्तिमय्यै। आत्मवल्लभायै। भावाभावानुगायै। सर्व-सम्मतायै। आत्मोपगूहिन्यै। अपृथक्चारिण्यै। सौम्यायै। सौम्यरूप-व्यवस्थितायै। आद्यन्तरहितायै। देव्यै। भवभाव्य-स्वरूपिण्यै। महाविभूत्यै नमः ॥ ४०

ओं समतां गतायै नमः। ज्योतिर्गणेश्वर्यै। सर्वकार्यकर्यै। धर्मस्वभावात्मने। अग्रतः स्थितायै। आज्ञासम-विभक्ताङ्ग्यै। ज्ञानानन्द-क्रियामय्यै। स्वातन्त्र्य-रूपायै। देवोरःस्थितायै। तद्धर्म-धर्मिण्यै। सर्वभूतेश्वर्यै। सर्वभूतमात्रे। आत्म-मोहिन्यै। सर्वाङ्ग-सुन्दर्यै। सर्व-व्यापिन्यै। प्राप्तयोगिन्यै। विमुक्ति-दायिन्यै। भक्ति-गम्यायै। संसार-तारिण्यै। धर्मार्थ-साधिन्यै नमः ॥ ६०

ओं व्योम-निलयायै नमः। व्योम-विग्रहायै। पञ्चव्योमपद्यै। रक्षव्यावृत्यै। प्राप्यपूरिण्यै। आनन्द-रूपायै। सर्वाप्ति-शालिन्यै। शक्ति-नायिकायै। हिरण्य-वर्णायै। हैरण्य-प्राकारायै। हैममालिन्यै। प्रत्नरत्नायै। भद्रपीठायै। वेशिन्यै। रजत-स्रजायै। स्वाज्ञाकार्यमरायै। नित्यायै। सुरभ्यै। व्योम-चारिण्यै। योगक्षेम-वहायै नमः ॥ ८०

ओं सर्वसुलभायै नमः। इच्छाक्रियात्मिकायै। करुणाग्रानतमुख्यै । कमलाक्ष्यै। शशिप्रभायै। कल्याण-दायिन्यै। कल्यायै। कलिकल्मष-नाशिन्यै। प्रज्ञापरिमितायै। आत्मानुरूपायै। सत्योप-याचितायै। मनोज्ञेयायै। ज्ञानगम्यायै। नित्यमुक्तात्म-सेविन्यै। कर्तृशक्त्यै। सुगहनायै। भोक्तृ-शक्त्यै। गुणप्रियायै। ज्ञानशक्त्यै। अनौपम्यायै नमः ॥ १००

ओं निर्विकल्पायै नमः। निरामयायै। अकलङ्कायै। अमृताधारायै। महाशक्त्यै। विकासिन्यै। महामायायै। महानन्दायै। निःसङ्कल्पायै। निरामयायै। एकस्वरूपायै। त्रिविधायै। संख्यातीतायै। निरञ्जनायै। आत्मसत्तायै। नित्य-शुचये। परशक्त्यै। सुखोचितायै। नित्य-शान्तायै। निस्तरङ्गायै नमः ॥ १२०

ओं निर्भिन्नायै नमः। सर्वभेदिन्यै। असङ्कीर्णायै। अविधेयात्मने। निषेव्यायै। सर्वपालिन्यै। निष्कामनायै। सर्वरसायै। अभेद्यायै। सर्वार्थ-साधिन्यै। अनिर्देश्यायै। अपरिमितायै। निर्विकारायै। त्रिलक्षणायै। भयङ्कर्यै। सिद्धिरूपायै। अव्यक्तायै। सदसदाकृत्यै। अप्रतर्क्यायै। अप्रतिहतायै नमः ॥ १४०

ओं नियन्त्र्यै नमः। यन्त्र-वाहिन्यै। हार्दमूर्त्यै। महामूर्त्यै। अव्यक्तायै। विश्व-गोपिन्यै। वर्धमानायै। अनवद्याङ्ग्यै। निरवद्यायै। त्रिवर्गदायै। अप्रमेयायै। अक्रियायै। सूक्ष्मायै। परनिर्वाण-दायिन्यै। अविगीतायै। तन्त्र-सिद्धायै। योगसिद्धायै। अमरेश्वर्यै। विश्वसूत्यै। तर्पयन्त्यै नमः ॥ १६०

ओं नित्यतृप्तायै नमः। महौषध्यै। शब्दाह्वयायै। शब्दसहायै। कृतज्ञायै। कृतलक्षणायै। त्रिवर्तिन्यै। त्रिलोकस्थायै। भूर्भुवःस्वरयोनिजायै। अग्राह्यायै। अग्राहिकायै। अनन्ताह्वयायै। सर्वातिशायिन्यै। व्योमपद्मायै। कृतधुरायै। पूर्णकामायै। महेश्वर्यै। सुवाच्यायै। वाचिकायै। सत्य-कथनायै नमः ॥ १८०

ओं सर्वपालिन्यै नमः । लक्ष्यमाणायै । लक्षयन्त्यै । जगज्ज्येष्ठायै । शुभावहायै । जगत्प्रतिष्ठायै । भुवन-भर्त्र्यै । गूढप्रभावत्यै । क्रियायोगात्मिकायै । मूर्त्यै । हृदब्जस्थायै । महाक्रमायै । परमदिवे । प्रथमजायै। परमाप्तायै। जगन्निधये। आत्मानपायिन्यै। तुल्य-स्वरूपायै । सम-लक्षणायै। तुल्य-वृत्तायै नमः ।। २००

ओं सम-वयसे नमः । मोदमानायै । खगध्वजायै । प्रिय-चेष्टायै । तुल्य-शीलायै । वरदायै । कामरूपिण्यै । समग्र-लक्षणायै । अनन्तायै । तुल्य-भूत्यै। सनातन्यै। महर्द्ध्यै। सत्य-सङ्कल्पायै। बह्वृचायै। परमेश्वर्यै । जगन्मात्रे । सूत्रवत्यै । भूतधात्र्यै । यशस्विन्यै । महाभिलाषायै नमः ।। २२०

ओं सावित्र्यै नमः । प्रधानायै । सर्वभासिन्यै । नानावपुषे । बहुभिदायै । सर्वज्ञायै । पुण्य-कीर्तनायै । भूताश्रयायै । हृषीकेश्वर्यै । अशोकायै। वाजि-वाहिकायै। ब्रह्मात्मिकायै। पुण्यजन्यै। सत्यकामायै । समाधिभुवे । हिरण्यगर्भायै । गंभीरायै । गोधूल्यै । कमलासनायै । जितक्रोधायै नमः ।। २४०

ओं कुमुदिन्यै नमः । वैजयन्त्यै । मनोजवायै । धनलक्ष्म्यै । स्वस्तिकर्यै । राज्यलक्ष्म्यै। महासत्यै। जयलक्ष्म्यै। महागोष्ठ्यै। मघोन्यै । माधव-प्रियायै। पद्मगर्भायै। वेदवत्यै। विविक्तायै। परमेष्ठिन्यै। सुवर्ण-बिन्दवे । महत्यै । महायोगि-प्रियायै । अनघायै । पद्मेस्थितायै नमः ।। २६०

ओं वेदमय्यै नमः । कुमुदायै । जयवाहिन्यै । संहत्यै । निर्मितायै । ज्योतिषे। नियत्यै। विविधोत्सवायै। रुद्रवन्द्यायै। सिन्धुमत्यै। वेदमात्रे । मधुव्रतायै । विश्वंभरायै । हैमवत्यै । समुद्रायै । इच्छा-विहारिण्यै । अनुकूलायै । यज्ञवत्यै। शतकोट्यै। सुपेशलायै नमः ।। २८०

ओं धर्मोदयायै नमः। धर्मसेव्यायै। सुकुमार्यै। सभावत्यै। भीमायै। ब्रह्मस्तुतायै। मध्यप्रभायै। देवर्षि-वन्दितायै। देवभोग्यायै। महाभागायै। प्रतिज्ञायै। पूर्णशेवध्यै। सुवर्णरुचिर-प्रख्यायै। भोगिन्यै। भोगदायिन्यै। वसुप्रदायै। उत्तमवध्वे। गायत्र्यै। कमलोद्भवायै। विद्वत्प्रियायै नमः ॥ ३००

ओं पद्मचिह्नायै नमः। वरिष्ठायै। कमलेक्षणायै। पद्मप्रियायै। सुप्रसन्नायै। प्रमोदायै। प्रियपार्श्वगायै। विश्वभूषायै। कान्तिमत्यै। कृष्णायै। वीणारवोत्सुकायै। रोचिष्कर्यै। स्वप्रकाशायै। शोभमान-विहङ्गमायै। देवाङ्कस्थायै। परिणत्यै। कामवत्सायै। महामत्यै। इल्वलायै। उत्पलनाभायै नमः ॥ ३२०

ओं आधिशमन्यै नमः। वरवर्णिन्यै। स्वनिष्ठायै। पद्मनिलयायै। सद्गत्यै। पद्मगन्धिन्यै। पद्मवर्णायै। कामयोन्यै। चण्डिकायै। चारु-कोपनायै। रतिस्नुषायै। पद्मधरायै। पूज्यायै। त्रैलोक्य-मोहिन्यै। नित्यकन्यायै। बिन्दुमालिन्यै। अक्षयायै। सर्वमातृकायै। गन्धात्मिकायै। सुरसिकायै नमः ॥ ३४०

ओं दीप्तमूर्त्यै नमः। सुमध्यमायै। पृथुश्रोण्यै। सौम्य-मुख्यै। सुभगायै। विष्टरश्रुत्यै। स्मिताननायै। चारुदत्यै। निम्ननाभ्यै। महास्तन्यै। स्निग्धवेण्यै। भगवत्यै। सुकान्तायै। वाम-लोचनायै। पल्लवाङ्घ्र्यै। पद्ममनसे। पद्मबोधायै। महाप्सरसे। विद्वत्प्रियायै। चारुहासायै नमः ॥ ३६०

ओं शुभदृष्ट्यै नमः। ककुद्मिन्यै। कम्बु-ग्रीवायै। सुजघनायै। रक्तपाण्यै। मनोरमायै। पद्मिन्यै। मन्दगमनायै। चतुर्दंष्ट्रायै। चतुर्भुजायै। शुभरेखायै। विलासभ्रुवे। शुकवाण्यै। कलावत्यै। ऋजुनासायै। कलरवायै। वरारोहायै। तलोदर्यै। सन्ध्यायै। बिम्बाधरायै नमः ॥ ३८०

ओं पूर्वभाषिण्यै नमः । स्त्रीसमाह्वयायै । इक्षुचापायै । सुमशरायै । दिव्यभूषायै । मनोहरायै । वासव्यै । पाण्डरच्छत्रायै । करभोरवे । तिलोत्तमायै । सीमन्तिन्यै । प्राणशक्त्यै । विभीषिण्यै । असुधारिण्यै । भद्रायै । जयावहायै । चन्द्रवदनायै । कुटिलालकायै । चित्राम्बरायै । चित्रगन्धायै नमः ।। ४००

ओं रत्नमौलि-समुज्ज्वलायै नमः । दिव्यायुधायै । दिव्यमाल्यायै । विशाखायै । चित्रवाहनायै । अम्बिकायै । सिन्धु-तनयायै । सुश्रोण्यै । सुमहासनायै । साम-प्रियायै । नम्रिताङ्ग्यै । सर्वसेव्यायै । वराङ्गनायै । गन्धद्वारायै । दुराधर्षायै । नित्यपुष्टायै । करीषिण्यै । देवजुष्टायै । आदित्य-वर्णायै । दिव्य-गन्धायै नमः ।। ४२०

ओं सुहृत्तमायै । अनन्त-रूपायै । अनन्तस्थायै । सर्वदानन्त-सङ्गमायै । यज्ञाशिन्यै । महावृष्ट्यै । सर्वपूज्यायै । वषट्क्रियायै । योगप्रियायै । वियन्नाभ्यै । अनन्तश्रियै । अतीन्द्रियायै । योगि-सेव्यायै । सत्यरतायै । योगमायायै । पुरातन्यै । सर्वेश्वर्यै । सुतरण्यै । शरण्यायै । धर्मदेवतायै नमः ।। ४४०

ओं सुतरायै नमः । संवृतज्योतिषे । योगिन्यै । योगसिद्धिदायै । सृष्टिशक्त्यै । द्योतमानायै । भूतायै । मङ्गल-देवतायै । संहार-शक्त्यै । प्रबलायै । निरुपाधये । परावरायै । उत्तारिण्यै । तारयन्त्यै । शाश्वत्यै । समितिञ्जयायै । महाश्रियै । अजहत्कीर्त्यै । योगश्रियै । सिद्धिसाधिन्यै नमः ।। ४६०

ओं पुण्यश्रियै नमः । पुण्य-निलयायै । ब्रह्मश्रियै । ब्राह्मण-प्रियायै । राजश्रियै । राजकलितायै । फलश्रियै । स्वर्ग-दायिन्यै । देवश्रियै । अद्भुतकथायै । वेदश्रियै । श्रुतिमार्गिण्यै । तमोपहायै । अव्यय-निधये । लक्षणायै । हृदयङ्गमायै । मृत-सञ्जीविन्यै । शुभ्रायै । चन्द्रिकायै । सर्वतोमुख्यै नमः ।। ४८०

ओं सर्वोत्तमायै नमः । मित्रविन्दायै । मैथिल्यै । प्रियदर्शनायै । सत्यभामायै । वेदवेद्यायै । सीतायै । प्रणत-पोषिण्यै । मूलप्रकृत्यै । ईशानायै । शिवदायै । दीप्रदीपिन्यै । अभिप्रियायै । स्वैरवृत्त्यै । रुक्मिण्यै । सर्व-साक्षिण्यै । गान्धारिण्यै । परगत्यै । तत्त्वगर्भायै । भवाभवायै नमः ।। ५००

ओं अन्तर्वृत्त्यै नमः । महारुद्रायै । विष्णुदुर्गायै । महाबलायै । मदयन्त्यै । लोकधारिण्यै । अदृश्यायै । सर्वनिष्कृत्यै । देवसेनायै । आत्म-बलदायै । वसुधायै । मुख्य-मातृकायै । क्षीरधारायै । घृतमय्यै । जुह्वत्यै । यज्ञदक्षिणायै । योगनिद्रायै । योगरतायै । ब्रह्मचर्यायै । दुरत्ययायै नमः ।। ५२०

ओं सिंह-पिञ्छायै नमः । महादुर्गायै । जयन्त्यै । खड्ग-धारिण्यै । सर्वार्ति-नाशिन्यै । हृष्टायै । सर्वेच्छा-परिपूरिकायै । आर्यायै । यशोदायै । वसुदायै । धर्म-कामार्थ-मोक्षदायै । त्रिशूलिन्यै । पद्मचिह्नायै । महाकाल्यै । इन्दुमालिन्यै । एकवीरायै । भद्रकाल्यै । स्वानन्दिन्यै । उल्लसद्गदायै । नारायण्यै नमः ।। ५४०

ओं जगत्पूरण्यै नमः । उर्वरायै । द्रुहिणप्रसवे । यज्ञकामायै । लेलिहानायै । तीर्थकर्यै । उग्र-विक्रमायै । गरुत्मदुदयायै । अत्युग्रायै । वाराह्यै । मातृभाषिण्यै । अश्वक्रान्तायै । रथक्रान्तायै । विष्णुक्रान्तायै । उरुचारिण्यै । वैरोचन्यै । नारसिंह्यै । जीमूतायै । शुभदेक्षणायै । दीक्षाविदायै नमः ।। ५६०

ओं विश्वशक्तयै नमः । निजशक्तयै । सुदर्शिन्यै । प्रतीतायै । जगत्यै । वन्यधारिण्यै । कलि-नाशिन्यै । अयोध्यायै । अच्छिन्न-सन्तानायै । महारत्नायै । सुखावहायै । राजवत्यै । अप्रतिभयायै । विनयित्र्यै । महाशनायै । अमृत-स्यन्दिन्यै । सीमायै । यज्ञगर्भायै । समेक्षणायै । आकूत्यै नमः ।। ५८०

ओं ऋग्यजुःसाम-घोषायै नमः। आराम-वनोत्सुकायै। सोमपायै। माधव्यै। नित्यकल्याण्यै। कमलार्चितायै। योगरूढायै। स्वार्थजुष्टायै। वह्निवर्णायै। जितासुरायै। यज्ञविद्यायै। गुह्य-विद्यायै। अध्यात्म-विद्यायै। कृतागमायै। आप्यायन्यै। कलातीतायै। सुमित्रायै। परभक्तिदायै। कांक्षमाणायै। महामायायै नमः ।। ६००

ओं कोलकामायै नमः। अमरावत्यै। सुवीर्यायै। दुःस्वप्नहरायै। देवक्यै। वसुदेवतायै। सौदामिन्यै। मेघरथायै। दैत्य-दानव-मर्दिन्यै। श्रेयस्कर्यै। चित्रलीलायै। एकाकिन्यै। रत्नपादुकायै। मनस्यमानायै। तुलस्यै। रोग-नाशिन्यै। उरुप्रदायै। तेजस्विन्यै। सुखज्वालायै। मन्दरेखायै नमः ।। ६२०

ओं अमृताशिन्यै नमः। ब्रह्मिष्ठायै। वह्निशमन्यै। जुषमाणायै। गुणात्ययायै। कादम्बर्यै। ब्रह्मरतायै। विधात्र्यै। उज्ज्वल-हस्तिकायै। अक्षोभ्यायै। सर्वतोभद्रायै। वयस्यायै। स्वस्ति-दक्षिणायै। सहस्रास्यायै। ज्ञानमात्रे। वैश्वानर्यै। अक्षवर्तिन्यै। प्रत्यग्वरायै। वारणवत्यै। अनसूयायै नमः ।। ६४०

ओं दुरासदायै नमः। अरुन्धत्यै। कुण्डलिन्यै। भव्यायै। दुर्गतिनाशिन्यै। मृत्युञ्जयायै। त्रासहर्यै। निर्भयायै। शत्रुसूदिन्यै। एकाक्षरायै। सत्पुरन्ध्र्यै। सुरपक्षायै। सुरातुलायै। सकृद्विभातायै। सर्वार्तिसमुद्र-परिशोषिण्यै। बिल्वप्रियायै। अवन्यै। चक्रहृदयायै। कम्बुतीर्थगायै। सर्वमन्त्रात्मिकायै नमः ।। ६६०

ओं विद्युते नमः। सुवर्णायै। सर्वरञ्जन्यै। ध्वज-च्छत्राश्रयायै। भूत्यै। वैष्णव्यै। सद्गुणोज्ज्वलायै। सुषेणायै। लोकविदितायै। कामसुवे। जगदादिभुवे। वेदान्तयोन्यै। जिज्ञासायै। मनीषायै। समदर्शिन्यै। सहस्र-शक्तयै। आवृत्त्यै। सुस्थिरायै। श्रेयसां निधये। रोहिण्यै नमः ।। ६८०

ओं रेवत्यै नमः । चन्द्रसोदर्यै । भद्रमोहिन्यै । सूर्यायै । कन्याप्रियायै । विश्वभाविन्यै । सुविभाविन्यै । सुप्रदृश्यायै । कामचारिण्यै । अप्रमत्तायै । ललन्तिकायै । मोक्षलक्ष्म्यै । जगद्योन्यै । व्योमलक्ष्म्यै । सुदुर्लभायै । भास्कर्यै । पुण्यगेहस्थायै । मनोज्ञायै । विभव-प्रदायै । लोकस्वामिन्यै नमः ।। ७००

ओं अच्युतार्थायै नमः । पुष्कलायै । जगदाकृत्यै । विचित्र-हारिण्यै । कान्तायै । वाहिन्यै । भूतवासिन्यै । प्राणिन्यै । प्राणदायै । विश्वायै । विश्वब्रह्माण्ड-वासिन्यै । संपूर्णायै । परमोत्साहायै । श्रीमत्यै । श्रीपत्यै । श्रुत्यै । श्रयन्त्यै । श्रीयमाणायै । क्ष्मायै । विश्वरूपायै नमः ।। ७२०

ओं प्रसादिन्यै नमः । हर्षिण्यै । प्रथमायै । शर्वायै । विशालायै । कामवर्षिण्यै । सुप्रतीकायै । पृश्निमत्यै । निवृत्त्यै । विविधायै । परायै । सुयज्ञायै । मधुरायै । श्रीदायै । देवरात्यै । महामनसे । स्थूलायै । सर्वाकृत्यै । स्थेमायै । निम्नगभार्यै नमः ।। ७४०

तमोनुदायै नमः । तुष्ट्यै । वागीश्वर्यै । पुष्ट्यै । सर्वादये । सर्वशोषिण्यै । शक्त्यात्मिकायै । शब्दशक्त्यै । विशिष्टायै । वायुमत्यै । उमायै । आन्वीक्षिक्यै । त्रय्यै । वार्तायै । दण्डनीत्यै । नयात्मिकायै । व्याल्यै । सङ्कर्षिण्यै । द्योतायै । महादेव्यै नमः ।। ७६०

ओं अपराजितायै नमः । कपिलायै । पिङ्गलायै । स्वस्थायै । बलाक्यै । घोषनन्दिन्यै । अजितायै । कर्षिण्यै । नीत्यै । गरुडायै । गरुडासनायै । ह्लादिन्यै । अनुग्रहायै । नित्यायै । ब्रह्मविद्यायै । हिरण्मय्यै । मह्यै । शुद्धविधायै । पृथ्व्यै । सन्तानिन्यै नमः ।। ७८०

ओं अंशुमालिन्यै नमः । यज्ञाश्रयायै । ख्यातिपरायै । स्तव्यायै । वृष्ट्यै । त्रिकालगायै । संबोधिन्यै । शब्दपूर्णायै । विजयायै । अंशुमत्यै । कलायै । शिवायै । स्तुति-प्रियायै । ख्यात्यै । जीवयन्त्यै । पुनर्वसवे । दीक्षायै । भक्तार्तिहायै । रक्षायै । परीक्षायै नमः ।। ८००

ओं यज्ञसंभवायै नमः । आर्द्रायै । पुष्करिण्यै । पुण्यायै । गण्यायै । दारिद्र्य-भञ्जिन्यै । धन्यायै । मान्यायै । पद्मनेम्यै । भार्गव्यै । वंश-वर्धन्यै । तीक्ष्णप्रवृत्त्यै । सत्कीर्त्यै । निषेव्यायै । अघ-विनाशिन्यै । संज्ञायै । निःसंशयायै । पूर्वायै । वनमालायै । वसुन्धरायै नमः ।। ८२०

ओं पृथवे नमः । महोत्कटायै । अहल्यायै । मण्डलायै । आश्रित-मानदायै । सर्वायै । नित्योदितायै । उदारायै । जृंभमाणायै । महोदयायै । चन्द्रकान्तोदितायै । चन्द्रायै । चतुरश्रायै । मनोजवायै । बालायै । कुमार्यै । युवत्यै । करुणायै । भक्त-वत्सलायै । मेदिन्यै नमः ।। ८४०

ओं उपनिषन्मिश्रायै नमः । सुमवीरवे । धनेश्वर्यै । दुर्मर्षण्यै । सुचरितायै । बोधायै । शोभायै । सुवर्चलायै । यमुनायै । अक्षौहिण्यै । गङ्गायै । मन्दाकिन्यै । अमरालयायै । गोदायै । गोदावर्यै । चन्द्रभागायै । कावेर्यै । उदन्वत्यै । सिनीवाल्यै । कुहवे नमः ।। ८६०

ओं राकायै नमः । वारणायै । सिन्धुमत्यै । अमायै । वृद्ध्यै । स्थित्यै । ध्रुवायै । बुद्ध्यै । त्रिगुणायै । गुण-गह्वरायै । पूर्तये । मायात्मिकायै । स्फूर्तये । व्याख्यायै । सूत्रायै । प्रजावत्यै । विभूत्यै । निष्कलायै । रंभायै । रक्षायै नमः ।। ८८०

ओं सुविमलायै नमः । क्षमायै । प्राप्त्यै । वासन्तिकालेखायै । भूरिबीजायै । महागदायै । अमोघायै । शान्तिदायै । स्तुत्यायै । ज्ञानदायै । उत्कर्षिण्यै । शिखायै । प्रकृत्यै । गोमत्यै । लीलायै । कमलायै । कामदुहे । विध्यै । प्रज्ञायै । रामायै नमः ।। ९००

ओं परायै नमः । सन्ध्यायै । सुभद्रायै । सर्व-मङ्गलायै । नन्दायै । भद्रायै । जयायै । रिक्तायै । तिथिपूर्णायै । अमृतंभरायै । काष्ठायै । कामेश्वर्यै । निष्ठायै । काम्यायै । रम्यायै । वरायै । स्मृत्यै । शङ्खिन्यै । चक्रिण्यै । श्यामायै नमः ।। ९२०

ओं समायै नमः । गोत्रायै । रमायै । दित्यै । शान्त्यै । दान्त्यै । स्तुत्यै । सिद्ध्यै । विरजायै । अत्युज्ज्वलायै । अव्ययायै । वाण्यै । गौर्यै । इन्दिरायै । लक्ष्म्यै । मेधायै । श्रद्धायै । सरस्वत्यै । स्वधायै । स्वाहायै नमः ॥ ९४०

ओं रत्यै नमः । उषायै । वसुविद्यायै । धृत्यै । सहायै । शिष्टेष्टायै । शुच्यै । धात्र्यै । सुधायै । रक्षोघ्न्यै । अजायै । अमृतायै । रत्नावल्यै । भारत्यै । ईडायै । धीरधियै । केवलायै । आत्मदायै । यस्यै । तस्यै नमः ॥ ९६०

ओं शुद्ध्यै नमः । सस्मितायै । कस्यै । नीलायै । राधायै । अमृतोद्भवायै । परधुर्यास्पदायै । ह्रियै । भुवे । कामिन्यै । शोक-नाशिन्यै । मायाकृत्यै । रसघनायै । नर्मदायै । गोकुलाश्रयायै । अर्कप्रभायै । रथेभाश्व-निलयायै । इन्दुप्रभायै । अद्भुतायै । श्रियै नमः ॥ ९८०

ओं कृशानुप्रभायै नमः । वज्र-लंभनायै । सर्वभूमिदायै । भोगप्रियायै । भोगवत्यै । भोगीन्द्र-शयनासनायै । अश्वपूर्वायै । रथमध्यायै । हस्तिनाद-प्रबोधिन्यै । सर्वलक्षण-लक्षण्यायै । सर्वलोक-प्रियङ्कर्यै । सर्वोत्कृष्टायै । सर्वमय्यै । भवभङ्गापहारिण्यै । वेदान्तस्थायै । ब्रह्मनीत्यै । ज्योतिष्मत्यै । अमृतावहायै । भूताश्रयायै । निराधारायै नमः १०००

ओं संहितायै नमः । सुगुणोत्तरायै । सर्वातिशायिन्यै । प्रीत्यै । सर्वभूतस्थितायै । द्विजायै । सर्व-मङ्गल-माङ्गल्यायै । दृष्टादृष्टफलप्रदायै नमः ॥ १००८

***

श्रीरस्तु।

# श्रीलक्ष्म्यष्टोत्तरशतनामस्तोत्रम्

ओं देव्युवाच—

देवदेव महादेव त्रिकालज्ञ महेश्वर।
करुणाकर देवेश भक्तानुग्रहकारक॥ १
अष्टोत्तरशतं लक्ष्म्याः श्रोतुमिच्छामि तत्त्वतः।

ईश्वर उवाच—

देवि साधु महाभागे महाभाग्यप्रदायकम्।
सर्वैश्वर्यकरं पुण्यं सर्वपापप्रणाशनम्॥ २
सर्वदारिद्र्यशमनं श्रवणाद्भुक्तिमुक्तिदं।
राजवश्यकरं दिव्यं गुह्याद्गुह्यतमं परम्॥ ३
दुर्लभं सर्वदेवानां चतुष्षष्टिकलास्पदम्।
पद्मादीनां वरान्तानां निधीनां नित्यदायकम्॥ ४
समस्तदेवसंसेव्यमणिमाद्यष्टसिद्धिदम्।
किमत्र बहुनोक्तेन देवीप्रत्यक्षदायकम्॥ ५
तव प्रीत्याऽद्य वक्ष्यामि समाहितमनाः शृणु।
अष्टोत्तरशतस्यास्य महालक्ष्मीस्तु देवता॥ ६
क्लींबीजपदमित्युक्तं शक्तिस्तु भुवनेश्वरी।
अङ्गन्यासः करन्यासः स इत्यादिप्रकीर्तितः॥ ७

ध्यानम्—

वन्दे पद्मकरां प्रसन्नवदनां सौभाग्यदां भाग्यदां
हस्ताभ्यामभयप्रदां मणिगणैर्नानाविधैर्भूषिताम्।
भक्ताभीष्टफलप्रदां हरिहरब्रह्मादिभिस्सेवितां
पार्श्वे पङ्कजशङ्खपद्मनिधिभिर्युक्तां सदा शक्तिभिः॥ ८

सरसिजनयने सरोजहस्ते धवळतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ ९
प्रकृतिं विकृतिं विद्यां सर्वभूतहितप्रदाम् ।
श्रद्धां विभूतिं सुरभिं नमामि परमात्मिकाम् ॥ १०
वाचं पद्मालयां पद्मां शुचिं स्वाहां स्वधां सुधाम् ।
धन्यां हिरण्मयीं लक्ष्मीं नित्यपुष्टां विभावरीम् ॥ ११
अदितिं च दितिं दीप्तां वसुधां वसुधारिणीम् ।
नमामि कमलां कान्तां कामाक्षीं क्रोधसंभवाम् ॥ १२
अनुग्रहपदां बुद्धिमनघां हरिवल्लभाम् ।
अशोकाममृतां दीप्तां लोकशोकविनाशिनीम् ॥ १३
नमामि धर्मनिलयां करुणां लोकमातरम् ।
पद्मप्रियां पद्महस्तां पद्माक्षीं पद्मसुन्दरीम् ॥ १४
पद्मोद्भवां पद्ममुखीं पद्मनाभप्रियां रमाम् ।
पद्ममालाधरां देवीं पद्मिनीं पद्मगन्धिनीम् ॥ १५
पुण्यगन्धां सुप्रसन्नां प्रसादाभिमुखीं प्रभाम् ।
नमामि चन्द्रवदनां चन्द्रां चन्द्रसहोदरीम् ॥ १६
चतुर्भुजां चन्द्ररूपामिन्दिरामिन्दुशीतलाम् ।
आह्लादजननीं पुष्टिं शिवां शिवकरीं सतीम् ॥ १७
विमलां विश्वजननीं तुष्टिं दारिद्र्यनाशिनीम् ।
प्रीतिपुष्करिणीं शान्तां शुक्लमाल्यांबरां श्रियम् ॥ १८
भास्करीं बिल्वनिलयां वरारोहां यशस्विनीम् ।
वसुन्धरामुदाराङ्गां हरिणीं हेममालिनीम् ॥ १९
धनधान्यकरीं सिद्धिं स्त्रैणसौम्यां शुभप्रदाम् ।
नृपवेश्मगतानन्दां वरलक्ष्मीं वसुप्रदाम् ॥ २०

शुभां हिरण्यप्राकारां समुद्रतनयां जयाम् ।
नमामि मङ्गळां देवीं विष्णुवक्षःस्थलस्थिताम् ॥ २१
विष्णुपत्नीं प्रसन्नाक्षीं नारायणसमाश्रिताम् ।
दारिद्र्यध्वंसिनीं देवीं सर्वोपद्रववारिणीम् ॥ २२
नवदुर्गां महाकाळीं ब्रह्मविष्णुशिवात्मिकाम् ।
त्रिकालज्ञानसंपन्नां नमामि भुवनेश्वरीम् ॥ २३
लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्गधामेश्वरीं
दासीभूतसमस्तदेववनितां लोकैकदीपाङ्कुराम् ।
श्रीमन्मन्दकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधरां त्वां
त्रैलोक्यकुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम् ॥ २४
मातर्नमामि कमले कमलायताक्षि
श्रीविष्णुहृत्कमलवासिनि विश्वमातः ।
क्षीरोदजे कमलकोमलगर्भगौरि
लक्ष्मीः प्रसीद सततं नमतां शरण्ये ॥ २५
त्रिकालं यो जपेद्विद्वान् षण्मासं विजितेन्द्रियः ।
दारिद्र्यध्वंसनं कृत्वा सर्व माप्नोति यत्नतः ॥ २६
देवी नामसहस्रेषु पुण्यमष्टोत्तरं शतम् ।
येन श्रियमवाप्नोति कोटिजन्मदरिद्रतः ॥ २७
भृगुवारे शतं धीमान् पठेद्वत्सरमात्रकं ।
अष्टैश्वर्यमवाप्नोति कुबेर इव भूतले ॥ २८
दारिद्र्यमोचनं नाम स्तोत्रमम्बापरं शतम् ।
येन श्रियमवाप्नोति कोटिजन्मदरिद्रतः ॥ २९
भुक्त्वा तु विपुलान् भोगानस्यास्सायुज्यमाप्नुयात् ।
प्रातः काले पठेन्नित्यं सर्वदुःखोपशान्तये ॥
पठंस्तु चिन्तयेद्देवीं सर्वाभरणभूषिताम् ॥ ३०

# श्रीलक्ष्म्यष्टोत्तरशतनामावळिः

ओं प्रकृत्यै नमः । विकृत्यै । विद्यायै । सर्वभूतहितप्रदायै । श्रद्धायै । विभूत्यै । सुरभ्यै । परमात्मिकायै । वाचे । पद्मालयायै । पद्मायै । शुचये । स्वाहायै । स्वधायै । सुधायै । धन्यायै । हिरण्मय्यै । लक्ष्म्यै । नित्यपुष्टायै । विभावर्यै नमः ।। २०

ओं अदित्यै नमः । दित्यै । दीप्तायै । वसुधायै । वसुधारिण्यै । कमलायै । कान्तायै । कामाक्ष्यै । क्रोधसंभवायै । अनुग्रहपदायै । बुद्धये । अनघायै । हरिवल्लभायै । अशोकायै । अमृतायै । दीप्तायै । लोकशोकविनाशिन्यै । धर्मनिलयायै । करुणायै । लोकमात्रे नमः ।। ४०

ओं पद्मप्रियायै नमः । पद्महस्तायै । पद्माक्ष्यै । पद्मसुन्दर्यै । पद्मोद्भवायै । पद्ममुख्यै । पद्मनाभप्रियायै । रमायै । पद्ममालाधरायै । देव्यै । पद्मिन्यै । पद्मगन्धिन्यै । पुण्यगन्धायै । सुप्रसन्नायै । प्रसादाभिमुख्यै । प्रभायै । चन्द्रवदनायै । चन्द्रायै । चन्द्रसहोदर्यै । चतुर्भुजायै नमः ।। ६०

ओं चन्द्ररूपायै नमः । इन्दिरायै । इन्दुशीतलायै । आह्लादजनन्यै । पुष्ट्यै । शिवायै । शिवकर्यै । सत्यै । विमलायै । विश्वजनन्यै । तुष्टये । दारिद्र्यनाशिन्यै । प्रीतिपुष्करिण्यै । शांतायै । शुक्लमाल्याम्बरायै । श्रियै । भास्कर्यै । बिल्वनिलयायै । वरारोहायै । यशस्विन्यै ।। ८०

ओं वसुन्धरायै नमः । उदाराङ्गायै । हरिण्यै । हेममालिन्यै । धनधान्यकर्यै । सिद्धये । स्त्रैणसौम्यायै । शुभप्रदायै । नृपवेश्मगतानन्दायै । वरलक्ष्म्यै । वसुप्रदायै । शुभायै । हिरण्यप्राकारायै । समुद्रतनयायै । जयायै । मङ्गलायै देव्यै । विष्णुवक्षःस्थलस्थितायै । विष्णुपत्न्यै । प्रसन्नाक्ष्यै । नारायणसमाश्रितायै नमः ।। १००

ओं दारिद्र्यध्वंसिन्यै नमः । देव्यै । सर्वोपद्रववारिण्यै । नवदुर्गायै । महाकाळ्यै । ब्रह्मविष्णुशिवात्मिकायै । त्रिकालज्ञानसंपन्नायै । भुवनेश्वर्यै नमः ।। १०८

॥ श्रीः ॥

श्री लक्ष्मीहयवदनपरब्रह्मणे नमः ।

# श्रीहयग्रीवसहस्रनामस्तोत्रम्

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् (वन्दे)सर्वविघ्नोपशान्तये ॥

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

श्रीकाश्यपेन—

''तात मे श्रीहयग्रीवनाम्नां साहस्रमुत्तमम् ।
अध्येतुं जायते काङ्क्षा तत् प्रसीद मयि प्रभो ॥'' १

इति पृष्टस्तदोवाच ब्रह्मा लोकपितामहः ।
श्रेयसामपि च श्रेयः काश्यपेह विशांपते ॥ २

अमत्या विहितं पापं मूलतो हि विनश्यति ।
रहस्यानां रहस्यं च पावनानां च पावनम् ॥ ३

प्रायश्चित्ते कृते तस्य कर्ता न निरयी भवेत् ।
कामतस्तु कृते पापे प्रायश्चित्तशतेन च ॥ ४

तन्न नश्यति तत्कर्ता व्यवहार(र्य)स्य जायते ।
एवं दुरपनोदानां बुद्धिपूर्वमहांहसाम् ॥ ५

आवर्जनकराणामप्यन्ते निष्कृतिरीरिता ।
प्रणम्य मानसतया मन्त्ररत्नानुकीर्तनम् ॥ ६

हंसनामसहस्रस्य पठनं शिरसाऽन्वहम्।
प्रणम्य भगवद्भक्तपादोदकनिषेवणम्॥ ७

तदेतत् त्रितयं सर्वपापसङ्घातनाशनम्।
इतीदं परमं गुह्यं हंसो हयशिरोहरिः ॥ ८

वेदोपदेशसमये मां निबोध्योपदिष्टवान्।
अनेन मन्त्ररत्नेन महाश्वशिरसो हरेः ॥ ९

सहस्रनामभिस्तुल्या निष्कृतिर्नेतरांहसाम्।
अनन्यभगवद्भक्तपादोदकनिषेवणम्॥ १०

एतद्द्वयोपदेशाङ्गमादौ स्वीकार्यमिष्यते।
इत्युक्त्वाऽनन्तगरुडविष्वक्सेनपदोदकम्॥ ११

आदौ मां प्राशयन्नन्ते परिशुष्कीकृतांहसे।
आत्मनो नामसाहस्रं सर्षिच्छन्दोऽधिदैवतम्॥ १२

सन्यासमुद्रिकाभेदं मह्यं साङ्गमुपादिशत्।
यथावत् तदिदं वत्स दद्यां ते शृणु तत्त्वतः ॥ १३

यत् प्राप्यात्यन्तिकावृत्तिनिवृत्त्या मोक्षमेष्यति।
हयास्यनामसाहस्रस्तोत्रराजस्य वैभवम्॥ १४

ऋषिः श्रीमान् हयग्रीवो विद्यामूर्तिः स्वयं हरिः।
देवता च स एवास्य छन्दोऽनुष्टुबिति श्रुतम्॥ १५

हंसो हंसोहमित्येते बीजं शक्तिस्तु कीलकम्।
हंसीं हंसोहमित्येते प्राग्जप्या मनवस्त्रयः ॥ १६

एकैकस्य दशावृत्तिरिति संख्या विधीयते।
प्रणवत्रयमस्त्रं स्यात् कवचं श्रीः श्रियो भवेत्॥ १७

श्रीविभूषण इत्येतत् हृदयं परिकीर्तितम्।
परोरजाः परं ब्रह्मेत्यपि योनिरुदाहृता ॥ १८

ध्यानं विद्यामूर्तिरिति विश्वात्मेति च गद्यते।
विश्वमङ्गलनाम्नोऽस्य विनियोगो यथारुचि ॥ १९

भ्रूनेत्रश्रोत्रनासाहन्वोष्ठतालूदरक्रमात्।
षोडशस्वरविन्यासो दक्षिणारम्भमिष्यते ॥ २०

जिह्वातलेऽपि तन्मूले स्वरावन्त्यौ च विन्यसेत्।
तदा तालुद्वयन्यासं सखायो(काम)स्तु परित्यजेत् ॥ २१

अयं हि विद्याकामानामाद्यस्त्वन्यफलैषिणाम्।
दोःपत्सक्थ्यङ्गुलीशीर्षे वर्गान् कचटतान् न्यसेत् ॥ २२

पार्श्वयोस्तु पफौ पृष्ठोदरयोऽस्तु बभौ न्यसेत्।
मकारं हृदये न्यस्य जीवे वा पञ्चविंशके ॥ २३

नाभिपायूदरे गुह्ये यरलवान् विनिक्षिपेत्।
शषौ कुण्डलयोःशीर्षे हारे च कटिसूत्रके ॥ २४

सहौ हृदब्जे हार्दे च लमापादशिखे न्यसेत्।
क्षश्च शीर्षादिपादान्तं मातृकान्यास एष तु ॥ २५

अस्य श्रीहयग्रीवसहस्रामस्तोत्रमहामन्त्रस्य — श्रीहयग्रीव ऋषिः। अनुष्टुप् छन्दः। श्रीहयग्रीवः परमात्मा देवता। हंस इति बीजम्। हंसोहमिति शक्तिः। हंसां हंसीमितिकीलकम्। ओं ओं ओमित्यस्त्रम्। श्रीः श्रियः इति कवचम्। श्रीविभूषण इति हृदयम्। परोरजाः परं ब्रह्मेति योनिः। विद्यामूर्तिर्विश्वात्मा इति ध्यानम्। हंसामङ्गुष्ठाभ्यां नमः। हंसीं तर्जनीभ्यां नमः। हंसूं मध्यमाभ्यां नमः। हंसैं अनामिकाभ्यां नमः। हंसौं कनिष्ठिकाभ्यां नमः। हंसः करतलकरपृष्ठाभ्यां नमः।

हंसां ज्ञानाय हृदयाय नमः । हंसीं ऐश्वर्याय शिरसे स्वाहा, । हंसूं शक्त्यै शिखायै वषट्, । हंसैं बलाय कवचाय हुं । हंसौं तेजसे नेत्राभ्यां वौषट् । हंसः वीर्यायास्त्राय फट् । ओमिति दिग्बन्धः ।

अथ मातृकान्यासः—

ओं अं आं भ्रुवोः । इं ईं नेत्रयोः । उं ऊं श्रोत्रयोः । ऋं ॠं नासिकयोः । ऌं ॡं कपोलयोः । एं ऐं ओष्ठयोः । ओं औं दन्तपंक्त्योः । अं जिह्वातले । अः जिह्वामूले । कवर्गं दक्षिणे बाहुमूले कूर्परे मणिबन्धे करतले हस्ताग्रे । चवर्गं वामे बाहुमूले कूर्परे मणिबन्धे करतले हस्ताग्रे । टवर्गं दक्षिणे पादमूले जानुनि पादपार्ष्णौ पादतले पादाग्रे । तवर्गं वामे पादमूले जानुनि पादपार्ष्णौ पादतले पादाग्रे । पफौ पार्श्वयोः । बभौ पृष्ठोदरयोः । मं हृदि । यं रं लं वं नाभौ पायौ उदरे गुह्ये । शषौ हस्तयोः । सहौ शीर्षे कट्याम् । लक्षौ हृदब्जे हार्दे इति मातृकान्यासः ।

ध्यानम्—

विद्यामूर्तिं अखण्डचन्द्रवलयश्वेतारविन्दस्थितं
हृद्याभं स्फटिकाद्रिनिर्मलतनुं विद्योतमानं श्रिया ।
वामाङ्कस्थितवल्लभां प्रति सदा व्याख्यान्तमाम्नायवा-
गर्थान् आदिमपूरुषं हयमुखं ध्यायामि हंसात्मकम् ।। २६

विश्वात्मा विशदप्रभाप्रतिलसद्वाग्देवतामण्डलो
देवो दक्षिणपाणियुग्मविलसद्बोधाङ्कचक्रायुधः।
वामोदग्रकरे दरं तदितरेणाश्लिष्य दोष्णा रमां
हस्ताग्रे धृतपुस्तकः स दयतां हंसो हिरण्यच्छदः।। २७

ओं श्रीं हंसो हमैमों क्लीं श्रीःश्रियः श्रीविभूषणम् ।
परोरजाः परब्रह्म भूर्भुवस्सुवरादिमः ।। २८

भास्वान् भगश्च भगवान् स्वस्ति स्वाहा नमः स्वधा।
श्रौषड् वौषडलं हुं फट् हुं ह्रीं क्रों ह्रौं यथा तथा ।। २९

कर्कग्रीवः कलानाथः कामदः करुणाकरः।
कमलाध्युषितोत्सङ्गः क्षये कालीवशानुगः।। ३०

निषच्चोपनिषच्चाथ नीचैरुच्चैःसमं सह।
शश्वद्युगपदह्लाय शनैरेको बहुर्ध्रुवः ।। ३१

भूतभृद्भूरिदः साक्षी भूतादिः पुण्यकीर्तनः।
भूमा भूमिरथोन्नद्धपुरुहूतः पुरुष्टुतः ।। ३२

प्रफुल्लपुण्डरीकाक्षः परमेष्ठी प्रभावनः।
प्रभुर्भर्गः सतां बन्धुर्भयध्वंसी भवापनः ।। ३३

उद्यन्नुरुशयो हुंकृदुरुगाय उरुक्रमः।
उदारस्त्रियुगस्त्र्यात्मा निदानं निलयो हरिः।। ३४

हिरण्यगर्भो हेमाङ्गो हिरण्यश्मश्रुरीशिता।
हिरण्यकेशो हिमहा हेमवासा हितैषणः ।। ३५

आदित्यमण्डलान्तस्स्थो मोदमानः समूहनः।
सर्वात्मा जगदाधारः सन्निधिः सारवान् स्वभूः ।। ३६

गोपतिर्गोहितो गोमी केशवः किन्नरेश्वरः।
मायी मायाविकृतिकृत् महेशानो महामहः ।। ३७

म मा मि मी मु मू मृ मॄ म्लृ म्लॄ मे मैं तथैव च।
मो मौ बिन्दुर्विसर्गश्च ह्रस्वो दीर्घः प्लुतः स्वरः ।। ३८

उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा।
कं खं गं घं ङं च चं छं जं झं ञं टं ठमेव च।। ३९

डं ढं णं तं थं च दं च धं नं पं फं बमेव च।
भं मं यं रं लं च वं च शं षं सं हं ळमेव च ॥ ४०

क्षं यमो व्यञ्जनो जिह्वामूलीयोऽर्धविसर्गवान्।
उपध्मानीय इति च संयुक्ताक्षरमेव च ॥ ४१

पदं क्रिया कारकश्च निपातो गतिरव्ययः।
सन्निधिर्योग्यताऽऽकांक्षा परस्परसमन्वयः ॥ ४२

वाक्यं पद्यं संप्रदायो भावः शब्दार्थलालितः।
व्यञ्जना लक्षणा शक्तिः पाको रीतिरलङ्कृतिः ॥ ४३

शय्या प्रौढध्वनिस्तद्वत्काव्यं सर्गः क्रिया रुचिः।
नानारूपप्रबन्धश्च यशः पुण्यं महद्धनम् ॥ ४४

व्यवहारपरिज्ञानं शिवेतरपरिक्षयः।
सद्यः परमनिर्वाणं प्रियपथ्योपदेशकः ॥ ४५

संस्कारः प्रतिभा शिक्षा ग्रहणं धारणं श्रमः।
आशुता स्वादिमा चित्रं विस्तारश्चित्रसंविधिः ॥ ४६

पुराणमितिहासश्च स्मृतिः सूत्रं च संहिता।
आचार आत्मनस्तुष्टिराचार्याज्ञाऽनतिक्रमः ॥ ४७

श्रीमान् श्रीगीःश्रियःकान्तः श्रीनिधिः श्रीनिकेतनः।
श्रेयान् हयाननः श्रीदः श्रीमयः श्रितवत्सलः ॥ ४८

हंसश्शुचिषदादित्यो वसुश्चन्द्रोऽन्तरिक्षसत्।
होता च वेदिषद्योनिरतिथिर्द्रोणसद्धविः ॥ ४९

नृषन्मृत्युश्च वरसदमृतं चर्तसद् वृषः।
व्योमसद्विविधस्फोटशब्दार्थव्यङ्ग्यवैभवः ॥ ५०

अब्जो रसःस्वादुतमो गोजा गेयो मनोहरः ।
ऋतजाःसकलं भद्रमद्रिजाःस्थैर्यमुत्तमम् ।। ५१

ऋतं समज्ञा त्वनृतं बृहत्सूक्ष्मवशानुगः ।
सत्यं ज्ञानमनन्तं यत् तत्सद्ब्रह्ममयोऽच्युतः ।। ५२

अग्रेभवन्नगो नित्यः परमः पुरुषोत्तमः ।
योगनिद्रापरः स्वामी निध्यानपरनिर्वृतः ।। ५३

रसो रस्यो रसयिता रसवान् रसिकप्रियः ।
आनन्दो नन्दयन् सर्वान् आनन्दी हयकन्धरः ।। ५४

कालः काल्यश्च कालात्मा कालाभ्युत्थितजागरः।
कालसाचिव्यकृत् कान्ताकथितव्याधिकार्यकः ।। ५५

दृङ्न्यश्चनोदश्चनोद्यल्लयसर्गो लघुक्रियः ।
विद्यासहायो वागीशो मातृकामण्डलीकृतः ।। ५६

हिरण्यं हंसमिथुनमीशानः शक्तिमान् जयी ।
गृहमेधी गुणी श्रीभूनीलालीलैकलालसः ।। ५७

अङ्केनोदूह्य वाग्देवीमाचार्यकमुपाश्रयः ।
वेदवेदान्तशास्त्रार्थतत्त्वव्याख्यानतत्परः ।। ५८

ह्लौं ह्लूं हंहं हयो हंसूं हंसां हंसीं हसूं हसौं ।
हसूं हं हरिणो हारी हरिकेशो हरेडितः ।। ५९

सनातनो निबीजस्सन्नव्यक्तो हृदयेशयः ।
अक्षरः क्षरजीवेशः क्षमी क्षयकरोऽच्युतः ।। ६०

कर्ता कारयिता कार्यं कारणं प्रकृतिः कृतिः ।
क्षयक्षयमना मार्थो विष्णुर्जिष्णुर्जगन्मयः ।। ६१

सङ्कुचन् विकचन् स्थाणुर्निर्विकारो निरामयः ।
शुद्धो बुद्धः प्रबुद्धश्च स्निग्धो मुग्धस्समुद्धतः ॥ ६२

सङ्कल्पदो बहुभवन् सर्वात्मा सर्वनामभृत् ।
सहस्रशीर्षः सर्वज्ञः सहस्राक्षः सहस्रपात् ॥ ६३

व्यक्तो विराट् स्वराट् सम्राट् विष्वग्रूपवपुर्विधुः ।
मायावी परमानन्दो मान्यो मायातिगो महान् ॥ ६४

वटपत्रशयो बालो ललन् आम्नायसूचकः ।
मुखन्यस्तकरग्रस्तपादाग्रपटलः प्रभुः ॥ ६५

नैद्रीहासाश्वसंभूतज्ञाज्ञसात्विकतामसः ।
महार्णवांबुपर्यङ्कः पद्मनाभः परात्परः॥ ६६

ब्रह्मभूर्ब्रह्मभयहृत् हरिरोमुपदेशकृत् ।
मधुकैटभनिर्माथी मत्तब्रह्ममदापहः॥ ६७

वेधोविलापवागाविर्दयासारोऽमृषार्थदः।
नारायणास्त्रनिर्माता मधुकैटभमर्दनः ॥ ६८

वेदकर्ता वेदभर्ता वेदाहर्ता विदांवरः ।
पुङ्खानुपुङ्खहेषाढ्यः पूर्णषाड्गुण्यविग्रहः॥ ६९

लालामृतकणव्याजवान्तनिर्दोषवर्णकः ।
उल्लोलध्वानधीरोद्यदुच्चैर्हलहलध्वनिः । ७०

कर्णादारभ्य कर्कात्मा कविः क्षीरार्णवोपमः ।
शङ्खी चक्री गदी खड्गी शार्ङ्गी निर्भयमुद्रकः ॥ ७१

चिन्मुद्राचिह्नितो हस्ततलविन्यस्तपुस्तकः ।
विद्यानाम्नीं श्रियं शिष्यां वेदयन् निजवैभवम् ॥ ७२

अष्टार्णगम्योऽष्टभुजो व्यष्टिसृष्टिकरः पिता।
अष्टैश्वर्यप्रदो ह्य्यदष्टमूर्तिपितृस्तुतः ॥ ७३

आनीतवेदपुरुषो विधिवेदोपदेशकृत्।
वेदवेदाङ्गवेदान्तपुराणस्मृतिमूर्तिमान्॥ ७४

सर्वकर्मसमाराध्यः सर्ववेदमयो विभुः।
सर्वार्थतत्त्वव्याख्याता चतुष्षष्टिकलाधिपः ॥ ७५

शुभयुक् सुमुखश्शुद्धः सुरूपस्सुगतिस्सुधीः।
सुवृतिस्संवृतिश्शूरः सुतपास्सुष्टुतिस्सुहृत्॥ ७६

सुन्दरस्सुभगस्सौम्यस्सुखदस्सुहृदां प्रियः।
सुचरित्रस्सुखतरश्शुद्धसत्त्वप्रदायकः ॥ ७७

रजस्तमोहरो वीरो विश्वरक्षाधुरन्धरः।
नरनारायणाकृत्या गुरुशिष्यत्वमास्थितः ॥ ७८

परावरात्मा प्रबलः पावनः पापनाशनः।
दयाघनः क्षमासारो वात्सल्यैकविभूषणः ॥ ७९

आदिकूर्मो जगद्भर्ता महापोत्री महीधरः।
तद्धित् स्वामी हरिर्यक्षो हिरण्यरिपुरैच्छिकः॥ ८०

प्रह्लादपालकः सर्वभयहर्ता प्रियंवदः।
श्रीमुखालोकनस्रंसत्क्रौञ्चकः कुहकाञ्चनः ॥ ८१

छत्री कमण्डलुधरो वामनो वदतांवरः।
पिशुनात्मोशनोदृष्टिलोपनो बलिमर्दनः ॥ ८२

उरुक्रमो बलिशिरोन्यस्तांघ्रिर्बलिमर्दनः।
जामदग्न्यः परशुभृत् कृत्तक्षत्त्रकुलोत्तमः ॥ ८३

रामोऽभिरामः शान्तात्मा हरकोदण्डखण्डनः ।
शरणागतसन्त्राता सर्वायोध्यकमुक्तिदः ॥ ८४

सङ्कर्षणो मदोदग्रो बलवान् मुसलायुधः।
कृष्णाक्लेशहरः कृष्णो महाव्यसनशान्तिदः ॥ ८५

इङ्गालितोत्तरागर्भप्राणदः पार्थसारथिः ।
गीताचार्यो धराभारहारी षट्पुरमर्दनः ॥ ८६

कल्की विष्णुयशस्सूनुः कलिकालुष्यनाशनः ।
साधुदुष्कृत्परित्राणविनाशविहितोदयः ॥ ८७

वैकुण्ठे परमे तिष्ठन् सुकुमारयुवाकृतिः ।
विश्वोदयस्थितिध्वंससङ्कल्पेन स्वयंप्रभुः ॥ ८८

मदनानां च मदनो मणिकोटीरमानितः ।
मन्दारमालिकापीडो मणिकुण्डलमण्डितः ॥ ८९

सुस्निग्धनीलकुटिलकुन्तलः कोमलाकृतिः ।
सुललाटः सुतिलकः सुभ्रूकः सुकपोलकः ॥ ९०

सिद्धस्सदा सदालोकसुधास्यन्दिरदच्छदः ।
तारकाकोरकाकारविनिर्मितरदच्छदः ॥ ९१

सुधावर्तिपरिस्पूर्तिशोभमानरदच्छदः ।
विष्टब्धो विपुलग्रीवो निभृतोच्चैश्श्रवःस्थितिः ॥ ९२

समावृत्तावदातोरुमुक्ताप्रालम्बभूषणः ।
रत्नाङ्गदी वज्रनिष्की नीलरत्नाङ्ककङ्कणः ॥ ९३

हरिन्मणिगणाबद्धशृङ्खलाकङ्कणोर्मिकः ।
सितोपवीतसंश्लिष्यत्पद्माक्षमणिमालिकः ॥ ९४

श्रीचूर्णवद्द्वारदशोर्ध्वपुण्ड्ररेखापरिष्कृतः ।
पट्टतन्तुग्रथनवत्पवित्रसरशोभितः ॥ ९५

पीनवक्षा महास्कन्धो विपुलोरुकटीतटः ।
कौस्तुभी वनमाली च कान्त्या चन्द्रायुतोपमः ॥ ९६

मन्दारमालिकामोदी मञ्जुवागमलच्छविः ।
दिव्यगन्धो दिव्यरसो दिव्यतेजा दिवस्पतिः ॥ ९७

वाचालो वाक्पतिर्वक्ता व्याख्याता वादिनां प्रियः ।
भक्तहृन्मधुरो वादिजिह्वाभद्रासनस्थितिः ॥ ९८

स्मृतिसन्निहितः स्निग्धः सिद्धिदः सिद्धसन्नुतः ।
मूलकन्दो मुकुन्दो ग्लौस्स्वयम्भूश्शम्भुरैन्दवः ॥ ९९

इष्टो मनुर्यमोऽकालकाल्यः कम्बुकलानिधिः ।
कल्यः कामयिता भीमः कातर्यहरणः कृतिः ॥ १००

संप्रियः पक्वणस्तर्कश्चर्चा निर्धारणोदयः ।
व्यतिरेको विवेकश्च प्रवेकः प्रक्रमः क्रमः ॥ १०१

प्रमाणं प्रतिभूः प्राज्ञः प्रज्ञा पथ्या च धारणः ।
विधिर्विधाता व्यवधिरुद्भवः प्रभवः स्थितिः ॥१०२

विषयस्संशयः पूर्वः पक्षः कक्ष्योपपादकः ।
राद्धान्तो विहितो न्यायफलनिष्पत्तिरुद्भवः ॥ १०३

नानारूपाणि तन्त्राणि व्यवहार्यो व्यवस्थितिः ।
सर्वसाधारणो देवः साध्वसाधुहिते रतः ॥ १०४

सन्धा सनातनो धर्मो धर्मैरर्च्यो महात्मभिः ।
छन्दोमयस्त्रिधामात्मा स्वच्छन्दश्छान्दसेडितः ॥ १०५

यज्ञो यज्ञात्मको यष्टा यज्ञाङ्गोऽपघनो हविः ।
समिदाज्यं पुरोडाशः शाला स्थाली स्रुवस्स्रुचः ॥ १०६

प्राग्वंशो देवयजनः परिधिश्च परिस्तरः ।
वेदिर्विहरणं त्रेता पशुः पाशश्च संस्कृतिः ॥ १०७

विधिर्मन्त्रोऽर्थवादश्च द्रव्यमङ्गं च दैवतम् ।
स्तोत्रं शस्त्रं साम गीतिरुद्गीथः सर्वसाधनम् ॥ १०८

याज्या पुरोनुवाक्या च सामिधेनी समूहनम् ।
प्रयोक्तारः प्रयोगश्च प्रपंचः प्राशुभाश्रमः (प्राशुता क्रमः?) १०९

श्रद्धा प्रध्वंसना तुष्टिः पुष्टिः पुण्यं प्रति(धि?)र्भवः ।
सदः सदस्यसंपातः प्रश्नः प्रतिवचः स्थितिः ॥ ११०

प्रायश्चित्तं परिष्कारो धृतिर्निर्वहणं फलम् ।
नियोगो भावना भाव्यं हिरण्यं दक्षिणा नुतिः ॥ १११

आशीरभ्युपपत्तिश्च तृप्तिः स्वं शर्म केवलम् ।
पुण्यक्षयः पुनःपातभयं शिक्षाशुगर्दनः ॥ ११२

कार्पण्यं यातना चिन्ता निर्वेदश्च विहस्तता ।
देहभृत्कर्मसंपात किञ्चित्कर्मानुकूलकः ॥ ११३

अहेतुकदया प्रेम सांमुख्यं चाप्यनुग्रहः ।
शुचिः श्रीमत्कुलजनो नेता सत्त्वाभिमानवान् ॥ ११४

अन्तरायहरः पित्रोरदुष्टाहारदायकः ।
शुद्धाहारानुरूपाङ्गपरिणामविधायकः ॥ ११५

स्रावपातादिविपदां परिहर्ता परायणः ।
शिरःपाण्यादिसन्धाता क्षेमकृत् प्राणदः प्रभुः ॥ ११६

अनिर्घृणश्चाविषमः शक्तित्रितयदायकः ।
स्वेच्छाप्रसङ्गसंपत्तिव्याजहर्षविशेषवान् ।। ११७

संवित्संधायकः सर्वजन्मक्लेशस्मृतिप्रदः ।
विवेकशोकवैराग्य भवभीति विधायकः ।। ११८

गर्भस्याप्यनुकूलादिनासा(शा?)न्ताध्यवसायदः ।
शुभवैजननोपेतसदनेहो जनिप्रदः।। ११९

उत्तमायुःप्रदो ब्रह्मनिष्ठानुग्रहकारकः ।
स्वदासजननिस्तीर्णतद्वंशजपरम्परः ।। १२०

श्रीवैष्णवोत्पादकृतस्वस्तिकावनिमण्डलः ।
आथर्वणोक्तैकशतमृत्युदूरक्रियापरः ।। १२१

दयाद्यष्टगुणाधाता तत्तत्संस्कृतिसाधकः ।
मेधाविधाता श्रद्धाकृत् सौस्थ्यदो जामिताहरः ।। १२२

विघ्ननुद् विजयाधाता देशकालानुकूल्यकृत् ।
विनेता सत्पथानेता दोषहृच्छुभदस्सखा ।। १२३

ह्रीदो भीदो रुचिकरो विश्वो विश्वहिते रतः ।
प्रमादहृत् प्रासकारी प्रद्युम्नो बलवत्तरः ।। १२४

साङ्गवेदसमायोक्ता सर्वशास्त्रार्थवित्तिदः।
ब्रह्मचर्यान्तरायघ्नः प्रियकृत् हितकृत्परः ।। १२५

चित्तशुद्धिप्रदश्छिन्नाक्षचापल्यः क्षमावहः ।
इन्द्रियार्थरतिच्छेत्ता विद्यैकव्यसनावहः ।। १२६

आत्मानुकूल्यरुचिकृत् अखिलार्तिविनाशकः ।
तितीर्षुहृत्त्वरावेदी गुरुसद्भक्तितेजनः ।। १२७

गुरुसम्बन्धघटको गुरुविश्वासवर्धनः ।
गुरूपासनसन्धाता गुरुप्रेमप्रवर्धनः ॥ १२८

आचार्याभिमतैर्योक्ता पञ्चसंस्कृतिभावनः।
गुरूक्तवृत्तिनैश्चल्यसन्धाताऽवहितस्थितिः ॥ १२९

आपन्नाखिलरक्षार्थं आचार्यकमुपाश्रितः ।
शास्त्रपाणिप्रदानेन भवमग्नान् समुद्धरन् ॥ १३०

पाञ्चकालिकधर्मेषु नैश्चल्यं प्रतिपादयन् ।
स्वदासाराधनाद्यर्थं शुद्धद्रव्यप्रदायकः ॥ १३१

न्यासविद्याविनिर्वोढा न्यस्तात्मभररक्षकः ।
स्वकैङ्कर्यैकरुचिदः स्वदास्यप्रेमवर्धनः ॥ १३२

आचार्यार्थाखिलद्रव्यसम्भृत्यर्पणरोचकः ।
आचार्यस्य स्वसच्छिष्योज्जीवनैकरुचिप्रदः ॥ १३३

आगत्य योजयन् दासहितैककृतिजागरः ।
ब्रह्मविद्यासमास्वादसुहितः कृतसंस्कृतिः ॥ १३४

सत्कारे विषधीदाता तरुण्यां शवबुद्धिदः ।
सभां प्रत्याययन् व्यालीं सर्वत्रसमबुद्धिदः ॥ १३५

सम्भाविताशेषदोषहृत्पुनर्न्यासरोचकः ।
महाविश्वाससन्धाता स्थैर्यदाता मदापहः ॥ १३६

वादव्याख्यास्वसिद्धान्तरक्षाहेतुस्वमन्त्रदः।
स्वमन्त्रजपसंसिद्धिजङ्घालकवितोदयः ॥ १३७

अदुष्टगुणवत्काव्यबन्धव्यामुग्धचेतनः ।
व्यङ्ग्यप्रधानरसवद्गद्यपद्यादिनिर्मितिः ॥ १३८

स्वभक्तस्तुतिसन्तुष्टो भूयोभक्तिप्रदायकः ।
सात्त्विकत्यागसंपन्नसत्कर्मकृदतिप्रियः ।। १३९

निरन्तरानुस्मरणनिजदासैकदास्यकृत् ।
निष्कामवत्सलो नैच्यभावनेषु विनिर्विशन् ।। १४०

सर्वभूतभवद्भावं सम्पश्यत्सु सदास्थितः ।
करणत्रयसारूप्यकल्याणवति सादरः ।। १४१

कदाकदेतिकैङ्कर्यकामिनां शेषितां भजन् ।
परव्यूहादिनिर्दोष शुभ्राश्रयपरिग्रहः ।। १४२

चन्द्रमण्डलमध्यस्थ श्वेताम्भोरुहविष्टरः ।
ज्योत्स्नायमानाङ्गरुचिनिर्धूतान्तर्बहिस्तमाः ।। १४३

भाव्यो भावयिता भद्रं पारिजातवनालयः।
क्षीराब्धिमध्यमद्वीपपालकः प्रपितामहः ।। १४४

निरन्तरनमोवाकशुद्धयाजिहृदाश्रयः।
मुक्तिदश्वेतमृद्रूपश्वेतद्वीपविभावनः ।। १४५

गरुडाहारितश्वेतमृत्पूतयदुभूधरः।
भद्राश्ववर्षनिलयो भयहारी शुभाश्रयः ।। १४६

भद्रश्रीवत्सहाराढ्यः पञ्चरात्रप्रवर्तकः ।
भक्तात्मभावभवनो हार्दोऽङ्गुष्ठप्रमाणवान् ।। १४७

स्वदाससत्कृत्याकृत्ये तन्मित्रारिषु योजयन् ।
प्राणान् उत्क्रामयन् ऊरीकृतप्रारब्धलोपनः ।। १४८

लघ्व्यैव शिक्षया पापमशेषमपि निर्णुदन् ।
त्रिस्थूणक्षोभतो भूतसूक्ष्मैः सूक्ष्मवपुः सृजन् ।। १४९

निरङ्कुशकृपापूरो नित्यकल्याणकारकः ।
मूर्धन्यनाड्या स्वान् दासान् ब्रह्मरन्ध्रादुदञ्चयन् ।। १५०

उपासनपरान् सर्वान् प्रारब्धमनुभावयन् ।
सर्वप्रारब्धदेहान्तेऽप्यन्तिमस्मरणं दिशन् ।। १५१

प्रपेदुषां भेजुषां च यमदृष्टिमभावयन् ।
दिव्यदेहप्रदः सूर्यं द्वारयन् मोक्षमेयुषाम् ।। १५२

आतिवाहिकसत्कारान् अध्वन्यापाद्य मानयन् ।
सर्वान् क्रतुभुजः शश्वत् प्राभृतानि प्रदापयन् ।। १५३

दुरन्तमायाकान्तारं द्रुतं योगेन लङ्घयन् ।
स्फायत्सुदर्शविविधवीथ्यन्तेनाध्वना नयन् ।।१५४

सीमान्तसिन्धुविरजां योगेनोत्तारयन् वशी ।
अमानवस्य देवस्य करं शिरसि धारयन् ।। १५५

अनादिवासनां धून्वन् वैकुण्ठास्या सलोकयन् ।
अहेयमङ्गलोदारतनुदानात् सरूपयन् ।। १५६

सूरिजुष्टं सुखैकान्तं परमं पदमापयन् ।
अरं ण्यश्चामृताम्भोधी दर्शयन् श्रमनाशनः ।। १५७

दिव्योद्यानसरोवापीसरिन्मणिनगान् नयन् ।
ऐरम्मदामृतसरो गमयन् सूपबृंहणः ।।१५८

अश्वत्थं सोमसवनं प्रापयन् विष्टरश्रवाः ।
दिव्याप्सरस्समानीतब्रह्मालङ्कारदायकः ।। १५९

दिव्यवासोऽञ्जनक्षौममाल्यैः स्वान् बहुमानयन् ।
स्वीयामयोध्यां नगरीं सादरं संप्रवेशयन् ।। १६०

दासान् दिव्यरसालोकगन्धांसलशरीरयन् ।
स्वदासान् सूरिवर्गेण सस्नेहं बहुमानयन् ॥ १६१

सूरिसेवोदितानन्दनैच्यान् स्वान् अतिशाययन् ।
वाचयन् स्वां नमोवीप्सां कुर्वन् प्रह्वान् कृतांजलीन् ॥ १६२

प्राकारगोपुरारामप्रासादेभ्यः प्रणामयन् ।
इन्द्रप्रजापतिद्वारपालसम्मानमापयन् ॥ १६३

मालिकाश्वन्महाराजवीथीमध्यं निवासयन् ।
श्रीवैकुण्ठपुरन्ध्रीभिर्नानासत्कारकारकः ॥ १६४

दिव्यं विमानं गमयन् ब्रह्मकान्त्याऽभिपूरयन् ।
महानन्दात्मक श्रीमन्मणिमण्डपमापयन् ॥ १६५

हृष्यत्कुमुदचण्डाद्यैर्विष्वक्सेनान्तिकं नयन् ।
सेनेशचोदितास्थाननायको हेतिनायकः ॥ १६६

प्रापयन् दिव्यमास्थानं वैनतेयं प्रणामयन् ।
श्रीमत्सुन्दरसूरीन्द्र दिव्यपंक्तिं प्रणामयन् ॥ १६७

भास्वरासनपर्यङ्कप्रापणेन कृतार्थयन् ।
पर्यङ्कविद्यासंसिद्धसर्ववैभवसङ्गतः ॥ १६८

स्वात्मानमेव श्रीकान्तं सादरं भूरि दर्शयन् ।
शेषतैकरतिं शेषं शय्यात्मानं प्रणामयन् ॥ १६९

अनन्ताक्षिद्विसाहस्रसादरालोकपात्रयन् ।
अकुमारयुवाकारं श्रीकान्तं संप्रणामयन् ॥ १७०

अतटानन्दतो हेतोरश्रयन् किलिकिञ्चितम् ।
दासानत्युत्थितिमुहुः कृतिदृष्टिप्रसन्नहृत् ॥ १७१

श्रियं प्राप(सं?)स्वयं तातं जीवं पुत्रं प्रहर्षयन्।
मज्जयन् स्वसुखाम्भोधौ स्वककीर्तिरुचिं दिशन्॥ १७२

दयार्द्रापाङ्गवलनाकृताह्लादैः कृतार्थयन्।
पर्यङ्कारोहणप्रह्वं समं लक्ष्म्योपपादयन्॥ १७३

कस्त्वमित्यनुयुंजानो दासोऽस्मीत्युक्तिविस्मितः।
अपृथक्त्वप्रकारोस्मिवाचा स्वाश्रितवद्धवन्॥ १७४

विदुषां तत्क्रतुनयात् हयास्यवपुषा भवन्।
वासुदेवात्मना भूयो भवन् वैकुण्ठनायकः॥ १७५

यथातथैव स्वं रूपं जगन्मोहनमूर्तिमान्।
द्विमूर्ती बहुमूर्तींश्च स्वात्मनश्च प्रकाशयन्॥ १७६

युगपत्सकलं साक्षात् स्वतः कर्तुं समर्थयन्।
कवीनामादिशन्नित्यं मुक्तानामादिमः कविः॥ १७७

षडर्णमनुनिष्ठानां श्वेतद्वीपस्थितिं दिशन्।
द्वादशाक्षरनिष्ठानां लोकं सान्तानिकं दिशन्॥ १७८

अष्टाक्षरैकनिष्ठानां कार्यं वैकुण्ठमर्पयन्।
शरणागतिनिष्ठानां साक्षाद्वैकुण्ठमर्पयत्॥ १७९

स्वमन्त्रराजनिष्ठानां स्वस्मादतिशयं दिशन्।
श्रिया गाढोपगूढात्मा भूतधात्रीरुचिं दिशन्॥ १८०

नीलाविभूतिव्यामुग्धो महाश्वेताश्वमस्तकः।
त्र्यक्षस्त्रिपुरसंहारी रुद्रः स्कन्दो विनायकः॥ १८१

अजो विरिञ्चो द्रुहिणो व्याप्तमूर्तिरमूर्तिकः।
असङ्गोऽनन्यधीसङ्गविहङ्गो वैरिभङ्गदः॥ १८२

स्वामी स्वं स्वेन सन्तुष्यन् शक्रः सर्वाधिकस्यदः ।
स्वयं ज्योतिः स्वयं वेद्यः शूरः शूरकुलोद्भवः ॥ १८३

वासवो वसुरण्योऽग्निर्वासुदेवस्सुहृद्वसुः ।
भूतो भावी भवन् भव्यो विष्णुस्थानः सनातनः ॥ १८४

नित्यानुभावो नेदीयान् दवीयान् दुर्विभावनः ।
सनत्कुमारः सन्धाता सुगन्धिः सुखदर्शनः ॥ १८५

तीर्थं तितिक्षुस्तीर्थांघ्रिस्तीर्थस्वादुशुभः शुचिः ।
वीर्यवद्दीधितिस्तिग्मतेजास्तीव्रमनामयः ॥ १८६

ईशाद्युपनिषद्वेद्यः पञ्चोपनिषदात्मकः ।
ईडन्तःस्थोऽपि दूरस्थः कल्याणतमरूपवान् ॥ १८७

प्राणानां प्राणनः पूर्णज्ञानैरपि सुदुर्ग्रहः ।
नाचिकेतोपासनार्च्यस्त्रिमात्रप्रणवोदितः ॥ १८८

भूतयोनिश्च सर्वज्ञोऽक्षरोऽक्षरपरात् परः ।
अकारादिपदज्ञेयव्यूहस्तारार्थपूरुषः ॥ १८९

मनोमयोऽमृतो नन्दमयो दहररूपधृत् ।
न्यासविद्यावेद्यरूप आदित्यान्तर्हिरण्मयः ॥ १९०

इदन्द्र आत्मोद्गीथादिप्रतीकोपासनान्वयी ।
मधुविद्योपासनीयो गायत्रीध्यानगोचरः ॥ १९१

दिव्यकौक्षेयसज्ज्योतिः शाण्डिल्योपास्तिवीक्षितः ।
संवर्गविद्यावेद्यात्मा तत् षोडशकलं परम् ॥ १९२

उपकोसलविद्येक्ष्यः पञ्चाग्न्यात्मशरीरकः ।
वैश्वानरः सद् भूमा च जगत्कर्माऽऽदिपूरुषः ॥ १९३

मूर्तामूर्तब्रह्म सर्वप्रेष्ठोऽन्यप्रियताकरः ।
सर्वान्तरश्चापरोक्षश्चान्तर्याम्यमृतोऽनघः ॥ १९४

अहर्नामादित्यरूपश्चाहंनामाक्षिसंश्रितः ।
सतुर्यगायत्र्यर्थश्च यथोपास्त्याप्यसद्वपुः ॥ १९५

चन्द्रादिसायुज्यपूर्वमोक्षदन्यासगोचरः ।
न्यासनाश्यानभ्युपेतप्रारब्धांशो महादयः ॥ १९६

अवताररहस्यादिज्ञानिप्रारब्धनाशनः ।
स्वेन स्वार्थं परेणापि कृते न्यासे फलप्रदः ॥ १९७

असाहसोऽनपायश्रीः ससहायः श्रियैव सन् ।
श्रीमान्नारायणो वासुदेवोऽव्याद् विष्णुरुत्तमः ॥ १९८ ओं

इतीदं परमं गुह्यं सर्वपापप्रणाशनम् ।
वागीशनामसाहस्रं वत्स! तेऽभिहितं मया ॥ १९९

य इदं शृणुयाद्भक्त्या श्रावयेद्वा स्वयं पठेत् ।
नासौ प्राप्नोति दुरितमिहामुत्र च किञ्चन ॥ २००

तदिदं प्रजपन् स्वामी विद्याधीशो हयाननः ।
क्षत्रियश्चेन्महारुद्रो विक्रमाक्रान्तसर्वभूः ॥ २०१

महोदारो महाकीर्तिर्महितो विजयी भवेत् ।
ऊरुजश्चेदुरुयशोधनधान्यसमृद्धिमान् ॥ २०२

अशेषभोगसम्भूतो धनाधिपसमो भवेत् ।
शृणुयादेव वृषलः स्वयं विप्रात् सुपूजितात् ॥ २०३

महिमानमवाप्नोति महितैश्वर्यभाजनम् ।
श्रीमतो हयशीर्षस्य नाम्नां साहस्रमुत्तमम् ॥ २०४

शृण्वन् पठन्नपि नरः सर्वान् कामान् अवाप्नुयात्।
धर्मार्थकामसंतानभाग्यारोग्योत्तमायुषाम्॥ २०५

प्रापणे परमो हेतुः स्तवराजोऽयमद्भुतः।
हयग्रीवे परां भक्तिमुद्वहन् य इमं पठेत्॥ २०६

त्रिसन्ध्यं नियतः शुद्धः सोऽपवर्गाय कल्पते।
त्रिः पठन् नामसाहस्रं प्रत्यहं वागधीशितुः॥ २०७

महतीं कीर्तिमाप्नोति निस्सीमां स्थेयसीं प्रियाम्।
बीर्यं बलं पतित्वञ्च मेधाश्रद्धाबलोन्नतीः॥ २०८

सारस्वतसमृद्धिश्च भव्यान् भोग्यान् नतान् सुतान्।
अभिरूपां वधूं साध्वीं सुहृदश्च हितैषिणः॥ २०९

ब्रह्मविद्याप्रवचनैः कालक्षेपश्च संततम्।
हयग्रीवपदांभोजसलिलस्यानुकूलतः॥ २१०

लभेत निर्मलं शान्तो हंसोपासनतत्परः।
श्रीमत्परमहंसस्य चित्तोल्लासनसन्निधौ॥ २११

इदं तु नाम्नां साहस्रमिष्टसाधनमुत्तमम्।
पापी पापाद्विमुक्तः स्यात् रोगी रोगाद्विमुच्यते॥ २१२

बद्धो बन्धात् विमुच्येत भीतो भीतेर्विमुच्यते।
मुक्तो दरिद्रो दारिद्र्याद् भवेत् पूर्णमनोरथः॥ २१३

आपन्न आपदा मुक्तो भवत्येव न संशयः।
हंसार्चनपरो नित्यं हंसार्चनपरायणः॥ २१४

निर्धूतकल्मषो नित्यं ब्रह्मसायुज्यमाप्नुयात्।
ये भक्ताः परमे हंसे श्रिया मिथुनितां गते॥ २१५

जन्मव्याधिजरानाशभयभाजो न ते जनाः ।
आचार्यात् तदिदं स्तोत्रमधिगत्य पठेन्नरः ॥ २१६

तस्येदं कल्पते सिद्ध्यै नान्यथा वत्स काश्यप ।
आचार्यं लक्षणैर्युक्तमन्यं वाऽऽत्मविदुत्तमम् ॥ २१७

वृत्वाऽऽचार्यं सदा भक्त्या सिद्ध्यै तदिदमश्नुयात् ।
स याति परमां विद्यां शकुनिब्रह्महर्षणीम् ॥ २१८

हयास्यनामसाहस्रस्तुतिरंहोविनाशिनी ।
परमो हंस एवादौ प्रणवं ब्रह्मणेऽदिशत् ॥ २१९

उपादिशत् ततो वेदान् श्रीमान् हयशिरोहरिः ।
तेनासौ स्तवराजो हि हंसाख्यहयगोचरः ॥ २२०

विद्यासाम्राज्यसम्पत्तिमोक्षैकफलसाधनम् ।
सर्ववित् स्वात्मभावेन परमं पदमाप्नुयात् ॥ २२१

न तत्र संशयः कश्चिन्निपुणं परिपश्यति ।
तथापि स्वात्मनि प्रेमसिन्धुसन्धुक्षणक्षमः ॥ २२२

इतीदं नामसाहस्रं संगृहीतं तथोत्तरम् ।
एवं सङ्गृह्य देवेन हयग्रीवेण पावनम् ॥ २२३

स्तोत्ररत्नमिदं दत्तं मह्यं तत् कथितं तव ।
हंसनामसहस्रस्य वैभवं परमाद्भुतम् ॥ २२४

वक्तुं यथावत् कः शक्तो वर्षकोटिशतैरपि ।
हयास्यः परमो हंसो हरिर्नारायणोऽव्ययः ॥ २२५

कारणं शरणं मृत्युरमृतं चाखिलात्मनाम् ।
सत्यं सत्यं पुनस्सत्यं ध्येयो नारायणो हरिः ॥ २२६

न मानमधिकं वेदान्न दैवं केशवात्परम्।
तत्त्वं विज्ञातुकामानां प्रमाणैः सर्वतोमुखैः ।। २२७

तत्त्वं स परमो हंस एक एव जनार्दनः ।
इदं रहस्यं परमं महापातकनाशनम्।। २२८

न चाशुश्रूषवे वाच्यं नाभक्ताय कदाचन।
नाप्यन्यदेवतायापि न वाच्यं नास्तिकाय च ।। २२९

अधीत्यैतद् गुरुमुखादन्वहं यः पठेन्नरः ।
तद्वंश्या अपि सर्वे स्युः सम्पत्सारस्वतोन्नताः । २३०

इति हयवदनाननारविन्दात् मधुलहरीव निरर्गला गलन्ती।
जगति दशशती तदीयनाम्नां जयति जडानपि गीर्षु योजयन्ती ।।

## श्रीहयग्रीवसहस्रनामावलिः

ओं श्रीहयग्रीवाय नमः । श्रीं । हंसाय । हं हयग्रीवाय । ऐं ओं । क्लीं । श्रियः श्रियै । श्रीविभूषणाय । परोरजसे । परब्रह्मणे । भूर्भुवस्सुवरादिमाय । भास्वते । भगाय । भगवते । स्वस्ति । स्वाहा । नमः । स्वधायै । श्रौषट्। वौषट् नमः ।। २०

ओं अलं नमः । हुम् । फट् । हुं । ह्रीम् । क्रोम् । ह्लौम् । कर्कग्रीवाय । कलानाथाय । कामदाय । करुणाकराय । कमलाध्युषितोत्संगाय । क्षये कालीवशानुगाय । निषदे । उपनिषदे । नीचैः । उच्चैः । समं । सह । शश्वत् नमः ।। ४०

ओं युगपत् नमः । अह्नाय । शनैः । एकस्मै । बहवे । ध्रुवाय भूतभृते । भूरिदाय । साक्षिणे । भूतादये । पुण्यकीर्तनाय । भूम्ने । भूमिरथोन्नद्धपुरुहूताय । पुरुष्टुताय । प्रफुल्लपुण्डरीकाक्षाय । परमेष्ठिने । प्रभावनाय । प्रभवे । भर्गाय । सतां बन्धवे नमः ।। ६०

ओं भयध्वंसिने नमः । भवापनाय । उद्यते । उरुशयाय । हुंकृते । उरुगायाय । उरुक्रमाय । उदाराय । त्रियुगाय । त्र्यात्मने । निदानाय । निलयाय । हरये । हिरण्यगर्भाय । हेमाङ्गाय । हिरण्यश्मश्रवे । ईशित्रे हिरण्यकेशाय । हिमघ्ने । हेमवाससे नमः ॥ ८०

ओं हितैषणाय नमः । आदित्यमण्डलान्तस्स्थाय । मोदमानाय । समूहनाय । सर्वात्मने । जगदाधाराय । संनिधये । सारवते । स्वभुवे । गोपतये । गोहिताय । गोमिने । केशवाय । किंनरेश्वराय । मायिने । माया-विकृतिकृते । महेशानाय । महामहसे । म । मा नमः ॥१००

ओं मि । मी । मु । मू । मृ । मॄ । म्लृ । म्लॄ । मे । मै । मो । मौ । बिन्दवे । विसर्गाय । ह्रस्वाय । दीर्घाय । प्लुताय । स्वराय । उदात्ताय । अनुदात्ताय नमः ॥ १२०

ओं स्वरिताय नमः । प्रचयाय । कं । खं । गं । घं । ङं । चं । छं । जं । झं । ञं । टं । ठं । डं । ढं । णं । तं । थं । दं नमः ॥ १४०

ओं धं । नं । पं । फं । बं । भं । मं । यं । रं । लं । वं । शं । षं । सं । हं । ळं । क्षं । यमाय । व्यञ्जनाय । जिह्वामूलीयाय नमः ॥ १६०

ओं अर्धविसर्गवते । उपध्मानीयाय । संयुक्ताक्षराय । पदाय । क्रियायै । कारकाय । निपाताय । गतये । अव्ययाय । संनिधये । योग्यतायै । आकांक्षायै । परस्परसमन्वयाय । वाक्याय । पद्याय । संप्रदायाय । भावाय । शब्दार्थलालिताय । व्यञ्जनायै । लक्षणायै नमः ॥ १८०

ओं शक्त्यै । पाकाय । रीतये । अलंकृतये । शय्यायै । प्रौढध्वनये । ध्वनिमत्काव्याय । सर्गाय । क्रियायै । रुचये । नानारूपप्रबन्धाय । यशसे । पुण्याय । महते धनाय । व्यवहारपरिज्ञानाय ।

शिवेतरपरिक्षयाय । सद्यःपरमनिर्वाणाय । प्रियपथ्योपदेशकाय । संस्काराय। प्रतिभायै नमः ।। २००

ओं शिक्षायै नमः । ग्रहणाय । धारणाय । श्रमाय । आशुतायै । स्वादिम्ने । चित्राय । विस्ताराय । चित्रसंविधये । पुराणाय । इतिहासाय । स्मृतये । सूत्राय । संहितायै । आचाराय । आत्मनस्तुष्टये । आचार्याज्ञानतिक्रमाय । श्रीमते । श्रीगिरे । श्रियः कान्ताय नमः ।। २२०

ओं श्रीनिधये नमः । श्रीनिकेतनाय । श्रेयसे । हयाननाय । श्रीदाय । श्रीमयाय । श्रितवत्सलाय । हंसाय । शुचिषदे । आदित्याय । वसवे । चन्द्राय । अन्तरिक्षसदे । होत्रे । वेदिषदे । योनये । अतिथये । द्रोणसदे । हविषे । नृषदे ।। २२०

ओं मृत्यवे नमः । वरसदे । अमृताय । ऋतसदे । वृषाय । व्योमसदे । विविधस्फोटशब्दार्थव्यङ्ग्यवैभवाय । अब्जाय । रसाय । स्वादुतमाय । गोजाय । गेयाय । मनोहराय । ऋतजाय । सकलाय । भद्राय । अद्रिजाय । उत्तमस्थैर्याय । ऋताय । समज्ञायै नमः ।। २४०

ओं अनृताय नमः । बृहत्सूक्ष्मवशानुगाय । सत्याय । ज्ञानाय । अनन्ताय । यते । तते । सते । ब्रह्ममयाय । अच्युताय । अग्रेभवते । अगाय । नित्याय । परमाय । पुरुषोत्तमाय । योगनिद्रापराय । स्वामिने । निध्यानपरनिर्वृताय । रसाय । रस्याय । रसयित्रे नमः ।। २६०

ओं रसवते नमः । रसिकप्रियाय । आनन्दाय । सर्वान् नन्दयते । आनन्दिने । हयकन्धराय । कालाय । काल्याय । कालात्मने । कालाभ्युत्थिताय । कालजागराय । कालसाचिव्यकृते । कान्ताकथितव्याधिकार्यकाय । दृङ्न्यश्वनोद्यल्लयाय । दृगुदश्वनोद्यत्सर्गाय । लघुक्रियाय । विद्यासहायाय । वागीशाय । मातृकामण्डलीकृताय । हिरण्याय नमः ।। २८०

ओं हंसमिथुनाय नमः । ईशानाय । शक्तिमते । जयिने । गृहमेधिने । गुणिने । श्रीभूनीलालीलैकलालसाय । अङ्कोदूढवाग्देवी-कायोपाश्रिताचार्यकाय । वेदवेदान्तशास्त्रार्थतत्त्वव्याख्यानतत्पराय । ह्लौं । ह्लूं । हंहं । हयाय । हंसूं । हंसां । हंसीं । हसूं । हसौं । हसूंहं । हरिणाय नमः ॥ ३००

ओं हारिणे नमः । हरिकेशाय । हरेडिताय । सनातनाय । निर्बीजाय । सते । अव्यक्ताय । हृदयेशयाय । अक्षराय । क्षरजीवेशाय । क्षमिणे । क्षयकरायाच्युताय । कर्त्रे । कारयित्रे । कार्याय । कारणाय । प्रकृतये । कृतये । क्षयक्षयमनसे । मार्थाय नमः ॥ ३२०

ओं विष्णवे नमः । जिष्णवे । जगन्मयाय । संकुचते । विकचते । स्थाणवे । निर्विकाराय । निरामयाय । शुद्धाय । बुद्धाय । प्रबुद्धाय । स्निग्धाय । मुग्धाय । समुद्धताय । संकल्पदाय । बहुभवते । सर्वात्मने । सर्वनामभृते । सहस्रशीर्षाय । सर्वज्ञाय नमः ॥ ३४०

ओं सहस्राक्षाय । सहस्रपदे । व्यक्ताय । विराजे । स्वराजे । सम्राजे । विष्वग्रूपवपुषे । विधवे । मायाविने । परमानन्दाय । मान्याय । मायातिगाय । महते । वटपत्रशयाय । बालाय । ललते । आम्नायसूचकाय । मुखन्यस्तकरग्रस्तपादाग्रपटलाय । प्रभवे । नैद्रीहासाश्वसंभूत-ज्ञाज्ञसात्त्विकतामसाय नमः ॥ ३६०

ओं महार्णवाम्बुपर्यङ्काय नमः । पद्मनाभाय । परात् पराय । ब्रह्मभुवे । ब्रह्मभयहृते । हरये । ओमुपदेशकृते । मधुकैटभनिर्माथाय । मत्तब्रह्ममदापहाय । वेधोविलापवागाविर्दयासाराय । अमृषार्थदाय । नारायणास्त्रनिर्मात्रे । मधुकैटभमर्दनाय । वेदकर्त्रे । वेदभर्त्रे । वेदाहर्त्रे । विदां वराय । पुङ्खानुपुङ्खहेषाढ्याय । पूर्णषाड्गुण्यविग्रहाय । लालामृतकणव्याज वान्तनिर्दोषवर्णकाय नमः ॥ ३८०

ओं उल्लोलध्वानधीरोद्यदुच्चैर्हलहलध्वनये नमः । कर्णा(ण्ठा)-दारभ्य कर्कात्मने । कवये । क्षीरार्णवोपमाय । शंखिने । चक्रिणे । गदिने । खड्गिने । शार्ङ्गिणे । निर्भयमुद्रकाय । चिन्मुद्राचिह्निताय । हस्ततलविन्यस्तपुस्तकाय । शिष्यभूतविद्याश्रीनिजवैभववेदकाय । अष्टार्णगम्याय । अष्टभुजाय । व्यष्टिसृष्टिकराय । पित्रे । अष्टैश्वर्यप्रदाय । हृष्यदष्टमूर्तिपितृस्तुताय । आनीतवेदपुरुषाय नमः ॥ ४००

ओं विधिवेदोपदेशकृते नमः । वेदवेदाङ्गवेदान्तपुराणस्मृति-मूर्तिमते । सर्वकर्मसमाराध्याय । सर्ववेदमयाय । विभवे । सर्वार्थतत्त्वव्याख्यात्रे । चतुष्षष्टिकलाधिपाय । शुभयुजे । सुमुखाय । शुद्धाय । सुरूपाय । सुगतये । सुधिये । सुवृतये । संवृतये । शूराय । सुतपसे । सुष्टुतये । सुहृदे । सुन्दराय नमः ॥ ४२०

ओं सुभगाय नमः । सौम्याय । सुखदाय । सुहृदां प्रियाय । सुचरित्राय । सुखतराय । शुद्धसत्त्वप्रदायकाय । रजस्तमोहराय । वीराय । विश्वरक्षाधुरन्धराय । नरनारायणाकृत्या गुरुशिष्यत्वमास्थिताय । परावरात्मने । प्रबलाय । पावनाय । पापनाशनाय । दयाघनाय । क्षमासाराय । वात्सल्यैकविभूषणाय । आदिकूर्माय । जगद्भर्त्रे नमः ॥ ४४०

ओं महापोत्रिणे नमः । महीधराय । महीभित्स्वामिने । हरये । यक्षाय । हिरण्यरिपवे । ऐच्छिकाय । प्रह्लादपालकाय । सर्वभयहर्त्रे । प्रियंवदाय । श्रीमुखालोकनस्रंसत्क्रौञ्चकाय । कुहकाञ्चनाय । छत्रिणे । कमण्डलुधराय । वामनाय । वदतांवराय । पिशुनात्मोशनोदृष्टि-लोपनाय । बलिमर्दनाय । उरुक्रमाय । बलिशिरोन्यस्तांघ्रये नमः ॥ ४६०

ओं बलिमर्दनाय नमः । जामदग्न्याय । परशुभृते । कृत्तक्षत्रकुलोत्तमाय । रामाय । अभिरामाय । शान्तात्मने । हरकोदण्ड खण्डनाय । शरणागतसंत्रात्रे । सर्वायोध्यकमुक्तिदाय । संकर्षणाय । मदोदग्राय । बलवते । मुसलायुधाय । कृष्णाक्लेशहराय । कृष्णाय । महाव्यसनशान्तिदाय । इङ्गालितोत्तरागर्भप्राणदाय । पार्थसारथये । गीताचार्याय नमः ।। ४८०

ओं धराभारहारिणे नमः । षट्पुरमर्दनाय । कल्किने । विष्णुयशस्सूनवे । कलिकालुष्यनाशनाय । साधुपरित्राण विहितोदयाय । दुष्कृद्विनाशविहितोदयाय । परमवैकुण्ठस्थाय । सुकुमारयुवाकृतये । विश्वोदयसंकल्पस्वयंप्रभवे । विश्वस्थितिसंकल्प-स्वयंप्रभवे । विश्वध्वंसंकल्पस्वयंप्रभवे । मदनानां मदनाय । मणिकोटीरमानिताय । मन्दारमालिकापीडाय । मणिकुण्डलमण्डि-ताय । सुस्निग्धनीलकुटिलकुन्तलाय । कोमलाकृतये । सुललाटाय । सुतिलकाय नमः ।। ५००

ओं सुभ्रूकाय नमः । सुकपोलकाय । सदासिद्धाय । सदालोक सुधास्यन्दिरदच्छदाय । तारकाकोरकाकारविनिर्मितरदच्छदाय । सुधावर्तिपरिस्फूर्तिशोभमानरदच्छदाय । विष्टब्धाय । विपुलग्रीवाय । निभृतोच्चैश्श्रवस्स्थितये । समावृत्तावदातोरुमुक्ताप्रालम्बभूषणाय । रत्नाङ्गदिने । वज्रनिष्किणे । नीलरत्नाङ्ककङ्कणाय । हरिन्मणिगणाबद्ध शृङ्खलाकङ्कणोर्मिकाय । सितोपवीतसंश्लिष्यत्पद्माक्षमणिमालिकाय । श्रीचूर्णवद्द्वादशोर्ध्वपुण्ड्ररेखापरिष्कृताय । पट्टतन्तुग्रथनवत्पवित्रसरशो-भिताय । पीनवक्षसे । महास्कन्धाय । विपुलोरुकटीतटाय नमः ।। ५२०

ओं कौस्तुभिने नमः । वनमालिने । कान्त्या चन्द्रायुतोपमाय । मन्दारमालिकामोदिने । मञ्जुवाचे । अमलच्छवये । दिव्यगन्धाय ।

दिव्यरसाय। दिव्यतेजसे। दिवस्पतये। वाचालाय। वाक्पतये। वक्त्रे। व्याख्यात्रे । वादिनांप्रियाय । भक्तहृन्मधुराय । वादिजिह्वाभद्रासनस्थितये। स्मृतिसंनिहिताय। स्निग्धाय। सिद्धिदाय नमः ॥ ५४०

ओं सिद्धसंनुताय नमः । मूलकन्दाय । मुकुन्दाय । ग्लावे । स्वयम्भुवे । शम्भवे । ऐन्दवाय । इष्टाय । मनवे । यमाय । अकालकाल्याय । कम्बुकलानिधये। कल्याय। कामयित्रे। भीमाय। कातर्यहरणाय। कृतये। संप्रियाय। पक्कणाय। तर्काय नमः ॥ ५६०

ओं चर्चायै नमः । निर्धारणोदयाय। व्यतिरेकाय। विवेकाय। प्रवेकाय। प्रक्रमाय। क्रमाय। प्रमाणाय। प्रतिभुवे। प्राज्ञाय। पथ्यायै प्रज्ञायै। धारणाय। विधये। विधात्रे। व्यवधये। उद्भवाय। प्रभवाय। स्थितये। विषयाय। संशयाय नमः ॥ ५८०

ओं पूर्वस्मै पक्षाय नमः । कक्ष्योपपादकाय । राद्धान्ताय । विहिताय । न्यायफलनिष्पत्तये । उद्भवाय । नानारूपतन्त्रात्मने । व्यवहार्याय । व्यवस्थितये । सर्वसाधारणाय देवाय । साध्वसाधुहिते रताय । सन्धायै । सनातनाय धर्माय । महात्मभिः धर्मैरच्चर्याय । छन्दोमयाय । त्रिधामात्मने । स्वच्छन्दाय । छान्दसेडिताय । यज्ञाय । यज्ञात्मकाय नमः ॥ ६००

ओं यष्ट्रे नमः । यज्ञाङ्गाय । अपघनाय । हविषे । समिधे । आज्याय । पुरोडाशाय । शालायै । स्थाल्यै । स्रुवाय । स्रुग्भ्यो । प्राग्वंशाय। देवयजनाय। परिधये। परिस्तराय। वेदये। विहरणाय। त्रेतायै। पशवे। पाशाय नमः ॥ ६२०

ओं संस्कृतये नमः । विधये। मन्त्राय। अर्थवादाय। द्रव्याय। अङ्गाय । दैवताय । स्तोत्राय । शस्त्राय । साम्ने । गीतये । उद्गीथाय । सर्वसाधनाय । याज्यायै । पुरोनुवाक्यायै । सामिधेन्यै । समूहनाय । प्रयोक्तृभ्यो। प्रयोगाय। प्रपञ्चाय नमः ॥ ६४०

ओं प्राशुभाश्रमाय नमः । श्रद्धायै । प्रध्वंसनायै । तुष्टये । पुष्टये । पुण्याय । प्रतये । भवाय । सदसे । सदस्यसंपाताय । प्रश्नाय । प्रतिवचसे । स्थितये । प्रायश्चित्ताय । परिष्काराय । धृतये । निर्वहणाय । फलाय । नियोगाय । भावनायै नमः ॥ ६६०

ओं भाव्याय नमः । हिरण्याय । दक्षिणायै । नुतये । आशिषे । अभ्युपपत्तये । तृप्तये । स्वाय शर्मणे केवलाय । पुण्यक्षयाय । पुनःपातभयाय । शिक्षाशुगर्दनाय । कार्पण्याय । यातनायै । चिन्तायै । निर्वेदाय । विहस्ततायै । देहभृत्कर्मसंपाताय । किञ्चित्कर्मानुकूलकाय । अहेतुकदयायै । प्रेम्णे नमः ॥ ६८०

ओं सांमुख्याय नमः । अनुग्रहाय । शुचये । श्रीमत्कुलजनाय । नेत्रे । सत्त्वाभिमानवते । पित्रोरन्तरायहराय । अदुष्टाहारदायकाय । शुद्धाहारानुरूपाङ्गपरिणामविधायकाय । स्रावपातादिविपदां परिहत्रे । परायणाय । शिरःपाण्यादिसंधात्रे । क्षेमकृते । प्राणदाय । प्रभवे । अनिर्घृणाय । अविषमाय । शक्तित्रितयदायकाय । स्वेच्छाप्रसंगसंपत्ति-व्याजहर्षविशेषवते । संवित्संधायकाय नमः ॥ ७००

ओं सर्वजन्मक्लेशस्मृतिप्रदाय नमः । विवेकविधायकाय । शोकविधायकाय । वैराग्यविधायकाय । भवभीति विधायकाय । गर्भस्य अनुकूलादिनासान्ताध्यवसायदाय । शुभवैजननोपेतसदनेहाय । जनिप्रदाय । उत्तमायुःप्रदाय । ब्रह्मनिष्ठानुग्रहकारकाय । स्वदासजननिस्तीर्णतदंशजपरम्पराय । श्रीवैष्णवोत्पादकृतस्वस्ति-कावनिमण्डलाय । आथर्वणोक्तैकशतमृत्युदूरक्रियापराय । दयाद्यष्टगुणाधात्रे । तत्तत्संस्कृतिसाधकाय । मेधाविधात्रे । श्रद्धाकृते । सौस्थ्यदाय । जामिताहराय । विघ्ननुदे नमः ॥ ७२०

ओं विजयाधात्रे नमः । देशकालानुकूल्यकृते । विनेत्रे । सत्पथानेत्रे । दोषहृते । शुभदाय । सख्ये । ह्रीदाय । भीदाय । रुचिकराय । विश्वाय । विश्वहिते रताय । प्रमादहृते । प्राप्तकारिणे । प्रद्युम्नाय । बलवत्तराय । साङ्गवेदसमायोक्त्रे । सर्वशास्त्रार्थवित्तिदाय । ब्रह्मचर्यान्तरायघ्नाय । प्रियकृते नमः ।। ७४०

ओं हितकृते नमः । पराय । चित्तशुद्धिप्रदाय । छिन्नाक्षचापल्याय । क्षमावहाय । इन्द्रियार्थरतिच्छेत्रे । विद्यैकव्यसनावहाय । आत्मानुकूल्यरुचिकृते । अखिलार्तिविनाशकाय । तितीर्षुहृत्त्वरावेदिने । गुरुसद्भक्तितेजनाय । गुरुसंबन्धघटकाय । गुरुविश्वासवर्धनाय । गुरूपासनसंधात्रे । गुरुप्रेमप्रवर्धनाय । आचार्याभिमतैर्योक्त्रे । पञ्चसंस्कृतिभावनाय । गुरूक्तवृत्तिनैश्चल्यसंधात्रे । अवहितस्थितये । आपन्नाखिलरक्षार्थाय नमः ।। ७६०

ओं आचार्यकमुपाश्रिताय नमः । शास्त्रपाणिप्रदानेन भवमग्नान् समुद्धरते । पाञ्चकालिकधर्मेषु नैश्चल्यं यतेप्रतिपादकाय । स्वदासाराधनाद्यर्थशुद्धद्रव्यप्रदायकाय । न्यासविद्याविनिर्वोढ्रे । न्यस्तात्मभररक्षकाय । स्वकैङ्कर्यैकरुचिदाय । स्वदास्यप्रेमवर्धनाय । आचार्यार्थाखिलद्रव्यसंभृत्यर्पणरोचकाय । आचार्यस्य स्वसच्छिष्योज्जीवनैकरुचिप्रदाय । आगत्य योजयते । दासहितैककृतिजागराय । ब्रह्मविद्यासमास्वादसुहिताय । कृतसंस्कृतये । सत्कारे विषधीदात्रे । तरुण्यां शवबुद्धिदाय । सभां व्यालीं प्रत्याययते । सर्वत्र समबुद्धिदाय । संभाविताशेषदोषहृते । पुनर्न्यासरोचकाय नमः ।। ७८०

ओं महाविश्वाससंधात्रे नमः । स्थैर्यदात्रे । मदापहाय । वादव्याख्यास्वसिद्धान्तरक्षाहेतुस्वमन्त्रदाय । स्वमन्त्रजपसंसिद्धि-

जङ्घालकवितोदयाय । अदुष्टगुणवत्काव्यबन्धव्यामुग्धचेतनाय । व्यङ्ग्यप्रधानरसवद्गद्यपद्यादिनिर्मितये । स्वभक्तस्तुतिसंतुष्टाय । भूयो भक्तिप्रदायकाय । सात्त्विकत्यागसंपन्नसत्कर्मकृदतिप्रियाय । निरन्तरानुस्मरणनिजदासैकदास्यकृते । निष्कामवत्सलाय । नैच्यभावनेषु विनिर्विशते । सर्वभूतभवद्भावं संपश्यत्सु सदास्थिताय । करणत्रयसारूप्यकल्याणवति सादराय । कदाकदेतिकैंकर्यकामिशोषितां भजते । परव्यूहादिनिर्दोषशुभाश्रयपरिग्रहाय । चन्द्रमण्डलमध्यस्थ-श्वेताम्भोरुहविष्टराय । ज्योत्स्नायमानाङ्गरुचिनिर्धूतान्तर्बहिस्तमसे । भाव्याय नमः ॥ ८००

ओं भद्रभावयित्रे नमः । पारिजातवनालयाय । क्षीराब्धिमध्य-मद्वीपपालकाय । प्रपितामहाय । निरन्तरनमोवाकशुद्धयाजिहृदाश्रयाय । मुक्तिदश्वेतमृद्रूपश्वेतद्वीपविभावनाय । गरुडाहारितश्वेतमृत्पूतयदु-भूधराय । भद्राश्ववर्षनिलयाय । भयहारिणे । शुभाश्रयाय । भद्रश्रीवत्सहाराढ्याय । पञ्चरात्रप्रवर्तकाय । भक्तात्मभावभवनाय । हार्दाय । अङ्गुष्ठप्रमाणवते । स्वदाससत्कृत्याकृत्ये तन्मित्रारिषु योजयते । प्राणानुत्क्रामयते । ऊरीकृतप्रारब्धलोपनाय । लघुशिक्षानिर्णुन्ना-शेषपापाय । त्रिस्थूणक्षोभतो भूतसूक्ष्मैः सूक्ष्मवपुस्सृजते नमः ॥ ८२०

ओं निरङ्कुशकृपापूराय नमः । नित्यकल्याणकारकाय । मूर्धन्यनाड्या स्वान्दासान् ब्रह्मरन्ध्रादुदश्वयते । उपासनपरान् सर्वान् प्रारब्धमनुभावयते । सर्वप्रारब्धदेहान्तेऽपि अन्तिमस्मरणं दिशते । प्रपेदुषां भेजुषां च यमदृष्टिमभावयते । दिव्यदेहप्रदाय । मोक्षमेयुषां सूर्यं द्वारयते । आतिवाहिकसत्कारान् अध्वन्यापाद्य मानयते । सर्वान् क्रतुभुजः शश्वत् प्राभृतानि प्रदापयते । दुरन्तमायाकान्तारं द्रुतं योगेन लंघयते । स्फायत्सुदर्शविविधवीथ्यन्तेनाध्वना नयते ।

सीमान्तसिन्धुविरजां योगेनोत्तारयते । वशिने । अमानवस्य देवस्य करं शिरसि धारयते । अनादिवासनां धून्वते । वैकुण्ठाख्या सलोकयते । अहेयमङ्गलोदारतनुदानात् सरूपयते । सूरिजुष्टसुखैकान्त-परमपदमापयते । अरं ण्यं अमृतांभोधी दर्शयते नमः ॥ ८४०

ओं श्रमनाशनाय नमः । दिव्योद्यानसरोवापीसरिन्मणिनगान् नयते । ऐरंमदामृतसरो गमयते । सूपबृंहणाय । अश्वत्थं सोमसवनं प्रापयते । विष्ठरश्रवसे । दिव्याप्सरस्समानीत ब्रह्मालङ्कारदायकाय । दिव्यवासोऽञ्जन क्षौममाल्यैः स्वान् बहु मानयते । स्वीयां अयोध्यां नगरीं सादरं संप्रवेशयते । दासान् दिव्यरसालोक गन्धांसलशरीरयते । स्वदासान् सूरिवर्गेण सस्नेहं बहुमानयते । सूरिसेवोदितानन्दनैच्यान् स्वानतिशाययते । स्वां नमो वीप्सां वाचयते । प्रह्वान् कृताञ्जलीन् कुर्वते । प्राकारगोपुरारामप्रासादेभ्यः प्रणामयते । इन्द्रप्रजापतिद्वार - पालसंमानमापयते । मालिकाश्वन्महाराजवीथीमध्यं निवासयते । श्रीवैकुण्ठपुरन्ध्रीभिः नानासत्कारकारकाय । दिव्यं विमानं गमयते । ब्रह्मकान्त्याऽभिपूरयते नमः ॥ ८६०

ओं महानन्दात्मकश्रीमन्मणिमण्डपमापयते । हृष्यत्कुमुदचण्डाद्यै विष्वक्सेनान्तिकं नयते । सेनेशचोदितास्थाननायकाय । हेतिनायकाय । दिव्यमास्थानं प्रापयते । वैनतेयं प्रणामयते । श्रीमत्सुन्दरसूरीन्द्रदिव्यपंक्तिं प्रणामयते । भास्वरासन पर्यङ्कप्रापणेन कृतार्थयते । पर्यङ्कविद्यासंसिद्ध सर्ववैभवसंगताय । स्वात्मानमेव श्रीकान्तं सादरं भूरि दर्शयते । शेषतैकरतिं शेषं शय्यात्मानं प्रणामयते । अनन्ताक्षिद्विसाहस्रसादरालोकपात्रयते । अकुमारयुवाकारं श्रीकान्तं संप्रणामयते । अलटानन्दतो हेतोः किलिकिञ्चितमञ्चयते । दासानत्युत्थितिमुहुःकृतिदृष्टिप्रसन्नहृते । श्रियं प्राप्तं स्वयं तातं जीवं पुत्रं

प्रहर्षयते। स्वसुखांभोधौ मज्जयते। स्वककीर्तिरुचिं दिशते। दयार्द्रापाङ्ग वलनाकृताह्लादैः कृतार्थयते। पर्यङ्कारोहणप्रह्वं लक्ष्म्या सममुपपादयते नमः ।। ८८०

ॐ कस्त्वमित्यनुयुञ्जानाय नमः । दासोऽस्मीत्युक्तिविस्मिताय । अपृथक्त्वप्रकारोऽस्मिवाचा स्वाश्रितवद्भवते । विदुषां तत्क्रतुनयात् हयास्यवपुषा भवते । वासुदेवात्मना भूयो भवते । वैकुण्ठनायकाय । जगन्मोहनमूर्तिमते। यथातथैव स्वरूपं प्रकाशयते। द्विमूर्ती प्रकाशयते। बहुमूर्तीः प्रकाशयते। स्वात्मनः प्रकाशयते। युगपत् सकलं साक्षात्स्वतः कर्तुं समर्थयते । कवीनां नित्यमादिशते । मुक्तानामादिमाय कवये । षडर्णमनुनिष्ठानां श्वेतद्वीपस्थितिं दिशते । द्वादशाक्षरनिष्ठानां सान्तानिकं लोकं दिशते। अष्टाक्षरैकनिष्ठानां कार्यं वैकुण्ठमर्पयते । शरणागतिनिष्ठानां साक्षाद्वैकुण्ठमर्पयते । स्वमन्त्रराजनिष्ठानां स्वस्मादतिशयं दिशते । श्रिया गाढोपगूढात्मने नमः ।। ९००

ॐ भूतधात्रीरुचिं दिशते नमः । नीलाविभूतिव्यामुग्धाय । महाश्वेताश्वमस्तकाय। त्र्यक्षाय। त्रिपुरसंहारिणे। रुद्राय। स्कन्दाय। विनायकाय । अजाय । विरिञ्चाय । द्रुहिणाय । व्याप्तमूर्तये । अमूर्तिकाय । असंगाय । अनन्यधीसंगविहंगाय । वैरिभङ्गदाय । स्वामिने। स्वस्मै। स्वेन संतुष्यते। शक्राय नमः ।। ९२०

ॐ सर्वाधिकस्यदाय नमः। स्वयंज्योतिषे। स्वयंवेद्याय। शूराय। शूरकुलोद्भवाय। वासवाय। वसुरण्याय। अग्नये। वासुदेवाय। सुहृदे। वसवे। भूताय। भाविने। भवते। भव्याय। विष्णुस्थानाय। सनातनाय। नित्यानुभावाय। नेदीयसे। दवीयसे नमः ।। ९४०

ओं दुर्विभावनाय नमः । सनत्कुमाराय । संधात्रे । सुगन्धये । सुखदर्शनाय । तीर्थाय । तितिक्षवे । तीर्थाङ्घ्रये । तीर्थस्वादुशुभाय । शुचये । वीर्यवद्दीधितये । तिग्मतेजसे । तीव्राय । अनामयाय । ईशाद्युपनिषद्वेद्याय । पञ्चोपनिषदात्मकाय । ईशे । अन्तःस्थाय । दूरस्थाय । कल्याणतमरूपवते नमः ॥ ९६०

ओं प्राणानां प्राणनाय नमः । पूर्णज्ञानैरपि सुसुदुर्ग्रहाय । नाचिकेतोपासनाच्र्याय । त्रिमात्रप्रणवोदिताय । भूतयोनये । सर्वज्ञाय । अक्षराय । अक्षरपरात्परराय । अकारादिपदज्ञेयव्यूहाय । तारार्थपूरुषाय । मनोमयाय । अमृताय । नन्दमयाय । दहररूपधृते । न्यासविद्यावेद्यरूपाय । आदित्यन्तर्हिरण्मयाय । इदन्द्राय । आत्मने । उद्गीथादिप्रतीकोपासनान्वयिने । मधुविद्योपासनीयाय नमः ॥ ९८०

ओं गायत्रीध्यानगोचराय नमः । दिव्यकौक्षेयसज्ज्योतिषे । शाण्डिल्योपास्तिवीक्षिताय । संवर्गविद्यावेद्यात्मने । परस्मै षोडशकलाय तस्मै । उपकोसलविद्येक्ष्याय । पञ्चाग्न्यात्मशरीरकाय । वैश्वानराय । सते । भूम्ने । जगत्कर्मणे । आदिपूरुषाय । मूर्तामूर्तब्रह्मणे । सर्वप्रेष्ठाय । अन्यप्रियताकराय । सर्वान्तराय । अपरोक्षाय । अन्तर्यामिणे । अमृतायानघाय । अहर्नामादित्यरूपाय नमः ॥ १०००

ओं अहंनामाक्षिसंश्रिताय नमः । सतुर्यगायत्र्यर्थाय । यथोपास्त्याप्यसद्वपुषे । चन्द्रादिसायुज्यपूर्वमोक्षदन्यासगोचराय । न्यासनाश्यानभ्युपेतप्रारब्धांशाय । महादयाय । अवताररहस्यादि-ज्ञानिप्रारब्धनाशनाय । स्वेन स्वार्थं परेणापि न्यासे कृते फलप्रदाय । असाहसाय । अनपायश्रिये । ससहायाय । श्रियैव सते । श्रीमन्नारायणाय । वासुदेवाय । विष्णवे । उत्तमाय नमः ॥ १०१६

श्रीमते हयग्रीवाय नमः ॥

। श्रीः ।

# हयग्रीवाष्टोत्तरशतनामस्तोत्रम्

हयग्रीवो महाविष्णुः केशवो मधुसूदनः ।
गोविन्दः पुण्डरीकाक्षो विष्णुर्विश्वंभरो हरिः ॥ १

आदित्यः सर्ववागीशः सर्वाधारः सनातनः ।
निराधारो निराकारो निरीशो निरुपद्रवः ॥ २

निरञ्जनो निष्कलङ्को नित्यतृप्तो निरामयः ।
चिदानन्दमयः साक्षी शरण्यः सर्वदायकः ॥ ३

श्रीमान् लोकत्रयाधीशः शिवः सारस्वतप्रदः ।
वेदोद्धर्ता वेदनिधिः वेदवेद्यः प्रबोधनः ॥ ४

पूर्णः पूरयिता पुण्यः पुण्यकीर्तिः परात्परः ।
परमात्मा परंज्योतिः परेशः पारगः परः ॥ ५

सर्ववेदात्मको विद्वान् वेदवेदान्तपारगः ।
सकलोपनिषद्वेद्यो निष्कलः सर्वशास्त्रकृत् ॥ ६

अक्षमालाज्ञानमुद्रायुक्तहस्तो वरप्रदः ।
पुराणपुरुषः श्रेष्ठः शरण्यः परमेश्वरः ॥ ७

शान्तो दान्तो जितक्रोधो जितामित्रो जगन्मयः ।
जन्ममृत्युहरो जीवो जयदो जाड्यनाशनः ॥ ८

जपप्रियो जपस्तुत्यो जापकप्रियकृत्प्रभुः ।
विमलो विश्वरूपश्च विश्वगोप्ता विधिस्तुतः ॥ ९

विधीन्द्रशिवसंस्तुत्यः शान्तिदः क्षान्तिपारगः ।
श्रेयःप्रदः श्रुतिमयः श्रेयसां पतिरीश्वरः ॥ १०

अच्युतोऽनन्तरूपश्च प्राणदः पृथिवीपतिः ।
अव्यक्तो व्यक्तरूपश्च सर्वसाक्षी तमोहरः ।। ११

अज्ञाननाशको ज्ञानी पूर्णचन्द्रसमप्रभः ।
ज्ञानदो वाक्पतिर्योगी योगीशः सर्वकामदः ।। १२

महायोगी महामौनी मौनीशः श्रेयसांपतिः ।
हंसः परमहंसश्च विश्वगोप्ता विराट् स्वराट् ।। १३

शुद्धस्फटिकसङ्काशो जटामण्डलसंयुतः ।
आदिमध्यान्तरहितः सर्ववागीश्वरेश्वरः ।। १४

नाम्नामष्टोत्तरशतं हयग्रीवस्य यः पठेत् ।
स सर्ववेदवेदाङ्गशास्त्राणां पारगः कविः ।। १५

इदमष्टोत्तरशतं नित्यं मूढोऽपि यः पठेत् ।
वाचस्पतिसमो बुद्ध्या सर्वविद्याविशारदः ।। १६

महदैश्वर्यमासाद्य कलत्राणि च पुत्रकान् ।
अवाप्य सकलान्भोगानन्ते हरिपुरं व्रजेत् ।। १७

(पराशर पुराणतः)

# हयग्रीवाष्टोत्तरशतनामावलिः

हयग्रीवाय नमः । महाविष्णवे । केशवाय । मधुसूदनाय । गोविन्दाय । पुण्डरीकाक्षाय । विष्णवे । विश्वंभराय । हरये । आदित्याय । सर्ववागीशाय । सर्वाधाराय । सनातनाय । निराधाराय । निराकाराय । निरीशाय । निरुपद्रवाय । निरञ्जनाय । निष्कलङ्काय । नित्यतृप्ताय नमः ।। २०

निरामयाय नमः । चिदानन्दमयाय । साक्षिणे । शरण्याय । सर्वदायकाय । श्रीमते । लोकत्रयाधीशाय । शिवाय । सारस्वतप्रदाय ।

वेदोद्धर्त्रे । वेदनिधये । वेदवेद्याय । प्रबोधनाय । पूर्णाय । पूरयित्रे । पुण्याय । पुण्यकीर्तये । परात्पराय । परमात्मने । परस्मै ज्योतिषे नमः ॥ ४०

परेशाय नमः । पारगाय । पराय । सर्ववेदात्मकाय । विदुषे । वेदवेदान्तपारगाय । सकलोपनिषद्वेद्याय । निष्कलाय । सर्वशास्त्रकृते । अक्षमालाज्ञानमुद्रायुक्तहस्ताय । वरप्रदाय । पुराणपुरुषाय । श्रेष्ठाय । शरण्याय । परमेश्वराय । शान्ताय । दान्ताय । जितक्रोधाय । जितामित्राय । जगन्मयाय नमः ॥ ६०

जन्ममृत्युहराय नमः । जीवाय । जयदाय । जाड्यनाशनाय । जपप्रियाय । जपस्तुत्याय । जापकप्रियकृते । प्रभवे । विमलाय । विश्वरूपाय । विश्वगोप्त्रे । विधिस्तुताय । विधीन्द्रशिवसंस्तुत्याय । शान्तिदाय । क्षान्तिपारगाय । श्रेयःप्रदाय । श्रुतिमयाय । श्रेयसां पतये । ईश्वराय । अच्युताय नमः ॥ ८०

अनन्तरूपाय नमः । प्राणदाय । पृथिवीपतये । अव्यक्ताय । व्यक्तरूपाय । सर्वसाक्षिणे । तमोहराय । अज्ञाननाशकाय । ज्ञानिने । पूर्णचन्द्रसमप्रभाय । ज्ञानदाय । वाक्पतये । योगिने । योगीशाय । सर्वकामदाय । महायोगिने । महामौनिने । मौनीशाय । श्रेयसांपत्यै । हंसाय नमः ॥ १००

परमहंसाय नमः । विश्वगोप्त्रे । विराजे । स्वराजे । शुद्धस्फटिकसङ्काशाय । जटामण्डलसंयुताय । आदिमध्यान्तरहिताय । सर्ववागीश्वरेश्वराय नमः ॥ १०८

॥श्रीः॥

# श्री धन्वन्तरिध्यानम्

शङ्खं चक्रमुपर्यधश्च करयोर्दिव्यौषधं दक्षिणे
वामेनान्यकरेण सम्भृतसुधाकुम्भं जलौकावलिम्।
बिभ्राणः करुणाकरः शुभकरः सर्वामयध्वंसकः
क्षिप्रं नो दुरितं छिनत्तु भगवान्धन्वन्तरिः पातु नः ॥

श्रीमान् कलयतु शश्वत् क्षेमं धन्वन्तरिः सतां देवः।
कामं सुरवरतत्यै कामितदानाय दुग्धवार्धिभवः॥ १ ॥

करधृतदिव्यसुधावरकलशः परिपूर्णषड्गुणः श्रीशः।
परिहृतभक्तक्लेशः सुरुचिरतरकान्तवरवेषः॥ २ ॥

हृतवति करधृतकलशे दितिसुतमुख्यैः प्रतिक्रियां तेषाम्।
व्यतनुत निर्जरतत्यै योषिद्रूपो विभज्य पीयूषम्॥ ३ ॥

विश्रुतविलसत्कीर्तिः भक्तानन्दप्रदानवरमूर्तिः।
निस्तुलकरुणाशक्तिः भात्येष श्रीहरिः स्वयं जगति॥ ४ ॥

आनतसज्जनपाता मौनिप्रवरार्तिजातसंहर्ता।
ज्ञानिप्रवरनिरन्तर गानार्हात्मीयनित्यसद्वृत्तः॥ ५ ॥

आयुर्वेदाब्धिसारं निखिलमुनिजनस्तोमभूत्यै विवृण्वन्
भूयः पद्मासनाद्यैरुरुतरवचसा संस्तुतस्सोऽवतान्नः ।
प्रेयान्क्षीराब्धिजायाः सुतरुमणिसुधेन्द्वात्मनैकोऽखिलेभ्यः
भक्तेभ्यो दातुमीष्टे भुवि शमिह गदापायदः संस्मृतो यः ॥ ६

क्षीराब्धेर्मथ्यमानादमृतमभिलषद्बुद्धिभिर्वै बुधौघैः
उत्तीर्णः पीतवासा घनरुचिररुचिर्विश्वसन्त्राणहेतोः ।
दोर्भिर्बिभ्रच्चतुर्भिर्जलभवमभयं चामृतं शस्त्रयन्त्रं
योऽसौ धन्वन्तरिर्नः सकलगदभयादादिदेवः सदाऽव्यात् ७

तरुणांबुदसुन्दरस्तदा त्वं ननु धन्वन्तरिरुत्थितोऽम्बुराशेः ।
अमृतं कलशे वहन्कराभ्यां अखिलार्तिं हर मारुतालयेश ॥ ८ ॥

पृष्ठे कूर्मतया चतुर्भुजतया दोर्मण्डले मन्दरं
रुध्वा क्षीरसमुद्रमोषधिभृतं निर्मथ्य निष्पादितैः ।
आनीतैरमृतैर्भिषक्तमतया योषित्तया पायितैः
देवानामजरामरत्वमकरोत् तस्मै नमो विष्णवे ॥ ९ ॥

क्षीराब्धेरुदगाः - धृतवानमृतघटं
आयुष्यं जगते वितरीतुं
श्रीसहज धन्वन्तरिरूप - जय जगदीश हरे ॥ १० ॥

# श्रीधन्वन्तर्यष्टोत्तरशतनामस्तोत्रम्

धन्वन्तरिः सुधापूर्णकलशाढ्यकरो हरिः ।
जरामृतित्रस्तदेवप्रार्थनासाधकः प्रभुः ॥ १ ॥

निर्विकल्पो निस्समानो मन्दस्मितमुखाम्बुजः ।
आञ्जनेयप्रापिताद्रिः पार्श्वस्थविनतासुतः ॥ २

निमग्नमन्दरधरः कूर्मरूपी बृहत्तनुः ।
नीलकुञ्चितकेशान्तः परमाद्भुतरूपधृत् ॥ ३ ॥

कटाक्षवीक्षणाश्वस्तवासुकिः सिंहविक्रमः ।
स्मर्तृहृद्रोगहरणो महाविष्णवंशसंभवः ॥ ४ ॥

प्रेक्षणीयोत्पलश्याम आयुर्वेदाधिदैवतम् ।
भेषजग्रहणानेहस्स्मरणीयपदाम्बुजः ॥ ५ ॥

नवयौवनसंपन्नः किरीटान्वितमस्तकः ।
नक्रकुण्डलसंशोभिश्रवणद्वयशष्कुलिः ॥ ६ ॥

दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽम्बुजेक्षणः ।
चतुर्भुजः शंखधरः चक्रहस्तो वरप्रदः ॥ ७ ॥

सुधापात्रोपरिलसदाम्रपत्रलसत्करः ।
शतपद्माढ्यहस्तश्च कस्तूरीतिलकाञ्चितः ॥ ८ ॥

सुकपोलस्सुनासश्च सुन्दरभ्रूलताञ्चितः ।
स्वङ्गुलीतलशोभाढ्यो गूढजत्रुर्महाहनुः ॥ ९ ॥

दिव्याङ्गदलसद्बाहुः केयूरपरिशोभितः ।
विचित्ररत्नखचितवलयद्वयशोभितः ॥ १० ॥

समोल्लसत्सुजातांसश्चाङ्गुलीयविभूषितः ।
सुधागन्धरसास्वादमिलद्भृङ्गमनोहरः ॥ ११ ॥

लक्ष्मीसमर्पितोत्फुल्लकञ्जमालालसद्गलः ।
लक्ष्मीशोभितवक्षस्को वनमालाविराजितः ॥ १२ ॥

नवरत्नमणीक्लृप्तहारशोभितकन्धरः ।
हीरनक्षत्रमालादिशोभारञ्जितदिङ्मुखः ॥ १३ ॥

विरजोऽम्बरसंवीतो विशालोराः पृथुश्रवाः ।
निम्ननाभिः सूक्ष्ममध्यः स्थूलजङ्घो निरञ्जनः ॥ १४ ॥

सुलक्षणपदाङ्गुष्ठः सर्वसामुद्रिकान्वितः ।
अलक्तकारक्तपादो मूर्तिमद्वार्धिपूजितः ॥ १५ ॥

सुधार्थान्योन्यसंयुध्यद्देवदैतेयसान्त्वनः ।
कोटिमन्मथसङ्काशः सर्वावयवसुन्दरः ॥ १६ ॥

अमृतास्वादनोद्युक्त देवसङ्घपरिष्टुतः ।
पुष्पवर्षणसंयुक्तगन्धर्वकुलसेवितः ॥ १७ ॥

शङ्खतूर्यमृदङ्गादिसुवादित्राप्सरोवृतः ।
विष्वक्सेनादियुक्पार्श्वः सनकादिमुनिस्तुतः ॥ १८ ॥

साश्चर्यसस्मितचतुर्मुखनेत्रसमीक्षितः ।
साशङ्कसंभ्रमदितिदनुवंश्यसमीडितः ॥ १९ ॥

नमनोन्मुखदेवादिमौळिरत्नलसत्पदः ।
दिव्यतेजःपुञ्जरूपः सर्वदेवहितोत्सुकः ॥ २० ॥

स्वनिर्गमक्षुब्धदुग्धवाराशिर्दुन्दुभिस्वनः ।
गन्धर्वगीतापदानश्रवणोत्कमहामनाः ॥ २१ ॥

निष्किञ्चनजनप्रीतो भवसंप्राप्तरोगहृत् ।
अन्तर्हितसुधापात्रो महात्मा मायिकाग्रणीः ॥ २२ ॥

क्षणार्धमोहिनीरूपः सर्वस्त्रीशुभलक्षणः ।
मदमत्तेभगमनः सर्वलोकविमोहनः ॥ २३ ॥

स्रंसन्नीवीग्रन्थिबन्धासक्तदिव्यकराङ्गुळिः ।
रत्नदर्वीलसद्धस्तो देवदैत्यविभागकृत् ॥ २४ ॥

संख्यातदेवतान्यासो दैत्यदानववञ्चकः ।
देवामृतप्रदाता च परिवेषणहृष्टधीः ॥ २५ ॥

उन्मुखोन्मुखदैत्येन्द्रदन्तपङ्क्तिविभाजकः ।
पुष्पवत्सुविनिर्दिष्टराहुरक्षःशिरोहरः ॥ २६ ॥

राहुकेतुग्रहस्थानपश्चाद्गतिविधायकः ।
अमृतालाभनिर्विण्णयुध्यद्देवारिसूदनः ॥ २७ ॥

गरुत्मद्वाहनारूढः सर्वेशस्तोत्रसंयुतः ।
स्वस्वाधिकारसन्तुष्टशक्रवह्न्यादिपूजितः ॥ २८ ॥

मोहिनीदर्शनायातस्थाणुचित्तविमोहकः ।
शचीस्वाहादिदिक्पालपत्नीमण्डलसन्नुतः ॥ २९ ॥

वेदान्तवेद्यमहिमा सर्वलोकैकरक्षकः ।
राजराजप्रपूज्याङ्घ्रिः चिन्तितार्थप्रदायकः ॥ ३० ॥

धन्वन्तरेर्भगवतो नाम्नामष्टोत्तरं शतम् ।
यः पठेत्सततं भक्त्या नीरोगस्सुखभाग्भवेत् ॥ ३१ ॥

—(बृहद्ब्रह्मानन्दोपनिषदः)

# श्रीधन्वन्तर्यष्टोत्तरशतनामावलिः

ओं धन्वन्तरये नमः । सुधापूर्णकलशाढ्यकराय । हरये । जरामृतित्रस्तदेवप्रार्थनासाधकाय । प्रभवे । निर्विकल्पाय । निस्समानाय। मन्दस्मितमुखाम्बुजाय । आञ्जनेयप्रापिताद्रये । पार्श्वस्थविनतासुताय । निमग्नमन्दरधराय । कूर्मरूपिणे । बृहत्तनवे । नीलकुञ्चितकेशान्ताय । परमाद्भुतरूपधृते । कटाक्षवीक्षणाश्वस्तवासुकये । सिंहविक्रमाय । स्मर्तृहृद्रोगहरणाय । महाविष्ण्वंशसंभवाय । प्रेक्षणीयोत्पलश्यामाय नमः ।। २०

आयुर्वेदाधिदैवताय नमः । भेषजग्रहणानेहस्स्मरणीयपदाम्बुजाय । नवयौवनसंपन्नाय । किरीटान्वितमस्तकाय । नक्रकुण्डलसंशोभिश्रवणद्वयशष्कुलये । दीर्घपीवरदोर्दण्डाय । कम्बुग्रीवाय । अम्बुजेक्षणाय । चतुर्भुजाय । शंखधराय । चक्रहस्ताय । वरप्रदाय । सुधापात्रोपरिलसदाम्रपत्रलसत्कराय । शतपद्माढ्यहस्ताय । कस्तूरीतिलकाञ्चिताय। सुकपोलाय। सुनासाय। सुन्दरभ्रूलताञ्चिताय। स्वङ्गुलीतलशोभाढ्याय । गूढजत्रवे नमः ।। ४०

महाहनवे नमः । दिव्याङ्गदलसद्बाहवे । केयूरपरिशोभिताय । विचित्ररत्नखचितवलयद्वयशोभिताय । समोल्लसत्सुजातांसाय । अङ्गुलीयविभूषिताय । सुधागन्धरसास्वादमिलद्भृङ्गमनोहराय । लक्ष्मीसमर्पितोत्फुल्लकञ्जमालालसद्गलाय । लक्ष्मीशोभितवक्षस्काय । वनमालाविराजिताय । नवरत्नमणीक्लृप्तहारशोभितकन्धराय । हीरनक्षत्रमालादिशोभारञ्जितदिङ्मुखाय । विरजोऽम्बरसंवीताय । विशालोरसे । पृथुश्रवसे । निम्ननाभये । सूक्ष्ममध्याय । स्थूलजङ्घाय । निरञ्जनाय । सुलक्षणपदाङ्गुष्ठाय नमः ।। ६०

सर्वसामुद्रिकान्विताय नमः । अलक्तकारक्तपादाय । मूर्तिमद्वार्धिपूजिताय । सुधार्थान्योन्यसंयुध्यद्देवदैतेयसान्त्वनाय । कोटिमन्मथसङ्काशाय । सर्वावयवसुन्दराय । अमृतास्वादनोद्युक्तदेव-सङ्घपरिष्टुताय । पुष्पवर्षणसंयुक्तगन्धर्वकुलसेविताय । शङ्खतूर्य-मृदङ्गादिसुवादित्राप्सरोवृताय । विष्वक्सेनादियुक्पार्श्वाय । सनकादि-मुनिस्तुताय । साश्चर्यसस्मितचतुर्मुखनेत्रसमीक्षिताय । साशङ्कसंभ्र-मदितिदनुवंश्यसमीडिताय । नमनोन्मुखदेवादिमौलिरत्नलसत्पदाय । दिव्यतेजःपुञ्जरूपाय । सर्वदेवहितोत्सुकाय । स्वनिर्गमक्षुब्ध-दुग्धवाराशये । दुन्दुभिस्वनाय । गन्धर्वगीतापदानश्रवणोत्कमहामनसे । निष्किञ्चनजनप्रीताय नमः ॥ ८०

भवसंप्राप्तरोगहृते नमः । अन्तर्हितसुधापात्राय । महात्मने । मायिकाग्रण्यै । क्षणार्धमोहिनीरूपाय । सर्वस्त्रीशुभलक्षणाय । मदमत्तेभगमनाय । सर्वलोकविमोहनाय । स्रंसन्नीवीग्रन्थिबन्धा-सक्तदिव्यकराङ्गुलये । रत्नदर्वीलसद्धस्ताय । देवदैत्यविभागकृते । संख्यातदेवतान्यासाय । दैत्यदानववञ्चकाय । देवामृतप्रदात्रे । परिवेषणहृष्टधिये । उन्मुखोन्मुखदैत्येन्द्रदन्तपंक्तिविभाजकाय । पुष्पवत्सुविनिर्दिष्टराहुरक्षःशिरोहराय । राहुकेतुग्रहस्थानपश्चाद्ग-तिविधायकाय । अमृतालाभनिर्विण्णयुध्यद्देवारिसूदनाय । गरुत्म-द्वाहनारूढाय नमः ॥ १००

सर्वेशस्तोत्रसंयुताय नमः। स्वस्वाधिकारसंतुष्टशक्रवह्न्या-दिपूजिताय । मोहिनीदर्शनायातस्थाणुच्चित्तविमोहकाय । शचीस्वाहा-दिदिक्पालपत्नीमण्डलसन्नुताय । वेदान्तवेद्यमहिम्ने । सर्वलोकैक-रक्षकाय । राजराजप्रपूज्याङ्घ्रये । चिन्तितार्थप्रदायकाय । १०८

## धकारादि श्रीधन्वन्तर्यष्टोत्तरशतनामावलिः

ओं धन्वन्तरये नमः। धर्मध्वजाय। धरावल्लभाय। धिषणवन्द्याय। धीराय । धीवरेण्याय । धार्मिकाय । धर्मनियामकाय । धर्मरूपाय । धीरोदात्तगुणोज्ज्वलाय। धर्मविदे। धराधरधारिणे। धात्रे। धातृगर्भविदे। धरित्रीहिताय । धराधररूपाय । धार्मिकप्रियाय । धार्मिकवन्द्याय । धार्मिकजनध्याताय। धनदादिसमर्चिताय नमः ॥ २०

धनञ्जयरूपाय नमः । धनञ्जयवन्द्याय । धनञ्जयसारथये । धिषणरूपाय। धिषणपूज्याय। धिषणाग्रजसेव्याय। धिषणारूपाय। धिषणादायकाय । धार्मिकशिखामणये । धीप्रदाय । धीरूपाय । ध्यानगम्याय । ध्यानदात्रे । ध्यातृध्येयपदांबुजाय । धीरसंपूज्याय । धीरसमर्चिताय । धीरशिखामणये । धुरन्धराय । धूपधूपितविग्रहाय । धूपदीपादिपूजाप्रियाय नमः ॥ ४०

धूमादिमार्गदर्शकाय नमः। धृष्टाय। धृष्टद्युम्नाय। धृष्टद्युम्नस्तुताय। धेनुकासुरसूदनाय । धेनुव्रजरक्षकाय । धेनुकासुरवरप्रदाय । धैर्याय । धैर्यवतामग्रण्ये। धैर्यवतां धैर्यदाय। धैर्यप्रदायकाय। धोग्ध्रे। धौम्याय। धौम्येडितपदाय । धौम्यादिमुनिस्तुताय । धौम्यवरदाय । धर्मसेतवे । धर्ममार्गप्रवर्तकाय। धर्ममार्गविघ्नकृत्सूदनाय। धर्मराजाय नमः ॥ ६०

धर्ममार्गपरैकवन्द्याय नमः। धामत्रयमन्दिराय। धनुर्वातादिरोगघ्नाय । धुतसर्वाघबृन्दाय । धारणारूपाय । धारणामार्गदर्शकाय । ध्यानमार्गतत्पराय । ध्यानमार्गैकलभ्याय । ध्यानमात्रसुलभाय । ध्यातृपापहराय । ध्यातृतापत्रयहराय । धनधान्यप्रदाय । धनधान्यमत्तजनसूदनाय । धूमकेतुवरप्रदाय । धर्माध्यक्षाय । धेनुरक्षाधुरीणाय । धरणीरक्षणधुरीणाय । धरणीभारापहारकाय । धीरसमर्चिताय। धर्मवृद्धिकर्त्रे नमः ॥ ८०

धर्मगोप्त्रे नमः । धर्मकर्त्रे । धर्मबन्धवे । धर्महेतवे । धार्मिकव्रजरक्षाधुरीणाय । धनञ्जयादिवरप्रदाय । धनञ्जयसेवालुप्टाय । धनञ्जयसाह्यकृते । धनञ्जयस्तोत्रपात्राय । धनञ्जयगर्वहर्त्रे । धनञ्जयस्तुतिहर्षिताय । धनञ्जयवियोगखिन्नाय । धनञ्जय-गीतोपदेशकृते । धर्माधर्मविचारपरायणाय । धर्मसाक्षिणे । धर्मनियामकाय । धर्मधुरन्धराय । धनद्दसजनदूरगाय । धर्मपालकाय । धर्ममार्गोपदेशकृद्वन्ध्याय । १००

धर्मजनवन्द्याय । धर्मरूपविदुरवन्द्याय । धर्मतनयस्तुत्याय । धर्मतनयस्तोत्रपात्राय । धर्मतनयसंसेव्याय । धर्मतनयनमान्याय । धारामृताहस्ताय । धन्वन्तरये । १०८

---

योऽर्थाय विष्णुरुदधेरुदभूत्सुराणां
नानाविधामयविनाशविधानविज्ञः ।
पीयूषयूषपरिपूर्णघटं गृहीत्वा
धन्वन्तरिः सुखकरोऽस्तु करोनविंशः ।

चतुर्विंशत्यवतारस्तोत्रतः ।

धन्वन्तरिश्च भगवान्स्वयमेव कीर्तिः
नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवावरुन्ध
आयुश्च वेदमनुशास्त्यवतीर्य लोके ॥

श्रीमद्भागवततः

॥ श्रीः ॥

# श्रीलक्ष्मीनृसिंहसहस्रनामस्तोत्रम्

मार्कण्डेय उवाच-

एवं युद्धमभूद्घोरं रौद्रं दैत्यबलैस्सह ।
नृसिंहस्यांगसम्भूतैर्नारसिंहैरनेकशः ॥ १

दैत्यकोटिर्हतास्तत्र केचिद्भीताः पलायिताः ।
तं दृष्ट्वातीव संक्रुद्धो हिरण्यकशिपुस्स्वयम् ॥ २

भूतपूर्वैरमृत्युर्मे इति ब्रह्मवरोद्धतः ।
ववर्ष शरवर्षेण नारसिंहे भृशं बली ॥ ३

द्वन्द्वयुद्धमभूदुग्रं दिव्यवर्षसहस्रकम् ।
दैत्येन्द्रे साहसं दृष्ट्वा देवाश्चेन्द्रपुरोगमाः ॥ ४

श्रेयः कस्य भवेदत्र इति चिन्तापरा भवन् ।
तदा क्रुद्धो नृसिंहस्तु दैत्येन्द्रप्रहितान्यपि ॥ ५

विष्णुचक्रं महाचक्रं कालचक्रं तु वैष्णवम् ।
रौद्रं पाशुपतं ब्राह्मं कौबेरं कुलिशासनम् ॥ ६

आग्नेयं वारुणं सौम्यं मोहनं सौरपार्वतम् ।
भार्गवादि बहून्यस्त्राण्यभक्षयत कोपनः ॥ ७

सन्ध्याकाले सभाद्वारे स्वाङ्के निक्षिप्य भैरवः ।
ततः खड्गधरं दैत्यं जग्राह नरकेसरी ॥८

हिरण्यकशिपोर्वक्षो विदार्यातीव रोषितः ।
उद्धृत्य चान्त्रमालानि नखैर्वज्रसमप्रभैः ॥ ९

मेने कृतार्थमात्मानं सर्वतः पर्यवैक्षत ।

हर्षिता देवतास्सर्वाः पुष्पवृष्टिमवाकिरन् ॥ १०

देवदुंदुभयो नेदुर्विमलाश्च दिशोऽभवन् ।
नरसिंहमतीवोग्रं विकीर्णवदनं भृशम् ॥ ११

लेलिहानं च गर्जन्तं कालानलसमप्रभम् ।
अतिरौद्रं महाकायं महादंष्ट्रं महारुतम् ॥ १२

महासिंहं महारूपं दृष्ट्वा संक्षुभितं जगत् ।
सर्वदेवगणैस्सार्धं तत्रागत्य पितामहः ॥ १३

आगन्तुकैर्भूतपूर्वैर्वर्तमानैरनुत्तमैः ।
गुणैर्नामसहस्रेण तुष्टाव श्रुतिसम्मतैः ॥ १४

ओं नमः श्रीमदिव्यलक्ष्मीनृसिंहसहस्रनामस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः, श्रीलक्ष्मीनृसिंहो देवता, अनुष्टुप्छन्दः, श्रीनृसिंहः परमात्मा बीजं, लक्ष्मीर्माया शक्तिः, जीवो बीजं, बुद्धिः शक्तिः, उदानवायुः बीजं, सरस्वती शक्तिः, व्यञ्जनानि बीजानि, स्वराः शक्तयः, ओं ह्रीं क्ष्रौंइति बीजानि, ओं श्रीं अं आं इति शक्तयः, विकीर्णनखदंष्ट्रायुधायेति कीलकं, अकारादिति बोधकं, श्रीलक्ष्मीनृसिंहप्रसादसिद्ध्यर्थे श्रीलक्ष्मी-नृसिंहसहस्रनामस्तोत्रमन्त्रजपे विनियोगः -

ओं श्रीलक्ष्मीनृसिंहाय नमः अङ्गुष्ठाभ्यां नमः । ओं वज्रनखाय नमः, तर्जनीभ्यां नमः । ओं महारुद्राय नमः, मध्यमाभ्यां नमः । ओं सर्वतोमुखाय नमः, अनामिकाभ्यां नमः । ओं विकटास्याय नमः, कनिष्ठिकाभ्यां नमः । ओं वीराय नमः, करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादिन्यासः । दिग्बन्धः -

ओं ऐन्द्रीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा ।

ओं आग्नेयीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं याम्यां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं नैर्ऋतिं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं वारुणीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं वायवीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं कौबेरीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं ऐशानीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं ऊर्ध्वां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं अधस्ताद्दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

ओं अन्तरिक्षां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा।

अथ-ध्यानम्-

सत्यज्ञानसुखस्वरूपममलं क्षीराब्धिमध्ये स्थितं
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम्।
त्र्यक्षं चक्रपिनाकसाभयकरान्बिभ्राणमर्कच्छविं
छत्रीभूतफणीन्द्रमिन्दुधवळं लक्ष्मीनृसिंहं भजे॥ १

उपास्महे नृसिंहाख्यं ब्रह्म वेदान्तगोचरम्।
भूयोलालितसंसारच्छेदहेतुं जगद्गुरुम्॥ २

ब्रह्मोवाच

ओं ह्रीं श्रीं ऐं क्ष्रौं

ओं नमो नारसिंहाय वज्रदंष्ट्राय वज्रिणे।
वज्रदेहाय वज्राय नमो वज्रनखाय च॥ १

वासुदेवाय वन्द्याय वरदाय वरात्मने ।
वरदाभयहस्ताय वराय वररूपिणे ॥ २

वरेण्याय वरिष्ठाय श्रीवराय नमो नमः ।
प्रह्लादवरदायैव प्रत्यक्षवरदाय च ॥ ३

परात्परपरेशाय पवित्राय पिनाकिने ।
पावनाय प्रसन्नाय पाशिने पापहारिणे ॥ ४

पुरुष्टुताय पुण्याय पुरुहूताय ते नमः ।
तत्पुरुषाय तथ्याय पुराणपुरुषाय च ॥ ५

पुरोधसे पूर्वजाय पुष्कराक्षाय ते नमः ।
पुष्पहासाय हासाय महाहासाय शार्ङ्गिणे ॥ ६

सिंहाय सिंहराजाय जगद्वश्याय ते नमः ।
अट्टहासाय रोषाय जलवासाय ते नमः ॥ ७

भूतावासाय भासाय श्रीनिवासाय खड्गिने ।
खड्गजिह्वाय सिंहाय खड्गवासाय ते नमः ॥ ८

नमो मूलाधिवासाय धर्मवासाय धन्विने ।
धनञ्जयाय धन्याय नमो मृत्युंजयाय च ॥ ९

शुभञ्जयाय सूत्राय नमश्शत्रुञ्जयाय च ।
निरञ्जनाय नीराय निर्गुणाय गुणाय च ॥ १०

निष्प्रपञ्चाय निर्वाणपदाय निबिडाय च ।
निरालम्बाय नीलाय निष्कलाय कलाय च ॥ ११

निमेषाय निबन्धाय निमेषगमनाय च ।
निर्द्वंद्वाय निराशाय निश्चयाय निराय च ॥ १२

निर्मलाय निबन्धाय निर्मोहाय निराकृते।
नमो नित्याय सत्याय सत्कर्मनिरताय च ॥ १३

सत्यध्वजाय मुंजाय मुंजकेशाय केशिने।
हरीशाय च शेषाय गुडाकेशाय वै नमः ॥ १४

सुकेशायोर्ध्वकेशाय केशिसंहारकाय च।
जलेशाय स्थलेशाय पद्मेशायोग्ररूपिणे ॥ १५

कुशेशयाय कूलाय केशवाय नमो नमः।
सूक्तिकर्णाय सूक्ताय रक्तजिह्वाय रागिणे ॥ १६

दीप्तरूपाय दीप्ताय प्रदीप्ताय प्रलोभिने।
प्रच्छिन्नाय प्रबोधाय प्रभवे विभवे नमः ॥ १७

प्रभञ्जनाय पान्थाय प्रमायाप्रमिताय च।
प्रकाशाय प्रतापाय प्रज्वालायोज्ज्वलाय च ॥ १८

ज्वालामालास्वरूपाय ज्वलज्जिह्वाय ज्वालिने।
महोज्ज्वलाय कालाय कालमूर्तिधराय च ॥ १९

कालांतकाय कल्पाय कलनाय कृते नमः।
कालचक्राय शक्राय वषट्चक्राय चक्रिणे ॥ २०

अक्रूराय कृतांताय विक्रमाय क्रमाय च।
कृत्तिने कृत्तिवासाय कृतघ्नाय कृतात्मने ॥ २१

संक्रमाय च क्रुद्धाय क्रांतलोकत्रयाय च।
अरूपाय स्वरूपाय हरये परमात्मने ॥ २२

अजयायादिदेवाय अक्षयाय क्षयाय च।
अघोराय सुघोराय घोरघोरतराय च ॥ २३

नमोऽस्त्वघोरवीर्याय लसद्घोराय ते नमः ।
घोराध्यक्षाय दक्षाय दक्षिणार्याय शम्भवे ।। २४

अमोघाय गुणौघाय अनघायाघहारिणे ।
मेघनादाय नादाय तुभ्यं मेधात्मने नमः ।। २५

मेघवाहनरूपाय मेघश्यामाय मालिने ।
व्यालयज्ञोपवीताय व्याघ्रदेहाय वै नमः ।। २६

व्याघ्रपादाय च व्याघ्रकर्मिणे व्यापकाय च ।
विकटास्याय वीराय विष्टरश्रवसे नमः ।। २७

विकीर्णनखदंष्ट्राय नखदंष्ट्रायुधाय च ।
विष्वक्सेनाय सेनाय विह्वलाय बलाय च ।। २८

विरूपाक्षाय वीराय विशेषाक्षाय साक्षिणे ।
वीतशोकाय विस्तीर्णवदनाय नमो नमः ।। २९

विधानाय विधेयाय विजयाय जयाय च ।
विबुधाय विभावाय नमो विश्वम्भराय च ।। ३०

वीतरागाय विप्राय विटङ्कनयनाय च ।
विपुलाय विनीताय विश्वयोने नमो नमः ।। ३१

चिदम्बराय वित्ताय विश्रुताय वियोनये ।
विह्वलाय विकल्पाय कल्पातीताय शिल्पिने ।। ३२

कल्पनाय स्वरूपाय फणितल्पाय वै नमः ।
तटित्प्रभाय तार्याय तरुणाय तरस्विने ।। ३३

तपनाय तरक्षाय तापत्रयहराय च ।
तारकाय तमोघ्नाय तत्त्वाय च तपस्विने ।। ३४

तक्षकाय तनुत्राय तटिने तरलाय च ।
शतरूपाय शान्ताय शतधाराय ते नमः ॥ ३५

शतपत्राय तार्क्ष्याय स्थितये शतमूर्तये ।
शतक्रतुस्वरूपाय शाश्वताय शतात्मने ॥ ३६

नमस्सहस्रशिरसे सहस्रवदनाय च ।
सहस्राक्षाय देवाय दिशाश्रोत्राय ते नमः ॥ ३७

नमः सहस्रजिह्वाय महाजिह्वाय ते नमः ।
सहस्रनामधेयाय सहस्राक्षिधराय च ॥ ३८

सहस्रबाहवे तुभ्यं सहस्रचरणाय च ।
सहस्रार्कप्रकाशाय सहस्रायुधधारिणे ॥ ३९

नमः स्थूलाय सूक्ष्माय सुसूक्ष्माय नमो नमः ।
सुक्षुण्णाय सुभिक्षाय सुराध्यक्षाय शौरिणे ॥ ४०

धर्माध्यक्षाय धर्माय लोकाध्यक्षाय वै नमः ।
प्रजाध्यक्षाय शिक्षाय विपक्षक्षयमूर्तये ॥ ४१

कालाध्यक्षाय तीक्ष्णाय मूलाध्यक्षाय ते नमः ।
अधोक्षजाय मित्राय सुमित्रवरुणाय च ॥ ४२

शत्रुघ्नाय अविघ्नाय विघ्नकोटिहराय च ।
रक्षोघ्नाय तमोघ्नाय भूतघ्नाय नमो नमः ॥ ४३

भूतपालाय भूताय भूतवासाय भूतिने ।
भूतवेताळघाताय भूताधिपतये नमः ॥ ४४

भूतग्रहविनाशाय भूतसंयम ते नमः ।
महाभूताय भृगवे सर्वभूतात्मने नमः ॥ ४५

सर्वारिष्टविनाशाय सर्वसम्पत्कराय च ।
सर्वाधाराय शर्वाय सर्वार्तिहरये नमः ॥ ४६

सर्वदुःखप्रशान्ताय सर्वसौभाग्यदायिने ।
सर्वज्ञायाप्यनन्ताय सर्वशक्तिधराय च ॥ ४७

सर्वैश्वर्यप्रदात्रे च सर्वकार्यविधायिने ।
सर्वज्वरविनाशाय सर्वरोगापहारिणे ॥ ४८

सर्वाभिचारहन्त्रे च सर्वैश्वर्यविधायिने ।
पिङ्गाक्षायैकशृङ्गाय द्विशृङ्गाय मरीचये ॥ ४९

बहुशृङ्गाय लिङ्गाय महाशृङ्गाय ते नमः ।
माङ्गळ्याय मनोज्ञाय मन्तव्याय महात्मने ॥ ५०

महादेवाय देवाय मातुलिङ्गधराय च ।
महामायाप्रसूताय प्रस्तुताय च मायिने ॥ ५१

अनन्तानन्तरूपाय मायिने जलशायिने ।
महोदराय मन्दाय मददाय मदाय च ॥ ५२

मधुकैटभहन्त्रे च माधवाय मुरारये ।
महावीर्याय धैर्याय चित्रवीर्याय ते नमः ॥ ५३

चित्रकूर्माय चित्राय नमस्ते चित्रभानवे ।
मायातीताय मायाय महावीराय ते नमः ॥ ५४

महातेजाय बीजाय तेजोधाम्ने च बीजिने ।
तेजोमयनृसिंहाय नमस्ते चित्रभानवे ॥५५

महादंष्ट्राय तुष्टाय नमः पुष्टिकराय च ।
शिपिविष्टाय हृष्टाय पुष्टाय परमेष्ठिने ॥ ५६

विशिष्टाय च शिष्टाय गरिष्ठायेष्टदायिने।
नमो ज्येष्ठाय श्रेष्ठाय तुष्टायामिततेजसे ॥ ५७

अष्टाङ्गन्यस्तरूपाय सर्वदुष्टान्तकाय च।
वैकुण्ठाय विकुण्ठाय केशिकण्ठाय ते नमः ॥ ५८

कण्ठीरवाय लुण्ठाय निश्शठाय हठाय च।
सत्वोद्रिक्ताय रुद्राय ऋग्यजुस्सामगाय च ॥ ५९

ऋतुध्वजाय वज्राय मन्त्रराजाय मन्त्रिणे।
त्रिनेत्राय त्रिवर्गाय त्रिधाम्ने च त्रिशूलिने ॥ ६०

त्रिकालज्ञानरूपाय त्रिदेहाय त्रिधात्मने।
नमस्त्रिमूर्तिविद्याय त्रितत्वज्ञानिने नमः ॥ ६१

अक्षोभ्यायानिरुद्धाय अप्रमेयाय भानवे।
अमृताय अनन्ताय अमितायामितौजसे ॥ ६२

अपमृत्युविनाशाय अपस्मारविघातिने।
अन्नदायान्नरूपाय अन्नायान्नभुजे नमः ॥ ६३

नाद्याय निरवद्याय विद्यायाद्भुतकर्मणे।
सद्योजाताय सङ्घाय वैद्युताय नमो नमः ॥ ६४

अध्वातीताय सत्वाय वागतीताय वाग्मिने।
वागीश्वराय गोपाय गोहिताय गवाम्पते ॥ ६५

गन्धर्वाय गभीराय गर्जितायोर्जिताय च।
पर्जन्याय प्रबुद्धाय प्रधानपुरुषाय च ॥ ६६

पद्माभाय सुनाभाय पद्मनाभाय मानिने।
पद्मनेत्राय पद्माय पद्मायाः पतये नमः ॥ ६७

पद्मोदराय पूताय पद्मकल्पोद्भवाय च।
नमो हृत्पद्मवासाय भूपद्मोद्धरणाय च॥ ६८

शब्दब्रह्मस्वरूपाय ब्रह्मरूपधराय च।
ब्रह्मणे ब्रह्मरूपाय पद्मनेत्राय ते नमः॥ ६९

ब्रह्मादये ब्राह्मणाय ब्रह्म ब्रह्मात्मने नमः।
सुब्रह्मण्याय देवाय ब्रह्मण्याय त्रिवेदिने॥ ७०

परब्रह्मस्वरूपाय पञ्चब्रह्मात्मने नमः।
नमस्ते ब्रह्मशिरसे तथाऽश्वशिरसे नमः॥ ७१

अथर्वशिरसे नित्यमशनिप्रमिताय च।
नमस्ते तीक्ष्णदंष्ट्राय लोलाय ललिताय च॥ ७२

लावण्याय लवित्राय नमस्ते भासकाय च।
लक्षणज्ञाय लक्षाय लक्षणाय नमो नमः॥ ७३

लसद्दीप्ताय लिप्ताय विष्णवे प्रभविष्णवे।
वृष्णिमूलाय कृष्णाय श्रीमहाविष्णवे नमः॥ ७४

पश्यामि त्वां महासिंहं हारिणं वनमालिनम्।
किरीटिनं कुण्डलिनं सर्वाङ्गं सर्वतोमुखम्॥ ७५

सर्वतः पाणिपादोरः सर्वतोऽक्षिशिरोमुखम्।
सर्वेश्वरं सदातुष्टं समर्थं समरप्रियम्॥ ७६

बहुयोजनविस्तीर्णं बहुयोजनमायतम्।
बहुयोजनहस्ताङ्घ्रिं बहुयोजननासिकम्॥ ७७

महारूपं महावक्त्रं महादंष्ट्रं महाभुजम्।
महानादं महारौद्रं महाकायं महाबलम्॥ ७८

आनाभेर्ब्रह्मणो रूपमागलाद्वैष्णवं तथा ।
आशीर्षाद्रुद्रमीशानं तदग्रे सर्वतश्शिवम् ।। ७९

नमोऽस्तु नारायण नारसिंह नमोऽस्तु नारायण वीरसिंह ।
नमोऽस्तु नारायण क्रूरसिंह नमोऽस्तु नारायण दिव्यसिंह ।। ८०

नमोऽस्तु नारायण व्याघ्रसिंह नमोऽस्तु नारायण पुच्छसिंह ।
नमोऽस्तु नारायण पूर्णसिंह नमोऽस्तु नारायण रौद्रसिंह ।। ८१

नमो नमो भीषण भद्रसिंह नमो नमो विह्वलनेत्रसिंह ।
नमो नमो बृंहितभूतसिंह नमो नमो निर्मलचित्रसिंह ।। ८२

नमो नमो निर्जितकालसिंह नमो नमः कल्पितकल्पसिंह ।
नमो नमः कामद कामसिंह नमो नमस्ते भुवनैकसिंह ।। ८३

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ।। ८४

अमी हित्वा सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा मुनयस्सिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिःपुष्कलाभिः।।

रुद्रादित्या वसवो ये च साध्या विश्वे देवा मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ति त्वां विस्मिताश्चैव सर्वे ।। ८६

लेलिह्यसे ग्रसमानस्समन्ताल्लोकान् समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ।। ८७

भविष्णुस्त्वं सहिष्णुस्त्वं भ्राजिष्णुर्जिष्णुरेव च ।
पृथिवीमन्तरिक्षं त्वं पर्वतारण्यमेव च ।। ८८

कलाकाष्ठाविलिप्तस्त्वं मुहूर्तप्रहरादिकम् ।
अहोरात्रं त्रिसन्ध्या च पक्षमासर्तुवत्सराः ।। ८९

युगादिर्युगभेदस्त्वं संयुगे युगसन्धयः ।
नित्यं नैमित्तिकं दैनं महाप्रळयमेव च ॥ ९०

करणं कारणं कर्ता भर्ता हर्ता त्वमीश्वरः ।
सत्कर्ता सत्कृतिर्गोप्ता सच्चिदानन्दविग्रहः ॥ ९१

प्राणस्त्वं प्राणिनां प्रत्यगात्मा त्वं सर्वदेहिनाम् ।
सुज्योतिस्त्वं परंज्योतिरात्मज्योतिस्सनातनः ॥ ९२

ज्योतिर्लोकस्वरूपस्त्वं ज्ञो ज्योतिर्ज्योतिषां पतिः ।
स्वाहाकारः स्वधाकारो वषट्कारः कृपाकरः ॥ ९३

हन्तकारो निराकारो वेगाकारश्च शङ्करः ।
अकारादिहकारान्त ओंकारो लोककारकः ॥ ९४

एकात्मा त्वमनेकात्मा चतुरात्मा चतुर्भुजः ।
चतुर्मूर्तिश्चतुर्दंष्ट्रश्चतुर्वेदमयोत्तमः ॥ ९५

लोकप्रियो लोकगुरुर्लोकेशो लोकनायकः ।
लोकसाक्षी लोकपतिर्लोकात्मा लोकलोचनः ॥ ९६

लोकाधारो बृहल्लोको लोकालोकमयो विभुः ।
लोककर्ता विश्वकर्ता कृतावर्तः कृतागमः ॥ ९७

अनादिस्त्वमनन्तस्त्वमभूतो भूतविग्रहः ।
स्तुतिस्स्तुत्यस्स्तवप्रीतः स्तोता नेता नियामकः ॥ ९८

त्वं गतिस्त्वं मतिर्मह्यं पिता माता गुरुस्सखा ।
सुहृदश्चात्मरूपस्त्वं त्वां विना नास्ति मे गतिः ॥ ९९

नमस्ते मन्त्ररूपाय अस्त्ररूपाय ते नमः ।
बहुरूपाय रूपाय पञ्चरूपधराय च ॥ १००

भद्ररूपाय रूढाय योगरूपाय योगिने।
समरूपाय योगाय योगपीठस्थिताय च ॥ १०१

योगगम्याय सौम्याय ध्यानगम्याय ध्यायिने।
ध्येयगम्याय धाम्ने च धामाधिपतये नमः ॥ १०२

धराधराय धर्माय धारणाभिरताय च।
नमो धात्रे च सन्धात्रे विधात्रे च धराय च ॥ १०३

दामोदराय दान्ताय दानवान्तकराय च।
नमस्संसारवैद्याय भेषजाय नमो नमः ॥ १०४

सीरध्वजाय शीताय वातायाप्रमिताय च।
सारस्वताय संसारनाशनायाक्षमालिने ॥ १०५

असिचर्मधरायैव षट्कर्मनिरताय च।
विकर्माय सुकर्माय परकर्मविधायिने ॥ १०६

सुशर्मणे मन्मथाय नमो वर्माय वर्मिणे।
करिचर्म वसानाय कराळवदनाय च ॥ १०७

कवये पद्मगर्भाय भूतगर्भ घृणानिधे।
ब्रह्मगर्भाय गर्भाय बृहद्गर्भाय धूर्जटे ॥ १०८

नमस्ते विश्वगर्भाय श्रीगर्भाय जितारये।
नमो हिरण्यगर्भाय हिरण्यकवचाय च ॥ १०९

हिरण्यवर्णदेहाय हिरण्याक्षविनाशिने।
हिरण्यकशिपोर्हन्त्रे हिरण्यनयनाय च ॥ ११०

हिरण्यरेतसे तुभ्यं हिरण्यवदनाय च।
नमो हिरण्यशृङ्गाय निश्शृङ्गाय च शृङ्गिणे ॥ १११

भैरवाय सुकेशाय भीषणायान्त्रमालिने ।
चण्डाय रुण्डमालाय नमो दण्डधराय च ॥ ११२

अखण्डतत्वरूपाय कमण्डलुधराय च ।
नमस्ते खण्डसिंहाय सत्यसिंहाय ते नमः ॥ ११३

नमस्ते श्वेतसिंहाय पीतसिंहाय ते नमः ।
नीलसिंहाय नीलाय रक्तसिंहाय ते नमः ॥ ११४

नमो हारिद्रसिंहाय धूम्रसिंहाय ते नमः ।
मूलसिंहाय मूलाय बृहत्सिंहाय ते नमः ॥ ११५

पाताळस्थितसिंहाय नमः पर्वतवासिने ।
नमो जलस्थसिंहाय अन्तरिक्षस्थिताय च ॥ ११६

कालाग्निरुद्रसिंहाय चण्डसिंहाय ते नमः ।
अनन्तसिंहसिंहाय अनन्तगतये नमः ॥ ११७

नमो विचित्रसिंहाय बहुसिंहस्वरूपिणे ।
अभयङ्करसिंहाय नरसिंहाय ते नमः ॥ ११८

नमोऽस्तु सिंहराजाय नारसिंहाय ते नमः ।
सप्ताब्धिमेखलायैव सत्य सत्यस्वरूपिणे ॥ ११९

सप्तलोकान्तरस्थाय सप्तस्वरमयाय च ।
सप्तार्चीरूपदंष्ट्राय सप्ताश्वरथरूपिणे ॥ १२०

सप्तवायुस्वरूपाय सप्तच्छन्दोमयाय च ।
स्वच्छाय स्वच्छरूपाय स्वच्छन्दाय च ते नमः ॥ १२१

श्रीवत्साय सुवेषाय श्रुतये श्रुतिमूर्तये ।
शुचिश्रवाय शूराय सुप्रभाय सुधन्विने ॥ १२२

शुभ्राय सुरनाथाय सुप्रभाय शुभाय च।
सुदर्शनाय सूक्ष्माय निरुक्ताय नमो नमः ॥ १२३

सुप्रभाय स्वभावाय भवाय विभवाय च।
सुशाखाय विशाखाय सुमुखाय मुखाय च ॥ १२४

सुनखाय सुदंष्ट्राय सुरथाय सुधाय च।
सांख्याय सुरमुख्याय प्रख्याताय प्रभाय च ॥ १२५

नमः खड्गाङ्गहस्ताय खेटमुद्गरपाणये।
खगेन्द्राय मृगेन्द्राय नागेन्द्राय दृढाय च ॥ १२६

नागकेयूरहाराय नागेन्द्रायाघमर्दिने।
नदीवासाय नग्नाय नानारूपधराय च ॥ १२७

नागेश्वराय नागाय नमिताय नराय च।
नागान्तकरथायैव नरनारायणाय च ॥ १२८

नमो मत्स्यस्वरूपाय कच्छपाय नमो नमः।
नमो यज्ञवराहाय नरसिंहाय ते नमः ॥ १२९

विक्रमाक्रान्तलोकाय वामनाय महौजसे।
नमो भार्गवरामाय रावणान्तकराय च ॥ १३०

नमस्ते बलरामाय कंसप्रध्वंसकारिणे।
बुद्धाय बुद्धरूपाय तीक्ष्णरूपाय कल्किने ॥ १३१

आत्रेयायाग्निनेत्राय कपिलाय द्विजाय च।
क्षेत्राय पशुपालाय पशुवक्त्राय ते नमः ॥ १३२

गृहस्थाय वनस्थाय यतये ब्रह्मचारिणे।
स्वर्गापवर्गदात्रे च तद्धोक्त्रे च मुमुक्षवे ॥ १३३

सालग्रामनिवासाय क्षीराब्धिशयनाय च ।
श्रीशैलाद्रिनिवासाय शिलावासाय ते नमः ।। १३४

योगिहृत्पद्मवासाय महाहा(वा)साय ते नमः ।
गुहावासाय गुह्याय गुप्ताय गुरवे नमः ।। १३५

नमो मूलाधिवासाय नीलवस्त्रधराय च ।
पीतवस्त्राय शस्त्राय रक्तवस्त्रधराय च ।। १३६

रक्तमालाविभूषाय रक्तगन्धानुलेपिने ।
धुरन्धराय धूर्ताय दुर्धराय धराय च ।। १३७

दुर्मदाय दुरन्ताय दुर्धराय नमो नमः ।
दुर्निरीक्ष्याय निष्ठाय दुर्दर्शाय द्रुमाय च ।। १३८

दुर्भेदाय दुराशाय दुर्लभाय नमो नमः ।
दृप्ताय दृप्तवक्त्राय अदृप्तनयनाय च ।। १३९

उन्मत्ताय प्रमत्ताय नमो दैत्यारये नमः ।
रसज्ञाय रसेशाय आरक्तरसनाय च ।। १४०

पथ्याय परितोषाय रथ्याय रसिकाय च ।
ऊर्ध्वकेशोर्ध्वरूपाय नमस्ते चोर्ध्वरेतसे ।। १४१

ऊर्ध्वसिंहाय सिंहाय नमस्ते चोर्ध्वबाहवे ।
परप्रध्वंसकायैव शङ्खचक्रधराय च ।। १४२

गदापद्मधरायैव पञ्चबाणधराय च ।
कामेश्वराय कामाय कामपालाय कामिने ।। १४३

नमः कामविहाराय कामरूपधराय च ।
सोमसूर्याग्निनेत्राय सोमपाय नमो नमः ।। १४४

नमस्सोमाय वामाय वामदेवाय ते नमः ।
सामस्वनाय सौम्याय भक्तिगम्याय वै नमः ॥ १४५

कूश्माण्डगणनाथाय सर्वश्रेयस्कराय च ।
भीष्माय भीषदायैव भीमविक्रमणाय च ॥ १४६

मृगग्रीवाय जीवाय जिताय जितकारिणे ।
जटिने जामदग्न्याय नमस्ते जातवेदसे ॥ १४७

जपाकुसुमवर्णाय जप्याय जपिताय च ।
जरायुजायाण्डजाय स्वेदजायोद्भिजाय च ॥ १४८

जनार्दनाय रामाय जाह्नवीजनकाय च ।
जराजन्मादिदूराय प्रद्युम्नाय प्रमोदिने ॥ १४९

जिह्वारौद्राय रुद्राय वीरभद्राय ते नमः ।
चिद्रूपाय समुद्राय कद्रुद्राय प्रचेतसे ॥ १५०

इन्द्रियायेंद्रियज्ञाय नमोस्त्विन्द्रानुजाय च ।
अतीन्द्रियाय साराय इन्दिरापतये नमः ॥ १५१

ईशानाय च ईड्याय ईशिताय इनाय च ।
व्योमात्मने च व्योम्ने च नमस्ते व्योमकेशिने ॥ १५२

व्योमाधाराय च व्योमवक्त्रायासुरघातिने ।
नमस्ते व्योमदंष्ट्राय व्योमवासाय ते नमः ॥ १५३

सुकुमाराय रामाय शुभाचाराय वै नमः ।
विश्वाय विश्वरूपाय नमो विश्वात्मकाय च ॥ १५४

ज्ञानात्मकाय ज्ञानाय विश्वेशाय परात्मने ।
एकात्मने नमस्तुभ्यं नमस्ते द्वादशात्मने ॥ १५५

चतुर्विंशतिरूपाय पञ्चविंशतिमूर्तये ।
षड्विंशकात्मने नित्यं सप्तविंशतिकात्मने ॥ १५६

धर्मार्थकाममोक्षाय विरक्ताय नमो नमः ।
भावशुद्धाय सिद्धाय साध्याय शरभाय च ॥ १५७

प्रबोधाय सुबोधाय नमो बुद्धिप्रियाय च ।
स्निग्धाय च विदग्धाय मुग्धाय मुनये नमः ॥ १५८

प्रियंवदाय श्रव्याय स्रुक्स्रुवाय श्रिताय च ।
गृहेशाय महेशाय ब्रह्मेशाय नमो नमः ॥ १५९

श्रीधराय सुतीर्थाय हयग्रीवाय ते नमः ।
उग्राय उग्रवेगाय उग्रकर्मरताय च ॥ १६०

उग्रनेत्राय व्यग्राय समग्रगुणशालिने ।
बालग्रहविनाशाय पिशाचग्रहघातिने ॥ १६१

दुष्टग्रहनिहन्त्रे च निग्रहानुग्रहाय च ।
वृषध्वजाय वृष्ण्याय वृषाय वृषभाय च ॥ १६२

उग्रश्रवाय शान्ताय नमः श्रुतिधराय च ।
नमस्ते देवदेवेश नमस्ते मधुसूदन ॥ १६३

नमस्ते पुण्डरीकाक्ष नमस्ते दुरितक्षय ।
नमस्ते करुणासिन्धो नमस्ते समितिंजय ॥ १६४

नमस्ते नरसिंहाय नमस्ते गरुडध्वज ।
यज्ञनेत्र नमस्तेऽस्तु कालध्वज जयध्वज ॥ १६५

अग्निनेत्र नमस्तेऽस्तु नमस्ते ह्यमरप्रिय ।
महानेत्र नमस्तेऽस्तु नमस्ते भक्तवत्सल ॥ १६६

धर्मनेत्र नमस्तेऽस्तु नमस्ते करुणाकर।
पुण्यनेत्र नमस्तेऽस्तु नमस्तेऽभीष्टदायक॥ १६७

नमो नमस्ते जयसिंहरूप नमो नमस्ते नरसिंहरूप।
नमो नमस्ते रणसिंहरूप नमो नमस्ते नरसिंहरूप॥ १६८

उद्धृत्य गर्वितं दैत्यं निहत्याजौ सुरद्विषम्।
देवकार्यं महत्कृत्वा गर्जसे स्वात्मतेजसा॥ १६९

अतिरौद्रमिदं रूपं दुस्सहं दुरतिक्रमम्।
दृष्ट्वा तु शङ्किितास्सर्वा देवतास्त्वामुपागताः॥ १७०

एतान्पश्य महेशानं ब्रह्माणं मां शचीपतिम्।
दिक्पालान् द्वादशादित्यान् रुद्रानुरगराक्षसान्॥ १७१

सर्वान् ऋषिगणान्सप्तमातॄर्गौरीं सरस्वतीम्।
लक्ष्मीं नदीश्च तीर्थानि रतिं भूतगणान्यपि॥ १७२

प्रसीद त्वं महासिंह उग्रभावमिमं त्यज।
प्रकृतिस्थो भव त्वं हि शान्तिभावं च धारय॥ १७३

इत्युक्त्वा दण्डवद्भूमौ पपात स पितामहः।
प्रसीद त्वं प्रसीद त्वं प्रसीदेति पुनः पुनः॥ १७४

मार्कण्डेय उवाच-

दृष्टा तु देवताः सर्वाः श्रुत्वा तां ब्रह्मणो गिरम्।
स्तोत्रेणापि च संहृष्टः सौम्यभावमधारयत्॥ १७५

अब्रवीन्नारसिंहस्तु वीक्ष्य सर्वान्सुरोत्तमान्।
संत्रस्तान् भयसंविग्नान् शरणं समुपागतान्॥ १७६

श्रीनृसिंह उवाच-

भो भो देववरास्सर्वे पितामहपुरोगमाः ।
शृणुध्वं मम वाक्यं च भवन्तु विगतज्वराः ॥ १७७

यद्धितं भवतां नूनं तत्करिष्यामि सांप्रतम् ।
एवं नामसहस्रं मे त्रिसन्ध्यं यः पठेत् शुचिः ॥ १७८

शृणोति वा भावयति पूजांते भक्तिसंयुतः ।
सर्वान्कामानवाप्नोति जीवेच्च शरदां शतम् ॥ १७९

यो नामभिर्नृसिंहाद्यैरर्चयेत्क्रमशो मम ।
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥ १८०

सर्वपूजासु यत्प्रोक्तं तत्सर्वं लभते भृशम् ।
जातिस्मरत्वं लभते ब्रह्मज्ञानं सनातनम् ॥ १८१

सर्वपापविनिर्मुक्तः तद्विष्णोः परमं पदम् ।
मन्नामकवचं बध्वा विचरेद्विगतज्वरः ॥ १८२

भूतभेताळकूष्माण्ड पिशाचब्रह्मराक्षसाः ।
शाकिनीडाकिनीज्येष्ठानीलीबालग्रहादिकाः ॥ १८३

दुष्टग्रहाश्च नश्यन्ति यक्षराक्षसपन्नगाः ।
ये च सन्ध्याग्रहाः सर्वे चाण्डालग्रहसंज्ञिकाः ॥ १८४

निशाचरग्रहास्सर्वे प्रणश्यंति च दूरतः ।
कुक्षिरोगं च हृद्रोगं शूलापस्मारमेव च ॥ १८५

एकाहिकं द्व्याहिकं च चातुर्थिकमथ ज्वरम् ।
आधयो व्याधयस्सर्वे रोगा रोगाधिदेवताः ॥ १८६

शीघ्रं नश्यन्ति ते सर्वे नृसिंहस्मरणात्सुराः ।
राजानो दासतां यान्ति शत्रवो यान्ति मित्रताम् ॥ १८७

जलानि स्थलतां यान्ति वह्नयो यान्ति शीतताम् ।
विषाण्यमृततां यान्ति नृसिंहस्मरणात्सुराः ॥ १८८

राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ।
विद्याकामो लभेद्विद्यां बद्धो मुच्येत बन्धनात् ॥ १८९

व्याळव्याघ्रभयं नास्ति चोरसर्पादिकात्तथा ।
अनुकूला भवेद्भार्या लोकैश्च प्रतिपूज्यते ॥ १९०

सुपुत्रं धनधान्यं च भवन्ति विगतज्वराः ।
एतत्सर्वं समाप्नोति नृसिंहस्य प्रसादतः ॥ १९१

जलसन्तरणे चैव पर्वतारण्य एव च ।
वनेऽपि विचरन्मर्त्यो दुर्गमे विषमे पथि ॥ १९२

बिलप्रवेशने चापि नारसिंहं न विस्मरेत् ।
ब्रह्मघ्नश्च पशुघ्नश्च भ्रूणहा गुरुतल्पगः ॥ १९३

मुच्यते सर्वपापेभ्यः कृतघ्नःस्त्रीविघातकः ।
वेदानां दूषकश्चापि मातापितृविनिन्दकः ॥ १९४

असत्यस्तु तथा यज्ञनिन्दको लोकनिन्दकः ।
स्मृत्वा सकृन्नृसिंहं तु मुच्यते सर्वकिल्बिषैः ॥ १९५

बहुनात्र किमुक्तेन स्मृत्वा मां शुद्धमानसः ।
यत्र यत्र चरेन्मर्त्यो नृसिंहस्तत्र रक्षति ॥ १९६

गच्छन् तिष्ठन् वपन् भुंजन् जाग्रन्नपि हसन्नपि ।
नृसिंहेति नृसिंहेति नृसिंहेति सदा स्मरन् ॥ १९७

पुमान्न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति।
नारी सुभगतामेति सौभाग्यं च स्वरूपताम्॥ १९८

भर्तुः प्रियत्वं लभते न वैधव्यं च विन्दति।
न सपत्नीं च जन्मान्ते सम्यक् ज्ञानी भवेद्द्विजः॥ १९९

भूमिप्रदक्षिणान्मर्त्यो यत्फलं लभते चिरात्।
तत्फलं लभते नारसिंहमूर्तिप्रदक्षिणात्॥ २००

मार्कण्डेय उवाच-

इत्युक्त्वा देवदेवेशो लक्ष्मीमालिंग्य लीलया।
प्रह्लादस्याभिषेकं तु ब्रह्मणे चोपदिष्टवान्॥ २०१

श्रीशैलस्य प्रसादे तु लोकानां च हिताय वै।
स्वरूपं स्थापयामास प्रकृतिस्थोऽभवत्तदा॥ २०२

ब्रह्मापि दैत्यराजानं प्रह्लादमभ्यषेचयत्।
दैवतैस्सह सुप्रीतो ह्यात्मलोकं ययौ स्वयम्॥ २०३

हिरण्यकशिपोर्भीत्या प्रपलाय्य शचीपतिः।
स्वर्गराज्यपरिभ्रष्टो युगानामेकविंशतिम्॥ २०४

नृसिंहेन हते दैत्ये स्वर्गलोकमवाप सः।
दिक्पालाश्च सुसम्प्राप्ताः स्वस्वस्थानमनुत्तमम्॥ २०५

धर्मे मतिस्समस्तानां प्रजानामभवत्तदा।
एवं नामसहस्रं मे ब्रह्मणा निर्मितं पुरा॥ २०६

पुत्रानध्यापयामास सनकादीन्महामतिः।
ऊचुस्ते च ततः सर्वलोकानां हितकाम्यया॥ २०७

देवता ऋषयः सिद्धा यक्षविद्याधरोरगः ।
गन्धर्वाश्च मनुष्याश्च इहामुत्रफलैषिणः ॥ २०८

यस्य स्तोत्रस्य पाठाद्धि विशुद्धमनसोऽभवन् ।
सनत्कुमारः सम्प्राप्तो भारद्वाजो महामतिः ॥ २०९

तस्मादाङ्गिरसः प्राप्तस्तस्मात्प्राप्तो महाक्रतुः ।
जैगीषव्याय स प्राह सोऽब्रवीच्च्यवनाय च ॥ २१०

तस्मा उवाच शाण्डिल्यो गर्गाय प्राह वै मुनिः ।
क्रतुञ्जयाय स प्राह जतुकर्ण्याय संयमी ॥ २११

विष्णुवृद्धाय सोऽप्याह सोऽपि बोधायनाय च ।
क्रमात्स विष्णवे प्राह स प्राहोद्दामकुक्षये ॥ २१२

सिंहतेजाश्च तस्माच्च श्रीप्रियाय ददौ च सः ।
उपदिष्टोऽस्मि तेनाहमिदं नामसहस्रकम् ॥ २१३

तत्प्रसादादमृत्युर्मे यस्मात्कस्माद्भयं न हि ।
मया च कथितं नारसिंहस्तोत्रमिदं तव ॥ २१४

त्वं हि नित्यं शुचिर्भूत्वा तमाराधय शाश्वतम् ।
सर्वभूताश्रयं देवं नृसिंहं भक्तवत्सलम् ॥ २१५

पूजयित्वा स्तवं जप्त्वा हुत्वा निश्चलमानसः ।
प्राप्स्यसे महतीं सिद्धिं सर्वान्कामान्वरोत्तमान् ॥ २१६

अयमेव परो धर्मस्त्विदमेव परं तपः ।
इदमेव परं ज्ञानमिदमेव महद्व्रतम् ॥ २१७

अयमेव सदाचारस्त्वयमेव सदा मखः ।
इदमेव त्रयो वेदाः सच्छास्त्राण्यागमानि च ॥ २१८

नृसिंहमन्त्रादन्यच्च वैदिकं तु न विद्यते।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्कचित्॥ २१९

कथितं ते नृसिंहस्य चरितं पापनाशनम्।
सर्वमन्त्रमयं तापत्रयोपशमनं परम्॥ २२०

सर्वार्थसाधनं दिव्यं किं भूयः श्रोतुमिच्छसि ? ॥

—श्रीनृसिंहपुराणतः

***

॥ श्रीः ॥

# श्रीलक्ष्मीनृसिंहसहस्रनामावळिः

***

ओं ह्रीं श्रीं ऐं क्ष्रौं

ओं नारसिंहाय नमः। वज्रदंष्ट्राय। वज्रिणे। वज्रदेहाय। वज्राय। वज्रनखाय। वासुदेवाय। वन्द्याय। वरदाय। वरात्मने। वरदाभयहस्ताय। वराय। वररूपिणे। वरेण्याय। वरिष्ठाय। श्रीवराय। प्रह्लादवरदाय। प्रत्यक्षवरदाय। परात्परपरेशाय। पवित्राय नमः॥ २०

ओं पिनाकिने नमः। पावनाय। प्रसन्नाय। पाशिने। पापहारिणे। पुरुष्टुताय। पुण्याय। पुरुहूताय। तत्पुरुषाय। तथ्याय। पुराणपुरुषाय। पुरोधसे। पूर्वजाय। पुष्कराक्षाय। पुष्पहासाय। हासाय। महाहासाय। शार्ङ्गिणे। सिंहाय। सिंहराजाय नमः॥ ४०

ओं जगद्वश्याय नमः। अट्टहासाय। रोषाय। जलवासाय। भूतावासाय। भासाय। श्रीनिवासाय। खड्गिने। खड्गजिह्वाय। सिंहाय। खड्गवासाय। मूलाधिवासाय। धर्मवासाय। धन्विने। धनञ्जयाय। धन्याय। मृत्युञ्जयाय। शुभञ्जयाय। सूत्राय। शत्रुञ्जयाय नमः॥६०

ओं निरञ्जनाय नमः। नीराय। निर्गुणाय। गुणाय। निष्प्रपञ्चाय। निर्वाणपदाय। निबिडाय। निरालम्बाय। नीलाय। निष्कलाय। कलाय। निमेषाय। निबन्धाय। निमेषगमनाय। निर्द्वन्द्वाय। निराशाय। निश्चयाय। निराय। निर्मलाय। निबन्धाय नमः ॥ ८०

ओं निर्मोहाय नमः। निराकृतये। नित्याय। सत्याय। सत्कर्मनिरताय। सत्यध्वजाय। मुञ्जाय। मुञ्जकेशाय। केशिने। हरीशाय। शेषाय। गुडाकेशाय। सुकेशाय। ऊर्ध्वकेशाय। केशिसंहारकाय। जलेशाय। स्थलेशाय। पद्मेशाय। उग्ररूपिणे। कुशेशयाय नमः ॥ १००

ओं कूलाय नमः। केशवाय। सूक्तिकर्णाय। सूक्ताय। रक्तजिह्वाय। रागिणे। दीप्तरूपाय। दीप्ताय। प्रदीप्ताय। प्रलोभिने। प्रच्छिन्नाय। प्रबोधाय। प्रभवे। विभवे। प्रभंजनाय। पांथाय। प्रमायाप्रमिताय। प्रकाशाय। प्रतापाय। प्रज्वालाय नमः ॥ १२०

ओं उज्ज्वलाय नमः। ज्वालामालास्वरूपाय। ज्वलज्जिह्वाय। ज्वालिने। महोज्ज्वालय। कालाय। कालमूर्तिधराय। कालान्तकाय। कल्पाय। कलनाय। कृते। कालचक्राय। शक्राय। वषट्चक्राय। चक्रिणे। अक्रूराय। कृतान्ताय। विक्रमाय। क्रमाय। कृत्तिने नमः ॥ १४०

ओं कृत्तिवासाय नमः। कृतघ्नाय। कृतात्मने। संक्रमाय। क्रुद्धाय। क्रान्तलोकत्रयाय। अरूपाय। स्वरूपाय। हरये। परमात्मने। अजयाय। आदिदेवाय। अक्षयाय। क्षयाय। अघोराय। सुघोराय। घोरघोरतराय। अघोरवीर्याय। लसद्घोराय। घोराध्यक्षाय नमः ॥ १६०

दक्षाय नमः। दक्षिणाय। आर्याय। शम्भवे। अमोघाय। गुणौघाय। अनघाय। अघहारिणे। मेघनादाय। नादाय। मेघात्मने। मेघवाहनरूपाय। मेघश्यामाय। मालिने। व्यालयज्ञोपवीताय। व्याघ्रदेहाय। व्याघ्रपादाय। व्याघ्रकर्मिणे। व्यापकाय। विकटास्याय नमः ॥ १८०

ओं वीराय नमः । विष्टरश्रवसे । विकीर्णनखदंष्ट्राय । नखदंष्ट्रायुधाय । विष्वक्सेनाय । सेनाय । विह्वलाय । बलाय । विरूपाक्षाय । वीराय । विशेषाक्षाय । साक्षिणे । वीतशोकाय । विस्तीर्णवदनाय। विधानाय। विधेयाय। विजयाय। जयाय। विबुधाय । विभावाय नमः ।। २००

ओं विश्वम्भराय नमः । वीतरागाय । विप्राय । विटङ्कनयनाय । विपुलाय । विनीताय । विश्वयोनये । चिदम्बराय । वित्ताय । विश्रुताय । वियोनये। विह्वलाय। विकल्पाय। कल्पातीताय। शिल्पिने। कल्पनाय । स्वरूपाय। फणितल्पाय। तटित्प्रभाय। तार्याय नमः ।। २२०

तरुणाय नमः । तरस्विने । तपनाय । तरक्षाय । तापत्रयहराय । तारकाय। तमोघ्नाय। तत्वाय। तपस्विने। तक्षकाय। तनुत्राय। तटिने। तरलाय । शतरूपाय । शान्ताय । शतधाराय । शतपत्राय । तार्क्ष्याय । स्थितये। शतमूर्तये नमः ।। २४०

ओं शतक्रतुस्वरूपाय नमः। शाश्वताय। शतात्मने। सहस्रशिरसे । सहस्रवदनाय । सहस्राक्षाय । देवाय । दिशाश्रोत्राय । सहस्रजिह्वाय । महाजिह्वाय । सहस्रनामधेयाय । सहस्राक्षिधराय । सहस्रबाहवे । सहस्रचरणाय । सहस्रार्कप्रकाशाय । सहस्रायुधधारिणे । स्थूलाय । सूक्ष्माय । सुसूक्ष्माय। सुक्षुण्णाय नमः ।। २६०

ओं सुभिक्षाय नमः। सुराध्यक्षाय। शौरिणे। धर्माध्यक्षाय। धर्माय । लोकाध्यक्षाय। प्रजाध्यक्षाय। शिक्षाय। विपक्षक्षयमूर्तये। कालाध्यक्षाय । तीक्ष्णाय । मूलाध्यक्षाय । अधोक्षजाय । मित्राय । सुमित्रवरुणाय । शत्रुघ्नाय । अविघ्नाय। विघ्नकोटिहराय। रक्षोघ्नाय। तमोघ्नाय नमः ।। २८०

ओं भूतघ्नाय नमः । भूतपालाय । भूताय । भूतावासाय । भूतिने । भूतवेताळघाताय । भूताधिपतये । भूतग्रहविनाशाय । भूतसंयमाय ।

महाभूताय। भृगवे। सर्वभूतात्मने। सर्वारिष्टविनाशाय। सर्वसम्पत्कराय। सर्वाधाराय। शर्वाय। सर्वार्तिहरये। सर्वदुःखप्रशान्ताय। सर्वसौभाग्य-दायिने। सर्वज्ञाय नमः ॥ ३००

ओं अनन्ताय नमः। सर्वशक्तिधराय। सर्वैश्वर्यप्रदात्रे। सर्वकार्य-विधायिने। सर्वज्वरविनाशाय। सर्वरोगापहारिणे। सर्वाभिचारहन्त्रे। सर्वैश्वर्यविधायिने। पिङ्गाक्षाय। एकशृङ्गाय। द्विशृङ्गाय। मरीचये। बहुशृङ्गाय। लिङ्गाय। महाशृङ्गाय। माङ्गल्याय। मनोज्ञाय। मन्तव्याय। महात्मने। महादेवाय नमः ॥ ३२०

ओं देवाय नमः। मातुलिङ्गधराय। महामायाप्रसूताय। प्रस्तुताय। मायिने। अनन्ताय। अनन्तरूपाय। मायिने। जलशायिने। महोदराय। मन्दाय। मददाय। मदाय। मधुकैटभहन्त्रे। माधवाय। मुरारये। महावीर्याय। धैर्याय। चित्रवीर्याय। चित्रकूर्माय नमः ॥ ३४०

ओं चित्राय नमः। चित्रभानवे। मायातीताय। मायाय। महावीराय। महातेजाय। बीजाय। तेजोधाम्ने। बीजिने। तेजोमयनृसिंहाय। चित्रभानवे। महादंष्ट्राय। तुष्टाय। पुष्टिकराय। शिपिविष्टाय। हृष्टाय। पुष्टाय। परमेष्ठिने। विशिष्टाय। शिष्टाय नमः ॥ ३६०

ओं गरिष्ठाय नमः। इष्टदायिने। ज्येष्ठाय। श्रेष्ठाय। तुष्टाय। अमिततेजसे। अष्टाङ्गन्यस्तरूपाय। सर्वदुष्टान्तकाय। वैकुण्ठाय। विकुण्ठाय। केशिकण्ठाय। कण्ठीरवाय। लुण्ठाय। निश्शठाय। हठाय। सत्वोद्रिक्ताय। रुद्राय। ऋग्यजुस्सामगाय। ऋतुध्वजाय। वज्राय नमः ॥ ३८०

ओं मन्त्रराजाय नमः। मन्त्रिणे। त्रिनेत्राय। त्रिवर्गाय। त्रिधाम्ने। त्रिशूलिने। त्रिकालज्ञानरूपाय। त्रिदेहाय। त्रिधात्मने। त्रिमूर्तिविद्याय। त्रितत्वज्ञानिने। अक्षोभ्याय। अनिरुद्धाय। अप्रमेयाय। भानवे।

अमृताय । अनन्ताय । अमिताय । अमितौजसे । अपमृत्युविनाशाय नमः ।। ४००

ओं अपस्मारविघातिने नमः । अन्नदाय । अन्नरूपाय । अन्नाय । अन्नभुजे । नाद्याय । निरवद्याय । विद्याय । अद्भुतकर्मणे । सद्योजाताय । सङ्घाय । वैद्युताय । अध्वातीताय । सत्वाय । वागतीताय । वाग्मिने । वागीश्वराय । गोपाय । गोहिताय । गवांपतये नमः ।। ४२०

ओं गन्धर्वाय नमः । गभीराय । गर्जिताय । ऊर्जिताय । पर्जन्याय । प्रबुद्धाय । प्रधानपुरुषाय । पद्माभाय । सुनाभाय । पद्मनाभाय । मानिने । पद्मनेत्राय । पद्माय । पद्मायाः पतये । पद्मोदराय । पूताय । पद्मकल्पोद्भवाय । हृत्पद्मवासाय । भूपद्मोद्धरणाय । शब्दब्रह्मस्वरूपाय नमः ।। ४४०

ओं ब्रह्मरूपधराय नमः । ब्रह्मणे । ब्रह्मरूपाय । पद्मनेत्राय । ब्रह्मादये । ब्राह्मणाय । ब्रह्मणे । ब्रह्मात्मने । सुब्रह्मण्याय । देवाय । ब्रह्मण्याय । त्रिवेदिने । परब्रह्मस्वरूपाय । परब्रह्मात्मने । ब्रह्मशिरसे । अश्वशिरसे । अथर्वशिरसे । अशनिप्रमिताय । तीक्ष्णदंष्ट्राय । लोलाय नमः ।। ४६०

ओं ललिताय नमः । लावण्याय । लवित्राय । भासकाय । लक्षणज्ञाय । लक्षाय । लक्षणाय । लसद्दीप्ताय । लिप्ताय । विष्णवे । प्रभविष्णवे । वृष्णिमूलाय । कृष्णाय । श्रीमहाविष्णवे । महासिंहाय । हारिणे । वनमालिने । किरीटिने । कुण्डलिने । सर्वाङ्गाय नमः ।। ४८०

ओं सर्वतोमुखाय नमः । सर्वतः पाणिपादोरसे । सर्वतोऽक्षिशिरोमुखाय । सर्वेश्वराय । सदातुष्टाय । समर्थाय । समरप्रियाय । बहुयोजनविस्तीर्णाय । बहुयोजनमायताय । बहुयोजनहस्ताङ्घ्रये । बहुयोजननासिकाय । महारूपाय । महावक्त्राय । महादंष्ट्राय । महाभुजाय । महानादाय । महारौद्राय । महाकायाय । महाबलाय । आनाभेर्ब्रह्मणो रूपाय नमः ।। ५००

ओं आगलाद्वैष्णवाय नमः । आशीर्षाद्रुद्राय ईशानाय । अग्रे सर्वतःशिवाय । नारायणनारसिंहाय । नारयणवीरसिंहाय । नारायणक्रूरसिंहाय । नारायणदिव्यसिंहाय । नारायणव्याघ्रसिंहाय । नारायणपुच्छसिंहाय । नारायणपूर्णसिंहाय । नारायणरौद्रसिंहाय । भीषणभद्रसिंहाय । विह्वलनेत्रसिंहाय । बृंहितभूतसिंहाय । निर्मलचित्रसिंहाय । निर्जितकालसिंहाय । कल्पितकल्पसिंहाय । कामदकामसिंहाय । भुवनैकसिंहाय । विष्णवे नमः ।। ५२०

ओं भविष्णवे नमः । सहिष्णवे । भ्राजिष्णवे । जिष्णवे । पृथिव्यै । अन्तरिक्षाय । पर्वताय । अरण्याय । कलाकाष्ठाविलिप्ताय । मुहूर्तप्रहरादिकाय । अहोरात्राय । त्रिसन्ध्यायै । पक्षाय । मासाय । ऋतवे । वत्सराय । युगादये । युगभेदाय । संयुगाय । युगसन्धिभ्य नमः ।। ५४०

ओं नित्याय प्रलयाय नमः । नैमित्तिकाय प्रलयाय । दैनाय प्रलयाय । महाप्रळयाय । करणाय । कारणाय । कर्त्रे । भर्त्रे । हर्त्रे । ईश्वराय । सत्कर्त्रे । सत्कृतये । गोप्त्रे । सच्चिदानन्दविग्रहाय । प्राणिनां प्राणाय । सर्वदेहिनां प्रत्यगात्मने । सुज्योतिषे । परस्मै ज्योतिषे । आत्मज्योतिषे । सनातनाय नमः ।। ५६०

ओं ज्योतिषे नमः । लोकस्वरूपाय । ज्योतिषे । ज्ञाय । ज्योतिषां पतये । स्वाहाकाराय । स्वधाकाराय । वषट्काराय । कृपाकराय । हन्तकाराय । निराकाराय । वेगाकाराय । शङ्कराय । अकारादिहकारान्ताय । ओंकाराय । लोककारकाय । एकात्मने । अनेकात्मने । चतुरात्मने । चतुर्भुजाय नमः ।। ५८०

ओं चतुर्मूर्तये नमः । चतुर्दंष्ट्राय । चतुर्वेदमयाय । उत्तमाय । लोकप्रियाय । लोकगुरवे । लोकेशाय । लोकनायकाय । लोकसाक्षिणे । लोकपतये । लोकात्मने । लोकलोचनाय । लोकाधाराय । बृहल्लोकाय ।

लोकालोकमयाय। विभवे। लोककर्त्रे। विश्वकर्त्रे। कृतावर्ताय। कृतागमाय नमः ।। ६००

ओं अनादये नमः। अनन्ताय। अभूताय। भूतविग्रहाय। स्तुतये। स्तुत्याय। स्तवप्रीताय। स्तोत्रे। नेत्रे। नियामकाय। गतये। मतये। मह्त्वं पित्रे । मात्रे । गुरवे । सख्ये । सुहृद आत्मरूपाय । मन्त्ररूपाय । अस्त्ररूपाय । बहुरूपाय नमः ।। ६२०

ओं रूपाय नमः । पञ्चरूपधराय । भद्ररूपाय । रूढाय । योगरूपाय । योगिने । समरूपाय । योगाय । योगपीठस्थिताय । योगगम्याय। सौम्याय। ध्यानगम्याय। ध्यायिने। ध्येयगम्याय। धाम्ने। धामाधिपतये। धराधराय। धर्माय। धारणाभिरताय। धात्रे नमः ।। ६४०

ओं सन्धात्रे नमः । विधात्रे । धराय । दामोदराय । दान्ताय । दानवान्तकराय । संसारवैद्याय । भेषजाय । सीरध्वजाय । शीताय । वाताय । अप्रमिताय । सारस्वताय । संसारनाशनाय । अक्षमालिने । असिचर्मधराय। षट्कर्मनिरताय। विकर्माय। सुकर्माय। परकर्मविधायिने नमः । ६६०

ओं सुशर्मणे नमः। मन्मथाय। वर्माय। वर्मिणे। करिचर्मवसानाय । कराळवदनाय। कवये। पद्मगर्भाय। भूतगर्भाय। घृणानिधये। ब्रह्मगर्भाय । गर्भाय । बृहद्गर्भाय । धूर्जटये । विश्वगर्भाय । श्रीगर्भाय । जितारये । हिरण्यगर्भाय। हिरण्यकवचाय। हिरण्यवर्णदेहाय नमः ।। ६८०

ओं हिरण्याक्षविनाशिने नमः । हिरण्यकशिपोर्हन्त्रे । हिरण्यनयनाय । हिरण्यरेतसे । हिरण्यवदनाय । हिरण्यशृङ्गाय । निश्शृङ्गाय। शृङ्गिणे। भैरवाय। सुकेशाय। भीषणाय। आन्त्रमालिने। चण्डाय । रुण्डमालाय । दण्डधराय । अखण्डतत्वरूपाय । कमण्डलुधराय । खण्डसिंहाय। सत्यसिंहाय। श्वेतसिंहाय नमः ।। ७००

ओं पीतसिंहाय नमः । नीलसिंहाय । नीलाय । रक्तसिंहाय । हारिद्रसिंहाय । धूम्रसिंहाय । मूलसिंहाय । मूलाय । बृहत्सिंहाय । पातालस्थितसिंहाय । पर्वतवासिने । जलस्थसिंहाय । अन्तरिक्षस्थिताय । कालाग्निरुद्रसिंहाय । चण्डसिंहाय । अनन्तसिंह सिंहाय । अनन्तगतये । विचित्रसिंहाय । बहुसिंहस्वरूपिणे । अभयङ्करसिंहाय नमः ।। ७२०

ओं नरसिंहाय नमः । सिंहराजाय । नारसिंहाय । सप्ताब्धि-मेखलाय । सत्याय । सत्यस्वरूपिणे । सप्तलोकान्तरस्थाय । सप्तस्वरमयाय । सप्तार्चीरूपदंष्ट्राय । सप्ताश्वरथरूपिणे । सप्तवायुस्वरूपाय । सप्तच्छन्दोमयाय । स्वच्छाय । स्वच्छरूपाय । स्वच्छन्दाय । श्रीवत्साय । सुवेषाय । श्रुतये । श्रुतिमूर्तये । शुचिश्रवाय नमः ।। ७४०

ओं शूराय नमः । सुप्रभाय । सुधन्विने । शुभ्राय । सुरनाथाय । सुप्रभाय । शुभाय । सुदर्शनाय । सूक्ष्माय । निरुक्ताय । सुप्रभाय । स्वभावाय । भवाय । विभवाय । सुशाखाय । विशाखाय । सुमुखाय । मुखाय । सुनखाय । सुदंष्ट्राय नमः ।। ७६०

ओं सुरथाय नमः । सुधाय । सांख्याय । सुरमुख्याय । प्रख्याताय । प्रभाय । खट्वांगहस्ताय । खेटमुद्गरपाणये । खगेन्द्राय । मृगेन्द्राय । नागेन्द्राय । दृढाय । नागकेयूरहाराय । नागेन्द्राय । अघमर्दिने । नदीवासाय । नग्नाय । नानारूपधराय । नागेश्वराय । नागाय नमः ।। ७८०

ओं नमिताय नमः । नराय । नागान्तकरथाय । नरनारायणाय । मत्स्यस्वरूपाय । कच्छपाय । यज्ञवराहाय । नरसिंहाय । विक्रमाक्रान्तलोकाय । वामनाय । महौजसे । भार्गवरामाय । रावणान्तकराय । बलरामाय । कंसप्रध्वंसकारिणे । बुद्धाय । बुद्धरूपाय । तीक्ष्णरूपाय । कल्किने । आत्रेयाय नमः ।। ८००

ओं अग्निनेत्राय नमः । कपिलाय । द्विजाय । क्षेत्राय । पशुपालाय । पशुवक्त्राय । गृहस्थाय । वनस्थाय । यतये । ब्रह्मचारिणे । स्वर्गापवर्गदात्रे । तद्भोक्त्रे । मुमुक्षवे । सालग्रामनिवासाय । क्षीराब्धिशयनाय । श्रीशैलाद्रिनिवासाय । शिलावासाय । योगिहृत्पद्मवासाय । महाहासाय । गुहावासाय नमः ॥ ८२०

ओं गुह्याय नमः । गुप्ताय । गुरवे । मूलाधिवासाय । नीलवस्त्रधराय । पीतवस्त्राय । शस्त्राय । रक्तवस्त्रधराय । रक्तमालाविभूषाय । रक्तगन्धानुलेपिने । धुरन्धराय । धूर्ताय । दुर्धराय । धराय । दुर्मदाय । दुरन्ताय । दुर्धराय । दुर्निरीक्ष्याय । निष्ठाय । दुर्दर्शाय नमः ॥ ८४०

ओं द्रुमाय नमः । दुर्भेदाय । दुराशाय । दुर्लभाय । दृप्ताय । दृप्तवक्त्राय । अदृप्तनयनाय । उन्मत्ताय । प्रमत्ताय । दैत्यारये । रसज्ञाय । रसेशाय । आरक्तरसनाय । पथ्याय । परितोषाय । रथ्याय । रसिकाय । ऊर्ध्वकेशाय । ऊर्ध्वरूपाय । ऊर्ध्वरेतसे नमः ॥ ८६०

ओं ऊर्ध्वसिंहाय नमः । सिंहाय । ऊर्ध्वबाहवे । परप्रध्वंसकाय । शंखचक्रधराय । गदापद्मधराय । पञ्चबाणधराय । कामेश्वराय । कामाय । कामपालाय । कामिने । कामविहाराय । कामरूपधराय । सोमसूर्याग्निनेत्राय । सोमपाय । सोमाय । वामाय । वामदेवाय । सामस्वनाय । सौम्याय नमः ॥ ८८०

ओं भक्तिगम्याय नमः । कूष्मांडगणनाथाय । सर्वश्रेयस्कराय । भीष्माय । भीषदाय । भीमविक्रमणाय । मृगग्रीवाय । जीवाय । जिताय । जितकारिणे । जटिने । जामदग्न्याय । जातवेदसे । जपाकुसुमवर्णाय । जप्याय । जपिताय । जरायुजाय । अण्डजाय । स्वेदजाय । उद्भिजाय नमः ॥ ९००

ओं जनार्दनाय नमः । रामाय । जाह्नवीजनकाय । जराजन्मादिदूराय । प्रद्युम्नाय । प्रमोदिने । जिह्वारौद्राय । रुद्राय ।

वीरभद्राय । चिद्रूपाय । समुद्राय । कद्रुद्राय । प्रचेतसे । इन्द्रियाय । इन्द्रियज्ञाय । इन्द्रानुजाय । अतीन्द्रियाय । साराय । इन्दिरापतये । ईशानाय नमः ॥ ९२०

ओं ईड्याय नमः । ईशिताय । इनाय । व्योमात्मने । व्योम्ने । व्योमकेशिने । व्योमाधाराय । व्योमवक्त्राय । असुरघातिने । व्योमदंष्ट्राय । व्योमवासाय । सुकुमाराय । रामाय । शुभाचाराय । विश्वाय । विश्वरूपाय । विश्वात्मकाय । ज्ञानात्मकाय । ज्ञानाय । विश्वेशाय नमः ॥ ९४०

ओं परात्मने नमः । एकात्मने । द्वादशात्मने । चतुर्विंशतिरूपाय । पञ्चविंशतिमूर्तये । षड्विंशकात्मने । सप्तविंशतिकात्मने । धर्मार्थकाम-मोक्षाय । विरक्ताय । भावशुद्धाय । सिद्धाय । साध्याय । शरभाय । प्रबोधाय । सुबोधाय । बुद्धिप्रियाय । स्निग्धाय । विदग्धाय । मुग्धाय । मुनये नमः ॥ ९६०

ओं प्रियंवदाय नमः । श्रव्याय । स्रुक्स्रुवाय । श्रिताय । गृहेशाय । महेशाय । ब्रह्मेशाय । श्रीधराय । सुतीर्थाय । हयग्रीवाय । उग्राय । उग्रवेगाय । उग्रकर्मरताय । उग्रनेत्राय । व्यग्राय । समग्रगुणशालिने । बालग्रहविनाशाय । पिशाचग्रहघातिने । दुष्टग्रहनिहन्त्रे । निग्रहानुग्रहाय नमः ॥ ९८०

ओं वृषध्वजाय नमः । वृष्ण्याय । वृषाय । वृषभाय । उग्रश्रवाय । शान्ताय । श्रुतिधराय । देवदेवेशाय । मधुसूदनाय । पुण्डरीकाक्षाय । दुरितक्षयाय । करुणासिन्धवे । समितिंजयाय । नरसिंहाय । गरुडध्वजाय । यज्ञनेत्राय । कालध्वजाय । जयध्वजाय । अग्निनेत्राय । अमरप्रियाय नमः ॥ १०००

ओं महानेत्राय नमः । भक्तवत्सलाय । धर्मनेत्राय । करुणाकराय । पुण्यनेत्राय । अभीष्टदायकाय । जयसिंहरूपाय नरसिंहरूपाय । रणसिंहरूपाय नरसिंहरूपाय नमः ॥ १००८

॥श्रीः॥

# लक्ष्मीनृसिंहाष्टोत्तरशतनामस्तोत्रम्

नरसिंहो महासिंहो दिव्यसिंहो महाबलः ।
उग्रसिंहो महादेवः स्तंभजश्चोग्रलोचनः ॥ १ ॥

रौद्रः सर्वाद्भुतः श्रीमान् योगानन्दस्त्रिविक्रमः ।
हरिः कोलाहलश्चक्री विजयो जयवर्धनः ॥ २ ॥

पञ्चाननः परं ब्रह्म चाघोरो घोरविक्रमः ।
ज्वलन्मुखो ज्वालमाली महाज्वालो महाप्रभुः ॥ ३ ॥

निटिलाक्षः सहस्राक्षो दुर्निरीक्ष्यः प्रतापनः ।
महादंष्ट्रायुधः प्राज्ञश्चंडकोपी सदाशिवः ॥ ४ ॥

हिरण्यकशिपुध्वंसी दैत्यदानवभञ्जनः ।
गुणभद्रो महाभद्रो बलभद्रः सुभद्रकः ॥ ५ ॥

करालो विकरालश्च विकर्ता सर्वकर्तृकः ।
शिंशुमारस्त्रिलोकात्मा ईशः सर्वेश्वरो विभुः ॥ ६ ॥

भैरवाडंबरो दिव्यश्चाच्युतः कविमाधवः ।
अधोक्षजोऽक्षरः शर्वो वनमाली वरप्रदः ॥ ७ ॥

विश्वंभरोऽद्भुतो भव्यः श्रीविष्णुः पुरुषोत्तमः ।
अनघास्त्रो नखास्त्रश्च सूर्यज्योतिः सुरेश्वरः ॥ ८ ॥

सहस्रबाहुः सर्वज्ञः सर्वसिद्धिप्रदायकः ।
वज्रदंष्ट्रो वज्रनखो महानन्दः परंतपः ॥ ९ ॥

सर्वयंत्रैकरूपश्च सर्वयंत्रविदारणः ।
सर्वतंत्रात्मकोऽव्यक्तः सुव्यक्तो भक्तवत्सलः ॥ १० ॥

वैशाखशुक्लभूतोत्थः शरणागतवत्सलः ।
उदारकीर्तिः पुण्यात्मा महात्मा चंडविक्रमः ॥ ११ ॥

वेदत्रयप्रपूज्यश्च भगवान्परमेश्वरः ।
श्रीवत्सांकः श्रीनिवासो जगद्व्यापी जगन्मयः ॥ १२ ॥

जगत्पालो जगन्नाथो महाकायो द्विरूपभृत् ।
परमात्मा परंज्योतिर्निर्गुणश्च नृकेसरी ॥ १३ ॥

परतत्त्वं परं धाम सच्चिदानन्दविग्रहः ।
लक्ष्मीनृसिंहः सर्वात्मा धीरः प्रह्लादपालकः ॥ १४ ॥

इदं लक्ष्मीनृसिंहस्य नाम्नामष्टोत्तरं शतम् ।
त्रिसंध्यं यः पठेद्भक्त्या सर्वाभीष्टमवाप्नुयात् ॥ १५ ॥

*___*___*

## लक्ष्मीनृसिंहाष्टोत्तरशतनामावलिः

नरसिंहाय नमः । महासिंहाय । दिव्यसिंहाय । महाबलाय । उग्रसिंहाय । महादेवाय । स्तंभजाय । उग्रलोचनाय । रौद्राय । सर्वाद्भुताय । श्रीमते । योगानन्दाय । त्रिविक्रमाय । हरये । कोलाहलाय । चक्रिणे । विजयाय । जयवर्धनाय । पञ्चाननाय । परस्मै ब्रह्मणे नमः ॥ २०

अघोराय नमः । घोरविक्रमाय । ज्वलन्मुखाय । ज्वालमालिने । महाज्वालाय । महाप्रभवे । निटिलाक्षाय । सहस्राक्षाय । दुर्निरीक्ष्याय ।

प्रतापनाय । महादंष्ट्रायुधाय । प्राज्ञाय । चण्डकोपिने । सदाशिवाय । हिरण्यकशिपुध्वंसिने । दैत्यदानवभञ्जनाय । गुणभद्राय । महाभद्राय । बलभद्राय । सुभद्रकाय नमः ।। ४०

करालाय नमः । विकरालाय । विकर्त्रे । सर्वकर्तृकाय । शिंशुमाराय । त्रिलोकात्मने । ईशाय । सर्वेश्वराय । विभवे । भैरवाडंबराय । दिव्याय । अच्युताय । कविमाधवाय । अधोक्षजाय । अक्षराय । शर्वाय । वनमालिने । वरप्रदाय । विश्वंभराय । अद्भुताय नमः ।। ६०

भव्याय नमः । श्रीविष्णवे । पुरुषोत्तमाय । अनघास्त्राय । नखास्त्राय । सूर्यज्योतिषे । सुरेश्वराय । सहस्रबाहवे । सर्वज्ञाय । सर्वसिद्धिप्रदायकाय । वज्रदंष्ट्राय । वज्रनखाय । महानन्दाय । परंतपाय । सर्वयन्त्रैकरूपाय । सर्वयन्त्रविदारणाय । सर्वतन्त्रात्मकाय । अव्यक्ताय । सुव्यक्ताय । भक्तवत्सलाय नमः ।। ८०

वैशाखशुक्लभूतोत्थाय नमः । शरणागतवत्सलाय । उदारकीर्तये । पुण्यात्मने । महात्मने । चण्डविक्रमाय । वेदत्रयप्रपूज्याय । भगवते । परमेश्वराय । श्रीवत्साङ्काय । श्रीनिवासाय । जगद्व्यापिने । जगन्मयाय । जगत्पालाय । जगन्नाथाय । महाकायाय । द्विरूपभृते । परमात्मने । परस्मै ज्योतिषे । निर्गुणाय नमः ।। १००

नृकेसरिणे नमः । परतत्वाय । परस्मै धाम्ने । सच्चिदानन्दविग्रहाय । लक्ष्मीनृसिंहाय । सर्वात्मने । धीराय । प्रह्लादपालकाय नमः ।। १०८

# श्रीपरशुरामाष्टाविंशतिनामस्तोत्रम्

ऋषिरुवाच-

यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम्।
त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम्॥ १॥

दुष्टं क्षत्रं भुवो भारं अब्रह्मण्यमनीनशत्।
तस्य नामानि पुण्यानि वच्मि ते पुरुषर्षभ॥ २॥

भूभारहरणार्थाय मायामानुषविग्रहः।
जनार्दनांशसंभूतः स्थित्युत्पत्त्यप्ययेश्वरः॥ ३॥

भार्गवो जामदग्न्यश्च पित्राज्ञापरिपालकः।
मातृप्राणप्रदः श्रीमान् क्षत्रियान्तकरः प्रभुः॥ ४॥

रामः परशुहस्तश्च कार्तवीर्यमदापहः।
रेणुकादुःखशोकघ्नो विशोकः शोकनाशनः॥ ५॥

नवीननीरदश्यामो रक्तोत्पलविलोचनः।
घोरो दण्डधरो धीरो ब्रह्मण्यो ब्राह्मणप्रियः॥ ६॥

तपोधनो महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः।
उपगीयमानचरितः सिद्धगन्धर्वचारणैः॥ ७॥

जन्ममृत्युजराव्याधिदुःखशोकामयातिगः।
इत्यष्टाविंशतिर्नाम्नां उक्ता स्तोत्रात्मिका शुभा॥ ८॥

अनया प्रीयतां देवो जामदग्न्यो महेश्वरः।
नेदं स्तोत्रमशान्ताय नादान्तायातपस्विने॥ ९॥

नावेदविदुषे वाच्यमशिष्याय खलाय च।
नासूयकायानृजवे न चानिर्दिष्टकारिणे॥ १०॥

इदं प्रियाय पुत्राय शिष्यायानुगताय च।
रहस्यधर्मं वक्तव्यं नान्यस्मै तु कदाचन॥ ११॥

# श्रीपरशुरामाष्टाविंशतिनामावलिः

भूभारभरणार्थाय मायामानुषविग्रहाय नमः । जनार्दनांशसंभूताय । स्थित्युत्पत्त्यप्ययेश्वराय । भार्गवाय । जामदग्न्याय । पित्राज्ञापरिपालकाय । मातृप्राणप्रदाय । श्रीमते । क्षत्रियान्तकराय । प्रभवे । रामाय । परशुहस्ताय । कार्तवीर्यमदापहाय । रेणुकादुःखशोकघ्नाय । विशोकाय । शोकनाशनाय । नवीननीरदश्यमाय । रक्तोत्पलविलोचनाय । घोराय । दण्डधराय । धीराय । ब्रह्मण्याय । ब्राह्मणप्रियाय । तपोधनाय । महेन्द्राद्रौ न्यस्तदण्डाय । प्रशान्तधिये । सिद्धगन्धर्वचारणैरुपगीयमानचरिताय । जन्म मृत्युजराव्याधिदुःखशोकभयातिगाय नमः ॥ २८

पायाद्वो जमदग्निवंशतिलको वीरव्रतालंकृतो
रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः ।
येनाशेषहताहिताङ्गरुधिरैः सन्तर्पिताः पूर्वजाः
भक्त्या चाश्वमखे समुद्रवसना हन्तकारीकृता ॥

# श्रीसत्यनारायणाष्टोत्तरशतनामावलिः

ओं श्रीसत्यदेवाय नमः । सत्यात्मने । सत्यभूताय । सत्यपुरुषाय । सत्यनाथाय । सत्यसाक्षिणे । सत्ययोगाय । सत्यज्ञानाय । सत्यज्ञानप्रियाय । सत्यनिधये । सत्यसंभवाय । सत्यप्रभवे । सत्येश्वराय । सत्यकर्मणे । सत्यपवित्राय । सत्यमंगलाय । सत्यगर्भाय । सत्यप्रजापतये । सत्यविक्रमाय । सत्यसिद्धाय नमः ॥ २०

सत्याच्युताय नमः । सत्यवीराय । सत्यबोधाय । सत्यधर्माय । सत्याग्रजाय । सत्यसन्तुष्टाय । सत्यवराहाय । सत्यपरायणाय । सत्यपूर्णाय । सत्यौषधये । सत्यशाश्वताय । सत्यप्रवर्तनाय । सत्यविभवे । सत्यज्येष्ठाय । सत्यश्रेष्ठाय । सत्यविक्रमिणे । सत्यधन्विने । सत्यमेधसे । सत्याधीशाय । सत्यक्रतवे नमः ।। ४०

सत्यकालाय नमः। सत्यवत्सलाय । सत्यवसवे । सत्यबोधाय । सत्यरुद्राय । सत्यब्रह्मणे । सत्यामृताय । सत्यवेदांगाय । सत्यचतुरात्मने । सत्यभोक्त्रे । सत्यशुचये । सत्यार्चिताय । सत्येन्द्राय । सत्यसंग्रहाय । सत्यस्वर्गाय । सत्यनियमाय । सत्यवेदाय । सत्यवेद्याय । सत्यपीयूषाय । सत्यमायाय नमः ।। ६०

सत्यमोहाय नमः । सत्यसुरानन्दाय । सत्यसागराय । सत्यतपसे । सत्यसिंहाय । सत्यमृगाय । सत्यलोकपालकाय । सत्यस्थिराय । सत्यौषधाय । सत्यदिक्पालकाय । सत्यधनुर्धराय । सत्यांबुजाय । सत्यवाक्याय । सत्यगुरवे । सत्यन्यायाय । सत्यसाक्षिणे । सत्यव्रताय । सत्यसंप्रदायाय । सत्यवह्नये । सत्यवायवे नमः ।। ८०

सत्यशिखराय । सत्यानन्दाय । सत्याधिराजाय । सत्यश्रीपादाय । सत्यगुह्याय । सत्योदराय । सत्यहृत्कमलाय । सत्यनालाय । सत्यहस्ताय । सत्यबाहवे । सत्यमुखाय । सत्यजिह्वाय । सत्यदंष्ट्राय । सत्यनासिकाय । सत्यश्रोत्राय । सत्यचक्षुषे । सत्यशिरसे । सत्यमकुटाय । सत्यांबराय । सत्याभरणाय । १००

सत्यायुधाय । सत्यश्रीवल्लभाय । सत्यगुप्ताय । सत्यपुष्कराय । सत्यमृडाय । सत्यभामारताय । सत्यग्रहरूपिणे । सत्यप्रहरणायुधाय । १०८

# श्रीरामसहस्रनामस्तोत्रम्

पार्वत्युवाच—

श्रोतुमिच्छाम्यहं देव तदेवं सर्वकामदम्।

नाम्नां सहस्रं रामस्य ब्रूहि यद्यस्ति मे दया॥ १

श्रीमहादेव उवाच—

अथ वक्ष्यामि ते देवि रामनामसहस्रकम्।

शृणु चैकमनाः स्तोत्रं गुह्याद्गुह्यतरं महत्॥ २

अस्य श्रीरामसहस्रनामस्तोत्रमहामन्त्रस्य, भगवान् ईश्वर ऋषिः। अनुष्टुप्छन्दः। श्रीरामः परमात्मा देवता। श्रीमान्महाविष्णुरिति बीजम्। गुणभृन्निर्गुणो महानिति शक्तिः। संसारतारको राम इति मन्त्रः। सच्चिदानन्दविग्रह इति कीलकम्। अक्षयः पुरुषः साक्षीति कवचम्। अजेयः सर्वभूतानां इत्यस्त्रम्। राजीवलोचनः श्रीमानिति ध्यानम्। श्रीरामप्रीत्यर्थे दिव्यसहस्रनामजपे विनियोगः।

करन्यासः - श्रीरामचन्द्रायेत्यङ्गुष्ठाभ्यां नमः। सीतापतये इति तर्जनीभ्यां नमः। रघुनाथायेति मध्यमाभ्यां नमः। भरताग्रजायेत्यनामिकाभ्यां नमः। दशरथात्मजायेति कनिष्ठिकाभ्यां नमः। हनुमत्प्रभवे इति करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

ध्यानं—

विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम्।
श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि॥

तत्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरितविश्वमेकम्।
राजाधिराजं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि॥

लमित्यादिपञ्चपूजाः ।

राम: श्रीमान् महाविष्णुर्जिष्णुर्देवहितावहः ।
तत्त्वात्मा तारकं ब्रह्म शाश्वतः सर्वसिद्धिदः ॥

राजीवलोचनः श्रीमान् श्रीरामो रघुपुङ्गवः ।
रामभद्रः सदाचारो राजेन्द्रो जानकीपतिः ॥ १

अग्रगण्यो वरेण्यश्च वरदः परमेश्वरः ।
जनार्दनो जितामित्रः परार्थैकप्रयोजनः ॥ २

विश्वामित्रप्रियो दान्तश्शत्रुजिच्छत्रुतापनः ।
सर्वज्ञः सर्वदेवादिः शरण्यो वालिमर्दनः ॥ ३

ज्ञानभाव्योऽपरिच्छेद्यो वाग्मी सत्यव्रतः शुचिः ।
ज्ञानगम्यो दृढप्रज्ञः खरध्वंसी प्रतापवान् ॥ ४

द्युतिमानात्मवान् वीरो जितक्रोधोऽरिमर्दनः ।
विश्वरूपो विशालाक्षः प्रभुः परिवृढोऽधिपः ॥ ५

ईशः खड्गधरः श्रीमान् कौसल्येयोऽनसूयकः ।
विपुलांसो महोरस्कः परमेष्ठी परायणः ॥ ६

सत्यव्रतः सत्यसन्धो गुरुः परमधार्मिकः ।
लोकज्ञो लोकबन्धुश्च लोकात्मा लोकहृत्प्रभुः ॥ ७

अनादिर्भगवान् सेव्यो जितमायो रघूद्वहः ।
रामो दयाकरो दक्षः सर्वज्ञः सर्वपावनः ॥ ८

ब्रह्मण्यो नीतिमान् गोप्ता सर्वदेवप्रियो हरिः ।
सुन्दरः पीतवासाश्च सूत्रकारः पुरातनः ॥ ९

सौम्यो महर्षिः कोदण्डी सर्वज्ञः सर्वकोविदः ।
कविः सुग्रीववरदः सर्वपुण्याधिकप्रदः ॥ १०

भव्यो जितारिषड्वर्गो महोदारोऽघनाशनः ।
सुकीर्तिरादिपुरुषः कान्तः पुण्यकृतागमः ॥ ११

अकल्मषश्चतुर्बाहुः सर्वावासो दुरासदः ।
स्मितभाषी निवृत्तात्मा स्मृतिमान् वीर्यवान् प्रभुः ॥ १२

धीरो दान्तो घनश्यामः सर्वयुद्धविशारदः ।
आत्मज्ञो योगनिलयः सुमना लक्ष्मणाग्रजः ॥ १३

सर्वतीर्थमयश्शूरः सर्वयज्ञफलप्रदः ।
यज्ञस्वरूपी यज्ञेशो जरामरणवर्जितः ॥ १४

वर्णाश्रमगुरुर्वर्णी शत्रुजित् पुरुषोत्तमः ।
शिवलिङ्गप्रतिष्ठाता परमात्मा परात्परः ॥ १५

प्रमाणभूतो दुर्ज्ञेयः पूर्णः परपुरञ्जयः ।
अनन्तदृष्टिरानन्दो धनुर्वेदो धनुर्धरः ॥ १६

गुणाकरो गुणश्रेष्ठः सच्चिदानन्दविग्रहः ।
अभिवाद्यो महाकायो विश्वकर्मा विशारदः ॥ १७

विनीतात्मा वीतरागस्तपस्वीशो जनेश्वरः ।
कल्याणप्रकृतिः सर्वः सर्वेशः सर्वकामदः ॥ १८

अक्षरः पुरुषः साक्षी केशवः पुरुषोत्तमः ।
लोकाध्यक्षो महाकायो विभीषणवरप्रदः ॥ १९

आनन्दविग्रहो ज्योतिर्हनुमत्प्रभुरक्षयः ।
भ्राजिष्णुः सहनो भोक्ता सत्यवादी बहुश्रुतः ॥ २०

सुखदः कारणं कर्ता भवबन्धविमोचनः ।
देवचूडामणिर्नेता ब्रह्मण्यो ब्रह्मवर्धनः ॥ २१

संसारतारको रामः सर्वदुःखविमोक्षकृत् ।
विद्वत्तमो विश्वकर्ता विश्वहर्ता च विश्वधृत् ॥ २२

नित्यो नियतकल्याणः सीताशोकविनाशकृत् ।
काकुत्स्थः पुण्डरीकाक्षो विश्वामित्रभयापहः ॥ २३

मारीचमथनो रामो विराधवधपण्डितः ।
दुस्स्वप्ननाशनो रम्यः किरीटी त्रिदशाधिपः ॥ २४

महाधनुर्महाकायो भीमो भीमपराक्रमः ।
तत्त्वस्वरूपी तत्त्वज्ञस्तत्त्ववादी सुविक्रमः ॥ २५

भूतात्मा भूतकृत्स्वामी कालज्ञानी महापटुः ।
अनिर्विण्णो गुणग्रामो निष्कलङ्कः कलङ्कहा ॥ २६

स्वभावभद्रश्शत्रुघ्नः केशवः स्थाणुरीश्वरः ।
भूतादिः शम्भुरादित्यः स्थविष्ठश्शाश्वतो ध्रुवः ॥ २७

कवची कुण्डली चक्री खड्गी भक्तजनप्रियः ।
अमृत्युर्जन्मरहितः सर्वजित्सर्वगोचरः ॥ २८

अनुत्तमोऽप्रमेयात्मा सर्वादिर्गुणसागरः ।
समः समात्मा समगो जटामुकुटमण्डितः ॥ २९

अजेयः सर्वभूतात्मा विष्वक्सेनो महातपाः ।
लोकाध्यक्षो महाबाहुरमृतो वेदवित्तमः ॥ ३०

सहिष्णुः सद्गतिः शास्ता विश्वयोनिर्महाद्युतिः ।
अतीन्द्र ऊर्जितः प्रांशुरुपेन्द्रो वामनो बली ॥ ३१

धनुर्वेदो विधाता च ब्रह्मा विष्णुश्च शङ्करः ।
हंसो मरीचिर्गोविन्दो रत्नगर्भो महाद्युतिः ॥ ३२

व्यासो वाचस्पतिः सर्वदक्पिताऽसुरमर्दनः ।
जानकीवल्लभः पूज्यः प्रकटः प्रीतिवर्धनः ।। ३३

सम्भवोऽतीन्द्रियो वेद्योऽनिर्देश्यो जाम्बवत्प्रियः ।
मदनो मन्मथो व्यापी विश्वरूपी निरंजनः ।। ३४

नारायणो घृणिः साधुर्जटायुप्रीतिवर्धनः ।
नैकरूपो जगन्नाथः सुरकार्यहितः स्वभूः ।। ३५

जितक्रोधो जितारातिः प्लवगाधिपराज्यदः ।
मुकुन्दः सुभुजो नैकमायो भव्यःप्रमोदनः ।। ३६

चण्डांशुः सिद्धसंकल्पः[1] शरणागतवत्सलः ।
अगदो रोगहर्ता च मन्त्रविन्मन्त्रभावनः ।। ३७

सौमित्रिवत्सलो धुर्यो व्यक्ताव्यक्तस्वरूपधृत् ।
विशिष्टो ग्रामणीः श्रीमाननुकूलः प्रियंवदः ।। ३८

अतुलः सात्त्विको धीरः शरासनविशारदः ।
ज्येष्ठः सर्वगुणोपेतः शक्तिमांस्ताटकान्तकः ।। ३९

वैकुण्ठः प्राणिनां प्राणः कमठः कमलापतिः ।
गोवर्धनधरो मत्स्यरूपः कारुण्यसागरः ।। ४०

कुम्भकर्णप्रभेत्ता च गोपीगोपालसंवृतः ।
मायावी स्वापनो व्यापी रैणुकेयबलापहः ।। ४१

पिनाकमथनो वन्द्यः संमतो गरुडध्वजः ।
लोकत्रयाश्रयो लोकभरतो भरताग्रजः ।। ४२

श्रीधरः सद्गतिर्लोकसाक्षी नारायणो बुधः ।
मनोवेगी मनोरूपी पूर्णः पुरुषपुङ्गवः ।। ४३

यदुश्रेष्ठो यदुपतिर्भूतावासः सुविक्रमः ।
तेजोधरो धरोऽव्यग्रश्चतुर्मूर्तिर्महानिधिः ॥ ४४

चाणूरमर्दनो वन्द्यःशान्तो भरतवन्दितः ।
शब्दातिगो गभीरात्मा कोमलाङ्गः प्रजागरः ४५

लोकगर्भःशेषशायी क्षीराब्धिनिलयोऽमलः ।
आत्मयोनिरदीनात्मा सहस्राक्षः सहस्रपात् ॥ ४६

पर्जन्यो रघुजो भूतावासः कमललोचनः ।
श्रीवत्सवक्षाः श्रीवासो वीरहा लक्ष्मणाग्रजः ॥ ४७

लोकाभिरामो लोकारिमर्दनः सेवकप्रियः ।
सनातनतमो मेघश्यामलो राक्षसान्तकः ॥ ४८

दिव्यायुधधरश्श्रीमानप्रमेयो जितेन्द्रियः ।
भूदेववन्द्यो जनकप्रियकृत्प्रपितामहः ॥ ४९

उत्तमः सात्त्विकः सत्यः सत्यसन्धस्त्रिविक्रमः ।
सुव्रतः सुलभः सूक्ष्मः सुघोषः सुखदः सुहृत् ॥ ५०

दामोदरोऽच्युतश्शार्ङ्गी वामनो मधुराधिपः ।
देवकीनन्दनः शौरिः शूरः कैटभमर्दनः ॥ ५१

सप्ततालप्रभेत्ता च मित्रवंशप्रवर्धनः ।
कालस्वरूपी कालात्मा कालः कल्याणदः कविः ॥ ५२

संवत्सर ऋतुः पक्षो ह्ययनं दिवसो युगः ।
स्तव्यो विविक्तो निर्लेपः सर्वव्यापी निराकुलः ।
अनादिनिधनः सर्वलोकपूज्यो निरामयः ॥ ५३

हंसो रसज्ञः सारज्ञो लोकसारो रसात्मकः ।
सर्वदुःखातिगो विद्याराशिः परमगोचरः ॥ ५४

शेषो विशेषो विगतकल्मषो रघुनायकः ।
वर्णश्रेष्ठो वर्णबाह्यो वर्ण्यो वर्ण्यगुणोज्ज्वलः ॥ ५५

कर्मसाक्ष्यमरश्रेष्ठो देवदेवः सुखप्रदः ।
देवाधिदेवो देवर्षिर्देवासुरनमस्कृतः ॥ ५६

सर्वदेवमयश्चक्री शार्ङ्गपाणी रघुत्तमः ।
मनो बुद्धिरहंकारः प्रकृतिः पुरुषोऽव्ययः ॥ ५७

अहल्यापावनः स्वामी पितृभक्तो वरप्रदः ।
न्यायो न्यायी नयी श्रीमान्नयो नगधरो ध्रुवः ॥ ५८

लक्ष्मीविश्वम्भराभर्ता देवेन्द्रो बलिमर्दनः ।
बाणारिर्वर्धनो यज्वाऽनुत्तमो मुनिसेवितः ॥ ५९

देवाग्रणीः शिवध्यानतत्परः परमः परः ।
सामगेयः प्रियोऽक्रूरः पुण्यकीर्तिस्सुलोचनः ॥ ६०

पुण्यः पुण्याधिकः पूर्वः पूर्णः पूरयिता रविः ।
जटिलः कल्मषध्वान्तप्रभञ्जनविभावसुः ॥ ६१

अव्यक्तलक्षणोऽव्यक्तो दशास्यद्विपकेसरी ।
कलानिधिः कलानाथः कमलानन्दवर्धनः ॥ ६२

जयी जितारिः सर्वाघशमनो भवभंजनः ।
अलंकरिष्णुरचलो रोचिष्णुर्विक्रमोत्तमः ॥ ६३

अंशुः शब्दपतिः शब्दागोचरो रंजनो रघुः ।
निश्शब्दः प्रणवो मायी स्थूलसूक्ष्मविलक्षणः ॥ ६४

आत्मयोनिरदीनात्मा सप्तजिह्वः सहस्रपात् ।
अमृतांशुर्महागर्भो निवृत्तविषयस्पृहः ॥ ६५

त्रिकालज्ञो मुनिः साक्षी विहायसगतिः कृती ।
सनातनतमस्स्रग्वी पेशलो जयिनां वरः ॥ ६६

शक्तिमाञ्शङ्खभृन्नादः गदापद्मरथाङ्गभृत् ।
निरीहो निर्विकल्पश्च चिद्रूपो वीतसाध्वसः ॥ ६७

शतानन: सहस्राक्षः शतमूर्तिर्घनप्रभः ।
हृत्पुण्डरीकशयनः कठिनो द्रव एव च ॥ ६८

उग्रो ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः ।
अधर्मशत्रू रक्षोघ्नः पुरुहूतः पुरुष्टुतः ॥ ६९

ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ।
हिरण्यगर्भो ज्योतिष्मान् सुललाटः सुविक्रमः ॥ ७०

शिवपूजारतः श्रीमान् वाचा सुप्रियकृद्वशी ।
नरो नारायणः श्यामः कपर्दी नीललोहितः ॥ ७१

रुद्रः पशुपतिः स्थाणुर्विश्वामित्रद्विजेश्वरः ।
मातामहो मातरिश्वा विरिञ्चो विष्टरश्रवाः ॥ ७२

अक्षोभ्यः सर्वभूतानां चण्डः सत्यपराक्रमः ।
वालखिल्यो महाकल्पः कल्पवृक्षः कलाधरः ॥ ७३

निदाघस्तपनोऽमोघः श्लक्ष्णः परबलापहृत् ।
कबन्धमथनो दिव्यः कम्बुग्रीवःशिवप्रियः ॥ ७४

शङ्खोऽनिलः सुनिष्पन्नः सुलभः शिशिरात्मकः ।
असंसृष्टातिथिः शूरः प्रमाथी पापनाशकृत् ॥ ७५

वसुश्रवाः कव्यवाहः प्रतपा विश्वभोजनः ।
रामो नीलोत्पलश्यामो ज्ञानस्कन्धो महाद्युतिः ॥ ७६

पवित्रपादः पापारिर्मणिपूरनभोगतिः ।
उत्तारणो दुष्कृतिहा दुर्धर्षो दुस्सहोऽभयः ।। ७७

अमृतेशोऽमृतवपुर्धर्मी धर्मकृपाकरः ।
भर्गो विवस्वानादित्यो योगाचार्यो दिवस्पतिः ।। ७८

उदारकीर्तिरुद्योगी वाङ्मयः सदसन्मयः ।
नक्षत्रमाली नाकेशः स्वाधिष्ठानषडाश्रयः ।। ७९

चतुर्वर्गफलो वर्गी शक्तित्रयफलं निधिः ।
निधानगर्भो निर्व्याजो निरीशो व्यालमर्दनः ।। ८०

श्रीवल्लभः शिवारम्भः शान्तिभद्रः समञ्जसः ।
भूशयो भूतिकृद्भूतिर्भूषणो भूतवाहनः ।। ८१

अकायो भक्तकायस्थः कालज्ञानी महावटुः ।
परार्थवृत्तिरचलो विविक्तः श्रुतिसागरः ।। ८२

स्वभावभद्रो मध्यस्थः संसारभयनाशनः ।
वेद्यो वैद्यो वियद्गोप्ता सर्वामरमुनीश्वरः ।। ८३

सुरेन्द्रः शरणं शर्म कर्मकृत्कर्म्यधोक्षजः ।
ध्येयो धुर्यो धराधीशः संकल्पः शर्वरीपतिः ।। ८४

परमार्थगुरुर्वृद्धः शुचिराश्रितवत्सलः ।
विष्णुर्जिष्णुर्विभुर्यज्ञो यज्ञेशो यज्ञपालकः ।। ८५

प्रभविष्णुर्ग्रसिष्णुश्च लोकात्मा लोकभावनः ।
केशवः केशिहा काव्यः कविः कारणकारणम् ।। ८६

कालकर्ता कालशेषो वासुदेवः पुरुष्टुतः ।
आदिकर्ता वराहश्च माधवो मधुसूदनः ।। ८७

नारायणो नरो हंसो विष्वक्सेनो जनार्दनः ।
विश्वकर्ता महायज्ञो ज्योतिष्मान् पुरुषोत्तमः ॥ ८८

वैकुण्ठः पुण्डरीकाक्षः कृष्णः सूर्यः सुरार्चितः ।
नारसिंहो महाभीमो वज्रदंष्ट्रो नखायुधः ॥ ८९

आदिदेवो जगत्कर्ता योगीशो गरुडध्वजः ।
गोविन्दो गोपतिर्गोप्ता भूपतिर्भुवनेश्वरः ॥ ९०

पद्मनाभो हृषीकेशो धाता दामोदरः प्रभुः ।
त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः ॥ ९१

वामनो दुष्टदमनो गोविन्दो गोपवल्लभः ।
भक्तप्रियोऽच्युतः सत्यः सत्यकीर्तिर्धृतिः स्मृतिः ॥ ९२

कारुण्यं करुणो व्यासः पापहा शान्तिवर्धनः ।
संन्यासी शास्त्रतत्त्वज्ञो मन्दराद्रिनिकेतनः ॥ ९३

बदरीनिलयः शान्तस्तपस्वी वैद्युतप्रभः ।
भूतावासो गुहावासः श्रीनिवासः श्रियःपतिः ॥ ९४

तपोवासो मुदावासः सत्यवासः सनातनः ।
पुरुषः पुष्करः पुण्यः पुष्कराक्षो महेश्वरः ॥ ९५

पूर्णमूर्तिः पुराणज्ञः पुण्यदः प्रीतिवर्धनः ।
शङ्खी चक्री गदी शार्ङ्गी लाङ्गली मुसली हली ॥ ९६

किरीटी कुण्डली हारी मेखली कवची ध्वजी ।
योद्धा जेता महावीर्यः शत्रुजिच्छत्रुतापनः ॥ ९७

शास्ता शास्त्रकरः शास्त्रं शङ्करः शङ्करस्तुतः ।
सारथिः सात्त्विकः स्वामी सामवेदप्रियः समः ॥ ९८

पवनः संहतः शक्तिः सम्पूर्णाङ्गः समृद्धिमान्।
स्वर्गदः कामदः श्रीदः कीर्तिदोऽकीर्तिनाशनः ॥ ९९

मोक्षदः पुण्डरीकाक्षः क्षीराब्धिकृतकेतनः ।
सर्वात्मा सर्वलोकेशः प्रेरकः पापनाशनः ॥ १००

वैकुण्ठः पुण्डरीकाक्षः सर्वदेवनमस्कृतः ।
सर्वव्यापी जगन्नाथः सर्वलोकमहेश्वरः ॥ १०१

सर्गस्थित्यन्तकृद्देवः सर्वलोकसुखावहः ।
अक्षय्यः शाश्वतोऽनन्तः क्षयवृद्धिविवर्जितः ॥ १०२

निर्लेपो निर्गुणः सूक्ष्मो निर्विकारो निरञ्जनः ।
सर्वोपाधिविनिर्मुक्तः सत्तामात्रव्यस्थितः ॥ १०३

अधिकारी विभुर्नित्यः परमात्मा सनातनः ।
अचलो निर्मलो व्यापी नित्यतृप्तो निराश्रयः ॥ १०४

श्यामो युवा लोहिताक्षो दीप्तास्यो मितभाषणः ।
आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ।१०५

सत्यवान्गुणसंपन्नो दीप्यमानः स्वतेजसा[1] ।
कालात्मा भगवान्कालः कालचक्रप्रवर्तकः ॥ १०६

नारायणः परं ज्योतिः परमात्मा सनातनः ।
विश्वसृड्विश्वगोप्ता च विश्वभोक्ता च शाश्वतः ॥ १०७

विश्वेश्वरो विश्वमूर्तिर्विश्वात्मा विश्वभावनः ।
सर्वभूतसुहृच्छान्तः सर्वभूतानुकंपनः ॥ १०८

सर्वेश्वरेश्वरः सर्वः श्रीमानाश्रितवत्सलः ।
सर्वगः सर्वभूतेशः सर्वभूताशयस्थितः ॥ १०९

अभ्यन्तरस्थस्तमसश्छेत्ता नारायणः परः ।
अनादिनिधनः स्रष्टा प्रजापतिपतिर्हरिः ॥ ११०

नरसिंहो हृषीकेशः सर्वात्मा सर्वदृग्वशी ।
जगतस्तस्थुषश्चैव प्रभुर्नेता सनातनः ॥ १११

कर्ता धाता विधाता च सर्वेषां प्रभुरीश्वरः ।
सहस्रमूर्तिर्विश्वात्मा विष्णुर्विश्वदृगव्ययः ॥ ११२

पुराणःपुरुषः स्रष्टा सहस्राक्षः सहस्रपात् ।
तत्त्वं नारायणो विष्णुर्वासुदेवः सनातनः ॥ ११३

परमात्मा परं ब्रह्म सच्चिदानन्दविग्रहः ।
परं ज्योतिः परं धाम पराकाशः परात्परः ॥ ११४

अच्युतः पुरुषः कृष्णः शाश्वतः शिव ईश्वरः ।
नित्यः सर्वगतः स्थाणुरुग्रः साक्षी प्रजापतिः ॥ ११५

हिरण्यगर्भः सविता लोककृल्लोकभृद्विभुः ।
रामः श्रीमान् महाविष्णुर्जिष्णुर्देवहितावहः ॥ ११६

तत्त्वात्मा तारकं ब्रह्म शाश्वतः सर्वसिद्धिदः ।
अकारवाच्यो भगवान् श्रीभूनीलापतिः[1] पुमान् ॥ ११७

सर्वलोकेश्वरः श्रीमान् सर्वज्ञः सर्वतोमुखः ।
स्वामी सुशीलः सुलभः सर्वज्ञः सर्वशक्तिमान् ॥ ११८

नित्यः सम्पूर्णकामश्च नैसर्गिकसुहृत्सुखी ।
कृपापीयूषजलधिश्शरण्यः सर्वदेहिनाम् ॥ ११९

श्रीमान्नारायणः स्वामी जगतां पतिरीश्वरः ।
श्रीशः शरण्यो भूतानां संश्रिताभीष्टदायकः ।
अनन्तः श्रीपती रामो गुणभृन्निर्गुणो महान् ॥ १२०

*___*___*

# श्रीरामसहस्रनामावलिः

ओं रामाय नमः। श्रीमते। महाविष्णवे। जिष्णवे। देवहितावहाय। तत्त्वात्मने। तारकाय ब्रह्मणे। शाश्वताय। सर्वसिद्धिदाय[1]। राजीवलोचनाय। श्रीमते। श्रीरामाय। रघुपुङ्गवाय। रामभद्राय। सदाचाराय। राजेन्द्राय। जानकीपतये। अग्रगण्याय। वरेण्याय। वरदाय नमः। २०

ओं परमेश्वराय नमः। जनार्दनाय। जितामित्राय। परार्थैकप्रयोजनाय। विश्वामित्रप्रियाय। दान्ताय। शत्रुजिते। शत्रुतापनाय। सर्वज्ञाय। सर्वदेवादये। शरण्याय। वालिमर्दनाय। ज्ञानभाव्याय। अपरिच्छेद्याय। वाग्मिने। सत्यव्रताय। शुचये। ज्ञानगम्याय। दृढप्रज्ञाय। खरध्वंसिने नमः। ४०

ओं प्रतापवते नमः। द्युतिमते। आत्मवते। वीराय। जितक्रोधाय। अरिमर्दनाय। विश्वरूपाय। विशालाक्षाय। प्रभवे। परिबृढाय। अधिपाय। ईशाय। खड्गधराय। श्रीमते। कौसल्येयाय। अनसूयकाय। विपुलांसाय। महोरस्काय। परमेष्ठिने। परायणाय नमः। ६०

ओं सत्यव्रताय नमः। सत्यसन्धाय। गुरवे। परमधार्मिकाय। लोकज्ञाय। लोकबन्धवे। लोकात्मने। लोकहृते। प्रभवे। अनादये। भगवते। सेव्याय। जितमायाय। रघूद्वहाय। रामाय। दयाकराय। दक्षाय। सर्वज्ञाय। सर्वपावनाय। ब्रह्मण्याय नमः। ८०

ओं नीतिमते नमः। गोप्त्रे। सर्वदेवप्रियाय। हरये। सुन्दराय। पीतवाससे। सूत्रकाराय। पुरातनाय। सौम्याय। महर्षये। कोदण्डिने। सर्वज्ञाय। सर्वकोविदाय। कवये। सुग्रीववरदाय। सर्वपुण्याधिकप्रदाय। भव्याय। जितारिषड्वर्गाय। महोदाराय। अघनाशनाय नमः। १००

ओं सुकीर्तये नमः। आदिपुरुषाय। कान्ताय। पुण्यकृतागमाय। अकल्मषाय। चतुर्बाहवे। सर्वावासाय। दुरासदाय। स्मितभाषिणे। निवृत्तात्मने। स्मृतिमते। वीर्यवते। प्रभवे। धीराय। दान्ताय। धनश्यामाय। सर्वयुद्धविशारदाय। आत्मज्ञाय। योगनिलयाय। सुमनसे नमः। १२०

ओं लक्ष्मणाग्रजाय नमः। सर्वतीर्थमयाय। शूराय। सर्वयज्ञफल-प्रदाय। यज्ञस्वरूपिणे। यज्ञेशाय। जरामरणवर्जिताय। वर्णाश्रमगुरवे। वर्णिने। शत्रुजिते। पुरुषोत्तमाय। शिवलिङ्गप्रतिष्ठात्रे। परमात्मने। परात्पराय। प्रमाणभूताय। दुर्ज्ञेयाय। पूर्णाय। परपुरञ्जयाय। अनन्तदृष्टये। आनन्दाय नमः। १४०

ओं धनुर्वेदाय नमः। धनुर्धराय। गुणाकराय। गुणश्रेष्ठाय। सच्चिदानन्दविग्रहाय। अभिवाद्याय। महाकायाय। विश्वकर्मणे। विशारदाय। विनीतात्मने। वीतरागाय। तपस्वीशाय। जनेश्वराय। कल्याणप्रकृतये। सर्वाय। सर्वेशाय। सर्वकामदाय। अक्षराय। पुरुषाय। साक्षिणे नमः। १६०

ओं केशवाय नमः। पुरुषोत्तमाय। लोकाध्यक्षाय। महाकायाय। विभीषणवरप्रदाय। आनन्दविग्रहाय। ज्योतिषे। हनुमत्प्रभवे। अक्षयाय। भ्राजिष्णवे। सहनाय। भोक्त्रे। सत्यवादिने। बहुश्रुताय। सुखदाय। कारणाय। कर्त्रे। भवबन्धविमोचनाय। देवचूडामणये। नेत्रे नमः॥ १८०

ओं ब्रह्मण्याय नमः। ब्रह्मवर्धनाय। संसारतारकाय। रामाय। सर्वदुःखविमोक्षकृते। विद्वत्तमाय। विश्वकर्त्रे। विश्वहर्त्रे। विश्वधृते। नित्याय। नियतकल्याणाय। सीताशोकविनाशनाय। काकुत्स्थाय। पुण्डरीकाक्षाय। विश्वामित्रभयापहाय। मारीचमथनाय। रामाय। विराधवधपण्डिताय। दुःस्वप्ननाशनाय। रम्याय नमः। २००

ओं किरीटिने नमः । त्रिदशाधिपाय । महाधनुषे । महाकायाय । भीमाय । भीमपराक्रमाय । तत्त्वस्वरूपिणे । तत्त्वज्ञाय । तत्त्ववादिने । सुविक्रमाय । भूतात्मने । भूतकृते । स्वामिने । कालज्ञानिने । महापटवे । अनिर्विण्णाय । गुणग्रामाय । निष्कलङ्काय । कलङ्कघ्ने । स्वभावभद्राय नमः । २२०

ओं शत्रुघ्नाय नमः । केशवाय । स्थाणवे । ईश्वराय । भूतादये । शंभवे । आदित्याय । स्थविष्ठाय । शाश्वताय । ध्रुवाय । कवचिने । कुण्डलिने । चक्रिणे । खड्गिने । भक्तजनप्रियाय । अमृत्यवे । जन्मरहिताय । सर्वजिते । सर्वगोचराय । अनुत्तमाय नमः । २४०

ओं अप्रमेयात्मने नमः । सर्वादये । गुणसागराय । समाय । समात्मने । समगाय । जटामकुटमण्डिताय । अजेयाय । सर्वभूतात्मने । विष्वक्सेनाय । महातपसे । लोकाध्यक्षाय । महाबाहवे । अमृताय । वेदवित्तमाय । सहिष्णवे । सद्गतये । शास्त्रे । विश्वयोनये । महाद्युतये नमः । २६०

ओं अतीन्द्राय नमः । ऊर्जिताय । प्रांशवे । उपेन्द्राय । वामनाय । बलिने । धनुर्वेदाय । विधात्रे । ब्रह्मणे । विष्णवे । शङ्कराय । हंसाय । मरीचये । गोविन्दाय । रत्नगर्भाय । महाद्युतये । व्यासाय । वाचस्पतये । सर्वदर्पाय । पित्रे नमः । २८०

ओं असुरमर्दनाय नमः । जानकीवल्लभाय । पूज्याय । प्रकटाय । प्रीतिवर्धनाय । संभवाय । अतीन्द्रियाय । वेद्याय । अनिर्देश्याय । जांबवत्प्रियाय । मदनाय । मन्मथाय । व्यापिने । विश्वरूपिणे । निरञ्जनाय । नारायणाय । घृणिने । साधवे । जटायुप्रीतिवर्धनाय । नैकरूपाय नमः । ३००

ओं जगन्नाथाय नमः। सुरकार्यहिताय। स्वभुवे। जितक्रोधाय। जितारातये। प्लवगाधिपराज्यदाय। मुकुन्दाय। सुभजाय। नैकमायाय। भव्याय। प्रमोदनाय। चण्डांशवे। सिद्धसङ्कल्पाय। शरणागतवत्सलाय। अगदाय। रोगहर्त्रे। मन्त्रविदे। मन्त्रभावनाय। सौमित्रिवत्सलाय। धुर्याय नमः। ३२०

ओं व्यक्ताव्यक्तस्वरूपधृते नमः। विशिष्टाय। ग्रामण्ये। श्रीमते। अनुकूलाय। प्रियंवदाय। अतुलाय। सात्त्विकाय। धीराय। शरासनविशारदाय। ज्येष्ठाय। सर्वगुणोपेताय। शक्तिमते। ताटकान्तकाय। वैकुण्ठाय। प्राणिनां प्राणाय। कमठाय। कमलापतये। गोवर्धनधराय। मत्स्यरूपाय नमः। ३४०

ओं कारुण्यसागराय नमः। कुम्भकर्णप्रभेत्त्रे। गोपीगोपालसंवृताय। मायाविने। व्यापनाय। व्यापिने। रैणुकेयबलापहाय। पिनाकमथनाय। वन्द्याय। संमताय। गरुडध्वजाय। लोकत्रयाश्रयाय। लोकभरताय। भरताग्रजाय। श्रीधराय। सद्गतये। लोकसाक्षिणे। नारायणाय। बुधाय। मनोवेगिने नमः। ३६०

ओं मनोरूपिणे नमः। पूर्णाय। पुरुषपुङ्गवाय। यदुश्रेष्ठाय। यदुपतये। भूतावासाय। सुविक्रमाय। तेजोधराय। धराय। अव्यग्राय। चतुर्मूर्तये। महानिधये। चाणूरमर्दनाय। वन्द्याय। शान्ताय। भरतवन्दिताय। शब्दातिगाय। गभीरात्मने। कोमलाङ्गाय। प्रजागराय नमः। ३८०

ओं लोकगर्भाय नमः। शेषशायिने। क्षीराब्धिनिलयाय। अमलाय। आत्मयोनये। अदीनात्मने। सहस्राक्षाय। सहस्रपदे। पर्जन्याय। रघुजाय। भूतावासाय। कमललोचनाय। श्रीवत्सवक्षसे। श्रीवासाय। वीरघ्ने। लक्ष्मणाग्रजाय। लोकाभिरामाय। लोकारिमर्दनाय। सेवकप्रियाय। सनातनतमाय नमः। ४००

ओं मेघश्यामलाय नमः । राक्षसान्तकाय । दिव्यायुधधराय । श्रीमते । अप्रमेयाय । जितेन्द्रियाय । भूदेववन्द्याय । जनकप्रियकृते । प्रपितामहाय । उत्तमाय । सात्विकाय । सत्याय । सत्यसन्धाय । त्रिविक्रमाय । सुव्रताय । सुलभाय । सूक्ष्माय । सुघोषाय । सुखदाय । सुहृदे नमः । ४२०

ओं दामोदराय नमः । अच्युताय । शार्ङ्गिणे । वामनाय । मधुराधिपाय । देवकीनन्दनाय । शौरये । शूराय । कैटभमर्दनाय । सप्ततालप्रभेत्त्रे । मित्रवंशप्रवर्धनाय । कालस्वरूपिणे । कालात्मने । कालाय । कल्याणदाय । कवये । संवत्सराय । ऋतवे । पक्षाय । अयनाय नमः । ४४०

ओं दिवसाय नमः । युगाय । स्तव्याय । विविक्ताय । निर्लेपाय । सर्वव्यापिने । निराकुलाय । अनादिनिधनाय । सर्वलोकपूज्याय । निरामयाय । हंसाय । रसज्ञाय । सारज्ञाय । लोकसाराय । रसात्मकाय । सर्वदुःखातिगाय । विद्याराशये । परमगोचराय । शेषाय । विशेषाय नमः । ४६०

विगतकल्मषाय नमः । रघुनायकाय । वर्णश्रेष्ठाय । वर्णबाह्याय । वर्ण्याय । वर्ण्यगुणोज्ज्वलाय । कर्मसाक्षिणे । अमरश्रेष्ठाय । देवदेवाय । सुखप्रदाय । देवाधिदेवाय । देवर्षये । देवासुरनमस्कृताय । सर्वदेवमयाय । चक्रिणे । शार्ङ्गपाणये । रघूत्तमाय । मनसे । बुद्ध्यै । अहङ्काराय नमः । ४८०

ओं प्रकृत्यै नमः । पुरुषाय । अव्ययाय । अहल्यापावनाय । स्वामिने । पितृभक्ताय । वरप्रदाय । न्यायाय । न्यायिने । नयिने । श्रीमते । नयाय । नगधराय । ध्रुवाय । लक्ष्मीविश्वंभराभर्त्रे । देवेन्द्राय । बलिमर्दनाय । बाणारये । वर्धनाय । यज्वने नमः । ५००

ओं अनुत्तमाय नमः । मुनिसेविताय । देवाग्रण्ये । शिवध्यान-तत्पराय । परमाय । पराय । सामगेयाय । प्रियाय । अक्रूराय । पुण्यकीर्तये । सुलोचनाय । पुण्याय । पुण्याधिकाय । पूर्वाय । पूर्णाय । पूरयित्रे । रवये । जटिलाय । कल्मषध्वान्तप्रभञ्जनविभावसवे । अव्यक्तलक्षणाय नमः । ५२०

ओं अव्यक्ताय नमः । दशास्यद्विपकेसरिणे । कलानिधये । कलानाथाय । कमलानन्दवर्धनाय । जयाय । जितारये । सर्वाधिशमनाय । भवभञ्जनाय । अलङ्करिष्णवे । अचलाय । रोचिष्णवे । विक्रमोत्तमाय । अंशवे । शब्दपतये । शब्दागोचराय । रञ्जनाय । रघवे । निःशब्दाय । प्रणवाय नमः । ५४०

ओं मायिने नमः । स्थूलसूक्ष्मविलक्षणाय । आत्मयोनये अदीनात्मने । सप्तजिह्वाय । सहस्रपदे । अमृतांशवे । महागर्भाय निवृत्तविषयस्पृहाय । त्रिकालज्ञाय । मुनये । साक्षिणे । विहायसगतये । कृतिने । सनातनतमाय । स्रग्विणे । पेशलाय । जयिनां वराय । शक्तिमते । शङ्खभृते नमः । ५६०

ओं नादाय नमः । गदापद्मरथाङ्गभृते । निरीहाय । निर्विकल्पाय । चिद्रूपाय । वीतसाध्वसाय । शताननाय । सहस्राक्षाय । शतमूर्तये । घनप्रभाय । हृत्पुण्डरीकशयनाय । कठिनाय । द्रवाय । उग्राय । ग्रहपतये । कृष्णाय । समर्थाय । अनर्थनाशनाय । अधर्मशत्रवे । रक्षोघ्नाय नमः । ५८०

ओं पुरुहूताय नमः । पुरुष्टुताय । ब्रह्मगर्भाय । बृहद्गर्भाय । धर्मधेनवे । धनागमाय । हिरण्यगर्भाय । ज्योतिष्मते । सुललाटाय । सुविक्रमाय । शिवपूजारताय । श्रीमते वाचा सुप्रियकृते । वशिने । नराय । नारायणाय । श्यामाय । कपर्दिने । नीललोहिताय । रुद्राय । पशुपतये नमः । ६००

ओं स्थाणवे नमः । विश्वामित्रद्विजेश्वराय । मातामहाय । मातरिश्वने । विरिञ्चाय । विष्टरश्रवसे । सर्वभूतानां अक्षोभ्याय । चण्डाय । सत्यपराक्रमाय । वालखिल्याय । महाकल्पाय । कल्पवृक्षाय । कलाधराय । निदाघाय । तपनाय । अमोघाय । श्लक्ष्णाय । परबलापहृते । कबन्धमथनाय । दिव्याय नमः । ६२०

ओं कम्बुग्रीवाय नमः । शिवप्रियाय । शङ्खाय । अनिलाय । सुनिष्पन्नाय । सुलभाय । शिशिरात्मकाय । असंसृष्टातिथये । शूराय । प्रमाथिने । पापनाशकृते । वसुश्रवसे । कव्यवाहाय । प्रतपसे । विश्वभोजनाय । रामाय नीलोत्पलश्यामाय । ज्ञानस्कन्धाय । महाद्युतये । पवित्रपादाय । पापारये नमः । ६४०

मणिपूरनभोगतये नमः । उत्तारणाय । दुष्कृतिघ्ने । दुर्धर्षाय । दुःसहाय । अभयाय । अमृतेशाय । अमृतवपुषे । धर्माय । धर्मकृपाकराय । भर्गाय । विवस्वते । आदित्याय । योगाचार्याय । दिवस्पतये । उदारकीर्तये । उद्योगिने । वाङ्मयाय । सदसन्मयाय । नक्षत्रमालिने नमः । ६६०

ओं नाकेशाय नमः । स्वाधिष्ठानषडाश्रयाय । चतुर्वर्गफलाय । वर्गिणे । शक्तित्रयफलाय । निधये । निधानगर्भाय । निर्व्याजाय । निरीशाय । व्यालमर्दनाय । श्रीवल्लभाय । शिवारम्भाय । शान्तिभद्राय । समञ्जसाय । भूशयाय । भूतिकृते । भूतये । भूषणाय । भूतवाहनाय । अकायाय नमः । ६८०

ओं भक्तकायस्थाय नमः । कालज्ञानिने । महावटवे । परार्थवृत्तये । अचलाय । विविक्ताय । श्रुतिसागराय । स्वभावभद्राय । मध्यस्थाय । संसारभयनाशनाय । वेद्याय । वैद्याय । वियद्गोप्त्रे । सर्वामरमुनीश्वराय । सुरेन्द्राय । शरणाय । शर्मणे । कर्मकृते । कर्मिणे । अधोक्षजाय नमः । ७००

ओं ध्येयाय नमः । धुर्याय । धराधीशाय । संकल्पाय । शर्वरीपतये । परमार्थगुरवे । वृद्धाय । शुचये । आश्रितवत्सलाय । विष्णवे । जिष्णवे । विभवे । यज्ञाय । यज्ञेशाय । यज्ञपालकाय । प्रभविष्णवे । ग्रसिष्णवे । लोकात्मने । लोकभावनाय । केशवाय नमः । ७२०

ओं केशिघ्ने नमः । काव्याय । कवये । कारणकारणाय । कालकर्त्रे । कालशेषाय । वासुदेवाय । पुरुष्टुताय । आदिकर्त्रे । वराहाय । माधवाय । मधुसूदनाय । नारायणाय । नराय । हंसाय । विष्वक्सेनाय । जनार्दनाय । विश्वकर्त्रे । महायज्ञाय । ज्योतिष्मते नमः । ७४०

ओं पुरुषोत्तमाय नमः । वैकुण्ठाय । पुण्डरीकाक्षाय । कृष्णाय । सूर्याय । सुरार्चिताय । नारसिंहाय । महाभीमाय । वज्रदंष्ट्राय । नखायुधाय । आदिदेवाय । जगत्कर्त्रे । योगीशाय । गरुडध्वजाय । गोविन्दाय । गोपतये । गोप्त्रे । भूपतये । भुवनेश्वराय । पद्मनाभाय नमः । ७२०

ओं हृषीकेशाय नमः । धात्रे । दामोदराय । प्रभवे । त्रिविक्रमाय । त्रिलोकेशाय । ब्रह्मेशाय । प्रीतिवर्धनाय । वामनाय । दुष्टदमनाय । गोविन्दाय । गोपवल्लभाय । भक्तप्रियाय । अच्युताय । सत्याय । सत्यकीर्तये । धृतये । स्मृत्यै । कारुण्याय । करुणाय नमः । ७८०

ओं व्यासाय नमः । पापघ्ने । शान्तिवर्धनाय । संन्यासिने । शास्त्रतत्त्वज्ञाय । मन्दराद्रिनिकेतनाय । बदरीनिलयाय । शान्ताय । तपस्विने । वैद्युतप्रभाय । भूतावासाय । गुहावासाय । श्रीनिवासाय । श्रियःपतये । तपोवासाय । मुदावासाय । सत्यवासाय । सनातनाय । पुरुषाय । पुष्कराय नमः । ८००

ओं पुण्याय नमः। पुष्कराक्षाय । महेश्वराय । पूर्णमूर्तये । पुराणज्ञाय । पुण्यदाय । प्रीतिवर्धनाय । शंखिने । चक्रिणे । गदिने । शार्ङ्गिणे ।

लाङ्गलिने । मुसलिने । हलिने । किरीटिने । कुण्डलिने । हारिणे । मेखलिने । कवचिने । ध्वजिने नमः । ८२०

ओं योद्धे नमः । जेत्रे । महावीर्याय । शत्रुजिते । शत्रुतापनाय । शास्त्रे । शास्त्रकराय । शास्त्राय । शङ्कराय । शङ्करस्तुताय । सारथये । सात्त्विकाय । स्वामिने । सामवेदप्रियाय । समाय । पवनाय । संहताय । शक्तये । संपूर्णाङ्गाय । समृद्धिमते नमः । ८४०

ओं स्वर्गदाय नमः । कामदाय । श्रीदाय । कीर्तिदाय । अकीर्तिनाशनाय । मोक्षदाय । पुण्डरीकाक्षाय । क्षीराब्धिकृतकेतनाय । सर्वात्मने । सर्वलोकेशाय । प्रेरकाय । पापनाशनाय । वैकुण्ठाय । पुण्डरीकाक्षाय । सर्वदेवनमस्कृताय । सर्वव्यापिने । जगन्नाथाय । सर्वलोकमहेश्वराय । सर्गस्थित्यन्तकृते । देवाय नमः । ८६०

ओं सर्वलोकसुखावहाय नमः । अक्षय्याय । शाश्वताय । अनन्ताय । क्षयवृद्धिविवर्जिताय । निर्लेपाय । निर्गुणाय । सूक्ष्माय । निर्विकाराय । निरञ्जनाय । सर्वोपाधिविनिर्मुक्ताय । सत्तामात्रव्यवस्थिताय । अधिकारिणे । विभवे । नित्याय । परमात्मने । सनातनाय । अचलाय । निर्मलाय । व्यापिने नमः । ८८०

ओं नित्यतृप्ताय नमः । निराश्रयाय । श्यामाय । यूने । लोहिताक्षाय । दीप्तास्याय । मितभाषणाय । आजानुबाहवे । सुमुखाय । सिंहस्कन्धाय । महाभुजाय । सत्यवते । गुणसंपन्नाय । स्वतेजसा दीप्यमानाय । कालात्मने । भगवते । कालाय । कालचक्रप्रवर्तकाय । नारायणाय । परस्मै ज्योतिषे नमः । ९००

ओं परमात्मने नमः । सनातनाय । विश्वसृजे । विश्वगोप्त्रे । विश्वभोक्त्रे । शाश्वताय । विश्वेश्वराय । विश्वमूर्तये । विश्वात्मने । विश्वभावनाय । सर्वभूतसुहृदे । शान्ताय । सर्वभूतानुकम्पनाय ।

सर्वेश्वरेश्वराय । सर्वाय । श्रीमते । आश्रितवत्सलाय । सर्वगाय । सर्वभूतेशाय । सर्वभूताशयस्थिताय नमः । ९२०

ओं अभ्यन्तरस्थतमसश्छेत्रे नमः । नारायणाय । परस्मै । अनादिनिधनाय । स्रष्ट्रे । प्रजापतिपतये । हरये । नरसिंहाय । हृषीकेशाय । सर्वात्मने । सर्वदृशे । वशिने । जगतस्तस्थुषश्च प्रभवे । नेत्रे । सनातनाय । कर्त्रे । धात्रे । विधात्रे । सर्वेषां प्रभवे । ईश्वराय नमः । ९४०

ओं सहस्रमूर्तये नमः । विश्वात्मने । विष्णवे । विश्वदृशे । अव्ययाय । पुराणाय । पुरुषाय । स्रष्ट्रे । सहस्राक्षाय । सहस्रपदे । तत्वाय । नारायणाय । विष्णवे । वासुदेवाय । सनातनाय । परमात्मने । परस्मै ब्रह्मणे । सच्चिदानन्दविग्रहाय । परस्मै ज्योतिषे । परस्मै धाम्ने नमः । ९६०

ओं पराकाशाय नमः । परात्पराय । अच्युताय । पुरुषाय । कृष्णाय । शाश्वताय । शिवाय । ईश्वराय । नित्याय । सर्वगताय । स्थाणवे । उग्राय । साक्षिणे । प्रजापतये । हिरण्यगर्भाय । सवित्रे । लोककृते । लोकभृते । विभवे । रामाय नमः । ९८०

ओं श्रीमते महाविष्णवे नमः । जिष्णवे । देवहितावहाय । तत्त्वात्मने । तारकाय । ब्रह्मणे । शाश्वताय । सर्वसिद्धिदाय । अकारवाच्याय । भगवते । श्रीभूनीलापतये । पुंसे । सर्वलोकेश्वराय । श्रीमते । सर्वज्ञाय । सर्वतोमुखाय । स्वामिने । सुशीलाय । सुलभाय । सर्वज्ञाय नमः । १०००

ओं सर्वशक्तिमते नमः । नित्याय । संपूर्णकामाय । नैसर्गिकसुहृदे । सुखिने । कृपापीयूषजलधये । सर्वदेहिनां शरण्याय । श्रीमते नारायणाय । स्वामिने । जगतां पतये । ईश्वराय । श्रीशाय । भूतानां शरण्याय । संश्रिताभीष्टदायकाय । अनन्ताय । श्रीपतये । रामाय । गुणभृते । निर्गुणाय । महते नमः । १०२०.

# श्रीरामाष्टोत्तरशतनामस्तोत्रम्

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम्।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

श्रीरामो रामभद्रश्च रामचन्द्रश्च शाश्वतः ।
राजीवलोचनः श्रीमान् राजेन्द्रो रघुपुङ्गवः ॥ १

जानकीवल्लभो जैत्रो जितामित्रो जनार्दनः ।
विश्वामित्रप्रियो दान्तः शत्रुजिच्छत्रुतापनः ॥ २

वालिप्रमथनो वाग्मी सत्यवाक् सत्यविक्रमः ।
सत्यव्रतो व्रतधरः सदा हनुमदाश्रितः ॥ ३

कौसलेयः खरध्वंसी विराधवधपण्डितः ।
विभीषणपरित्राता हरकोदण्डखण्डनः ॥ ४

सप्ततालप्रभेत्ता च दशग्रीवशिरोहरः ।
जामदग्न्यमहादर्पदलनस्ताटकान्तकः ॥ ५

वेदान्तसारो वेदात्मा भवरोगस्य भेषजम्।
दूषणत्रिशिरोहन्ता त्रिमूर्तिस्त्रिगुणात्मकः ॥ ६

त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्रकीर्तनः ।
त्रिलोकरक्षको धन्वी दण्डकारण्यपावनः ॥ ७

अहल्याशापशमनः पितृभक्तो वरप्रदः ।
जितेन्द्रियो जितक्रोधो जितामित्रो जगद्गुरुः ।। ८

ऋक्षवानरसंघाती चित्रकूटसमाश्रयः ।
जयन्तत्राणवरदः सुमित्रापुत्रसेवितः ।। ९

सर्वदेवादिदेवश्च मृतवानरजीवनः ।
मायामारीचहन्ता च महादेवो महाभुजः ।। १०

सर्वदेवस्तुतः सौम्यो ब्रह्मण्यो मुनिसंस्तुतः ।
महायोगी महोदारः सुग्रीवेप्सितराज्यदः ।। ११

सर्वपुण्याधिकफलः स्मृतसर्वाघनाशनः ।
आदिदेवो महादेवो महापूरुष एव च ।। १२

पुण्योदयो दयासारः पुराणपुरुषोत्तमः ।
स्मितवक्त्रो मिताभाषी पूर्वभाषी च राघवः ।। १३

अनन्तगुणगम्भीरो धीरोदात्तगुणोत्तमः ।
मायामानुषचारित्रो महादेवादिपूजितः ।। १४

सेतुकृज्जितवारीशः सर्वतीर्थमयो हरिः ।
श्यामाङ्गः सुन्दरः शूरः पीतवासा धनुर्धरः ।। १५

सर्वयज्ञाधिपो यज्वा जरामरणवर्जितः ।
शिवलिङ्गप्रतिष्ठाता सर्वावगुणवर्जितः ।। १६

परमात्मा परं ब्रह्म सच्चिदानन्दविग्रहः ।
परं ज्योतिः परं धाम पराकाशः परात्परः ।। १७
परेशः पारगः पारःसर्वदेवात्मकः परः ।।

।। श्रीः ।।

# श्रीरामाष्टोत्तरशतनामावलिः

श्रीरामाय नमः । रामभद्राय । रामचन्द्राय । शाश्वताय । राजीवलोचनाय । श्रीमते । राजेन्द्राय । रघुपुङ्गवाय । जानकीवल्लभाय । जैत्राय । जितामित्राय । जनार्दनाय । विश्वामित्रप्रियाय । दान्ताय । शत्रुजिते । शत्रुतापनाय । वालिप्रमथनाय । वाग्मिने । सत्यवाचे । सत्यविक्रमाय नमः । २०

सत्यव्रताय नमः । व्रतधराय । सदा हनुमदाश्रिताय । कौसलेयाय । खरध्वंसिने । विराधवधपण्डिताय । विभीषणपरित्रात्रे । हरकोदण्ड-खण्डनाय । सप्ततालप्रभेत्रे । दशग्रीवशिरोहराय । जामदग्न्यमहदर्पदलनाय । ताटकान्तकाय । वेदान्तसाराय । वेदात्मने । भवरोगस्य भेषजाय । दूषणत्रिशिरोहन्त्रे । त्रिमूर्तये । त्रिगुणात्मकाय । त्रिविक्रमाय । त्रिलोकात्मने नमः । ४०

पुण्यचारित्रकीर्तनाय । त्रिलोकरक्षकाय । धन्विने । दण्डकारण्य-पावनाय । अहल्याशापशमनाय । पितृभक्ताय । वरप्रदाय । जितेन्द्रियाय । जितक्रोधाय । जितामित्राय । जगद्गुरवे । ऋक्षवानरसंघातिने । चित्रकूटसमाश्रयाय । जयन्तत्राणवरदाय । सुमित्रापुत्रसेविताय । सर्वदेवादिदेवाय । मृतवानरजीवनाय । मायामारीचहन्त्रे । महादेवाय । महाभुजाय नमः । ६०

सर्वदेवस्तुताय नमः । सौम्याय । ब्रह्मण्याय । मुनिसंस्तुताय । महायोगिने । महोदाराय । सुग्रीवेप्सितराज्यदाय । सर्वपुण्याधिकफलाय । स्मृतसर्वाघनाशनाय । आदिदेवाय । महादेवाय । महापूरुषाय । पुण्योदयाय । दयासाराय । पुराणपुरुषोत्तमाय । स्मितवक्त्राय । मिताभाषिणे । पूर्वभाषिणे । राघवाय । अनन्तगुणगम्भीराय नमः । ८०

धीरोदात्तगुणोत्तमाय नमः । मायामानुषचारित्राय । महादेवादिपूजिताय । सेतुकृते । जितवारीशाय । सर्वतीर्थमयाय । हरये । श्यामाङ्गाय । सुन्दराय । शूराय । पीतवाससे । धनुर्धराय । सर्वयज्ञाधिपाय । यज्वने । जरामरणवर्जिताय । शिवलिङ्गप्रतिष्ठात्रे । सर्वावगुणवर्जिताय । परमात्मने । परस्मै ब्रह्मणे । सच्चिदानन्दविग्रहाय नमः ॥ १००

परस्मै ज्योतिषे नमः । परस्मै धाम्ने । पराकाशाय । परात्पराय । परेशाय । पारगाय । पाराय । सर्वदेवात्मकाय परस्मै नमः । १०८

*___*___*

## मन्त्रवर्णाक्षरयुक्त श्रीरामाष्टोत्तरशतनामावलिः

ओं श्रीमत्सूर्यकुलाम्भोधि वर्धनीयकलानिधये नमः ।

श्रीमद्ब्रह्मेन्द्ररुद्रादिवन्दनीयजगद्गुरवे नमः ।

श्रीमत्सौभाग्यसौन्दर्यलावण्याम्बुधिपङ्कजाय नमः ।

श्रीमच्चिन्तामणीपीठमध्यसिंहासनेश्वराय नमः ।

श्रीमद्राजाधिराजेन्द्रमुकुटाङ्कितपादुकाय नमः ।

श्रीमद्धिमाद्रिराजेन्द्रकन्याध्येयपदाम्बुजाय नमः ।

श्रीजगन्मोहनाकारदिव्यलावण्यविग्रहाय नमः ।

शृङ्गाररससंपूर्ण मण्डलान्तस्सुधाकराय नमः ।

श्रीकण्ठ करकोदण्ड परीक्षित पराक्रमाय नमः ।

श्रीमत्सृष्ट्यादि विविधकार्यकारणमूर्तिमते नमः ।

श्रीवत्सलाञ्छनात्यन्त मणिभूषण भूषिताय नमः ।

श्रीभूनीलालिङ्गनोत्थ पुलकाङ्कित विग्रहाय नमः ।
श्रीमदम्लान तुलसीवनमाला विराजिताय नमः ।
श्रीसाम्बदेवहृत्पद्म विकासनदिवाकराय नमः ।
श्रीक्षीरवार्धिपर्यङ्क विहारात्यन्त बालकाय नमः ।
श्रीमत्सुराराध्यपादयुग-पद्मविराजिताय नमः ।
श्रीकराकार कोदण्डकाण्डोपेत कराम्बुजाय नमः ।
श्रीजानकीमुखाम्भोज मण्डनीय प्रभाकराय नमः ।
श्रीराजाधिराज राजेन्द्ररमणीय गुणाकराय नमः ।
रावणादिवधोद्यक्त विजृम्भित पराक्रमाय नमः ॥ २०
राकेन्द्वर्काग्निविमलनेत्रत्रयविभूषिताय नमः ।
रात्रिञ्चरौघमत्तेभविनिर्भेद मृगेश्वराय नमः ।
राजत्सौदामिनीतुल्य दिव्यकोदण्डमण्डनाय नमः ।
रमामनोज्ञवक्षोजदिव्य गन्धसुवासिताय नमः ।
राक्षसेश्वरसंसेव्य दिव्य श्रीपादपङ्कजाय नमः ।
राकेन्दुकुलसम्भूतरमणी-प्राणनायकाय नमः ।
रत्ननिर्मितभूषाढ्य चरणाम्बुज शोभिताय नमः ।
रामाजनमनोहारि दिव्यकन्दर्प विग्रहाय नमः ।
राघवान्वयसञ्जातनृपश्रेणि शिरोमणये नमः ।
राकाशशिसमाकार वक्त्रमण्डलमण्डिताय नमः ।
रावणासुरकासार चण्डभानुशरोत्तमाय नमः ।

रमावक्षोजकस्तूरिवासनास्वादलोलुपाय नमः ।

रणत्सङ्गीतसम्पूर्ण सहस्रस्तम्भमण्डपाय नमः ।

रत्नमञ्चस्थ सौन्दर्यवनिताजनवेष्टिताय नमः ।

रणत्किङ्किणि संशोभिमण्डलीकृत कार्मुकाय नमः ।

रत्नौघकान्ति विलसङ्घोलाखेलनशीलनाय नमः ।

माणिक्योज्ज्वलसंदीप्त कुण्डलद्वयमण्डिताय नमः ।

मानिनीजनमध्यस्थ सौन्दर्यातिशयाश्रयाय नमः ।

मन्दस्मिताननाम्भोज मोहितानेक तापसाय नमः ।

मायामारीचसंहार कारणानन्द विग्रहाय नमः । ४०

मकराक्षादिदुस्साध्यदुष्ट दर्पापहारकाय नमः ।

माद्यन्मधुकरव्रात विलसत्केशसंवृताय नमः ।

मनोबुद्धीन्द्रिय प्राणवागादीनां विलक्षणाय नमः ।

मनस्सङ्कल्पमात्रेण निर्मिताजाण्डकोटिकाय नमः ।

मारुतात्मजसंसेव्य दिव्यश्रीचरणाम्बुजाय नमः ।

मायामानुषवेषेण मायिकासुरखण्डनाय नमः ।

मार्तण्डकोटि ज्वलितमकराकार कुण्डलाय नमः ।

मालतीतुलसीमाल्यवासिताखिल विग्रहाय नमः ।

मारकोटिप्रतीकाश महदद्भुत देहभृते नमः ।

महनीयदयावेश कलितापाङ्गलोचनाय नमः ।

मकरन्दरसास्वादमाधुर्य गुणभूषणाय नमः ।

महादेवसमाराध्य मणिनिर्मित पादुकाय नमः ।

महामाणिक्यखचिताखण्डतूणीधनुर्धराय नमः ।

मन्दरोद्भूतदुग्धाब्धिबिन्दुपुञ्जविभूषणाय नमः ।

यक्षकिन्नरगन्धर्व स्तूयमानपराक्रमाय नमः ।

यत्नपूर्व जनानन्द सन्धान चतुरोद्यमाय नमः ।

यमाद्यष्टाङ्गशीलादियमिहृत्पद्मगोचराय नमः ।

यशोदाहृदयानन्द सिन्धुपूर्ण सुधाकराय नमः ।

याज्ञवल्क्यादि ऋषिभिसंसेवितपदद्वयाय नमः ।

यमलार्जुन पापौघपरिहारि पदाम्बुजाय नमः । ६०

याकिनीकुलसंभूत पीडाजालापहारकाय नमः ।

यादःपतिपयःक्षोभकारि बाणशरासनाय नमः ।

यामिनीपद्मिनीनाथकृत श्रीकर्णकुण्डलाय नमः ।

यातुधानाग्रणीभूतविभीषणवरप्रदाय नमः ।

यागपावकसञ्जातद्रौपदीमानरक्षकाय नमः ।

यक्षरक्षःशिक्षणार्थमुद्यद्भीषणसायकाय नमः ।

यामार्धेन दशग्रीव सैन्यनिर्मूलनास्त्रविदे नमः ।

यजनानन्दसन्दोहमन्दस्मितमुखाम्बुजाय नमः ।

यामळागमवेदैकस्तूयमानयशोधनाय नमः ।

याकिनीसाकिनीस्थान षडाधाराम्बुजाश्रयाय नमः ।

यतीन्द्रबृन्दसंसेव्यमानाखण्डप्रभाकराय नमः ।

यथोचितान्तर्यागादिपूजनीयमहेश्वराय नमः ।

नानावेदादिवेदान्तैः प्रशंसित निजाकृतये नमः ।

नारदादिमुनिप्रेमानन्दसन्दोहवर्धनाय नमः ।

नागराजाङ्कपर्यङ्कशायि सुन्दरविग्रहाय नमः ।

नागारिमणिसङ्काशदेहकान्ति विराजिताय नमः ।

नागेन्द्रफणिसोपाननृत्यलीलाविशारदाय नमः ।

नमद्गीर्वाण मुकुटमणिरञ्जितपादुकाय नमः ।

नागेन्द्रभूषणप्रेमातिशयप्राणवल्लभाय नमः ।

नानाप्रसूनविलसद्वनमालाविराजिताय नमः । ८०

नवरत्नावलीशोभितापादतलमस्तकाय नमः ।

नवमल्लीप्रसूनाभिशोभमान शिरोरुहाय नमः ।

नलिनीशङ्खचक्रासिगदाशार्ङ्गेषु खेटधृते नमः ।

नादानुसन्धानपरैरवलोक्यनिजाकृतये नमः ।

नरासुरसुरव्रात कृतपूजोपहारकाय नमः ।

नखकोटिप्रभाजाल व्याप्तब्रह्माण्डमण्डपाय नमः ।

नतश्रीकरसौन्दर्य करुणापाङ्ग वीक्षणाय नमः ।

नवदूर्वादलश्याम शृङ्गाराकार विग्रहाय नमः ।

नरकासुरदोर्वंशशौर्यनिर्वापणक्षमाय नमः ।

नानाप्रपञ्चवैचित्र्य निर्माणात्यन्त पण्डिताय नमः ।

माध्याह्नचार्कप्रभाजालपुञ्जकिंजल्कसन्निभाय नमः ।

मनुवंश्यकिरीटाग्र शोभमानशिरोमणये नमः ।

मलयाचलसम्भूत दिव्यचन्दनचर्चिताय नमः ।

मन्दराधारकमठाकारकारणविग्रहाय नमः ।

महदादि प्रपञ्चान्तर्व्याप्तव्यापारविग्रहाय नमः ।

महामायासमावेशिताण्डकोटि गणेश्वराय नमः ।

मरामरेति सञ्जप्यमान मौनीश्वरप्रियाय नमः ।

महत्सगुणरूपैक्य व्यक्तीकृतनिजाकृतये नमः ।

मत्स्यकच्छपवाराहनृसिंहाद्यवतारकाय नमः ।

मन्त्रमंत्रार्थ मंत्राङ्ग मंत्रशास्त्र विशारदाय नमः । १००

मत्तेभवक्त्रषड्वक्त्रपञ्चवक्त्रैस्सुपूजिताय नमः ।

मायाकल्पितविध्यण्डमण्टपान्तर्बहिः स्थिताय नमः ।

मनोन्मण्यचलेन्द्रोर्ध्व शिखरस्थदिवाकराय नमः ।

महेन्द्रसाम्राज्य फलसन्धानाप्तत्रिविक्रमाय नमः ।

मातृकामण्डलव्याप्तकृतावरणमध्यगाय नमः ।

मनोहर महानीलमेघश्यामवपुर्धराय नमः ।

मध्यकालान्त्यकालादिकालभेद विवर्जिताय नमः ।

महासाम्राज्य पट्टाभिषेकोत्सुकहृदम्बुजाय नमः । १०८

(श्रीरामाय नमः इति मन्त्राक्षरघटिताद्याक्षरा नामावलिः)

*___*___*

॥ श्रीरस्तु ॥

# श्रीसीतासहस्रनामस्तोत्रम्

***

ब्रह्मणो वचनं श्रुत्वा रामः कमललोचनः ।
प्रोन्मील्य शनकैरक्षि वेपमानो महाभुजः ॥ १

प्रणम्य शिरसा भूमौ तेजसा चापि विह्वलः ।
भीतः कृतांजलिपुटः प्रोवाच परमेश्वरीम् ॥ २

का त्वं देवि विशालाक्षि शशांकावयवांकिते ।
न जाने त्वां महादेवि यथावद्ब्रूहि पृच्छते ॥ ३

रामस्य वचनं श्रुत्वा ततः सा परमेश्वरी ।
व्याजहार रघुश्रेष्ठं योगिनामभयप्रदा ॥ ४

मां विद्धि परमां शक्तिं महेश्वरसमाश्रयाम् ।
अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ॥ ५

अहं वै सर्वभावानामात्मा सर्वान्तरा शिवा ।
शाश्वती सर्वविज्ञाना सर्वमूर्तिप्रवर्तिका ॥ ६

अनन्ताऽनन्तमहिमा संसारार्णवतारिणी ।
दिव्यं ददामि ते चक्षुः पश्य मे पदमैश्वरम् ॥ ७

इत्युक्त्वा विररामैषा रामोऽपश्यच्च तत्पदम् ।
कोटिसूर्यप्रतीकाशं विश्वक्तेजो निराकुलम् ॥ ८

ज्वालावलिसहस्राढ्यं कालानलशतोपमम् ।
दंष्ट्राकराळदुर्धर्षं जटामण्डलमण्डितम् ॥ ९

त्रिशूलवरहस्तं च घोररूपं भयावहम्।
प्रशाम्यत्सौम्यवदनमनंतैश्वर्यसंयुतम्॥ १०

चन्द्रावयवलक्ष्माढ्यं चन्द्रकोटिसमप्रभम्।
किरीटिनं गदाहस्तं नूपुरैरुपशोभितम्॥ ११

दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम्।
शङ्खचक्रकरं काम्यं त्रिनेत्रं कृत्तिवाससम्॥ १२

अन्तस्थं चाण्डबाह्यस्थं बाह्याभ्यन्तरतः परम्।
सर्वशक्तिमयं शान्तं सर्वाकारं सनातनम्॥ १३

ब्रह्मेन्द्रोपेन्द्रयोगींद्रैरीड्यमानपदाम्बुजं।
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्॥ १४

सर्वमावृत्य तिष्ठन्तं ददर्श पदमैश्वरम्।
दृष्ट्वा च तादृशं रूपं दिव्यं माहेश्वरं पदम्॥ १५

तथैव च समाविष्टः स रामो हृतमानसः।
आत्मन्याधाय चात्मानमोंकारं समनुस्मरन्॥ १६

नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम्।
सहस्रनामस्तुतिः
ओं सीतोमा परमा शक्तिरनन्ता निष्कळाऽमला॥ १७

शान्ता महेश्वरी नित्या शाश्वती परमाक्षरा।
अचिन्त्या केवलाऽनन्ता शिवात्मा परमात्मिका॥ १८

अनादिरव्यया शुद्धा देवात्मा सर्वगोचरा।
एकानेकविभागस्था मायातीता सुनिर्मला॥ १९

महामाहेश्वरी शक्ता महादेवी निरञ्जना।
काष्ठा सर्वाभ्यन्तरस्था चिच्छक्तिरतिलालसा॥ २०

जानकी मिथिलानन्दा राक्षसान्तविधायिनी।
रावणान्तकरी रम्या रामवक्षःस्थलालया ॥ २१

उमा सर्वात्मिका विद्या ज्योतीरूपाऽयुताक्षरी।
शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा ॥ २२

व्योममूर्तिर्व्योममयी व्योमाधाराऽच्युता लता।
अनादिनिधना योषा कारणात्मा कलाकुला ॥ २३

नन्दप्रथमजा नाभिरमृतस्यान्तसंश्रया।
प्राणेश्वरप्रिया माता महामहिषवाहना ॥ २४

प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी।
सर्वशक्तिः कला काष्ठा ज्योत्स्नेन्दोर्महिमास्पदा ॥ २५

सर्वकार्यनियंत्री च सर्वभूतेश्वरेश्वरी।
अनादिरव्यक्तगुणा महानन्दा सनातनी ॥ २६

आकाशयोनिर्योगस्था सर्वयोगेश्वरेश्वरी।
शवासना चितान्तस्था महेशी वृषवाहना ॥ २७

बालिका तरुणी वृद्धा वृद्धमाता जरातुरा।
महामाया सुदुष्पूरा मूलप्रकृतिरीश्वरी ॥ २८

संसारयोनिः सकला सर्वशक्तिसमुद्भवा।
संसारसारा दुर्वारा दुर्निरीक्ष्या दुरासदा ॥ २९

प्राणशक्तिः प्राणविद्या योगिनी परमा कला।
महाविभूतिर्दुर्धर्षा मूलप्रकृतिसम्भवा ॥ ३०

अनाद्यनन्तविभवा परात्मा पुरुषो बली।
सर्गस्थित्यन्तकरणी सुदुर्वाच्या दुरत्यया ॥ ३१

शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा।
प्रधानपुरुषातीता प्रधानपुरुषात्मिका॥ ३२

पुराणी चिन्मयी पुंसामादिः पुरुषरूपिणी।
भूतान्तरात्मा कूटस्था महापुरुषसंज्ञिता॥ ३३

जन्ममृत्युजरातीता सर्वशक्तिसमन्विता।
व्यापिनी चानवच्छिन्ना प्रधाना सुप्रवेशिनी॥३४

क्षेत्रज्ञा शक्तिरव्यक्तलक्षणा मलवर्जिता।
अनादिमायासंभिन्ना त्रितत्वा प्रकृतिर्गुणः॥ ३५

महामाया समुत्पन्ना तामसी पौरुषी ध्रुवा।
व्यक्ताऽव्यक्तात्मिका कृष्णरक्ता शुक्ला प्रसूतिका॥३६

स्वकार्या कार्यजननी ब्रह्मास्या ब्रह्मसंश्रया।
व्यक्ता प्रथमजा ब्राह्मी महती ज्ञानरूपिणी॥ ३७

वैराग्यैश्वर्यधर्मात्मा ब्राह्ममूर्तिर्हृदिस्थिता।
जयदा जित्वरी जैत्री जयश्रीर्जयशालिनी॥ ३८

सुखदा शुभदा सत्या शुभा संक्षोभकारिणी।
अपां योनिः स्वयंभूतिर्मानसी तत्त्वसम्भवा॥ ३९

ईश्वराणी च शर्वाणी शङ्करार्धशरीरिणी।
भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका॥ ४०

माहेश्वरी समुत्पन्ना भुक्तिमुक्तिफलप्रदा।
सर्वेश्वरी सर्ववर्णा नित्या मुदितमानसा॥ ४१

ब्रह्मेन्द्रोपेन्द्रनमिता शङ्करेच्छानुवर्तिनी।
ईश्वरार्धासनगता रघूत्तमपतिव्रता॥ ४२

सकृद्विभाविता सर्वसमुद्रपरिशोषिणी ।
पार्वती हिमवत्पुत्री परमानन्ददायिनी ॥ ४३

गुणाढ्या योगदा योग्या ज्ञानमूर्तिविकासिनी ।
सावित्री कमला लक्ष्मीः श्रीरनन्तोरसि स्थिता ॥ ४४

सरोजनिलया शुभ्रा योगनिद्रा सुदर्शना ।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गळा ॥ ४५

वासवी वरदा वाच्या कीर्तिः सर्वार्थसाधिका ।
वागीश्वरी सर्वविद्या महाविद्या सुशोभना ॥ ४६

गुह्यविद्याऽऽत्मविद्या च सर्वविद्यात्मभाविता ।
स्वाहा विश्वम्भरी सिद्धिः स्वधा मेधा धृतिः श्रुतिः ॥ ४७

नाभिः सुनाभिः सुकृतिर्माधवी नरवाहिनी ।
पूज्या विभावरी सौम्या भगिनी भोगदायिनी ॥ ४८

शोभा वंशकरी लीला मानिनी परमेष्ठिनी ।
त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी ॥ ४९

महानुभाववमध्यस्था महामहिषमर्दिनी ।
पद्ममाला पापहरा विचित्रमुकुटानना ॥ ५०

कान्ता चित्राम्बरधरा दिव्याभरणभूषिता ।
हंसाख्या व्योमनिलया जनसृष्टिविवर्धिनी ॥ ५१

निर्यन्त्रा मन्त्रवाहस्था नन्दिनी भद्रकाळिका ।
आदित्यवर्णा कौमारी मयूरवरवाहिनी ॥ ५२

वृषासनगता गौरी महाकाली सुरार्चिता ।
अदितिर्नियता रौद्री पद्मगर्भा विवाहना ॥ ५३

विरूपाक्षी लेलिहाना महासुरविनाशिनी।
महाफलाऽनवद्याङ्गी कामपूरा विभावरी॥ ५४

विचित्ररत्नमकुटा प्रणतर्धिविवर्धिनी।
कौशिकी कर्षिणी रात्रिस्त्रिदशार्तिविनाशिनी॥ ५५

विरूपा च सुरूपा च भीमा मोक्षप्रदायिनी।
भक्तार्तिनाशिनी भव्या भवभावविनाशिनी॥ ५६

निर्गुणा नित्यविभवा निस्सारा निरपत्रपा।
यशस्विनी सामगीतिर्भवाङ्गनिलयाऽलया॥ ५७

दीक्षा विद्याधरी दीप्ता महेन्द्रविनिपातिनी।
सर्वातिशायिनी विद्या सर्वशक्तिप्रदायिनी॥ ५८

सर्वेश्वरप्रिया वार्क्षी समुद्रान्तरवासिनी।
अकलङ्का निराधारा नित्यसिद्धा निरामया॥ ५९

कामधेनुर्वेदगर्भा धीमती मोहनाशिनी।
निस्सङ्कल्पा निरातङ्का विनया विनयप्रदा॥ ६०

ज्वालामालासहस्राढ्या देवदेवी मनोन्मनी।
उर्वी गुर्वी गुरुः श्रेष्ठा सुगुणा षड्गुणात्मिका॥ ६१

महाभगवती भव्या वसुदेवसमुद्भवा।
महेन्द्रोपेन्द्रभगिनी भक्तिगम्यपरायणा॥ ६२

ज्ञानज्ञेया जरातीता वेदान्तविषया गतिः।
दक्षिणा दहना बाह्या सर्वभूतनमस्कृता॥ ६३

योगमाया विभावज्ञा महामोहा महीयसी।
सत्या सर्वसमुद्भूतिर्ब्रह्मवृक्षाश्रया मतिः॥ ६४

बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ।
ख्यातिः प्रतिज्ञा चित्संविन्महायोगेन्द्रशायिनी ॥ ६५

विकृतिः शाङ्करी शास्त्री गन्धर्वयक्षसेविता ।
वैश्वानरी महाशाला देवसेना गुहप्रिया ॥ ६६

महारात्री शिवानन्दा शची दुःस्वप्ननाशिनी ।
पूज्याऽपूज्या जगद्धात्री दुर्विज्ञेयस्वरूपिणी ॥ ६७

गुहाम्बिका गुहोत्पत्तिर्महापीठा मरुत्सुता ।
हव्यवाहान्तरा गार्गी हव्यवाहसमुद्भवा ॥ ६८

जगद्योनिर्जगन्माता जन्ममृत्युजरातिगा ।
बुद्धिर्माता बुद्धिमती पुरुषान्तरवासिनी ॥ ६९

तपस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ।
सर्वेन्द्रियमनोमाता सर्वभूतहृदि स्थिता ॥ ७०

संसारतारिणी विद्या ब्रह्मवादिमनोलया ।
ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भयावनिः ॥ ७१

हिरण्मयी महारात्रिः संसारपरिवर्तिका ।
सुमालिनी सुरूपा च तारिणी भाविनी प्रभा ॥ ७२

उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ।
तपिनी तापिनी विश्वा भोगदा धारिणी धरा ॥ ७३

सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा ।
सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी ॥ ७४

जगत्प्रिया जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया ।
निरामया निराहारा निरङ्कुशरणोद्भवा ॥ ७५

चक्रहस्ता विचित्राङ्गी स्रग्विणी पद्मधारिणी ।
परा परविधानज्ञा महापुरुषपूर्वजा ॥ ७६

विद्येश्वरप्रियाऽविद्या विद्युज्जिह्वा जितश्रमा ।
विद्यामयी सहस्राक्षी सहस्रश्रवणात्मजा ॥ ७७

सहस्ररश्मिपद्मस्था महेश्वरपदाश्रया ।
ज्वालिनी सन्मना व्याप्ता तैजसी पद्मरोधिका ॥ ७८

महादेवाश्रया मान्या महादेवमनोरमा ।
व्योमलक्ष्मीः सिंहरथा चेकितान्यमितप्रभा ॥ ७९

विश्वेश्वरी विमानस्था विशोका शोकनाशिनी ।
अनाहता कुण्डलिनी नलिनी पद्मवासिनी ॥ ८०

शतानन्दा सतां कीर्तिः सर्वभूताशयस्थिता ।
वाग्देवता ब्रह्मकला कलातीता कलावती ॥ ८१

ब्रह्मर्षिर्ब्रह्महृदया ब्रह्मविष्णुशिवप्रिया ।
व्योमशक्तिः क्रियाशक्तिः जनशक्तिः परा गतिः ॥ ८२

क्षोभिका रौद्रिकाऽभेद्या भेदाभेदविवर्जिता ।
अभिन्ना भिन्नसंस्थाना वंशिनी वंशहारिणी ॥ ८३

गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ।
भगिनी भगवत्पत्नी सकला कालकारिणी ॥ ८४

सर्ववित्सर्वतोभद्रा गुह्याऽतीता गुहावलिः ।
प्रक्रिया योगमाता च गन्धा विश्वेश्वरेश्वरी ॥ ८५

कपिला कपिलाकान्ता कनकाभा कलान्तरा ।
पुण्या पुष्करिणी भोक्त्री पुरन्दरपुरःसरा ॥ ८६

पोषणी परमैश्वर्यभूतिदा भूतिभूषणा।
पञ्चब्रह्मसमुत्पत्तिः परमात्माऽऽत्मविग्रहा॥ ८७

नर्मोदया भानुमती योगिज्ञेया मनोजवा।
बीजरूपा रजोरूपा वशिनी योगरूपिणी॥ ८८

सुमन्त्रा मन्त्रिणी पूर्णा ह्लादिनी क्लेशनाशिनी।
मनोहरी मनोरक्षी तापसी वेदरूपिणी॥ ८९

वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी।
योगेश्वरेश्वरी माला महाशक्तिर्मनोमयी॥ ९०

विश्वावस्था वीरमुक्तिर्विद्युन्माला विहायसी।
पीवरी सुरभीवन्द्या नन्दिनी नन्दवल्लभा॥ ९१

भारती परमानन्दा परापरविभेदिका।
सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी॥९२

अचिन्त्याऽचिन्त्यमहिमा दुर्लेखा कनकप्रभा।
कूष्मांडी धनरत्नाढ्या सुगन्धा गन्धदायिनी॥९३

त्रिविक्रमपदोद्भूता धनुष्पाणिः शिरोहया।
सुदुर्लभा धनाध्यक्षा धन्या पिङ्गललोचना॥ ९४

भ्रान्तिः प्रभावती दीप्तिः पङ्कजायतलोचना।
आद्या हृत्कमलोद्भूता परा माता रणप्रिया॥ ९५

सत्क्रिया गिरिजा नित्यशुद्धा पुष्पनिरन्तरा।
दुर्गा कात्यायनी चण्डी चर्चिका शान्तविग्रहा॥ ९६

हिरण्यवर्णा रजनी जगन्मन्त्रप्रवर्तिका।
मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी॥ ९७

रत्नमाला रत्नगर्भा पृथ्वी विश्वप्रमाथिनी ।
पद्मासना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा ॥ ९८

धुन्वती दुष्प्रकम्पा च सूर्यमाता दृषद्वती ।
महेन्द्रभगिनी माया वरेण्या वरदर्पिता ॥ ९९

कल्याणी कमला रामा पञ्चभूतवरप्रदा ।
वाच्या परेश्वरी नन्द्या दुर्जया दुरतिक्रमा ॥ १००

कालरात्रिर्महावेगा वीरभद्रहितप्रिया ।
भद्रकाळी जगन्माता भक्तानां भद्रदायिनी ॥ १०१

कराळा पिङ्गळाकारा सामवेदा महानदा ।
तपस्विनी यशोदा च यथाध्वपरिवर्तिनी ॥ १०२

शङ्खिनी पद्मिनी सांख्या सांख्ययोगप्रवर्तिका ।
चैत्री संवत्सरा रुद्रा जगत्सम्पूरणीन्द्रजा ॥ १०३

शुम्भारिः खेचरी खस्था कम्बुग्रीवा कलिप्रिया ।
खरध्वजा खरारूढा परार्ध्या परमालिनी ॥ १०४

ऐश्वर्यरत्ननिलया विरक्ता गरुडासना ।
जयन्ती हृद्गुहा रम्या सत्ववेगा गणाग्रणीः ॥ १०५

सङ्कल्पसिद्धा साम्यस्था सर्वविज्ञानदायिनी ।
कलिकल्मषहंत्री च गुह्योपनिषदुत्तमा ॥ १०६

नित्यदृष्टिः सृतिर्व्याप्तिः पुष्टिस्तुष्टिः क्रियावती ।
विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवाऽमृता ॥ १०७

लोहिता सर्वमाता च भीषणा वनमालिनी ।
अनन्तशयनाऽनाद्या नरनारायणोद्भवा ॥ १०८

नृसिंही दैत्यमथनी शङ्खचक्रगदाधरा ।
संकर्षणसमुत्पत्तिरम्बिकोपान्तसंश्रया ॥ १०९

महाज्वाला महामूर्तिः सुमूर्तिः सर्वकामधुक् ।
सुप्रभा सुतरां गौरी धर्मकामार्थमोक्षदा ॥ ११०

भ्रूमध्यनिलयाऽपूर्वा प्रधानपुरुषा बली ।
महाविभूतिदा मध्या सरोजनयनासना ॥ १११

अष्टादशभुजा नाट्या नीलोत्पलदळप्रभा ।
सर्वशक्त्या समारूढा धर्माधर्मानुवर्जिता ॥ ११२

वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया ।
विचित्रगहना धीरा शाश्वतस्थानवासिनी ॥ ११३

स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी ।
अशेषदेवतामूर्तिर्देवता परदेवता ॥ ११४

गणात्मिका गिरेः पुत्री निशुम्भविनिपातिनी ।
अवर्णा वर्णरहिता निर्वर्णा बीजसम्भवा ॥ ११५

अनन्तवर्णाऽनन्यस्था शंकरी शान्तमानसा ।
अगोत्रा गोमती गोप्त्री गुह्यरूपा गुणान्तरा ॥ ११६

गोश्रीर्गव्यप्रिया गौरी गणेश्वरनमस्कृता ।
सत्यमात्रा सत्यसन्धा त्रिसन्ध्या सन्धिवर्जिता ॥ ११७

सर्ववादाश्रया सांख्यासांख्ययोगसमुद्भवा ।
असंख्येयाऽप्रमेयाख्याशून्या शुद्धकुलोद्भवा ॥ ११८

बिन्दुनादसमुत्पत्तिः शम्भुवामा शशिप्रभा ।
विसङ्गा भेदरहिता मनोज्ञा मधुसूदनी ॥ ११९

महाश्रीः श्रीसमुत्पत्तिस्तमःपारे प्रतिष्ठिता।
त्रितत्त्वमाता त्रिविधा सुसूक्ष्मपदसंश्रया॥ १२०

शान्त्यतीता मलातीता निर्विकारा निराश्रया।
शिवाख्या चित्रनिलया शिवज्ञानस्वरूपिणी॥ १२१

दैत्यदानवनिर्मात्री काश्यपी कालकर्णिका।
शास्त्रयोनिः प्रियामूर्तिश्चतुर्वर्गप्रदर्शिता॥ १२२

नारायणी नवोद्भूता कौमुदी लिङ्गधारिणी।
कामुकी ललिता तारा परापरविभूतिदा॥ १२३

परान्तजातमहिमा बडबा वामलोचना।
सुभद्रा देवकी सीता वेदवेदांगपारगा॥ १२४

मनस्विनी मन्युमाता महामन्युसमुद्भवा।
अमृत्युरमृतास्वादा पुरुहूता पुरुष्टुता॥ १२५

अशोच्या भिन्नविषया हिरण्यरजतप्रिया।
हिरण्या राजिता हैमी हेमाभरणभूषिता॥ १२६

विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा।
महानिद्रासमुद्भूता बलीन्द्रा सत्यदेवता॥ १२७

दीर्घा ककुद्मिनी विद्या शान्तिदा शान्तिवर्धिनी।
लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्तिका॥ १२८

त्रिशक्तिजननी जन्या षडूर्मिपरिवर्जिता।
स्वाहा च कर्मकरणी युगान्तदळनात्मिका॥ १२९

सङ्कर्षणी जगद्धात्री कामयोनिः किरीटिनी।
ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी॥ १३०

प्रद्युम्नदयिता दान्ता युग्मदृष्टिस्त्रिलोचना।
महोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा॥ १३१

वृषावेषा वियन्मात्रा विन्ध्यपर्वतवासिनी।
हिमवन्मेरुनिलया कैलासगिरिवासिनी॥ १३२

चाणूरहन्त्री तनया नीतिज्ञा कामरूपिणी।
वेदविद्याव्रतरता धर्मशीलाऽनिलासना॥ १३३

अयोध्यानिलया वीरा महाकालसमुद्भवा।
विद्याधरक्रिया सिद्धा विद्याधरनिराकृतिः॥ १३४

आप्यायन्ती वहन्ती च पावनी पोषिणी खिला।
मातृका मन्मथोद्भूता वारिजा वाहनप्रिया॥ १३५

करीषिणी स्वधा वाणी वीणावादनतत्परा।
सेविता सेविका सेवा सिनीवाली गरुत्मती॥ १३६

अरुन्धती हिरण्याक्षी मणिदा श्रीर्वसुप्रदा।
वसुमती वसोर्धारा वसुन्धरासमुद्भवा॥ १३७

वरारोहा वरार्हा च वपुःसङ्गसमुद्भवा।
श्रीफली श्रीमती श्रीशा श्रीनिवासा हरिप्रिया॥ १३८

श्रीधरी श्रीकरी कम्प्रा श्रीधरा ईशवीरणा।
अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया॥ १३९

निहंत्री दैत्यसिंहानां सिंहिका सिंहवाहिनी।
सुसेना चन्द्रनिलया सुकीर्तिश्छिन्नसंशया॥ १४०

बलज्ञा बलदा वामा लेलिहानाऽमृताश्रवा।
नित्योदिता स्वयंज्योतिरुत्सुकाऽमृतजीविनी॥ १४१

वज्रदंष्ट्रा वज्रजिह्वा वैदेही वज्रविग्रहा।
मङ्गल्या मङ्गळा माला मलिना मलहारिणी ॥ १४२

गान्धर्वी गारुडी चान्द्री कम्बलाश्वतरप्रिया।
सौदामिनी जनानन्दा भ्रुकुटीकुटिलानना ॥ १४३

कर्णिकारकरा कक्षा कंसप्राणापहारिणी।
युगन्धरा युगावर्ता त्रिसन्ध्या हर्षवर्धिनी ॥ १४४

प्रत्यक्षदेवता दिव्या दिव्यगन्धा दिवापरा।
शक्रासनगता शाक्री साध्वी नारी शवासना ॥ १४५

इष्टा विशिष्टा शिष्टेष्टा शिष्टाशिष्टप्रपूजिता।
शतरूपा शतावर्ता विनीता सुरभिः सुरा ॥ १४६

सुरेन्द्रमाता सुद्युम्ना सुषुम्ना सूर्यसंस्थिता।
समीक्षा सत्प्रतिष्ठा च निवृत्तिर्ज्ञानपारगा ॥ १४७

धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना।
धर्माधर्मविनिर्मात्री धार्मिकाणां शिवप्रदा ॥ १४८

धर्मशक्तिर्धर्ममयी विधर्मा विश्वधर्मिणी।
धर्मान्तरा धर्ममध्या धर्मपूर्वा धनप्रिया ॥ १४९

धर्मोपदेशा धर्मात्मा धर्मलभ्या धराधरा।
कपाली शाकलामूर्तिः कलाकलितविग्रहा ॥ १५०

सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रया श्रया।
सर्वा सर्वेश्वरी सूक्ष्मा सुसूक्ष्मज्ञानरूपिणी ॥ १५१

प्रधानपुरुषेशाना महापुरुषसाक्षिणी।
सदाशिवा वियन्मूर्तिर्देवमूर्तिरमूर्तिका ॥ १५२

एवं नाम्नां सहस्रेण तुष्टाव रघुनन्दनः ।
कृतांजलिपुटो भूत्वा सीतां हृष्टतनूरुहाम् ॥ १५३

भारद्वाज महाभाग यश्चैतत्स्तोत्रमद्भुतम् ।
पठेद्वा पाठयेद्वापि स याति परमं पदम् ॥ १५४

ब्रह्मक्षत्रियविड्योनिर्ब्रह्म प्राप्नोति शाश्वतम् ।
शूद्रः सद्गतिमाप्नोति धनधान्यविभूतयः ॥ १५५

भवन्ति स्तोत्रमाहात्म्यादेतत्स्वस्त्ययनं महत् ।
मारीभये राजभये तथा चोराग्निजे भये ॥ १५६

व्याधीनां प्रभवे घोरे शत्रूत्थाने च सङ्कटे ।
अनावृष्टिभये विप्र सर्वशान्तिकरं परम् ॥ १५७

यद्यदिष्टतमं यस्य तत्सर्वं स्तोत्रतो भवेत् ।
यत्रैतत्पठ्यते सम्यक्सीतानामसहस्रकम् ॥ १५८

रामेण सहिता देवी तत्र तिष्ठत्यसंशयम् ।
महापापातिपापानि विलयं यान्ति सुव्रत ॥ १५९

(श्रीमद्रामायणे अद्भुतोत्तरकाण्डतः)

॥ श्रीरस्तु ॥

## श्रीसीतासहस्रनामावळिः

ओं सीतायै नमः । उमायै । परमायै । शक्त्यै । अनन्तायै । निष्कळायै । अमलायै । शान्तायै । माहेश्वर्यै । नित्यायै । शाश्वत्यै । परमाक्षरायै । अचिन्त्यायै । केवलायै । अनन्तायै । शिवात्मने । परमात्मिकायै । अनादये । अव्ययायै । शुद्धायै नमः ॥ २०

ओं देवात्मने नमः । सर्वगोचरायै । एकानेकविभागस्थायै । मायातीतायै । सुनिर्मलायै । महामाहेश्वर्यै । शक्तायै । महादेव्यै ।

निरञ्जनायै । काष्ठायै। सर्वाभ्यन्तरस्थायै। चिच्छक्त्यै। अतिलालसायै । जानक्यै। मिथिलानन्दायै। राक्षसान्तविधायिन्यै। रावणांतकर्यै। रम्यायै । रामवक्षःस्थलालयायै। उमायै नमः ॥ ४०

ओं सर्वात्मिकायै नमः । विद्यायै । ज्योतीरूपायै । अयुताक्षर्यै । शांत्यै । सर्वेषां प्रतिष्ठायै। निवृत्त्यै। अमृतप्रदायै। व्योममूर्त्यै। व्योममय्यै । व्योमाधरायै । अच्युतायै । लतायै । अनादिनिधनायै । योषायै । कारणात्मने । कलाकुलायै । नन्दप्रथमजायै । नाभ्यै । अमृतस्यान्तसंश्रयायै नमः ॥ ६०

ओं प्राणेश्वरप्रियायै नमः । मात्रे। महामहिषवाहनायै। प्राणेश्वर्यै। प्राणरूपायै । प्रधानपुरुषेश्वर्यै । सर्वशक्त्यै । कलायै । काष्ठायै । इन्दोःज्योत्स्नायै। महिमास्पदायै। सर्वकार्यनियन्त्र्यै। सर्वभूतेश्वरेश्वर्यै। अनादये। अव्यक्तगुणायै। महानन्दायै। सनातन्यै। आकाशयोन्यै। योगस्थायै। सर्वयोगेश्वरेश्वर्यै नमः ॥ ८०

ओं शवासनायै नमः । चितान्तस्स्थायै। महेश्यै। वृषवाहनायै। बालिकायै। तरुण्यै। वृद्धायै। वृद्धमात्रे। जरातुरायै। महामायायै। सुदुष्पूरायै । मूलप्रकृत्यै । ईश्वर्यै । संसारयोन्यै । सकलायै । सर्वशक्तिसमुद्भवायै । संसारसारायै । दुर्वारायै । दुर्निरीक्ष्यायै । दुरासदायै नमः ॥ १००

ओं प्राणशक्त्यै नमः । प्राणविद्यायै। योगिन्यै। परमायै कलायै। महाविभूत्यै। दुर्धर्षायै। मूलप्रकृतिसम्भवायै। अनाद्यनन्तविभवायै। परात्मने। पुरुषाय बलिने। सर्गस्थित्यन्तकरण्यै। सुदुर्वाच्यायै। दुरत्ययायै । शब्दयोनये। शब्दमय्यै। नादाख्यायै। नादविग्रहायै। प्रधानपुरुषातीतायै । प्रधानपुरुषात्मिकायै। पुराण्यै नमः ॥ १२०

ओं चिन्मय्यै नमः । पुंसामादये। पुरुषरूपिण्यै। भूतान्तरात्मने। कूटस्थायै। महापुरुषसंज्ञितायै। जन्ममृत्युजरातीतायै। सर्वशक्ति-

समन्वितायै । व्यापिन्यै । अनवच्छिन्नायै । प्रधानायै । सुप्रवेशिन्यै । क्षेत्रज्ञायै । शक्त्यै । अव्यक्तलक्षणायै । मलवर्जितायै । अनादिमाया-संभिन्नायै । त्रितत्वायै । प्रकृत्यै । गुणाय नमः ।। १४०

ओं महामायायै नमः । समुत्पन्नायै । तामस्यै । पौरुष्यै । ध्रुवायै । व्यक्तायै । अव्यक्तात्मिकायै । कृष्णरक्तायै । शुक्लायै । प्रसूतिकायै । स्वकार्यायै । कार्यजनन्यै । ब्रह्मास्यायै । ब्रह्मसंश्रयायै । व्यक्तायै । प्रथमजायै । ब्राह्मचै । महत्यै । ज्ञानरूपिण्यै । वैराग्यैश्वर्यधर्मात्मने नमः ।। १६०

ओं ब्राह्ममूर्त्यै नमः । हृदिस्थितायै । जयदायै । जित्वर्यै । जैत्र्यै । जयश्रियै । जयशालिन्यै । सुखदायै । शुभदायै । सत्यायै । शुभायै । संक्षोभकारिण्यै । अपांयोन्यै । स्वयंभूत्यै । मानस्यै । तत्वसम्भवायै । ईश्वराण्यै । शर्वाण्यै । शंकरार्धशरीरिण्यै । भवान्यै नमः ।। १८०

ओं रुद्राण्यै नमः । महालक्ष्म्यै । अम्बिकायै । माहेश्वर्यै । समुत्पन्नायै । भुक्तिमुक्तिफलप्रदायै । सर्वेश्वर्यै । सर्ववर्णायै । नित्यायै । मुदितमानसायै । ब्रह्मेन्द्रोपेन्द्रनमितायै । शङ्करेच्छानुवर्तिन्यै । ईश्वरार्धासनगतायै । रघूत्तमपतिव्रतायै । सकृद्विभावितायै । सर्वसमुद्रपरिशोषिण्यै । पार्वत्यै । हिमवत्पुत्र्यै । परमानन्ददायिन्यै । गुणाढ्यायै नमः ।। २००

ओं योगदायै नमः । योग्यायै । ज्ञानमूर्तिविकासिन्यै । सावित्र्यै । कमलायै । लक्ष्म्यै । अनन्तोरसिस्थितायै श्रियै । सरोजनिलयायै । शुभ्रायै । योगनिद्रायै । सुदर्शनायै । सरस्वत्यै । सर्वविद्यायै । जगज्ज्येष्ठायै । सुमङ्गळायै । वासव्यै । वरदायै । वाच्यायै । कीर्त्यै । सर्वार्थसाधिकायै नमः ।। २२०

ओं वागीश्वर्यै नमः । सर्वविद्यायै । महाविद्यायै । सुशोभनायै । गुह्यविद्यायै । आत्मविद्यायै । सर्वविद्यायै । आत्मभावितायै । स्वाहायै ।

विश्वम्भर्यै । सिद्ध्यै । स्वधायै । मेधायै । धृत्यै । श्रुत्यै । नाभ्यै । सुनाभ्यै । सुकृत्यै । माधव्यै । नरवाहिन्यै नमः ।। २४०

ओं पूज्यायै नमः । विभावर्यै । सौम्यायै । भगिन्यै । भोगदायिन्यै । शोभायै । वंशकर्यै । लीलायै । मानिन्यै । परमेष्ठिन्यै । त्रैलोक्यसुन्दर्यै । रम्यायै । सुन्दर्यै । कामचारिण्यै । महानुभावमध्यस्थायै । महामहिषमर्दिन्यै । पद्ममालायै । पापहरायै । षिचित्रमुकुटासनायै । कान्तायै नमः ।। २६०

ओं चित्राम्बरधरायै नमः । दिव्याभरणभूषितायै । हंसाख्यायै । व्योमनिलयायै । जनसृष्टिविवर्धिन्यै । निर्यंत्रायै । मन्त्रवाहस्थायै । नन्दिन्यै । भद्रकाळिकायै । आदित्यवर्णायै । कौमार्यै । मयूरवरवाहिन्यै । वृषासनगतायै । गौर्यै । महाकाळ्यै । सुरार्चितायै । अदित्यै । नियतायै । रौद्र्यै । पद्मगर्भायै नमः ।। २८०

ओं विवाहनायै नमः । विरूपाक्ष्यै । लेलिहानायै । महासुर-विनाशिन्यै । महाफलायै । अनवद्यांग्यै । कामपूरायै । विभावर्यै । विचित्ररत्नमुकुटायै । प्रणतर्धिविवर्धिन्यै । कौशिक्यै । कर्षिण्यै । रात्र्यै । त्रिदशार्तिविनाशिन्यै । विरूपायै । सुरूपायै । भीमायै । मोक्षप्रदायिन्यै । भक्तार्तिनाशिन्यै । भव्यायै नमः ।। ३००

ओं भवभावविनाशिन्यै नमः । निर्गुणायै । नित्यविभवायै । निःसारायै । निरपत्रपायै । यशस्विन्यै । सामगीत्यै । भवांगनिलयायै । अलयायै । दीक्षायै । विद्याधर्यै । दीप्तायै । महेन्द्रविनिपातिन्यै । सर्वातिशायिन्यै । विद्यायै । सर्वशक्तिप्रदायिन्यै । सर्वेश्वरप्रियायै । वाक्ष्यै । समुद्रान्तरवासिन्यै । अकळङ्कायै नमः ।। ३२०

ओं निराधारायै नमः । नित्यसिद्धायै । निरामयायै । कामधेनवे । वेदगर्भायै । धीमत्यै । मोहनाशिन्यै । निस्संकल्पायै । निरातङ्कायै । विनयायै । विनयप्रदायै । ज्वालामालासहस्राढ्यायै । देवदेव्यै ।

मनोन्मन्यै । उर्व्यै। गुर्व्यै। गुरवे। श्रेष्ठायै। सुगुणायै। षड्गुणात्मिकायै। ३४०

ओं महाभगवत्यै नमः । भव्यायै । वसुदेवसमुद्भवायै । महेन्द्रोपेन्द्रभगिन्यै । भक्तिगम्यपरायणायै । ज्ञानज्ञेयायै । जरातीतायै । वेदान्तविषयायै । गत्यै । दक्षिणायै । दहनायै । बाह्यायै । सर्वभूतनमस्कृतायै । योगमायायै । विभावज्ञायै । महामोहायै । महीयस्यै । सत्यायै। सर्वसमुद्भूत्यै। ब्रह्मवृक्षाश्रयायै नमः ।। ३६०

ओं मत्यै नमः । बीजाङ्कुरसमुद्भूत्यै । महाशक्त्यै । महामत्यै । ख्यात्यै । प्रतिज्ञायै। चिदे। संविदे। महायोगेन्द्रशायिन्यै। विकृत्यै। शाङ्कर्यै । शास्त्र्यै । गन्धर्वयक्षसेवितायै । वैश्वानर्यै । महाशालायै । देवसेनायै । गुहप्रियायै। महाराष्ट्र्यै। शिवानन्दायै। शच्यै नमः ।। ३८०

ओं दुःस्वप्ननाशिन्यै । पूज्यायै । अपूज्यायै । जगद्धात्र्यै । दुर्विज्ञेयस्वरूपिण्यै । गुहाम्बिकायै । गुहोत्पत्त्यै । महापीठायै । मरुत्सुतायै । हव्यवाहान्तरायै। गार्ग्यै। हव्यवाहसमुद्भवायै। जगद्योन्यै । जगन्मात्रे । जन्ममृत्युजरातिगायै । बुद्ध्यै । मात्रे । बुद्धिमत्यै । पुरुषान्तरवासिन्यै। तपस्विन्यै नमः ।। ४००

ओं समाधिस्थायै नमः । त्रिनेत्रायै । दिविसंस्थितायै । सर्वेन्द्रियमनोमात्रे । सर्वभूतहृदिस्थितायै । संसारतारिण्यै । विद्यायै । ब्रह्मवादिमनोलयायै। ब्रह्माण्यै। बृहत्यै। ब्राह्म्यै। ब्रह्मभूतायै। भयावन्यै । हिरण्मय्यै । महारात्र्यै । संसारपरिवर्तिकायै । सुमालिन्यै । सुरूपायै । तारिण्यै। भाविन्यै नमः ।। ४२०

ओं प्रभायै नमः। उन्मीलन्यै । सर्वसहायै । सर्वप्रत्ययसाक्षिण्यै । तपिन्यै। तापिन्यै। विश्वायै। भोगदायै। धारिण्यै। धरायै। सुसौम्यायै। चन्द्रवदनायै । ताण्डवासक्तमानसायै । सत्वशुद्धिकर्यै । शुद्ध्यै ।

मलत्रयविनाशिन्यै । जगत्प्रियायै । जगन्मूर्त्यै । त्रिमूर्त्यै । अमृताश्रयायै नमः ॥ ४४०

ओं निरामयायै नमः । निराहारायै । निरङ्कुशरणोद्भवायै । चक्रहस्तायै । विचित्राङ्ग्यै । स्रग्विण्यै । पद्मधारिण्यै । परायै । परविधानज्ञायै । महापुरुषपूर्वजायै । विद्येश्वरप्रियायै । अविद्यायै । विद्युज्जिह्वायै । जितश्रमायै । विद्यामय्यै । सहस्राक्ष्यै । सहस्रश्रवणात्मजायै । सहस्ररश्मिमपद्मस्थायै । महेश्वरपदाश्रयायै । ज्वालिन्यै नमः ॥ ४६०

ओं सन्मनसे नमः । व्याप्तायै । तैजस्यै । पद्मरोधिकायै । महादेवाश्रयायै । मान्यायै । महादेवमनोरमायै । व्योमलक्ष्म्यै । सिंहरथायै । चेकितान्यै । अमितप्रभायै । विश्वेश्वर्यै । विमानस्थायै । विशोकायै । शोकनाशिन्यै । अनाहतायै । कुण्डलिन्यै । नलिन्यै । पद्मवासिन्यै । शतानन्दायै नमः ॥ ४८०

ओं सतांकीर्त्यै । सर्वभूताशयस्थितायै । वाग्देवतायै । ब्रह्मकलायै । कलातीतायै । कलावत्यै । ब्रह्मर्षये । ब्रह्महृदयायै । ब्रह्मविष्णुशिवप्रियायै । व्योमशक्त्यै । क्रियाशक्त्यै । जनशक्त्यै । परायै गत्यै । क्षोभिकायै । रौद्रिकायै । अभेद्यायै । भेदाभेदविवर्जितायै । अभिन्नायै । भिन्नसंस्थानायै । वंशिन्यै नमः ॥ ५००

ओं वंशहारिण्यै नमः । गुह्यशक्त्यै । गुणातीतायै । सर्वदायै । सर्वतोमुख्यै । भगिन्यै । भगवत्पत्न्यै । सकलायै । कालकारिण्यै । सर्वविदे । सर्वतोभद्रायै । गुह्यायै । अतीतायै । गुहावल्यै । प्रक्रियायै । योगमात्रे । गन्धायै । विश्वेश्वरेश्वर्यै । कपिलायै । कपिलाकान्तायै नमः ॥ ५२०

ओं कनकाभायै नमः । कलान्तरायै । पुण्यायै । पुष्करिण्यै । भोक्त्र्यै । पुरन्दरपुरस्सरायै । पोषण्यै । परमैश्वर्यभूतिदायै । भूतिभूषणायै । पञ्चब्रह्मसमुत्पत्त्यै । परमात्मने । आत्मविग्रहायै । नर्मोदयायै । भानुमत्यै ।

योगिज्ञेयायै । मनोजवायै । बीजरूपायै । रजोरूपायै । वशिन्यै । योगरूपिण्यै नमः ॥ ५४०

ओं सुमन्त्रायै नमः । मन्त्रिण्यै । पूर्णायै । ह्लादिन्यै । क्लेशनाशिन्यै । मनोहर्यै । मनोरक्ष्यै । तापस्यै । वेदरूपिण्यै । वेदशक्त्यै । वेदमात्रे । वेदविद्याप्रकाशिन्यै । योगेश्वरेश्वर्यै । मालायै । महाशक्त्यै । मनोमय्यै । विश्वावस्थायै । वीरमुक्त्यै । विद्युन्मालायै । विहायस्यै नमः ॥ ५६०

ओं पीवर्यै नमः । सुरभ्यै वंद्यायै । नन्दिन्यै । नन्दवल्लभायै । भारत्यै । परमानन्दायै । परापरविभेदिकायै । सर्वप्रहरणोपेतायै । काम्यायै । कामेश्वरेश्वर्यै । अचिन्त्यायै । अचिन्त्यमहिम्ने । दुर्लेखायै । कनकप्रभायै । कूष्मांड्यै । धनरत्नाढ यै । सुगन्धायै । गन्धदायिन्यै । त्रिविक्रमपदोद्भूतायै । धनुष्पाणये नमः ॥ ५८०

ओं शिरोहयायै नमः । सुदुर्लभायै । धनाध्यक्षायै । धन्यायै । पिङ्गलोचनायै । भ्रांत्यै । प्रभावत्यै । दीप्त्यै । पङ्कजायतलोचनायै । आद्यायै । हृत्कमलोद्भूतायै । परायै मात्रे । रणप्रियायै । सत्क्रियायै । गिरिजायै । नित्यशुद्धायै । पुष्पनिरन्तरायै । दुर्गायै । कात्यायन्यै । चण्ड्यै नमः ॥ ६००

ओं चर्चिकायै नमः । शान्तविग्रहायै । हिरण्यवर्णायै । रजन्यै । जगन्मन्त्रप्रवर्तिकायै । मन्दराद्रिनिवासायै । शारदायै । स्वर्णमालिन्यै । रत्नमालायै । रत्नगर्भायै । पृथ्व्यै । विश्वप्रमाथिन्यै । पद्मासनायै । पद्मनिभायै । नित्यतुष्टायै । अमृतोद्भवायै । धुन्वत्यै । दुष्प्रकम्पायै । सूर्यमात्रे । दृषद्वत्यै नमः ॥ ६२०

ओं महेन्द्रभगिन्यै नमः । मायायै । वरेण्यायै । वरदर्पितायै । कल्याण्यै । कमलायै । रामायै । पञ्चभूतवरप्रदायै । वाच्यायै । परेश्वर्यै । नन्द्यायै । दुर्जयायै । दुरतिक्रमायै । कालरात्र्यै । महावेगायै ।

वीरभद्रहितप्रियायै । भद्रकाल्यै । जगन्मात्रे । भक्तानां भद्रदायिन्यै । करालायै नमः ॥ ६४०

ओं पिङ्गलाकारायै नमः । सामवेदायै । महानदायै । तपस्विन्यै । यशोदायै । यथाध्वपरिवर्तिन्यै । शङ्खिन्यै । पद्मिन्यै । सांख्यायै । सांख्ययोगप्रवर्तिकायै । चैत्र्यै । संवत्सरायै । रुद्रायै । जगत्संपूर्ण्यै । इन्द्रजायै । शुम्भार्यै । खेचर्यै । खस्थायै । कम्बुग्रीवायै । कलिप्रियायै नमः ॥ ६६०

ओं खरध्वजायै नमः । खरारूढायै । पराध्र्यायै । परमालिन्यै । ऐश्वर्यरत्ननिलयायै । विरक्तायै । गरुडासनायै । जयंन्त्यै । हृद्गुहारम्यायै । सत्ववेगायै । गणाग्रण्यै । सङ्कल्पसिद्धायै । साम्यस्थायै । सर्वविज्ञानदायिन्यै । कलिकल्मषहंत्र्यै । गुह्योपनिषदे । उत्तमायै । नित्यदृष्ट्यै । सृत्यै । व्याप्त्यै नमः ॥ ६८०

ओं पुष्ट्यै नमः । तुष्ट्यै । क्रियावत्यै । विश्वामरेश्वरायै । ईशानायै । भुक्त्यै । मुक्त्यै । शिवायै । अमृतायै । लोहितायै । सर्वमात्रे । भीषणायै । वनमालिन्यै । अनन्तशयनायै । अनाद्यायै । नरनारायणोद्भवायै । नृसिंह्यै । दैत्यमथन्यै । शङ्खचक्रगदाधरायै । संकर्षणसमुत्पत्यै नमः ॥ ७००

ओं अम्बिकोपान्तसंश्रयायै नमः । महाज्वालायै । महामूर्त्यै । सुमूर्त्यै । सर्वकामदुहे । सुप्रभायै । सुतरां गौर्यै । धर्मकामार्थमोक्षदायै । भ्रूमध्यनिलयायै । अपूर्वायै । प्रधानपुरुषायै । बल्यै (प्रधानपुरुषावल्यै) । महाविभूतिदायै । मध्यायै । सरोजनयनासनायै । अष्टादशभुजायै । नाट्यायै । नीलोत्पलदलप्रभायै । सर्वशक्त्या समारूढायै । धर्माधर्मानुवर्जितायै नमः ॥ ७२०

ओं वैराग्यज्ञाननिरतायै नमः । निरालोकायै । निरिंद्रियायै । विचित्रगहनायै । धीरायै । शाश्वतस्थानवासिन्यै । स्थानेश्वर्यै । निरानन्दायै । त्रिशूलवरधारिण्यै । अशेषदेवतामूर्त्यै । देवतायै । परदेवतायै । गणात्मिकायै । गिरेः पुत्र्यै । निशुम्भविनिपातिन्यै । अवर्णायै । वर्णरहितायै । निर्वर्णायै । बीजसम्भवायै । अनन्तवर्णायै नमः ॥ ७४०

ओं अनन्यस्थायै नमः । शंकर्यै । शांतमानसायै । अगोत्रायै । गोमत्यै । गोप्त्रियै । गुह्यरूपायै । गुणान्तरायै । गोश्रियै । गव्यप्रियायै । गौर्यै । गणेश्वरनमस्कृतायै । सत्यमात्रायै । सत्यसन्धायै । त्रिसन्ध्यायै । सन्धिवर्जितायै । सर्ववादाश्रयायै । सांख्यासांख्ययोगसमुद्भवायै । असंख्येयायै । अप्रमेयाख्यायै नमः ॥ ७६०

ओं शून्यायै नमः । शुद्धकुलोद्भवायै । बिन्दुनादसमुत्पत्त्यै । शम्भुवामायै । शशिप्रभायै । विसङ्गायै । भेदरहितायै । मनोज्ञायै । मधुसूदन्यै । महाश्रियै । श्रीसमुत्पत्त्यै । तमःपारे प्रतिष्ठितायै । त्रितत्त्वमात्रे । त्रिविधायै । सुसूक्ष्मपदसंश्रयायै । शांत्यतीतायै । मलातीतायै । निर्विकारायै । निराश्रयायै । शिवाख्यायै नमः ॥ ७८०

ओं चित्रनिलयायै नमः । शिवज्ञानस्वरूपिण्यै । दैत्यदानवनिर्मात्र्यै । काश्यप्यै । कालकर्णिकायै । शास्त्रयोन्यै । प्रियामूर्त्यै । चतुर्वर्गप्रदर्शितायै । नारायण्यै । नवोद्भूतायै । कौमुद्यै । लिङ्गधारिण्यै । कामुक्यै । ललितायै । तारायै । परापरविभूतिदायै । परान्तजातमहिम्ने । बडबायै । वामलोचनायै । सुभद्रायै नमः ॥ ८००

ओं देवक्यै नमः । सीतायै । वेदवेदांगपारगायै । मनस्विन्यै । मन्युमात्रे । महामन्युसमुद्भवायै । अमृत्यवे । अमृतास्वादायै । पुरुहूतायै । पुरुष्टुतायै । अशोच्यायै । भिन्नविषयायै । हिरण्यरजतप्रियायै । हिरण्यायै ।

राजितायै । हैम्यै । हेमाभरणभूषितायै । विभ्राजमानायै । दुर्ज्ञेयायै । ज्योतिष्टोमफलप्रदायै नमः ॥ ८२०

ओं महानिद्रासमुद्भूतायै नमः । बलीन्द्रायै । सत्यदेवतायै । दीर्घायै । ककुद्मिन्यै । विद्यायै । शान्तिदायै । शान्तिवर्धिन्यै । लक्ष्म्यादिशक्तिजनन्यै । शक्तिचक्रप्रवर्तिकायै । त्रिशक्तिजनन्यै । जन्यायै । षडूर्मिपरिवर्जितायै । स्वाहायै । कर्मकरण्यै । युगान्तदळनात्मिकायै । सङ्कर्षण्यै । जगद्धात्र्यै । कामयोन्यै । किरीटिन्यै नमः ॥ ८४०

ओं ऐन्द्र्यै नमः । त्रैलोक्यनमितायै । वैष्णव्यै । परमेश्वर्यै । प्रद्युम्नदयितायै । दान्तायै । युग्मदृष्ट्यै । त्रिलोचनायै । महोत्कटायै । हंसगत्यै । प्रचण्डायै । चण्डविक्रमायै । वृषावेषायै । वियन्मात्रायै । विन्ध्यपर्वतवासिन्यै । हिमवन्मेरुनिलयायै । कैलासगिरिवासिन्यै । चाणूरहन्त्र्यै । तनयायै । नीतिज्ञायै नमः ॥ ८६०

ओं कामरूपिण्यै नमः । वेदविद्याव्रतरतायै । धर्मशीलायै । अनिलासनायै । अयोध्यानिलयायै । वीरायै । महाकालसमुद्भवायै । विद्याधरक्रियायै । सिद्धायै । विद्याधरनिराकृत्यै । आप्यायन्त्यै । वहन्त्यै । पावन्यै । पोषिण्यै । खिलायै । मातृकायै । मन्मथोद्भूतायै । वारिजायै । वाहनप्रियायै । करीषिण्यै नमः ॥ ८८०

ओं स्वधायै । वाण्यै । वीणावादनतत्परायै । सेवितायै । सेविकायै । सेवायै । सिनीवाल्यै । गरुत्मत्यै । अरुन्धत्यै । हिरण्याक्ष्यै । मणिदायै । श्रियै । वसुप्रदायै । वसुमत्यै । वसोर्धारायै । वसुन्धरासमुद्भवायै । वरारोहायै । वराहायै । वपुःसङ्गसमुद्भवायै । श्रीफल्यै नमः ॥ ९००

ओं श्रीमत्यै । श्रीशायै । श्रीनिवासायै । हरिप्रियायै । श्रीधर्यै । श्रीकर्यै । कंप्रायै । श्रीधरायै । ईशवीरणायै । अनन्तदृष्ट्यै । अक्षुद्रायै । धात्रीशायै । धनदप्रियायै । दैत्यसिंहानां निहन्त्र्यै । सिंहिकायै । सिंहवाहिन्यै । सुसेनायै । चन्द्रनिलयायै । सुकीर्त्यै । छिन्नसंशयायै नमः ॥ ९२०

ओं बलज्ञायै नमः । बलदायै । वामायै । लेलिहानायै । अमृताश्रवायै । नित्योदितायै । स्वयंज्योतिषे । उत्सुकायै । अमृतजीविन्यै । वज्रदंष्ट्रायै । वज्रजिह्वायै । वैदेह्यै । वज्रविग्रहायै । मङ्गळ्यायै । मङ्गळायै । मालायै । मलिनायै । मलहारिण्यै । गान्धर्व्यै । गारुड्यै नमः ॥ ९४०

ओं चान्द्र्यै नमः । कम्बलाश्वतरप्रियायै । सौदामिन्यै । जनानन्दायै । भ्रुकुटीकुटिलाननायै । कर्णिकारकरायै । कक्षायै । कंसप्राणापहारिण्यै । युगन्धरायै । युगावर्तायै । त्रिसन्ध्यायै । हर्षवर्धिन्यै । प्रत्यक्षदेवतायै । दिव्यायै । दिव्यगन्धायै । दिवापरायै । शक्रासनगतायै । शाक्र्यै । साध्व्यै । नार्यै नमः ॥ ९६०

ओं शवासनायै नमः । इष्टायै । विशिष्टायै । शिष्टेष्टायै । शिष्टाशिष्टप्रपूजितायै । शतरूपायै । शतावर्तायै । विनीतायै । सुरभये । सुरायै । सुरेन्द्रमात्रे । सुद्युम्नायै । सुषुम्नायै । सूर्यसंस्थितायै । समीक्षायै । सत्प्रतिष्ठायै । निवृत्त्यै । ज्ञानपारगायै । धर्मशास्त्रार्थकुशलायै । धर्मज्ञायै नमः ॥ ९८०

ओं धर्मवाहनायै नमः । धर्माधर्मविनिर्मात्र्यै । धार्मिकाणां शिवप्रदायै । धर्मशक्त्यै । धर्ममय्यै । विधर्मायै । विश्वधर्मिण्यै । धर्मान्तरायै । धर्ममध्यायै । धर्मपूर्वायै । धनप्रियायै । धर्मोपदेशायै । धर्मात्मने । धर्मलभ्यायै । धराधरायै । कपाल्यै । शाकलामूर्त्यै । कलाकलित विग्रहायै । सर्वशक्तिविनिर्मुक्तायै । सर्वशक्त्याश्रयाश्रयायै नमः ॥ १०००

ओं सर्वायै नमः । सर्वेश्वर्यै । सूक्ष्मायै । सुसूक्ष्मज्ञानरूपिण्यै । प्रधानपुरुषेशानायै । महापुरुषसाक्षिण्यै । सदाशिवायै । वियन्मूर्त्यै । देवमूर्त्यै । अमूर्तिकायै नमः ॥ १०१०

# सीताष्टोत्तरशतनामस्तोत्रम्

सीता सीरध्वजसुता सीमातीतगुणोज्ज्वला ।
सौन्दर्यसारसर्वस्वभूता सौभाग्यदायिनी ॥ १

देवी देवार्चितपदा दिव्या दशरथस्नुषा ।
रामा रामप्रिया रम्या राकेन्दुवदनोज्ज्वला ॥ २

वीर्यशुल्का वीरपत्नी वियन्मध्या वरप्रदा ।
पतिव्रता पंक्तिकण्ठनाशिनी पावनस्मृतिः ॥ ३

वन्दारुवत्सला वीरमाता वृतरघूत्तमा ।
संपत्करी सदातुष्टा साक्षिणी साधुसंमता ॥ ४

नित्या नियतसंस्थाना नित्यानन्दा नुतिप्रिया ।
पृथ्वी पृथ्वीसुता पुत्रदायिनी प्रकृतिः परा ॥ ५

हनुमत्स्वामिनी हृद्या हृदयस्था हताशुभा ।
हंसयुक्ता हंसगतिः हर्षयुक्ता हतासुरा ॥ ६

साररूपा सारवचाः साध्वी च सरमाप्रिया ।
त्रिलोकवन्द्या त्रिजटासेव्या त्रिपथगार्चिनी ॥ ७

त्राणप्रदा त्रातकाका तृणीकृतदशानना ।
अनसूयाङ्गरागाङ्काऽनसूया सूरिवन्दिता ॥ ८

अशोकवनिकास्थानाऽशोका शोकविनाशिनी ।
सूर्यवंशस्नुषा सूर्यमण्डलान्तःस्थवल्लभा ॥ ९

श्रुतमात्राघहरणा श्रुतिसन्निहितेक्षणा ।
पुष्पप्रिया पुष्पकस्था पुण्यलभ्या पुरातना ॥ १०

पुरुषार्थप्रदा पूज्या पूतनाम्नी परन्तपा ।
पद्मप्रिया पद्महस्ता पद्मा पद्ममुखी शुभा ॥ ११

जनशोकहरा जन्ममृत्युशोकविनाशिनी ।

जगद्रूपा जगद्वन्द्या जयदा जनकात्मजा ॥ १२

नाथनीयकटाक्षा च नाथा नाथैकतत्परा ।
नक्षत्रनाथवदना नष्टदोषा नयावहा ॥ १३

वह्निपापहरा वह्निशैत्यकृद्वृद्धिदायिनी ।
वाल्मीकिगीतविभवा वचोऽतीता वराङ्गना ॥ १४

भक्तिगम्या भव्यगुणा भान्ती भरतवन्दिता ।
सुवर्णाङ्गी सुखकरी सुग्रीवाङ्गदसेविता ॥ १५

वैदेही विनताघौघनाशिनी विधिवन्दिता ।
लोकमाता लोचनान्तःस्थितकारुण्यसागरा ॥
श्रीरामवल्लभा सा नः पायादार्तानुपाश्रितान् ॥ १६

## सीताष्टोत्तरशतनामावलिः

सीतायै नमः । सीरध्वजसुतायै । सीमातीतगुणोज्ज्वलायै । सौन्दर्यसारसर्वस्वभूतायै । सौभाग्यदायिन्यै । देव्यै । देवार्चितपदायै । दिव्यायै । दशरथस्नुषायै । रामायै । रामप्रियायै । रम्यायै । राकेन्दुवदनोज्ज्वलायै । वीर्यशुल्कायै । वीरपत्न्यै । वियन्मध्यायै । वरप्रदायै । पतिव्रतायै । पंक्तिकण्ठनाशिन्यै । पावनस्मृत्यै नमः ॥ २०

वन्दारुवत्सलायै नमः । वीरमात्रे । वृतरघूत्तमायै । संपत्कर्यै । सदातुष्टायै । साक्षिण्यै । साधुसंमतायै । नित्यायै । नियतसंस्थानायै । नित्यानन्दायै । नुतिप्रियायै । पृथ्व्यै । पृथ्वीसुतायै । पुत्रदायिन्यै । प्रकृत्यै । परायै । हनुमत्स्वामिन्यै । हृद्यायै । हृदयस्थायै । हताशुभायै नमः ॥ ४०

हंसयुक्तायै नमः । हंसगत्यै । हर्षयुक्तायै । हतासुरायै । साररूपायै । सारवचसे । साध्व्यै । सरमाप्रियायै । त्रिलोकवन्द्यायै । त्रिजटासेव्यायै । त्रिपथगार्चिन्यै । त्राणप्रदायै । त्रातकाकायै । तृणीकृतदशाननायै । अनसूयाङ्गरागाङ्कायै । अनसूयायै । सूरिवन्दितायै ।

अशोकवनिकास्थनायै । अशोकायै । शोकविनाशिन्यै नमः ।। ६०

सूर्यवंशस्नुषायै नमः । सूर्यमण्डलान्तस्थवल्लभायै । श्रुतमात्राघहरणायै । श्रुतिसन्निहितेक्षणायै । पुण्यप्रियायै । पुष्पकस्थायै । पुण्यलभ्यायै । पुरातनायै । पुरुषार्थप्रदायै । पूज्यायै । पूतनाम्न्यै । परन्तपायै । पद्मप्रियायै । पद्महस्तायै । पद्मायै । पद्ममुख्यै । शुभायै । जनशोकहरायै । जन्ममृत्युशोकविनाशिन्यै । जगद्रूपायै नमः ।। ८०

जगद्वन्द्यायै नमः । जयदायै । जनकात्मजायै । नाथनीयकटाक्षायै । नाथायै । नाथैकतत्परायै । नक्षत्रनाथवदनायै । नष्टदोषायै । नयावहायै । वह्निपापहरायै । वह्निशैत्यकृते । वृद्धिदायिन्यै । वाल्मीकिगीतविभवायै । वचोऽतीतायै । वराङ्गनायै । भक्तिगम्यायै । भव्यगुणायै । भान्त्यै । भरतवन्दितायै । सुवर्णाङ्ग्यै नमः ।। १००

सुखकर्यै नमः । सुग्रीवाङ्गदसेवितायै । वैदेह्यै । विनाताघौघ-नाशिन्यै । विधिवन्दितायै । लोकमात्रे । लोचनान्तःस्थितकारुण्य-सागरायै । श्री रामवल्लभायै नमः ।। १०८

*___*___*

सीतामुदारचरितां विधिशंभुविष्णु–
वन्द्यां त्रिलोकजननीं नतकल्पवल्लीम् ।
हैमामनेकमणिरञ्जितकोटिभास–
भूषोत्करां अनुदिनं ललितां नमामि ।।

उन्मृष्टं कुचसीम्नि पत्रमकरं दृष्ट्वा हठालिङ्गनात्
कोपो मास्तु पुनर्लिखाम्यमुमिति स्मेरे रघूणां वरे ।
कोपेनारुणितोऽश्रुपातदलितः प्रेम्णा च विस्तारितो
दत्तो मैथिलकन्यया दिशतु नः क्षेमं कटाक्षाङ्कुरः ।।

॥ श्रीः ॥

# श्रीहनूमत्सहस्त्रनामस्तोत्रम्

(ऋषय ऊचुः :-

ऋश्यमूकगिरिं प्राप्तः सीताविरहकातरः ।
भगवान् किं व्यधाद्रामस्तत्सर्वं ब्रूहि सत्वरम् ॥ १

वाल्मीकिरुवाच—

मायामानुषदेहो यं ददर्शाग्रे कपीश्वरम् ।
हनूमन्तं जगत्स्वामी बालार्कसमतेजसम् ॥ २
स सत्वरं समागम्य साष्टाङ्गं प्रणिपत्य च ।
कृताञ्जलिपुटो भूत्वा हनूमान् राममब्रवीत् ॥ ३

हनूमानुवाच—

धन्योऽस्मि कृतकृत्योऽस्मि दृष्ट्वा त्वत्पादपङ्कजम् ।
योगिनामप्यगम्यं च संसारभयनाशनम् ॥ ४
पुरुषोत्तर देवेश कर्तव्यं तन्निवेद्यताम्

श्रीराम उवाच—

जनस्थाने कपिश्रेष्ठ कोऽप्यागत्य विदेहजाम् ॥ ५
हृतवान् विप्रसंवेशो मारीचानुगते मयि ।
गवेष्य सांप्रतं वीर जानकीहरणे परः ॥ ६
त्वयाऽगम्यो न को देशस्त्वं च ज्ञानवतां वरः ॥
सप्तकोटिमहामन्त्रमन्त्रितावयवः प्रभुः ॥ ७ ॥)

ऋषय ऊचुः —

को मन्त्रः किं च तद्ध्यानं तन्नो ब्रूहि यथार्थतः ।
कथासुधारसं पीत्वा न तृप्यामः परन्तप ॥ ८

वाल्मीकिरुवाच—

मन्त्रं हनूमतो विद्धि भुक्तिमुक्तिप्रदायकम्।
महारिष्टमहापापमहादुःखनिवारणम्॥ ९
अन्यं हनूमतो मन्त्रं सहस्रनामसंज्ञितम्।
जानन्तु ऋषयः सर्वे महादुरितनाशनम्॥ १०
यस्य संस्मरणात्सीतां लब्ध्वा राज्यमकण्टकम्।
विभीषणाय च ददावात्मानं लब्धवान् यथा॥ ११

ऋषय ऊचुः —

सहस्रनाम सन्मन्त्रं दुःखाघौघनिवारणम्।
वाल्मीके ब्रूहि नस्तूर्णं शुश्रूषामः कथां पराम्॥ १२

वाल्मीकिरुवाच—

शृण्वन्तु ऋषयः सर्वे सहस्रनामकं स्तवम्।
स्तवानामुत्तमं दिव्यं सर्वार्थस्य प्रकाशकम्॥ १३

अस्य श्रीहनुमत्सहस्रनामस्तोत्रमहामन्त्रस्य। श्रीरामचन्द्रो भगवान् ऋषिः, शिरसि, अनुष्टुप्च्छन्दः, मुखे। हनुमान् परमात्मा देवता, हृदये। ओं ह्रीं श्रीं ह्रां ह्रौं बीजं गुह्ये। श्रीरिति शक्तिः, पादयोः। लङ्काविध्वंसनायेति कवचम्। किलि किलि भू भू कारिण इति कीलकम्। मम सर्वारिष्टनिवारणार्थे जपे विनियोगः। ओं ऐं ह्रीं श्रीं हनुमते रामदूताय अङ्गुष्ठाभ्यां नमः। ओं लङ्काविध्वंसनाय तर्जनीभ्यां नमः। ओं अञ्जनागर्भसंभूताय मध्यमाभ्यां नमः। ओं शाकिनी डाकिनी विध्वंसनाय अनामिकाभ्यां नमः। ओं किलि किलि भू भू कारिणे भीषणाय हनूमते देवाय कनिष्ठिकाभ्यां नमः। ओं ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवःसुवरोमिति दिग्बन्धः॥

वन्दे विद्युज्ज्वलनविलसद्ब्रह्मसूत्रैकनिष्ठं
कर्णद्वन्द्वे कनकरचित्ते कुण्डले धारयन्तम्।
सत्कौपीनं कपिवरवृतं कामरूपं कपीन्द्रं
पुत्रं वायोरिनसुतसुखदं वज्रदेहं वरेण्यम्॥
स्फाटिकाभं स्वर्णकान्तं द्विभुजं च कृताञ्जलिम्।
कुण्डलद्वयसंशोभिमुखाम्भोजं मुहुर्मुहुः॥
प्रतप्तस्वर्णवर्णाभं संरक्तारुणलोचनम्।
सुग्रीवादियुतं ध्यायेत्पीताम्बरसमावृतम्॥
गोष्पदीकृतवाराशिं पुच्छमस्तकमीश्वरम्।
ज्ञानमुद्रां च बिभ्राणं सर्वालङ्कारभूषितम्॥
उद्यदादित्यसङ्काशं उदारभुजविक्रमम्।
कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम्॥
श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम्।
अभयं वरदं दोर्भ्यां कलये मारुतात्मजम्॥

श्रीरामचन्द्र उवाच—

हनुमाञ्श्रीप्रदो वायुपुत्रो रुद्रोऽनघोऽजरः।
अमृत्युर्वीरवीरश्च ग्रामवासो जनाश्रयः॥ १
धनदो निर्गुणोऽकायो वीरो निधिपतिर्मुनिः।
पिङ्गाक्षो वरदो वाग्मी सीताशोकविनाशनः॥ २
शिवःशर्वः परोऽव्यक्तो व्यक्ताव्यक्तो रसाधरः।
पिङ्गकेशः पिङ्गरोमा श्रुतिगम्यः सनातनः॥ ३
अनादिर्भगवान्देवो विश्वहेतुर्निरामयः।
आरोग्यकर्ता विश्वेशो विश्वनाथो हरीश्वरः॥ ४

भर्गो रामो रामभक्तः कल्याणप्रकृतिः स्थिरः ।
विश्वम्भरो विश्वमूर्तिर्विश्वाकारोऽथ विश्वपः ।। ५
विश्वात्मा विश्वसेव्योऽथ विश्वो विश्वहरो रविः ।
विश्वचेष्टो विश्वगम्यो विश्वध्येयः कलाधरः ।। ६
प्लवङ्गमः कपिश्रेष्ठो ज्येष्ठो वैद्यो वनेचरः ।
बालो वृद्धो युवा तत्त्वं तत्त्वगम्यः सखा ह्यजः ।। ७
अञ्जनासूनुरव्यग्रो ग्रामख्यातो धराधरः ।
भूर्भुवः स्वर्महर्लोको जनलोकस्तपोऽव्ययः ।। ८
सत्यमोङ्कारगम्यश्च प्रणवो व्यापकोऽमलः ।
शिवधर्मप्रतिष्ठाता रामेष्टः फाल्गुनप्रियः ।। ९
गोष्पदीकृतवाराशिः पूर्णकामो धरापतिः ।
रक्षोघ्नः पुण्डरीकाक्षः शरणागतवत्सलः ।। १०
जानकीप्राणदाता च रक्षःप्राणापहारकः ।
पूर्णः सत्यः पीतवासा दिवाकरसमप्रभः ।। ११
देवोद्यानविहारी च देवताभयभञ्जनः ।
भक्तोदयो भक्तलब्धो भक्तपालनतत्परः ।। १२
द्रोणहर्ता शक्तिनेता शक्तिराक्षसमारकः ।
अक्षघ्नो रामदूतश्च शाकिनीजीवहारकः ।। १३
भूभूकारहताराातिर्गर्वपर्वतमर्दनः ।
हेतुस्त्वहेतुः प्रांशुश्च विश्वभर्ता जगद्गुरुः ।। १४
जगन्नेता जगन्नाथो जगदीशो जनेश्वरः ।
जगद्धितो हरिः श्रीशो गरुडस्मयभञ्जनः ।। १५

पार्थध्वजो वायुपुत्रोऽमितपुच्छोऽमितप्रभः ।
ब्रह्मपुच्छः परब्रह्मपुच्छो रामेष्टकारकः ॥ १६

सुग्रीवादियुतो ज्ञानी वानरो वानरेश्वरः ।
कल्पस्थायी चिरंजीवी तपनश्च सदाशिवः ॥ १७

सन्नतः सद्गतिर्भुक्तिमुक्तिदः कीर्तिदायकः ।
कीर्तिः कीर्तिप्रदश्चैव समुद्रः श्रीप्रदः शिवः ॥ १८

भक्तोदयो भक्तगम्यो भक्तभाग्यप्रदायकः ।
उदधिक्रमणो देवः संसारभयनाशनः ॥ १९

वार्धिबन्धनकृद् विश्वजेता विश्वप्रतिष्ठितः ।
लङ्कारिः कालपुरुषो लङ्केशगृहभञ्जनः ॥ २०

भूतावासो वासुदेवो वसुस्त्रिभुवनेश्वरः ।
श्रीरामदूतः कृष्णस्तु लङ्काप्रासादभञ्जनः ॥ २१

कृष्णः कृष्णस्तुतः शान्तः शान्तिदो विश्वपावनः ।
विश्वभोक्ताऽथ मारघ्नो ब्रह्मचारी जितेन्द्रियः ॥ २२

ऊर्ध्वगो लाङ्गुली माली लाङ्गूलाहतराक्षसः ।
समीरतनुजो वीरो वीरमारो जयप्रदः ॥ २३

जगन्मङ्गलदः पुण्यः पुण्यश्रवणकीर्तनः ।
पुण्यकीर्तिः पुण्यगतिर्जगत्पावनपावनः ॥ २४

देवेशो जितमारोऽथ रामभक्तिविधायकः ।
ध्याता ध्येयो लयः साक्षी चेता चैतन्यविग्रहः ॥ २५

ज्ञानदः प्राणदः प्राणो जगत्प्राणः समीरणः ।
विभीषणप्रियः शूरः पिप्पलाश्रयसिद्धिदः ॥ २६
सिद्धः सिद्धाश्रयः कालो महोक्षः कालजान्तकः ।
लङ्केशनिधनस्थायी लङ्कादाहक ईश्वरः ॥ २७
चन्द्रसूर्याग्निनेत्रश्च कालाग्निः प्रलयान्तकः ।
कपिलः कपिशः पुण्यराशिर्द्वादशराशिगः ॥ २८
सर्वाश्रयोऽप्रमेयात्मा रेवत्यादिनिवारकः ।
लक्ष्मणप्राणदाता च सीताजीवनहेतुकः ॥ २९
रामध्येयो हृषीकेशो विष्णुभक्तो जटी बली ।
देवारिदर्पहा होता धाता कर्ता जगत्प्रभुः ॥ ३०
नगरग्रामपालश्च शुद्धो बुद्धो निरन्तरः ।
निरञ्जनो निर्विकल्पो गुणातीतो भयङ्करः ॥ ३१
हनुमांश्च दुराराध्यस्तपःसाध्यो महेश्वरः ।
जानकीघनशोकोत्थतापहर्ता परात्परः ॥ ३२
वाङ्मयः सदसद्रूपः कारणं प्रकृतेः परः ।
भाग्यदो निर्मलो नेता पुच्छलङ्काविदाहकः ॥ ३३
पुच्छबद्धयातुधानो यातुधानरिपुप्रियः ।
छायापहारी भूतेशो लोकेशः सद्गतिप्रदः ॥ ३४
प्लवङ्गमेश्वरः क्रोधः क्रोधसंरक्तलोचनः ।
सौम्यो गुरुः काव्यकर्ता भक्तानां च वरप्रदः ॥ ३५
भक्तानुकम्पी विश्वेशः पुरुहूतः पुरन्दरः ।
क्रोधहर्ता तमोहर्ता भक्ताभयवरप्रदः ॥ ३६

अग्निर्विभावसुर्भास्वान् यमो निर्ऋतिरेव च।
वरुणो वायुगतिमान् वायुः कौबेर ईश्वरः ॥ ३७
रविश्चन्द्रः कुजः सौम्यो गुरुः काव्यः शनैश्चरः।
राहुः केतुर्मरुद्धोता दाता हर्ता समीरजः ॥ ३८
मशकीकृतदेवारिर्दैत्यारिर्मधुसूदनः।
कामः कपिः कामपालः कपिलो विश्वजीवनः ॥ ३९
भागीरथीपदाम्भोजः सेतुबन्धविशारदः।
स्वाहा स्वधा हविः कव्यं हव्यवाहप्रकाशकः ॥ ४०
स्वप्रकाशो महावीरो लघुरूर्जितविक्रमः।
उड्डीनोड्डीनगतिमान् सद्गतिः पुरुषोत्तमः ॥ ४१
जगदात्मा जगद्योनिर्जगदन्तो ह्यनन्तकः।
विपाप्मा निष्कलङ्कोऽथ महान् महदहङ्कृतिः ॥ ४२
खं वायुः पृथिवी चापो वह्निर्दिक्पाल एव च।
क्षेत्रज्ञः क्षेत्रहर्ता च पल्वलीकृतसागरः ॥ ४३
हिरण्मयः पुराणश्च खेचरो भूचरोऽमरः।
हिरण्यगर्भः सूत्रात्मा राजराजो विशाम्पतिः ॥ ४४
वेदान्तवेद्य उद्गीथो वेदवेदाङ्गपारगः।
प्रतिग्रामस्थितिः सद्यः स्फूर्तिदाता गुणाकरः ॥ ४५
नक्षत्रमाली भूतात्मा सुरभिः कल्पपादपः।
चिन्तामणिर्गुणनिधिः प्रजाधारो ह्यनुत्तमः ॥ ४६
पुण्यश्लोकः पुरारातिर्ज्योतिष्माञ्शर्वरीपतिः।
किल्किलारावसन्त्रस्तभूतप्रेतपिशाचकः ॥ ४७

ऋणत्रयहरः सूक्ष्मः स्थूलः सर्वगतिः पुमान्।
अपस्मारहरः स्मर्ता श्रुतिर्गाथा स्मृतिर्मनुः ॥ ४८
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं यतीश्वरः।
नादरूपः परं ब्रह्म ब्रह्मपुच्छः पुरातनः ॥ ४९
एकोऽनेको जनःशुक्लः स्वयञ्ज्योतिरनाकुलः।
ज्योतिर्ज्योतिरनादिश्च सात्त्विको राजसस्तमः ॥ ५०
तमोहर्ता निरालम्बो निराकारो गुणाकरः।
गुणाश्रयो गुणमयो बृहत्कर्मा बृहद्यशाः ॥ ५१
बृहद्धनुर्बृहत्पादो बृहन्मूर्धा बृहत्स्वनः।
बृहत्कर्णो बृहन्नासो बृहद्बाहुर्बृहत्तनुः ॥ ५२
बृहज्जानुर्बृहत्कायो बृहत्पुच्छो बृहत्करः।
बृहद्गतिर्बृहत्सेव्यो बृहल्लोकफलप्रदः ॥ ५३
बृहच्छक्तिर्बृहद्वाञ्छाफलदो बृहदीश्वरः।
बृहल्लोकनुतो द्रष्टा विद्यादाता जगद्गुरुः ॥ ५४
देवाचार्यः सत्यवादी ब्रह्मवादी कलाधरः।
सप्तपातालगामी च मलयाचलसंश्रयः ॥ ५५
उत्तराशास्थितः श्रीदो दिव्यौषधिवशः खगः।
शाखामृगः कपीन्द्रोऽथ पुराणश्रुतिचञ्चुरः ॥ ५६
चतुरब्राह्मणो योगी योगगम्यः परावरः।
अनादिनिधनो व्यासो वैकुण्ठः पृथिवीपतिः ॥ ५७
अपराजितो जितारातिः सदानन्दो दयायुतः।
गोपालो गोपतिर्गोप्ता कलिकालपराशरः ॥ ५८

मनोवेगी सदायोगी संसारभयनाशनः ।
तत्त्वदाताऽथ तत्त्वज्ञस्तत्त्वं तत्त्वप्रकाशकः ॥ ५९
शुद्धो बुद्धो नित्यमुक्तो भक्तराजो जयद्रथः ।
प्रलयोऽमितमायश्च मायातीतो विमत्सरः ॥ ६०
मायाभर्जितरक्षाश्च मायानिर्मितविष्टपः ।
मायाश्रयश्च निर्लेपो मायानिर्वर्तकः सुखम् ॥ ६१
सुखी सुखप्रदो नागो महेशकृतसंस्तवः ।
महेश्वरः सत्यसन्धः शरभः कलिपावनः ॥ ६२
(कलिः कल्याणदः कल्यः कलावान् कलितारकः ।
कपिश्रेष्ठः कान्तवपुः शतकण्ठकुलान्तकः ॥)
सहस्रकन्धरबलविध्वंसनविचक्षणः ।
सहस्रबाहुः सहजो द्विबाहुर्द्विभुजोऽमरः ॥ ६३
चतुर्भुजो दशभुजो हयग्रीवः खगाननः ।
कपिवक्त्रः कपिपतिर्नरसिंहो महाद्युतिः ॥ ६४
भीषणो भावगो वन्द्यो वराहो वायुरूपधृक् ।
लक्ष्मणप्राणदाता च पराजितदशाननः ॥ ६५
पारिजातनिवासी च वटुर्वचनकोविदः ।
सुरसास्यविनिर्मुक्तः सिंहिकाप्राणहारकः ॥ ६६
लङ्कालङ्कारविध्वंसी पृषदंशकरूपधृत् ।
रात्रिसंचारकुशलो रात्रिंचरगृहाग्निदः ॥ ६७
किङ्करान्तकरो जम्बुमालिहन्तोग्ररूपधृत् ।
आकाशचारी हरिगो मेघनादरणोत्सुकः ॥ ६८

मेघगम्भीरनिनदो मैरावणकुलान्तकः ।
कालनेमिप्राणहारी मकरीशापमोक्षदः ।। ६९
रसो रसज्ञः सम्मानो रूपं चक्षुः श्रुतिर्वचः ।
घ्राणो गन्धः स्पर्शनं च स्पर्शोऽहङ्कारमानसः ।। ७०
नेतिनेतीतिगम्यश्च वैकुण्ठभजनप्रियः ।
गिरीशो गिरिजाकान्तो दुर्वासाः कविरङ्गिराः ।। ७१
भृगुर्वसिष्ठश्च्यवनो नारदस्तुम्बरोऽमलः ।
विश्वक्षेत्रो विश्वबीजो विश्वनेत्रश्च विश्वपः ।। ७२
याजको यजमानश्च पावकः पितरस्तथा ।
श्रद्धा बुद्धिः क्षमा तन्द्रा मन्त्रो मन्त्रयिता स्वरः ।। ७३
राजेन्द्रो भूपती रुण्डमाली संसारसारथिः ।
नित्यसम्पूर्णकामश्च भक्तकामधुगुत्तमः ।। ७४
गणपः केशवो भ्राता पिता माता च मारुतिः ।
सहस्रमूर्द्धाऽनेकास्यः सहस्राक्षः सहस्रपात् ।। ७५
कामजित् कामदहनः कामः कामफलप्रदः ।
मुद्रापहारी रक्षोघ्नः क्षितिभारहरो बलः ।। ७६
नखदंष्ट्रायुधो विष्णुर्भक्ताभयवरप्रदः ।
दर्पहा दर्पदो दंष्ट्राशतमूर्तिरमूर्तिमान् ।। ७७
महानिधिर्महाभागो महाभर्गो महर्द्धिदः ।
महाकारो महायोगी महातेजा महाद्युतिः ।। ७८
महासनो महानादो महामन्त्रो महामतिः ।
महागमो महोदारो महादेवात्मको विभुः ।। ७९

रौद्रकर्मा क्रूरकर्मा रत्ननाभः कृतागमः ।
अम्भोधिलङ्घनः सिंहः सत्यधर्मप्रमोदनः ॥ ८०
जितामित्रो जयः सोमो विजयो वायुनन्दनः ।
जीवदाता सहस्रांशुर्मुकुन्दो भूरिदक्षिणः ॥ ८१
सिद्धार्थः सिद्धिदः सिद्धसंकल्पः सिद्धिहेतुकः ।
सप्तपातालचरणः सप्तर्षिगणवन्दितः ॥ ८२
सप्ताब्धिलङ्घनो वीरः सप्तद्वीपोरुमण्डलः ।
सप्ताङ्गराज्यसुखदः सप्तमातृनिषेवितः ॥ ८३
सप्तस्वर्लोकमुकुटः सप्तहोता स्वराश्रयः ।
सप्तच्छन्दोनिधिः सप्तच्छन्दाः सप्तजनाश्रयः ॥ ८४
सप्तसामोपगीतश्च सप्तपातालसंश्रयः ।
मेधादःकीर्तिदः शोकहारी दौर्भाग्यनाशनः ॥ ८५
सर्वरक्षाकरो गर्भदोषहा पुत्रपौत्रदः ।
प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥ ८६
पराभिचारशमनो दुःखहा बन्धमोक्षदः ।
नवद्वारपुराधारो नवद्वारनिकेतनः ॥ ८७
नरनारायणस्तुत्यो नवनाथमहेश्वरः ।
मेखली कवची खड्गी भ्राजिष्णुर्जिष्णुसारथिः ॥ ८८
बहुयोजनविस्तीर्णपुच्छः पुच्छहतासुरः ।
दुष्टग्रहनिहन्ता च पिशाचग्रहघातकः ॥ ८९
बालग्रहविनाशी च धर्मनेता कृपाकरः ।
उग्रकृत्यश्चोग्रवेग उग्रनेत्रः शतक्रतुः ॥ ९०

शतमन्युनुतः स्तुत्यः स्तुतिः स्तोता महाबलः ।
समग्रगुणशाली च व्यग्रो रक्षोविनाशकः ।। ९१
रक्षोऽग्निदाहो ब्रह्मेशः श्रीधरो भक्तवत्सलः ।
मेघनादो मेघरूपो मेघवृष्टिनिवारकः ।। ९२
मेघजीवनहेतुश्च मेघश्यामः परात्मकः ।
समीरतनयो योद्धा नृत्यविद्याविशारदः ।। ९३
अमोघोऽमोघदृष्टिश्च इष्टदोऽरिष्टनाशनः ।
अर्थोऽनर्थापहारी च समर्थो रामसेवकः ।। ९४
अर्थिवन्द्योऽसुराराति: पुण्डरीकाक्ष आत्मभूः ।
संकर्षणो विशुद्धात्मा विद्याराशिः सुरेश्वरः ।। ९५
अचलोद्धारको नित्यः सेतुकृद् रामसारथिः ।
आनन्दः परमानन्दो मत्स्यः कूर्मो निराश्रयः ।। ९६
वराहो नारसिंहश्च वामनो जमदग्निजः ।
रामः कृष्णः शिवो बुद्धः कल्की रामाश्रयो हरिः ।। ९७
नन्दी भृङ्गी च चण्डी च गणेशो गणसेवितः ।
कर्माध्यक्षः सुराध्यक्षो विश्रामो जगतीपतिः ।। ९८
जगन्नाथः कपीशश्च सर्वावासः सदाश्रयः ।
सुग्रीवादिस्तुतो दान्तः सर्वकर्मा प्लवङ्गमः ।। ९९
नखदारितरक्षाश्च नखयुद्धविशारदः ।
कुशलः सुधनः शेषो वासुकिस्तक्षकस्तथा ।। १००
स्वर्णवर्णो बलाढ्यश्च पुरुजेताऽघनाशनः ।
कैवल्यरूपः कैवल्यो गरुडः पन्नगोरगः ।। १०१

किल्किल्रावहतारातिगर्वपर्वतभेदनः ।
वज्राङ्गो वज्रदंष्ट्रश्च भक्तवज्रनिवारकः ॥ १०२
नखायुधो मणिग्रीवो ज्वालामाली च भास्करः ।
प्रौढप्रतापस्तपनो भक्ततापनिवारकः ॥ १०३
शरणं जीवनं भोक्ता नानाचेष्टो ह्यचञ्चलः ।
स्वस्तिमान् स्वस्तिदो दुःखशातनः पवनात्मजः ॥ १०४
पावनः पवनः कान्तो भक्तागःसहनो बली ।
मेघनादरिपुर्मेघनादसंहतराक्षसः ॥ १०५
क्षरोऽक्षरो विनीतात्मा वानरेशः सतां गतिः ।
श्रीकण्ठः शितिकण्ठश्च सहायः सहनायकः ॥ १०६
अस्थूलस्त्वनणुर्भर्गो दिव्यः संसृतिनाशनः ।
अध्यात्मविद्यासारश्च ह्यध्यात्मकुशलः सुधीः ॥ १०७
अकल्मषः सत्यहेतुः सत्यदः सत्यगोचरः ।
सत्यगर्भः सत्यरूपः सत्यः सत्यपराक्रमः ॥ १०८
अञ्जनाप्राणलिङ्गश्च वायुवंशोद्भवः शुभः ।
भद्ररूपो रुद्ररूपः सुरूपश्चित्ररूपधृत् ॥ १०९
मैनाकवन्दितः सूक्ष्मदर्शनो विजयो जयः ।
क्रान्तदिङ्मण्डलो रुद्रः प्रकटीकृतविक्रमः ॥ ११०
कम्बुकण्ठः प्रसन्नात्मा ह्रस्वनासो वृकोदरः ।
लम्बौष्ठः कुण्डली चित्रमाली योगविदां वरः ॥ १११
विपश्चित्कविरानन्दविग्रहोऽनल्पशासनः ।
फल्गुनीसूनुरव्यग्रो योगात्मा योगतत्परः ॥ ११२

योगविद् योगकर्ता च योगयोनिर्दिगम्बरः ।
अकारादिहकारान्तवर्णनिर्मितविग्रहः ॥ ११३
उलूखलमुखः सिद्धसंस्तुतः प्रमथेश्वरः ।
श्लिष्टजङ्घः श्लिष्टजानुः श्लिष्टपाणिः शिखाधरः ॥ ११४
सुशर्माऽमितशर्मा च नारायणपरायणः ।
जिष्णुर्भविष्णू रोचिष्णुर्ग्रसिष्णुः स्थाणुरेव च ॥ ११५
हरिरुद्रानुसेव्योऽथ कम्पनो भूमिकम्पनः ।
गुणप्रवाहः सूत्रात्मा वीतरागःस्तुतिप्रियः ॥ ११६
नागकन्याभयध्वंसी रुक्मवर्णः कपालभृत् ।
अनाकुलो भवोपायोऽनपायो वेदपारगः ॥ ११७
अक्षरः पुरुषो लोकनाथ ऋक्षप्रभुर्दृढः ।
अष्टाङ्गयोगफलभुक् सत्यसन्धः पुरुष्टुतः ॥ ११८
श्मशानस्थाननिलयः प्रेतविद्रावणक्षमः ।
पञ्चाक्षरपरः पञ्चमातृको रञ्जनध्वजः ॥ ११९
योगिनीवृन्दवन्द्यश्रीः शत्रुघ्नोऽनन्तविक्रमः ।
ब्रह्मचारीन्द्रियरिपुर्धृतदण्डो दशात्मकः ॥ १२०
अप्रपञ्चः सदाचारः शूरसेनाविदारकः ।
वृद्धः प्रमोद आनन्दः सप्तद्वीपपतिन्धरः ॥ १२१
नवद्वारपुराधारः प्रत्यग्रः सामगायकः ।
षट्चक्रधामा स्वर्लोकाभयकृन्मानदो मदः ॥ १२२
सर्ववश्यकरः शक्तिरनन्तोऽनन्तमङ्गलः ।
अष्टमूर्तिर्नयोपेतो विरूपः स्मरसुन्दरः ॥ १२३

धूमकेतुर्महाकेतुः सत्यकेतुर्महारथः ।
नन्दिप्रियः स्वतन्त्रश्च मेखली डमरुप्रियः ॥ १२४
लौहाङ्गः सर्वविद्धन्वी खण्डलः शर्व ईश्वरः ।
फलभुक् फलहस्तश्च सर्वकर्मफलप्रदः ॥ १२५
धर्माध्यक्षो धर्मपालो धर्मो धर्मप्रदोऽर्थदः ।
पञ्चविंशतितत्त्वज्ञस्तारको ब्रह्मतत्परः ॥ १२६
त्रिमार्गवसतिर्भीमः सर्वदुःखनिबर्हणः ।
ऊर्जस्वान् निष्कलः शूली मौलिर्गर्जन्निशाचरः ॥ १२७
रक्ताम्बरधरो रक्तो रक्तमाल्य विभूषणः ।
वनमाली शुभाङ्गश्च श्वेतः श्वेताम्बरो युवा ॥ १२८
जयोऽजयपरीवारः सहस्रवदनः कपिः ।
शाकिनीडाकिनीयक्षरक्षोभूतप्रभञ्जकः ॥ १२९
सद्योजातः कामगतिर्ज्ञानमूर्तिर्यशस्करः ।
शम्भुतेजाः सार्वभौमो विष्णुभक्तः प्लवङ्गमः ॥ १३०
चतुर्नवतिमन्त्रज्ञः पौलस्त्यबलदर्पहा ।
सर्वलक्ष्मीप्रदः श्रीमानङ्गदप्रिय ईडितः ॥ १३१
स्मृतिबीजं सुरेशानः संसारभयनाशनः ।
उत्तम श्रीपरीवारः श्रितो रुद्रश्च कामधुक् ॥ १३२
(सदागतिर्मातरिश्वा रामपादाब्जषट्पदः ।
नीलप्रियो नीलवर्णो नीलवर्णप्रियः सुहृत् ॥
रामदूतो लोकबन्धुरन्तरात्मा मनोरमः ।
श्रीरामध्यानकृद्वीरः सदा किंपुरुषस्तुतः ॥

रामकार्यान्तरङ्गश्च शुद्धिर्गतिरनामयः ।
पुण्यश्लोकः परानन्दः परेशः प्रियसारथिः ॥
लोकस्वामी मुक्तिदाता सर्वकारणकारणः ।
महाबलो महावीरः पारावारगतिर्गुरुः ।)
तारको भगवांस्त्राता स्वस्तिदाता सुमङ्गलः ।
समस्त लोकसाक्षी च समस्तसुरवन्दितः ।
सीतासमेत श्रीरामपादसेवाधुरन्धरः ॥ १३३
(वाल्मीकिरुवाच—
इति नाम्नां सहस्रेण स्तुतो रामेण वातभूः ।
उवाच तं प्रसन्नात्मा सन्धायात्मानमव्ययम् ॥ १३४
श्रीहनुमानुवाच—
ध्यानस्येदमिदं ब्रह्म मत्परं समुपस्थितः ।
स्वामिन् दयानिधे राम ज्ञातोऽसि कपिना मया ॥ १३५
त्वद्ध्याननिरता लोके किं न पश्यन्ति सादरम् ।
तवागमनहेतुश्च ज्ञातः शत्रुर्मयानघ ॥ १३६
कर्तव्यं मम किं राम तथापि ब्रूहि राघव ।
इति प्रचोदितो रामः प्रहृष्टात्मेदमब्रवीत् ॥ १३७
श्रीराम उवाच—
दुर्जनः खलु वैदेहीं गृहीत्वा कोऽपि निर्गतः ।
हत्वा तमासुरं वीरमानयस्व कपीश्वर ॥ १३८
मम दास्यं कुरु सखे भव विश्वसुखंकरः ।
तस्याज्ञां शिरसा तस्य गृहीत्वा स कपीश्वरः ॥ १३९

विधेयं विधिवत्तत्र चकार शिरसा स्वयम्।)
इदं नामसहस्रं तु योऽधीते प्रत्यहं नरः ॥ १४०
दुःखौघं नश्यते तस्य संपत्तिर्वर्धते चिरम्।
वश्यं चतुर्विधं तस्य भवत्येव न संशयः ॥ १४१
राजानो राजपुत्राश्च राजकीयाश्च मन्त्रिणः।
त्रिकालपठनात्तस्य सिद्धिः स्यात्करसंस्थिता ॥ १४२
ब्राह्मे मुहूर्ते चोत्थाय प्रत्यहं यः पठेन्नरः।
ऐहिकामुष्मिककं सोऽपि लभते नात्र संशयः ॥ १४३
संग्रामसन्निविष्टानां वैरिविद्रावणं परम्।
ज्वरापस्मारशमनं गुल्मादिप्लीहवारणम् ॥ १४४
साम्राज्यसुखसंपत्तिदायकं जपतां नृणाम्।
य इदं पठते नित्यं पाठयेद्वा समाहितः ॥ १४५
सर्वान् कामानवाप्नोति वायुपुत्रप्रसादतः।
किमत्र बहुनोक्तेन नान्यथा रामभाषितम् ॥ १४६
यदिच्छेत् प्रत्यहं द्रष्टुं प्रयोक्तव्योऽयमद्भुतम्।
कार्यसंसिद्धिरत्यर्थं सत्यं सत्यं वचो मम ॥ १४७

(मन्त्रमहार्णवतः)

॥ श्रीः ॥

## ॥ श्री हनुमत्सहस्रनामावलिः ॥

ओं हनूमते नमः। श्रीप्रदाय। वायुपुत्राय। रुद्राय। अनघाय। अजराय। अमृत्यवे। वीरवीराय। ग्रामवासाय। जनाश्रयाय। धनदाय। निर्गुणाय। अकायाय। वीराय। निधिपतये। मुनये। पिङ्गाक्षाय। वरदाय। वाग्मिने। सीताशोकविनाशनाय नमः। २०

ओं शिवाय नमः । शर्वाय । पराय । अव्यक्ताय । व्यक्ताव्यक्ताय रसाधराय । पिङ्गकेशाय । पिङ्गरोम्णे । श्रुतिगम्याय । सनातनाय । अनादये । भगवते । देवाय । विश्वहेतवे । निरामयाय । आरोग्यकर्त्रे । विश्वेशाय । विश्वनाथाय । हरीश्वराय । भर्गाय नमः । २०

ओं रामाय नमः । रामभक्ताय । कल्याणप्रकृतये । स्थिराय । विश्वंभराय । विश्वमूर्तये । विश्वाकाराय । विश्वपाय । विश्वात्मने । विश्वसेव्याय । विश्वाय । विश्वहराय । रवये । विश्वचेष्टाय । विश्वगम्याय । विश्वध्येयाय । कलाधराय । प्लवङ्गाय । कपिश्रेष्ठाय । ज्येष्ठाय नमः । ६०

ओं वैद्याय नमः । वनेचराय । बालाय । वृद्धाय । यूने । तत्त्वाय । तत्त्वगम्याय । सखिने । अजाय । अञ्जनासूनवे । अव्यग्राय । ग्रामख्याताय । धराधराय । भूः । भुवः । स्वः । महर्लोकाय । जनलोकाय । तपसे । अव्ययाय नमः ।८०

ओं सत्याय नमः । ओंकारगम्याय । प्रणवाय । व्यापकाय । अमलाय । शिवधर्मप्रतिष्ठात्रे । रामेष्टाय । फाल्गुनप्रियाय । गोष्पदीकृतवाराशये । पूर्णकामाय । धरापतये । रक्षोघ्नाय । पुण्डरीकाक्षाय । शरणागतवत्सलाय । जानकीप्राणदात्रे । रक्षःप्राणापहारकाय । पूर्णाय । सत्याय । पीतवाससे । दिवाकरसमप्रभाय नमः । १००

ओं देवोद्यानविहारिणे नमः । देवताभयभञ्जनाय । भक्तोदयाय । भक्तलब्धाय । भक्तपालनतत्पराय । द्रोणहर्त्रे । शक्तिनेत्रे । शक्तिराक्षसमारकाय । अक्षघ्नाय । रामदूताय । शाकिनीजीवहारकाय । भूभूकारहताराातये । गर्वपर्वतमर्दनाय । हेतवे । अहेतवे । प्रांशवे । विश्वभर्त्रे । जगद्गुरवे । जगन्नेत्रे । जगन्नाथाय नमः । १२०

ओं जगदीशाय नमः । जनेश्वराय । जगद्धिताय । हरये । श्रीशाय । गरुडस्मयभञ्जनाय । पार्थध्वजाय । वायुपुत्राय । अमितपुच्छाय ।

अमितप्रभाय । ब्रह्मपुच्छाय । परब्रह्मपुच्छाय । रामेष्टकारकाय । सुग्रीवादियुताय । ज्ञानिने । वानराय । वानरेश्वराय । कल्पस्थायिने । चिरंजीविने । तपनाय नमः । १४०

ओं सदाशिवाय नमः । सन्नताय । सद्गतये । भुक्तिमुक्तिदाय । कीर्तिदायकाय । कीर्तये । कीर्तिप्रदाय । समुद्राय । श्रीप्रदाय । शिवाय । भक्तोदयाय । भक्तगम्याय । भक्तभाग्यप्रदायकाय । उदधिक्रमणाय । देवाय । संसारभयनाशनाय । वार्धिबन्धनकृते । विश्वजेत्रे । विश्वप्रतिष्ठिताय । लङ्कारये नमः । १६०

ओं कालपुरुषाय नमः । लङ्केशगृहभञ्जनाय । भूतावासाय । वासुदेवाय । वसवे । त्रिभुवनेश्वराय । श्रीरामदूताय । कृष्णाय । लङ्काप्रासादभञ्जनाय । कृष्णाय । कृष्णस्तुताय । शान्ताय । शान्तिदाय । विश्वपावनाय । विश्वभोक्त्रे । मारघ्नाय । ब्रह्मचारिणे । जितेन्द्रियाय । ऊर्ध्वगाय । लाङ्गुलिने नमः । १८०

ओं मालिने नमः । लाङ्गूलहतराक्षसाय । समीरतनुजाय । वीराय । वीरमाराय । जयप्रदाय । जगन्मङ्गलदाय । पुण्याय । पुण्यश्रवणकीर्तनाय । पुण्यकीर्तये । पुण्यगतये । जगत्पावनपावनाय । देवेशाय । जितमाराय । रामभक्तिविधायकाय । ध्यात्रे । ध्येयाय । लयाय । साक्षिणे । चेतसे नमः । २००

ओं चैतन्यविग्रहाय नमः । ज्ञानदाय । प्राणदाय । प्राणाय । जगत्प्राणाय । समीरणाय । विभीषणप्रियाय । शूराय । पिप्पलाश्रयसिद्धिदाय । सिद्धाय । सिद्धाश्रयाय । कालाय । महोक्षाय । कालजान्तकाय । लङ्केशनिधनस्थायिने । लङ्कादाहकाय । ईश्वराय । चन्द्रसूर्याग्निनेत्राय । कालाग्नये । प्रलयान्तकाय नमः । २२०

ओं कपिलाय नमः । कपिशाय । पूर्णराशये । द्वादशराशिगाय । सर्वाश्रयाय । अप्रमेयात्मने । रेवत्यादिनिवारकाय । लक्ष्मणप्राणदात्रे । सीताजीवनहेतुकाय । रामध्येयाय । हृषीकेशाय । विष्णुभक्ताय । जटिने । बलिने । देवारिदर्पघ्ने । होत्रे । धात्रे । कर्त्रे । जगत्प्रभवे । नगरग्रामपालाय नमः । २४०

ओं शुद्धाय नमः । बुद्धाय । निरन्तराय । निरञ्जनाय । निर्विकल्पाय । गुणातीताय । भयङ्कराय । हनुमते । दुराराध्याय । तपःसाध्याय । महेश्वराय । जानकीघनशोकोत्थतापहर्त्रे । परात्पराय । वाङ्मयाय । सदसद्रूपाय । कारणाय । प्रकृतेःपराय । भाग्यदाय । निर्मलाय । नेत्रे नमः । २६०

ओं पुच्छलङ्काविदाहकाय नमः । पुच्छबद्धयातुधानाय । यातुधानरिपुप्रियाय । छायापहारिणे । भूतेशाय । लोकेशाय । सद्गति-प्रदाय । प्लवङ्गमेश्वराय । क्रोधाय । क्रोधसंरक्तलोचनाय । सौम्याय । गुरवे । काव्यकर्त्रे । भक्तानां च वरप्रदाय । भक्तानुकंपिने । विश्वेशाय । पुरुहूताय । पुरन्दराय । क्रोधहर्त्रे । तमोहर्त्रे नमः । २८०

ओं भक्ताभयवरप्रदाय नमः । अग्नये । विभावसवे । भास्वते । यमाय । निर्ऋतये । वरुणाय । वायुगतिमते । वायवे । कौबेराय । ईश्वराय । रवये । चन्द्राय । कुजाय । सौम्याय । गुरवे । काव्याय । शनैश्चराय । राहवे । केतवे नमः ॥ ३००

ओं मरुते नमः । होत्रे । दात्रे । हर्त्रे । समीरजाय । मशकीकृतदेवारये । दैत्यारये । मधुसूदनाय । कामाय । कपये । कामपालाय । कपिलाय । विश्वजीवनाय । भागीरथीपदाम्भोजाय । सेतुबन्धविशारदाय । स्वाहा । स्वधा । हविषे । कव्याय । हव्यवाहप्रकाशकाय नमः ॥ ३२०

ओं स्वप्रकाशाय नमः । महावीराय । लघवे । ऊर्जितविक्रमाय । उड्डीनोड्डीनगतिमते । सद्‌गतये । पुरुषोत्तमाय । जगदात्मने । जगद्योनये । जगदन्ताय । अनन्तकाय । विपाप्मने । निष्कलङ्काय । महते । महते । अहंकृतये । खाय । वायवे । पृथिव्यै । अद्भ्यो नमः । ३४०

ओं वह्नये नमः । दिक्पालाय । क्षेत्रज्ञाय । क्षेत्रहर्त्रे । पल्वलीकृतसागराय । हिरण्मयाय । पुराणाय । खेचराय । भूचराय । अमराय । हिरण्यगर्भाय । सूत्रात्मने । राजराजाय । विशांपतये । वेदान्तवेद्याय उद्‌गीथाय । वेदवेदाङ्गपारगाय । प्रतिग्रामस्थितये । सद्यःस्फूर्तिदात्रे । गुणाकराय । नक्षत्रमालिने नमः । ३६०

ओं भूतात्मने नमः । सुरभये । कल्पपादपाय । चिन्तामणये । गुणनिधये । प्रजाधाराय । अनुत्तमाय । पुण्यश्लोकाय । पुरारातये । ज्योतिष्मते । शर्वरीपतये । किलूकिलारावसंत्रस्तभूतप्रेतपिशाचकाय । ऋणत्रयहराय । सूक्ष्माय । स्थूलाय । सर्वगतये । पुंसे । अपस्मारहराय । स्मर्त्रे । श्रुतये नमः । ३८०

ओं गाथायै नमः । स्मृतये । मनवे । स्वर्गद्वाराय । प्रजाद्वाराय । मोक्षद्वाराय । यतीश्वराय । नादरूपाय । परस्मै ब्रह्मणे ।ब्रह्मपुच्छाय । पुरातनाय । एकाय । अनेकाय । जनाय । शुक्लाय । स्वयंज्योतिषे । अनाकुलाय । ज्योतिर्ज्योतिषे । अनादये । सात्त्विकाय नमः । ४००

ओं राजसाय नमः । तमसे । तमोहर्त्रे । निरालम्बाय । निराकाराय । गुणाकराय । गुणाश्रयाय । गुणमयाय । बृहत्कायाय । बृहद्यशसे । बृहद्धनुषे । बृहत्पादाय । बृहन्मूर्ध्ने । बृहत्स्वनाय । बृहत्कर्णाय । बृहन्नासाय । बृहद्बाहवे । बृहत्तनवे । बृहज्जानवे । बृहत्कायाय नमः । ४२०

ओं बृहत्पुच्छाय नमः । बृहत्कराय । बृहद्‌गतये । बृहत्सेव्याय । बृहल्लोकफलप्रदाय । बृहच्छक्तये । बृहद्वाञ्छा फलदाय । बृहदीश्वराय ।

बृहल्लोकनुताय। द्रष्ट्रे। विद्यादात्रे। जगद्गुरवे। देवाचार्याय। सत्यवादिने । ब्रह्मवादिने । कलाधराय । सप्तपातालगामिने । मलयाचलसंश्रयाय । उत्तराशास्थिताय। श्रीदाय नमः । ४४०

ओं दिव्यौषधिवशाय नमः । खगाय। शाखामृगाय। कपीन्द्राय। पुराणश्रुतिचश्चुराय। चतुरब्राह्मणाय। योगिने। योगिगम्याय। परावराय । अनादिनिधनाय। व्यासाय। वैकुण्ठाय। पृथिवीपतये। अपराजिताय। जितारातये । सदानन्दाय । दयायुताय । गोपालाय । गोपतये । गोप्त्रे नमः । ४६०

ओं कलिकालपराशराय नमः । मनोवेगिने । सदायोगिने । संसारभयनाशनाय। तत्वदात्रे। तत्त्वज्ञाय। तत्त्वाय। तत्त्वप्रकाशकाय। शुद्धाय। बुद्धाय। नित्यमुक्ताय। भक्तराजाय। जयद्रथाय। प्रलयाय। अमितमायाय । मायातीताय । विमत्सराय । मायानिर्जितरक्षसे । मायानिर्मितविष्टपाय। मायाश्रयाय नमः । ४८०

ओं निर्लेपाय । सुखं मायानिवर्तकाय । सुखिने । सुखप्रदाय । नागाय । महेशकृतसंस्तवाय । महेश्वराय । सत्यसंधाय । शरभाय । कलिपावनाय । (कलये । कल्याणदाय । कल्याय । कलावते । कलितारकाय । कपिश्रेष्ठाय । कान्तवपुषे । शतकण्ठकुलान्तकाय।)सहस्रकन्धरबलविध्वंसनविचक्षणाय। सहस्रबाहवे। सहजाय। द्विबाहवे । द्विभुजाय। अमराय। चतुर्भुजाय। दशभुजाय। हयग्रीवाय। खगाननाय नमः । ५००

ओं कपिवक्त्राय। कपिपतये। नरसिंहाय। महाद्युतये। भीषणाय। भावगाय । वन्द्याय । वराहाय । वायुरूपधृषे । लक्ष्मणप्राणदात्रे । पराजितदशाननाय । पारिजातनिवासिने । वटवे । वचनकोविदाय । सुरसास्यविनिर्मुक्ताय। सिंहिकाप्राणहारकाय। लङ्कालङ्कारविध्वंसिने। पृषदंशकरूपधृते। रात्रिसञ्चारकुशलाय। रात्रिंचरगृहाग्निदाय नमः। ५२०

ओं किङ्करान्तकराय । जम्बुमालिहन्त्रे । उग्ररूपधृते । आकाशचारिणे । हरिगाय । मेघनादरणोत्सुकाय । मेघगम्भीरनिनदाय । मैरावणकुलान्तकाय । कालनेमिप्राणहारिणे । मकरीशापमोक्षदाय । रसाय । रसज्ञाय । संमानाय । रूपाय । चक्षुषे । श्रुत्यै । वचसे । घ्राणाय । गन्धाय । स्पर्शनाय नमः । ५४०

ओं स्पर्शाय नमः । अहङ्कारमानसाय । नेतिनेतीतिगम्याय । वैकुण्ठभजनप्रियाय । गिरीशाय । गिरिजाकान्ताय । दूर्वासिसे । कवये । अङ्गिरसे । भृगुवे । वसिष्ठाय । च्यवनाय । नारदाय । तुम्बुराय । अमलाय । विश्वक्षेत्राय । विश्वबीजाय । विश्वनेत्राय । विश्वपाय । याजकाय नमः । ५६०

ओं यजमानाय नमः । पावकाय । पितृभ्यः । श्रद्धायै । बुद्ध्यै । क्षमायै । तन्द्रायै । मन्त्राय । मन्त्रयित्रे । स्वराय । राजेन्द्राय । भूपतये । रुण्डमालिने । संसारसारथये । नित्यसंपूर्णकामाय । भक्तकामधुगे । उत्तमाय । गणपाय । केशवाय । भ्रात्रे नमः । ५८०

ओं पित्रे नमः । मात्रे । मारुतये । सहस्रमूर्ध्ने । अनेकास्याय । सहस्राक्षाय । सहस्रपदे । कामजिते । कामदहनाय । कामाय । कामफलप्रदाय । मुद्रापहारिणे । रक्षोघ्नाय । क्षितिभारहराय । बलाय । नखदंष्ट्रायुधाय । विष्णवे । भक्ताभयवरप्रदाय । दर्पघ्ने । दर्पदाय नमः । ६००

ओं दंष्ट्राशतमूर्तये नमः । अमूर्तिमते । महानिधये । महाभागाय । महाभर्गाय । महर्द्धिदाय । महाकाराय । महायोगिने । महातेजसे । महाद्युतये । महासनाय । महानादाय । महामन्त्राय । महामतये । महागमाय । महोदाराय । महादेवात्मकाय । विभवे । रौद्रकर्मणे । क्रूरकर्मणे नमः । ६२०

ओं रत्ननाभाय नमः । कृतागमाय । अम्भोधिलङ्घनाय । सिंहाय । सत्यधर्मप्रमोदनाय । जितामित्राय । जयाय । सोमाय । विजयाय । वायुनन्दनाय । जीवदात्रे । सहस्रांशवे । मुकुन्दाय । भूरिदक्षिणाय । सिद्धार्थाय । सिद्धिदाय । सिद्धसंकल्पाय । सिद्धिहेतुकाय । सप्तपातालचरणाय । सप्तर्षिगणवन्दिताय नमः । ६४०

ओं सप्ताब्धिलङ्घनाय नमः । वीराय । सप्तद्वीपोरुमण्डलाय । सप्ताङ्गराज्यसुखदाय । सप्तमातृनिषेविताय । सप्तस्वर्लोकमकुटाय । सप्तहोत्रे नमः । स्वराश्रयाय । सप्तछन्दोनिधये । सप्तछन्दसे । सप्तजनाश्रयाय । सप्तसामोपगीताय । सप्तपातालसंश्रयाय । मेधादाय । कीर्तिदाय । शोकहारिणे । दौर्भाग्यनाशनाय । सर्वरक्षाकराय । गर्भदोषघ्ने । पुत्रपौत्रदाय नमः । ६६०

ओं प्रतिवादिमुखस्तंभाय नमः । रुष्टचित्तप्रसादनाय । पराभिचारशमनाय । दुःखघ्ने । बन्धमोक्षदाय । नवद्वारपुराधाराय । नवद्वारनिकेतनाय । नरनारायणस्तुत्याय । नवनाथमहेश्वराय । मेखलिने । कवचिने । खड्गिने । भ्राजिष्णवे । जिष्णुसारथये । बहुयोजन-विस्तीर्णपुच्छाय । पुच्छहतासुराय । दुष्टग्रहनिहन्त्रे । पिशाचग्रहघातकाय । बालग्रहविनाशिने । धर्मनेत्रे नमः । ६८०

ओं कृपाकराय नमः । उग्रकृत्याय । उग्रवेगाय । उग्रनेत्राय । शतक्रतवे । शतमन्युनुताय । स्तुत्याय । स्तुत्यै । स्तोत्रे । महाबलाय । समग्रगुणशालिने । व्यग्राय । रक्षोविनाशनाय । रक्षोऽग्निदाहाय । ब्रह्मेशाय । श्रीधराय । भक्तवत्सलाय । मेघनादाय । मेघरूपाय । मेघवृष्टिनिवारकाय नमः । ७००

ओं मेघजीवनहेतवे नमः । मेघश्यामाय । परात्मकाय । समीरतनयाय । योद्धे । नृत्यविद्याविशारदाय । अमोघाय । अमोघदृष्टये ।

इष्टदाय । अरिष्टनाशनाय । अर्थाय । अनर्थापहारिणे नमः । समर्थाय । रामसेवकाय । अर्थिवन्द्याय । असुरारातये । पुण्डरीकाक्षाय । आत्मभुवे । सङ्कर्षणाय । विशुद्धात्मने नमः । ७२०

ओं विद्याराशये नमः । सुरेश्वराय । अचलोद्धारकाय । नित्याय । सेतुकृते । रामसारथये । आनन्दाय । परमानन्दाय । मत्स्याय । कूर्माय । निराश्रयाय । वराहाय । नारसिंहाय । वामनाय । जमदग्निजाय । रामाय । कृष्णाय । शिवाय । बौद्धाय । कल्किने नमः । ७४०

ओं रामाश्रयाय नमः । हरये । नन्दिने । भृङ्गिने । चण्डिने । गणेशाय । गणसेविताय । कर्माध्यक्षाय । सुराध्यक्षाय । विश्रामाय । जगतीपतये । जगन्नाथाय । कपीशाय । सर्वावासाय । सदाश्रयाय । सुग्रीवादिस्तुताय । दान्ताय । सर्वकर्मणे । प्लवङ्गमाय । नखदारितरक्षसे । नखायुधविशारदाय नमः । ७६०

ओं कुशलाय नमः । सुधनाय । शेषाय । वासुकये । तक्षकाय । स्वर्णवर्णाय । बलाढ्याय । पुरजेत्रे । अघनाशनाय । कैवल्यरूपाय । कैवल्याय । गरुडाय । पन्नगोरगाय । किल्किलृरावहतारातये । गर्वपर्वतभेदनाय । वज्राङ्गाय । वज्रदंष्ट्राय । भक्तवज्रनिवारकाय । नखायुधाय । मणिग्रीवाय नमः । ७८०

ओं ज्वालामालिने नमः । भास्कराय । प्रौढप्रतापाय । तपनाय । भक्ततापनिवारकाय । शरणाय । जीवनाय । भोक्त्रे । नानाचेष्टाय । अचञ्चलाय । स्वस्तिमते । स्वस्तिदाय । दुःखशातनाय । पवनात्मजाय । पावनाय । पवनाय । कान्ताय । भक्तागस्सहनाय । बलिने । मेघनादरिपवे नमः । ८००

ओं मेघनादसंहतराक्षसाय नमः । क्षराय । अक्षराय । विनीतात्मने । वानरेशाय । सताङ्गतये । श्रीकण्ठाय । शितिकण्ठाय । सहायाय ।

सहनायकाय। अस्थूलाय। अनणवे। भर्गाय। दिव्याय। संसृतिनाशनाय । अध्यात्मविद्यासाराय । अध्यात्मकुशलाय । सुधिये । अकल्मषाय । सत्यहेतवे नमः । ८२०

ओं सत्यदाय नमः । सत्यगोचराय । सत्यगर्भाय । सत्यरूपाय । सत्याय । सत्यपराक्रमाय । अञ्जनाप्राणलिङ्गाय । वायुवंशोद्भवाय । शुभाय । भद्ररूपाय । रुद्ररूपाय । सुरूपाय । चित्ररूपधृते । मैनाकवन्दिताय। सूक्ष्मदर्शनाय। विजयाय। जयाय। क्रान्तदिङ्मण्डलाय । रुद्राय। प्रकटीकृतविक्रमाय नमः । ८४०

ओं कम्बुकण्ठाय । प्रसन्नात्मने । ह्रस्वनासाय । वृकोदराय । लम्बोष्ठाय । कुण्डलिने । चित्रमालिने । योगविदांवराय । विपश्चिते । कवये। आनन्दविग्रहाय। अनल्पशासनाय। फल्गुनीसूनवे। अव्यग्राय। योगात्मने । योगतत्पराय । योगविदे । योगकर्त्रे । योगयोनये । दिगम्बराय नमः ।। ८६०

ओं अकारादिहकारान्तवर्णनिर्मितविग्रहाय नमः । उलूखलमुखाय । सिद्धसंस्तुताय । प्रमथेश्वराय । श्लिष्टजङ्घाय । श्लिष्टजानवे । श्लिष्टपाणये । शिखाधराय । सुशर्मणे । अमितशर्मणे। नारायणपरायणाय । जिष्णवे । भविष्णवे । रोचिष्णवे । ग्रसिष्णवे । स्थाणवे । हरिरुद्रानुसेव्याय। कम्पनाय। भूमिकम्पनाय। गुणप्रवाहाय नमः । ८८०

ओं सूत्रात्मने नमः । वीतरागाय । स्तुतिप्रियाय । नागकन्याभयध्वंसिने । रुक्मवर्णाय । कपालभृते । अनाकुलाय । भवोपायाय । अनपायाय। वेदपारगाय। अक्षराय। पुरुषाय। लोकनाथाय । ऋक्षप्रभवे । दृढाय । अष्टाङ्गयोगफलभुजे । सत्यसंधाय । पुरुष्टुताय । श्मशानस्थाननिलयाय। प्रेतविद्रावणक्षमाय नमः । ९००

ओं पञ्चाक्षरपराय नमः । पञ्चमातृकाय । रञ्जनध्वजाय । योगिनीबृन्दवन्द्यश्रिये । शत्रुघ्नाय । अनन्तविक्रमाय । ब्रह्मचारिणे । इन्द्रियरिपवे । धृतदण्डाय । दशात्मकाय । अप्रपञ्चाय । सदाचाराय । शूरसेनाविदारकाय । वृद्धाय । प्रमोदाय । आनन्दाय । सप्तद्वीपपतिन्धराय । नवद्वारपुराधाराय । प्रत्यग्राय । सामगायकाय नमः । ९२०

ओं षट्चक्रधाम्ने नमः । स्वर्लोकाभयकृते । । मानदाय । मदाय । सर्ववश्यकराय । शक्तये । अनन्ताय । अनन्तमङ्गलाय । अष्टमूर्तये । नयोपेताय । विरूपाय । स्मरसुन्दराय । धूमकेतवे । महाकेतवे । सत्यकेतवे । महारथाय । नन्दिप्रियाय । स्वतन्त्राय । मेखलिने । डमरुप्रियाय नमः । ९४०

ओं लौहाङ्गाय नमः । सर्वविदे । धन्विने । खण्डलाय । शर्वाय । ईश्वराय । फलभुजे । फलहस्ताय । सर्वकर्मफलप्रदाय । धर्माध्यक्षाय । धर्मपालाय । धर्माय । धर्मप्रदाय । अर्थदाय । पञ्चविंशतितत्वज्ञाय । तारकाय । ब्रह्मतत्पराय । त्रिमार्गवसतये । भीमाय । सर्वदुःखनिबर्हणाय नमः । ९६०

ओं ऊर्जस्वते नमः । निष्कलाय । शूलिने । मौलये । गर्जते । निशाचराय । रक्ताम्बरधराय । रक्ताय । रक्तमाल्यविभूषणाय । वनमालिने । शुभाङ्गाय । श्वेताय । श्वेताम्बराय । यूने । जयाय । अजय परीवाराय । सहस्रवदनाय । कपये । शाकिनीडाकिनीयक्षरक्षो-भूतप्रभञ्जकाय । सद्योजाताय नमः । ९८०

ओं कामगतये नमः । ज्ञानमूर्तये । यशस्कराय । शंभुतेजसे । सार्वभौमाय । विष्णुभक्ताय । प्लवङ्गमाय । चतुर्नवतिमन्त्रज्ञाय । पौलस्त्यबलदर्पघ्ने । सर्वलक्ष्मीप्रदाय । श्रीमते । अङ्गदप्रियाय । ईडिताय । स्मृतिबीजाय । सुरेशानाय । संसारभयनाशनाय । उत्तमश्रीपरिवाराय । श्रिताय । रुद्राय । कामदुहे नमः ॥ १०००

(सदागतये । मातरिश्वने । रामपादाब्जषट्पदाय । नीलप्रियाय । नीलवर्णाय । नीलवर्णप्रियाय । सुहृदे । रामदूताय । लोकबन्धवे । अन्तरात्मने । मनोरमाय । श्रीरामध्यानकृते । वीराय । सदाकिंपुरुषस्तुताय ।रामकार्यान्तरङ्गाय। शुद्धये। गतये। अनामयाय। पुण्यश्लोकाय । परानन्दाय । परेशाय । प्रियसारथये । लोकस्वामिने । मुक्तिदात्रे । सर्वकारणकारणाय । महाबलाय । महावीराय । पारावारगतये । गुरवे नमः ।) तारकाय नमः । भगवते । त्रात्रे । स्वस्तिदात्रे । सुमङ्गलाय। समस्तलोकसाक्षिणे। समस्तसुरवन्दिताय।

सीतासमेतश्रीरामपाद सेवाधुरन्धराय नमः । १००८

॥ श्रीः ॥

## हनुमदष्टोत्तरशतनामस्तोत्रम्

वन्दे विद्युज्ज्वलनविलसद्ब्रह्मसूत्रैकनिष्ठं
कर्णद्वन्द्वे कनकरचिते कुण्डले धारयन्तम्।
सत्कौपीनं कपिवरवृतं कामरूपं कपीन्द्रं
पुत्रं वायोरिनसुतसुखदं वज्रदेहं वरेण्यम्॥

आञ्जनेयो महावीरो हनुमान्मारुतात्मजः।
तत्वज्ञानप्रदः सीतादेवीमुद्राप्रदायकः॥ १

अशोकवनिकाच्छेत्ता सर्वमायाविभञ्जनः।
सर्वबन्धविमोक्ता च रक्षोविध्वंसकारकः॥ २

परविद्यापरीहारः परशौर्यविनाशनः।
परमन्त्रनिराकर्ता परयन्त्रप्रभेदकः॥ ३

सर्वग्रहविनाशी च भीमसेनसहायकृत्।
सर्वदुःखहरः सर्वलोकचारी मनोजवः॥ ४

पारिजातद्रुमूलस्थः सर्वमन्त्रस्वरूपवान् ।
सर्वतन्त्रस्वरूपी च सर्वयन्त्रात्मकस्तथा ।। ५

कपीश्वरो महाकायः सर्वरोगहरः प्रभुः ।
बलसिद्धिकरः सर्वविद्यासंपत्प्रदायकः ।। ६

कपिसेनानायकश्च भविष्यच्चतुराननः ।
कुमारब्रह्मचारी च रत्नकुण्डलदीप्तिमान् ।। ७

सञ्चलद्वालसन्नद्ध लंबमानशिखोज्वलः ।
गन्धर्वविद्यातत्त्वज्ञो महाबलपराक्रमः ।। ८

कारागृहविमोक्ता च शृङ्खलाबन्धमोचकः ।
सागरोत्तारकः प्राज्ञो रामदूतः प्रतापवान् ।। ९

वानरः केसरिसुतः सीताशोकनिवारणः ।
अञ्जनागर्भसंभूतो बालार्कसदृशाननः ।। १०

विभीषणप्रियकरो दशग्रीवकुलान्तकः ।
लक्ष्मणप्राणदाता च वज्रकायो महाद्युतिः ।। ११

चिरंजीवी रामभक्तो दैत्यकार्यविघातकः ।
अक्षहन्ता काञ्चनाभः पञ्चवक्त्रो महातपाः ।। १२

लङ्किणीभञ्जनः श्रीमान् सिंहिकाप्राणभञ्जनः ।
गन्धमादनशैलस्थो लङ्कापुरविदाहकः ।। १३

सुग्रीवसचिवो धीरः शूरो दैत्यकुलान्तकः ।
सुरार्चितो महातेजा रामचूडामणिप्रदः ।। १४

कामरूपी पिङ्गलाक्षो वार्धिमैनाकपूजितः ।
कबलीकृतमार्ताण्डमण्डलो विजितेन्द्रियः ।। १५

रामसुग्रीवसन्धाता महारावणमर्दनः ।
स्फटिकाभो वागधीशो नवव्याकृतिपण्डितः ॥ १६

चतुर्बाहुर्दीनबन्धुर्महात्मा भक्तवत्सलः ।
सञ्जीवननगाहर्ता शुचिर्वाग्मी दृढव्रतः ॥ १७

कालनेमिप्रमथनो हरिमर्कटमर्कटः ।
दान्तः शान्तः प्रसन्नात्मा शतकण्ठमदापहृत् ॥ १८

योगी रामकथालोलः सीतान्वेषणपण्डितः ।
वज्रदंष्ट्रो वज्रनखो रुद्रवीर्यसमुद्भवः ॥ १९

इन्द्रजित्प्रहितामोघब्रह्मास्त्रविनिवारकः ।
पार्थध्वजाग्रसंवासी शरपञ्जरभेदकः ॥ २०

दशबाहुर्लोकपूज्यो जांबवत्प्रीतिवर्धनः ।

सीतासमेत श्रीरामपादसेवाधुरन्धरः ॥ २१

## हनुमदष्टोत्तरशतनामावलिः ।

ओं आञ्जनेयाय नमः । महावीराय । हनूमते । मारुतात्मजाय । तत्वज्ञानप्रदाय । सीतादेवीमुद्राप्रदायकाय । अशोकवनिकाच्छेत्रे । सर्वमायाविभञ्जनाय । सर्वबन्धविमोक्त्रे । रक्षोविध्वंसकारकाय । परविद्यापरीहाराय । परशौर्यविनाशनाय । परमन्त्रनिराकर्त्रे । परयन्त्र-प्रभेदकाय । सर्वग्रहविनाशिने । भीमसेनसहायकृते । सर्वदुःखहराय । सर्वलोकचारिणे । मनोजवाय । पारिजात द्रुमूलस्थाय नमः । २०

ओं सर्वमन्त्रस्वरूपवते नमः । सर्वतन्त्रस्वरूपिणे । सर्वयन्त्रात्म-काय । कपीश्वराय । महाकायाय । सर्वरोगहराय । प्रभवे । बलसिद्धि-कराय । सर्वविद्यासंपत्प्रदायकाय । कपिसेनानायकाय । भविष्यच्च-तुराननाय । कुमारब्रह्मचारिणे । रत्नकुण्डलदीप्तिमते । सञ्चलद्बाल-

सन्नद्धलम्बमानशिखोज्ज्वलाय । गन्धर्वविद्यातत्त्वज्ञाय । महाबल-पराक्रमाय । कारागृहविमोक्त्रे । शृङ्खलाबन्धमोचकाय । सागरोत्तार-काय । प्राज्ञाय नमः । ४०

ओं रामदूताय नमः । प्रतापवते । वानराय । केसरिसुताय । सीताशोकनिवारणाय । अञ्जनागर्भसंभूताय । बालार्कसदृशाननाय । विभीषणप्रियकराय । दशग्रीवकुलान्तकाय । लक्ष्मणप्राणदात्रे । वज्रकायाय । महाद्युतये । चिरंजीविने । रामभक्ताय । दैत्यकार्यविघात-काय । अक्षहन्त्रे । काञ्चनाभाय । पञ्चवक्त्राय । महातपसे । लङ्किणीभञ्जनाय नमः । ६०

ओं श्रीमते नमः । सिंहिकाप्राणभञ्जनाय । गन्धमादनशैलस्थाय । लङ्कापुरविदाहकाय । सुग्रीवसचिवाय । धीराय । शूराय । दैत्यकुलान्तकाय । सुरार्चिताय । महातेजसे । रामचूडामणिप्रदाय । कामरूपिणे । पिङ्गलाक्षाय । वार्धिमैनाकपूजिताय । कबलीकृतमार्ताण्डमण्डलाय । विजितेन्द्रियाय । रामसुग्रीवसन्धात्रे । महारावणमर्दनाय । स्फटिकाभाय । वागधीशाय नमः । ८०

ओं नवव्याकृतिपण्डिताय नमः । चतुर्बाहवे । दीनबन्धवे । महात्मने । भक्तवत्सलाय । सञ्जीवननगाहर्त्रे । शुचये । वाग्मिने । दृढव्रताय । कालनेमिप्रमथनाय । हरिमर्कटमर्कटाय । दान्ताय । शान्ताय । प्रसन्नात्मने । शतकण्ठमदापहृते । योगिने । रामकथालोलाय । सीतान्वेषणपण्डिताय । वज्रदंष्ट्राय । वज्रनखाय नमः । १००

ओं रुद्रवीर्यसमुद्भवाय नमः । इन्द्रजित्प्रहितामोघब्रह्मास्त्र-विनिवारकाय । पार्थध्वजाग्रसंवासिने । शरपञ्जरभेदकाय । दशबाहवे । लोकपूज्याय । जांबवत्प्रीतिवर्धनाय । सीतासमेतश्रीरामपादसेवाधुरन्धराय नमः । १०८

श्रीः

# श्रीकृष्णसहस्रनामस्तोत्रम् ॥

(पूर्वभागः)

श्रीमद्रुक्मिमहीपालवंशरक्षामणिः स्थिरः ।
राजा हरिहरः क्षोणीं रक्षत्यम्बुधिमेखलाम् ॥ १

स राजा सर्वतन्त्रज्ञः समभ्यर्च्य वरप्रदम् ।
देवं श्रियः पतिं स्तुत्या समस्तौद्वेदवेदितम् ॥ २

तस्य हृष्टाशयः स्तुत्या विष्णुर्गोपाङ्गनावृतः ।
स पिञ्छश्यामलं रूपं पिञ्छोत्तंसमदर्शयत् ॥ ३

स पुनः स्वात्मविन्यस्तचित्तं हरिहरं नृपम् ।
अभिषिच्य कृपावर्षैरभाषत कृताञ्जलिम् ॥ ४

श्रीभगवानुवाच-

मामवेहि महाभाग ! कृष्णं कृत्यविदां वर ।
पुरः स्थितोऽस्मि त्वद्भक्त्या पूर्णास्सन्तु मनोरथाः ॥ ५

संरक्षणाय शिष्टानां दुष्टानां शिक्षणाय च ।
समृद्ध्यै वेदधर्माणां ममांशस्त्वमिहोदितः ॥ ६

राजन्नामसहस्रेण रामो नाम्नां स्तुतस्त्वया ।
सोऽहं सर्वविदस्तस्मात्प्रसन्नोऽस्मि विशेषतः ॥ ७

मामपि त्वं महाभाग मदीयचरितात्मना ।
संप्रीणय सहस्रेण नाम्नां सर्वार्थदायिनाम् ॥ ८

पराशरेण मुनिना व्यासेनाम्नायदर्शिना ।

स्वात्मभाजा शुकेनापि सूक्तेऽप्येतद्विभावितम् ।। ९

तं हि त्वमनुसन्धेहि सहस्रशिरसं प्रभुम् ।
दत्तास्येषु मया न्यस्तं सहस्रं रक्षयिष्यति ।। १०

इदं विश्वहितार्थाय रसनारङ्गगोचरम् ।
प्रकाशय त्वं मेदिन्यां परमागमसम्मतम् ।। ११

इदं शठाय मूर्खाय नास्तिकाय विकीर्णिने ।
असूयिनेऽहितायापि न प्रकाश्यं कदाचन ।। १२

विवेकिने विशुद्धाय वेदमार्गानुसारिणे ।
आस्तिकायात्मनिष्ठाय स्वात्मन्यनुसृतोदयम् ।
कृष्णनामसहस्रं वै कृतधीरेतदीरयेत् ।। १३

*ध्यानम्-*

केषांचित्प्रेम पुंसां विगळितमनसां बाललीलाविलासं
केषां गोपाललीलाङ्कितरसिकतनुर्वेणुवाद्येन देवम् ।
केषां वामासमाजे जनितमनसिजो दैत्यदर्पापहैवं
ज्ञात्वा भिन्नाभिलाषं स जयति जगतामीश्वरस्तादृशोऽभूत् ।। १

क्षीराब्धौ कृतसंस्तवः सुरगणैर्ब्रह्मादिभिः पण्डितैः
प्रोद्भूतो वसुदेवसद्मनि मुदा चिक्रीड यो गोकुले ।
कंसध्वंसकृते जगाम मधुरां सारामसद्वारकां
गोपालोऽखिलगोपिकाजनसखः पायादपायात्स नः ।। २

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं कलवेणुवादनरतं दिव्याङ्गभूषं भजे ।। ३

ओं कृष्णः श्रीवल्लभः शार्ङ्गी विष्वक्सेनः स्वसिद्धिदः ।
क्षीरोदधामा व्यूहेशः शेषशायी जगन्मयः ॥ १

भक्तिगम्यस्त्रयीमूर्तिर्भारार्तवसुधास्तुतः ।
देवदेवो दयासिन्धुर्देवो देवशिखामणिः ॥ २

सुखभावः सुखाधारो मुकुन्दो मुदिताशयः ।
अविक्रियः क्रियामूर्तिरध्यात्मस्वस्वरूपवान् ॥ ३

शिष्टाभिलक्ष्यो भूतात्मा धर्मत्राणार्थचेष्टितः ।
अन्तर्यामी कालरूपः कालावयवसाक्षिकः ॥ ४

वसुधायासहरणो नारदप्रेरणोन्मुखः ।
प्रभूष्णुर्नारदोद्गीतो लोकरक्षापरायणः ॥ ५

रौहिणेयकृतानन्दो योगज्ञाननियोजकः ।
महागुहान्तर्निक्षिप्तः पुराणवपुरात्मवान् ॥ ६

शूरवंशैकधीः शौरिः कंसशङ्काविषादकृत् ।
वसुदेवोल्लसच्छक्तिर्देवक्यष्टमगर्भगः ॥ ७

वसुदेवस्तुतः श्रीमान्देवकीनन्दनो हरिः ।
आश्चर्यबालः श्रीवत्सलक्ष्मवक्षाश्चतुर्भुजः ॥ ८

स्वभावोत्कृष्टसद्भावः कृष्णाष्टम्यन्तसम्भवः ।
प्राजापत्यर्क्षसम्भूतो निशीथसमयोदितः ॥ ९

शङ्खचक्रगदापद्मपाणिः पद्मनिभेक्षणः ।
किरीटी कौस्तुभोरस्कः स्फुरन्मकरकुण्डलः ॥ १०

पीतवासा घनश्यामः कुञ्चिताञ्चितकुन्तलः ।
सुव्यक्तव्यक्ताभरणः सूतिकागृहभूषणः ॥ ११

कारागारान्धकारघ्नः पितृप्राग्जन्मसूचकः ।
वसुदेवस्तुतः स्तोत्रं तापत्रयनिवारणः ॥ १२

निरवद्यः क्रियामूर्तिर्न्यायवाक्यनियोजकः ।
अदृष्टचेष्टः कूटस्थो धृतलौकिकविग्रहः ॥ १३

महर्षिमानसोल्लासो महीमङ्गळदायकः ।
सन्तोषितसुरव्रातः साधुचित्तप्रसादकः ॥ १४

जनकोपायनिर्देष्टा देवकीनयनोत्सवः ।
पितृपाणिपरिष्कारो मोहितागाररक्षकः ॥ १५

स्वशक्त्युद्घाटिताशेषकपाटः पितृवाहकः ।
शेषोरगफणाच्छत्रःशेषोक्ताख्यासहस्रकः ॥ १६

यमुनापूरविध्वंसी स्वभासोद्भासितव्रजः ।
कृतात्मविद्याविन्यासो योगमायाग्रसम्भवः ॥ १७

दुर्गानिवेदितोद्भावो यशोदातल्पशायकः ।
नन्दगोपोत्सवस्फूर्तिर्व्रजानन्दकरोदयः ॥ १८

सुजातजातकर्मश्रीर्गोपीभद्रोक्तिनिर्वृतः ।
अलीकनिद्रोपगमः पूतनास्तनपीडनः ॥ १९

स्तन्यात्तपूतनाप्राणः पूतनाक्रोशकारकः ।
विन्यस्तरक्षागोधूळिर्यशोदाकरलालितः ॥ २०

नन्दाघ्रातशिरोमध्यः पूतनासुगतिप्रदः ।
बालः पर्यङ्कनिद्राळुर्मुखार्पितपदाङ्गुळिः ॥ २१

अञ्जनस्निग्धनयनः पर्यायाङ्कुरितस्मितः ।
लीलाक्षस्तरळालोकःशकटासुरभञ्जनः ॥ २२



५.विष्णुः - किञ्जल्काभः चतुर्हलधरः, वरारोहायुतः।



7. त्रिविक्रमः अग्निवर्णः चतुःखड्गः विष्णुपत्नीसुतः



८. मधुसूदनः पद्मवर्णः चतुर्मुसलधरः हरिवल्लभासुतः



८.वामनः बालसूर्याभः चतुर्वज्रधरः वैष्णवीयुतः ।

द्विजोदितस्वस्त्ययनो मन्त्रपूतजलाप्लुतः ।
यशोदोत्सङ्गपर्यङ्को यशोदामुखवीक्षकः ॥ २३

यशोदास्तन्यमुदितस्तृणावर्तादिदुस्सहः ।
तृणावर्तासुरध्वंसी मातृविस्मयकारकः ॥ २४

प्रशस्तनामकरणो जानुचङ्क्रमणोत्सुकः ।
व्यालम्बिचूलिकारत्नो घोषगोपप्रहर्षणः ॥ २५

स्वमुखप्रतिबिम्बार्थी ग्रीवाव्याघ्रनखोज्ज्वलः ।
पङ्कानुलेपरुचिरो मांसलोरुकटीतटः ॥ २६

घृष्टजानुकरद्वन्द्वः प्रतिबिम्बानुकारकृत् ।
अव्यक्तवर्णवाग्वृत्तिः स्मितलक्ष्यरदोद्गमः ॥ २७

धात्रीकरसमालम्बी प्रस्खलच्चित्रचङ्क्रमः ।
अनुरूपवयस्याढ्यश्चारुकौमारचापलः ॥ २८

वत्सपुच्छसमाकृष्टो वत्सपुच्छविकर्षणः ।
विस्मारितान्यव्यापारो गोपगोपीमुदावहः ॥ २९

अकालवत्सनिर्मोक्ता व्रजव्याक्रोशसुस्मितः ।
नवनीतमहाचोरो दारकाहारदायकः ॥ ३०

पीठोलूखलसोपानः क्षीरभाण्डविभेदनः ।
शिक्यभाण्डसमाकर्षी ध्वान्तागारप्रवेशकृत् ॥ ३१

भूषारत्नप्रकाशाढ्यो गोप्युपालम्भभर्त्सितः ।
परागधूसराकारो मृद्भक्षणकृतेक्षणः ॥ ३२

बालोक्तमृत्कथारम्भो मित्रान्तर्गूढविग्रहः ।
कृतसन्त्रासलोलाक्षो जननीप्रत्ययावहः ॥ ३३

मातृदृश्यात्तवदनो वक्त्रलक्ष्यचराचरः ।
यशोदालालितस्वात्मा स्वयं स्वाच्छन्द्यमोहनः ॥ ३४

सवित्रीस्नेहसंश्लिष्टः सवित्रीस्तनलोलुपः ।
नवनीतार्थनाप्रह्वो नवनीतमहाशनः ॥ ३५

मृषाकोपप्रकम्पोष्ठो गोष्ठाङ्गणविलोकनः ।
दधिमन्थघटीभेत्ता किङ्किणीक्वाणसूचितः ॥ ३६

हैयङ्गवीनरसिको मृषाश्रुश्चौर्यशङ्कितः ।
जननीश्रमविज्ञाता दामबन्धनियन्त्रितः ॥ ३७

दामाकल्पश्चलापाङ्गो गाढोलूखलबन्धनः ।
आकृष्टोलूखलोऽनन्तः कुबेरसुतशापवित् ॥ ३८

नारदोक्तिपरामर्शी यमळार्जुनभञ्जनः ।
धनदात्मजसङ्घुष्टो नन्दमोचितबन्धनः ॥ ३९

बालकोद्गीतनिरतो बाहुक्षेपोदितप्रियः ।
आत्मज्ञो मित्रवशगो गोपीगीतगुणोदयः ॥ ४०

प्रस्थानशकटारूढो बृन्दावनकृतालयः ।
गोवत्सपालनैकाग्रो नानाक्रीडापरिच्छदः ॥ ४१

क्षेपणीक्षेपणप्रीतो वेणुवाद्यविशारदः ।
वृषवत्सानुकरणो वृषध्वानविडम्बनः ॥ ४२

नियुद्धलीलासंहृष्टः कूजानुकृतकोकिलः ।
उपात्तहंसगमनः सर्वजन्तुरुतानुकृत् ॥ ४३

भृङ्गानुकारी दध्यन्नचोरो वत्सपुरस्सरः ।
बली बकासुरग्राही बकतालुप्रदाहकः ॥ ४४

भीतगोपार्भकाहूतो बकचञ्चुविदारणः ।
बकासुरारिर्गोपालो बालो बालाद्भुतावहः ॥ ४५

बलभद्रसमाश्लिष्टः कृतक्रीडानिलायनः ।
क्रीडासेतुनिधानज्ञः प्लवङ्गोत्प्लवनोऽद्भुतः ॥ ४६

कन्दुकक्रीडनो लुप्तनन्दादिभववेदनः ।
सुमनोऽलङ्कृतशिराः स्वादुस्निग्धान्नशिक्यभृत् ॥ ४७

गुञ्जाप्रालम्बनच्छन्नः पिञ्छैरलकवेषकृत् ।
वन्याशनप्रियः शृङ्गरवाकारितवत्सकः ॥ ४८

मनोज्ञपल्लवोत्तंसपुष्पस्वेच्छात्तषट्पदः ।
मञ्जुशिञ्जितमञ्जीरचरणः करकङ्कणः ॥ ४९

अन्योन्यशासनः क्रीडापटुः परमकैतवः ।
प्रतिध्वानप्रमुदितः शाखाचतुरचङ्क्रमः ॥ ५०

अघदानवसंहर्ता व्रजविघ्नविनाशनः ।
व्रजसञ्जीवनः श्रेयोनिधिर्दानवमुक्तिदः ॥ ५१

कालिन्दीपुलिनासीनः सहभुक्तव्रजार्भकः ।
कक्षाजठरविन्यस्तवेणुर्वल्लवचेष्टितः ॥ ५२

भुजसन्ध्यन्तरन्यस्तशृङ्गवेत्रः शुचिस्मितः ।
वामपाणिस्थदध्यन्नकबळः कलभाषणः ॥ ५३

अङ्गुळ्यन्तरविन्यस्तफलः परमपावनः ।
अदृश्यतर्णकान्वेषी वल्लवार्भकभीतिहा ॥ ५४

अदृष्टवत्सपव्रातो ब्रह्मविज्ञातवैभवः ।
गोवत्सवत्सपान्वेषी विराट्पुरुषविग्रहः ॥ ५५

स्वसङ्कल्पानुरूपार्थवत्सवत्सपरूपधृत्।
यथावत्सक्रियारूपो यथास्थाननिवेशनः ॥ ५६

यथाव्रजार्भकाकारो गोगोपीस्तन्यपः सुखी।
चिराद्बलोहितो दान्तो ब्रह्मविज्ञातवैभवः ॥ ५७

विचित्रशक्तिर्व्यालीनसृष्टगोवत्सवत्सपः।
ब्रह्मत्रपाकरो धातृस्तुतः सर्वार्थसाधकः ॥ ५८

ब्रह्म ब्रह्ममयोऽव्यक्तस्तेजोरूपः सुखात्मकः।
निरुक्तं व्याकृतिर्व्यक्तो निरालम्बनभावनः ॥ ५९

प्रभविष्णुरतन्त्रीको देवपक्षार्थरूपधृत्।
अकामः सर्ववेदादिरणीयः स्थूलरूपवान्॥ ६०

व्यापी व्याप्यः कृपाकर्ता विचित्राचारसम्मतः।
छन्दोमयः प्रधानात्मा मूर्तामूर्तद्वयाकृतिः ॥ ६१

अनेकमूर्तिरक्रोधः परः प्रकृतिरक्रमः।
सकलावरणोपेतः सर्वदेवो महेश्वरः ॥ ६२

महाप्रभावनः पूर्ववत्सवत्सपदर्शकः।
कृष्णयादवगोपालो गोपालोकनहर्षितः ॥ ६३

स्मितेक्षाहर्षितब्रह्मा भक्तवत्सलवाक्प्रियः।
ब्रह्मानन्दाश्रुधौताङ्घ्रिर्लीलावैचित्र्यकोविदः ॥ ६४

बलभद्रैकहृदयो नामाकारितगोकुलः।
गोपालबालको भव्यो रज्जुयज्ञोपवीतवान्॥ ६५

वृक्षच्छायाहताशान्तिर्गोपोत्सङ्गोपबर्हणः।
गोपसंवाहितपदो गोपव्यजनवीजितः ॥ ६६

गोपगानसुखोन्निद्रः श्रीदामार्जितसौहृदः ।
सुनन्दसुहृदेकात्मा सुबलप्राणरञ्जनः ॥ ६७

तालीवनकृतक्रीडो बलपातितधेनुकः ।
गोपीसौभाग्यसम्भाव्यो गोधूळिच्छुरितालकः ॥ ६८

गोपीविरहसन्तप्तो गोपिकाकृतमज्जनः ।
प्रलम्बबाहुरुत्फुल्लपुण्डरीकावतंसकः ॥ ६९

विलासललितस्मेरगर्भलीलावलोकनः ।
स्रग्भूषणानुलेपाढ्यो जनन्युपहृतान्नभुक् ॥ ७०

वरशय्याशयो राधाप्रेमसल्लापनिर्वृतः ।
यमुनातटसञ्चारी विषार्तव्रजहर्षदः ॥ ७१

काळियक्रोधजनकः वृद्धाहिकुलवेष्टितः ।
काळियाहिफणारङ्गनटः काळियमर्दनः ॥ ७२

नागपत्नीस्तुतिप्रीतो नानावेषसमृद्धिकृत् ।
अविष्वक्तदृगात्मेशः स्वदृगात्मस्तुतिप्रियः ॥ ७३

सर्वेश्वरः सर्वगुणः प्रसिद्धः सर्वसात्वतः ।
अकुण्ठधामा चन्द्रार्कदृष्टिराकाशनिर्मलः ॥ ७४

अनिर्देश्यगतिर्नागवनितापतिभैक्षदः ।
स्वाङ्घ्रिमुद्राङ्कनागेन्द्रमूर्धा काळियसंस्तुतः ॥ ७५

अभयो विश्वतश्चक्षुःस्तुतोत्तमगुणः प्रभुः।
अहमात्मा मरुत्प्राणः परमात्मा द्युशीर्षवान् ॥ ७६

नागोपायनहृष्टात्मा हृदोत्सारितकाळियः ।
बलभद्रसुखालापो गोपालिङ्गननिर्वृतः ॥ ७७

दावाग्निभीतगोपालगोप्ता दावाग्निनाशनः ।
नयनाच्छादनक्रीडालम्पटो नृपचेष्टितः ॥ ७८

काकपक्षधरः सौम्यो बलवाहककेळिमान् ।
बलघातितदुर्धर्षप्रलम्बो बलवत्सलः ॥ ७९

मुञ्जाटव्यग्निशमनः प्रावृट्कालविनोदवान् ।
शिलान्यस्तान्नभृद्दैत्यसंहर्ता शाद्वलासनः॥ ८०

सदाप्तगोपिकोद्गीतः कर्णिकारावतंसकः ।
नटवेषधरः पद्ममालाङ्को गोपिकावृतः ॥ ८१

गोपीमनोहरापाङ्गो वेणुवादनतत्परः ।
विन्यस्तवदनाम्भोजश्चारुशब्दकृताननः ॥ ८२

बिम्बाधरार्पितोदारवेणुर्विश्वविमोहनः ।
व्रजसंवर्णितः श्राव्यवेणुनादः श्रुतिप्रियः ॥ ८३

गोगोपगोपीजन्मेप्सुब्रह्मेन्द्राद्यभिवन्दितः ।
गीतस्नुतिसरित्पूरो नादनर्तितबर्हिणः ॥ ८४

रागपल्लवितस्थाणुर्गीतानमितपादपः ।
विस्मारिततृणग्रासमृगो मृगविलोभितः ॥ ८५

व्याघ्रादिहिंस्रसहजवैरहर्ता सुगायनः ।
गाढोदीरितगोबृन्दप्रेमोत्कर्णिततर्णकः ॥ ८६

निष्पन्दयानब्रह्मादिवीक्षितो विश्ववन्दितः ।
शाखोत्कर्णशकुन्तौघश्छत्रायितवलाहकः ॥ ८७

प्रसन्नः परमानन्दश्चित्रायितचराचरः ।
गोपिकामदनो गोपीकुचकुङ्कुममुद्रितः ॥ ८८

गोपकन्याजलक्रीडाहृष्टो गोप्यंशुकापहृत्।
स्कन्धारोपिगोपस्त्रीवासाः कुन्दनिभस्मितः ॥ ८९

गोपीनेत्रोत्पलशशी गोपिकायाचितांशुकः ।
गोपीनमस्क्रियादेष्टा गोप्येककरवन्दितः ॥ ९०

गोप्यञ्जलिविशेषार्थी गोपीक्रीडाविलोभितः ।
शान्तवासस्फुरद्गोपीकृताञ्जलिरघापहः ॥ ९१

गोपीकेळिविलासार्थी गोपीसम्पूर्णकामदः ।
गोपस्त्रीवस्त्रदो गोपीचित्तचोरः कुतूहली ॥ ९२

बृन्दावनप्रियो गोपबन्धुर्यज्वान्नयाचिता ।
यज्ञेशो यज्ञभावज्ञो यज्ञपत्न्यभिवाञ्छितः ॥ ९३

मुनिपत्नीवितीर्णान्नतृप्तो मुनिवधूप्रियः ।
द्विजपत्न्यभिभावज्ञो द्विजपत्नीवरप्रदः ॥ ९४

प्रतिरुद्धसतीमोक्षप्रदो द्विजविमोहिता ।
मुनिज्ञानप्रदो यज्वस्तुतो वासवयागवित् ॥ ९५

पितृप्रोक्तक्रियारूपशक्रयागनिवारणः ।
शक्रामर्षकरः शक्रवृष्टिप्रशमनोन्मुखः ॥ ९६

गोवर्धनधरो गोपगोबृन्दत्राणतत्परः ।
गोवर्धनगिरिच्छत्रचण्डदण्डभुजार्गळः ॥ ९७

सप्ताहविधृताद्रीन्द्रो मेघवाहनगर्वहा ।
भुजाग्रोपरिविन्यस्तक्ष्माधरक्ष्माभृदच्युतः ॥ ९८

स्वस्थानस्थापितगिरिर्गोपीदध्यक्षतार्चितः ।
सुमनास्सुमनोवृष्टिहृष्टो वासववन्दितः ॥ ९९

कामधेनुपयःपूराभिषिक्तः सुरभिस्तुतः ।
धराङ्घ्रिरोषधीरोमा धर्मगोप्ता मनोमयः ॥ १००

ज्ञानयज्ञप्रियः शास्त्रनेत्रः सर्वार्थसारथिः ।
ऐरावतकरानीतवियद्गङ्गाप्लुतो विभुः ॥ १०१

ब्रह्माभिषिक्तो गोगोप्ता सर्वलोकशुभंकरः ।
सर्ववेदमयो मग्ननन्दान्वेषी पितृप्रियः ॥ १०२

वरुणोदीरितात्मेक्षाकौतुको वरुणार्चितः ।
वरुणानीतजनको गोपज्ञातात्मवैभवः ॥ १०३

स्वर्लोकालोकसंहृष्टगोपवर्गस्त्रिवर्गदः ।
ब्रह्महृद्गोपितो गोपद्रष्टा ब्रह्मपदप्रदः ॥ १०४

शरच्चन्द्रविहारोत्कः श्रीपतिर्वशकः क्षमः ।
भयापहो भर्तृरुद्धगोपिकाध्यानगोचरः ॥ १०५

गोपिकानयनास्वाद्यो गोपीनर्मोक्तिनिर्वृतः ।
गोपिकामानहरणो गोपिकाशतयूथपः ॥ १०६

वैजयन्तीस्रगाकल्पो गोपिकामानवर्धनः ।
गोपकान्तासुनिर्देष्टा कान्तो मन्मथमन्मथः ॥ १०७

स्वात्मास्यदत्तताम्बूलः फलितोत्कृष्टयौवनः ।
वल्लवीस्तनसक्ताक्षो वल्लवीप्रेमचालितः ॥ १०८

गोपीचेलांचलासीनो गोपीनेत्राब्जषट्पदः ।
रासक्रीडासमासक्तो गोपीमण्डलमण्डनः ॥ १०९

गोपीहेममणिश्रेणिमध्येन्द्रमणिरुज्ज्वलः ।
विद्याधरेन्दुशापघ्नः शङ्खचूडशिरोहरः ॥ ११०

शङ्खचूडशिरोरत्नसंप्रीणितबलोऽनघः ।
अरिष्टारिष्टकृद्दुष्टकेशिदैत्यनिषूदनः ।। १११

सरसः सस्मितमुखः सुस्थिरो विरहाकुलः ।
सङ्कर्षणार्पितप्रीतिरक्रूरध्यानगोचरः ।। ११२

अक्रूरसंस्तुतो गूढो गुणवृत्त्युपलक्षितः ।
प्रमाणगम्यस्तन्मात्रावयवी बुद्धितत्परः ।। ११३

सर्वप्रमाणप्रमथी सर्वप्रत्ययसाधकः ।
पुरुषश्च प्रधानात्मा विपर्यासविलोचनः।। ११४

मधुराजनसंवीक्ष्यो रजकप्रतिघातकः ।
विचित्राम्बरसंवीतो मालाकारवरप्रदः ।। ११५

कुब्जावक्रत्वनिर्मोक्ता कुब्जायौवनदायकः ।
कुब्जाङ्गरागसुरभिः कंसकोदंडखण्डनः ।। ११६

धीरः कुवलयापीडमर्दनः कंसभीतिकृत् ।
दन्तिदन्तायुधो रङ्गत्रासको मल्लयुद्धवित् ।। ११७

चाणूरहंता कंसारिर्देवकीहर्षदायकः ।
वसुदेवपदानम्रः पितृबन्धविमोचनः ।। ११८

उर्वीभयापहो भूप उग्रसेनाधिपत्यदः ।
आज्ञास्थितशचीनाथःसुधर्मानयनक्षमः।। ११९

आद्यो द्विजातिसत्कर्ता शिष्टाचारप्रदर्शकः ।
सान्दीपनिकृताभ्यस्तविद्याभ्यासैकधीस्सुधीः ।। १२०

गुर्वभीष्टक्रियादक्षः पश्चिमोदधिपूजितः ।
हतपञ्चजनप्रासपाञ्चजन्यो यमार्चितः ।। १२१

धर्मराजजयानीतगुरुपुत्र उरुक्रमः ।
गुरुपुत्रप्रदः शास्ता मधुराजनमानदः ॥ १२२

जामदग्न्यसमभ्यर्च्यो गोमन्तगिरिसंचरः ।
गोमन्तदावशमनो गरुडानीतभूषणः ॥ १२३

चक्राद्यायुधसंशोभी जरासन्धमदापहः ।
सृगालावनिपालघ्नः सृगालात्मजराज्यदः ॥ १२४

विध्वस्तकालयवनो मुचुकुन्दवरप्रदः ।
आज्ञापितमहाम्भोधिर्द्वारिकापुरकल्पनः ॥ १२५

द्वारकानिलयो रुक्मिमानहन्ता यदूद्वहः ।
रुचिरो रुक्मिणीजानिः प्रद्युम्नजनकः प्रभुः ॥ १२६

अपाकृतत्रिलोकार्तिरनिरुद्धपितामहः ।
अनिरुद्धपदान्वेषी चक्री गरुडवाहनः ॥ १२७

बाणासुरपुरीरोद्धा रक्षाज्वलनयन्त्रजित् ।
धूतप्रमथसंरम्भो जितमाहेश्वरज्वरः ॥ १२८

षट्चक्रशक्तिनिर्जेता भूतभेताळमोहकृत् ।
शम्भुत्रिशूलजिच्छम्भुजृम्भणःशम्भुसंस्तुतः ॥ १२९

इन्द्रियात्मेन्दुहृदयःसर्वयोगेश्वरेश्वरः ।
हिरण्यगर्भहृदयो मोहावर्तनिवर्तनः ॥ १३०

आत्मज्ञाननिधिर्मेधाकोशस्तन्मात्ररूपवान् ।
इन्द्रोऽग्निवदनः कालनाभः सर्वागमाध्वगः ॥ १३१

तुरीयः सर्वधीसाक्षी द्वन्द्वारामात्मदूरगः ।
अज्ञातपारो वश्यश्रीरव्याकृतविहारवान् ॥ १३२

आत्मप्रदीपो विज्ञानमात्रात्मा श्रीनिकेतनः ।
बाणबाहुवनच्छेत्ता महेन्द्रप्रीतिवर्धनः ।। १३३

अनिरुद्धनिरोधज्ञो जलेशाहृतगोकुलः ।
जलेशविजयी वीरस्सत्राजिद्रत्नयाचकः ।। १३४

प्रसेनान्वेषणोद्युक्तो जाम्बवद्धृतरत्नदः ।
जितर्क्षराजतनयाहर्ता जाम्बवतीप्रियः ।। १३५

सत्यभामाप्रियः कामः शतधन्वशिरोहरः ।
कालिन्दीपतिरक्रूरबन्धुरक्रूररत्नदः ।। १३६

कैकयीरमणो भद्राभर्ता नाग्नजितीधवः ।
माद्रीमनोहरः शैब्याप्राणबन्धुरुरुक्रमः ।। १३७

सुशीलादयितो मित्रविन्दानेत्रमहोत्सवः ।
लक्ष्मणावल्लभो रुद्धप्राग्ज्योतिषमहापुरः ।। १३८

सुरपाशावृतिच्छेदी मुरारिः क्रूरयुद्धवित् ।
हयग्रीवशिरोहर्ता सर्वात्मा सर्वदर्शनः ।। १३९

नरकासुरविच्छेत्ता नरकात्मजराज्यदः ।
पृथ्वीस्तुतः प्रकाशात्मा हृद्यो यज्ञफलप्रदः ।। १४०

गुणग्राही गुणद्रष्टा गूढस्वात्मा विभूतिमान् ।
कविर्जगदुपद्रष्टा परमाक्षरविग्रहः ।। १४१

प्रपन्नपालनो माली महद्ब्रह्मविवर्धनः ।
वाच्यवाचकशक्त्यर्थः सर्वव्याकृतसिद्धिदः ।। १४२

स्वयम्प्रभुरनिर्वेद्यःस्वप्रकाशश्चिरन्तनः ।
नादात्मा मन्त्रकोटीशो नानावादनिरोधकः ।। १४३

कन्दर्पकोटिलावण्यः परार्थैकप्रयोजकः ।
अमरीकृतदेवौघः कन्यकाबन्धमोचनः ॥ १४४

षोडशस्त्रीसहस्रेशः कान्तः कान्तामनोभवः ।
क्रीडारत्नाचलाहर्ता वरुणच्छत्रशोभितः ॥ १४५

शक्राभिवन्दितः शक्रजननीकुण्डलप्रदः ।
अदितिप्रस्तुतस्तोत्रो ब्राह्मणोद्घुष्टचेष्टनः ॥ १४६

पुराणस्संयमी जन्मालिप्तः षड्विंशकोऽर्थदः।
यशस्यनीतिराद्यन्तरहितः सत्कथाप्रियः ॥ १४७

ब्रह्मबोधः परानन्दः पारिजातापहारकः ।
पौण्ड्रकप्राणहरणः काशिराजनिषूदनः ॥ १४८

कृत्यागर्वप्रशमनो विचक्रवधदीक्षितः ।
हंसविध्वंसनः साम्बजनको डिम्भकार्दनः ॥ १४९

मुनिर्गोप्ता पितृवरप्रदः सवनदीक्षितः ।
रथी सारथ्यनिर्देष्टा फाल्गुनः फाल्गुनिप्रियः ॥ १५०

सप्ताब्धिस्तम्भनोद्भूतो हरिः सप्ताब्धिभेदनः ।
आत्मप्रकाशः पूर्णश्रीरादिनारायणेक्षितः ॥ १५१

विप्रपुत्रप्रदश्चैव सर्वमातृसुतप्रदः ।
पार्थविस्मयकृत्पार्थप्रणवार्थप्रबोधनः ॥ १५२

कैलासयात्रासुमुखो बदर्याश्रमभूषणः ।
घण्टाकर्णक्रियामौढ्यात्तोषितो भक्तवत्सलः ॥ १५३

मुनिवृन्दादिभिर्ध्येयो घण्टाकर्णवरप्रदः ।
तपश्चर्यापरश्चीरवासाः पिङ्गजटाधरः ॥ १५४

प्रत्यक्षीकृतभूतेशः शिवस्तोता शिवस्तुतः ।
कृष्णास्वयंवरालोककौतुकी सर्वसम्मतः ॥ १५५

बलसंरम्भशमनो बलदर्शितपाण्डवः ।
यतिवेषार्जुनाभीष्टदायी सर्वात्मगोचरः ॥ १५६

सुभद्राफाल्गुनोद्वाहकर्ता प्रीणितफाल्गुनः ।
खाण्डवप्रीणितार्चिष्मान्मयदानवमोचनः ॥ १५७

सुलभो राजसूयार्हयुधिष्ठिरनियोजकः ।
भीमार्दितजरासन्धो मागधात्मजराज्यदः ॥ १५८

राजबन्धननिर्मोक्ता राजसूयाग्रपूजनः ।
चैद्याद्यसहनो भीष्मस्तुतःसात्वतपूर्वजः ॥ १५९

सर्वात्माऽर्थसमाहर्ता मन्दराचलधारकः ।
यज्ञावतारः प्रह्लादप्रतिज्ञाप्रतिपालकः ॥ १६०

बलियज्ञसभाध्वंसी दृप्तक्षत्रकुलान्तकः ।
दशग्रीवान्तको जेता रेवतीप्रेमवल्लभः ॥ १६१

सर्वावताराधिष्ठाता वेदबाह्यविमोहनः ।
कलिदोषनिराकर्ता दशनामा दृढव्रतः ॥ १६२

अमेयात्मा जगत्स्वामी वाग्मी चैद्यशिरोहरः ।
द्रौपदीरचितस्तोत्रः केशवः पुरुषोत्तमः ॥ १६३

नारायणो मधुपतिर्माधवो दोषवर्जितः ।
गोविन्दः पुण्डरीकाक्षो विष्णुश्च मधुसूदनः ॥ १६४

त्रिविक्रमस्त्रिलोकेशो वामनः श्रीधरः पुमान् ।
हृषीकेशो वासुदेवः पद्मनाभो महाह्रदः ॥ १६५

दामोदरश्चतुर्व्यूहः पाञ्चालीमानरक्षणः ।
साल्वघ्नस्समरश्लाघी दन्तवक्त्रनिबर्हणः ॥ १६६

दामोदरप्रियसखः पृथुकास्वादनप्रियः ।
घृणी दामोदरः श्रीदो गोपीपुनरवेक्षकः ॥ १६७

गोपिकामुक्तिदो योगी दुर्वासस्तृप्तिकारकः ।
अविज्ञातव्रजाकीर्णपाण्डवालोकनो जयी ॥ १६८

पार्थसारथ्यनिरतः प्राज्ञः पाण्डवदौत्यकृत् ।
विदुरातिथ्यसन्तुष्टः कुन्तीसन्तोषदायकः ॥ १६९

सुयोधनतिरस्कर्ता दुर्योधनविकारवित् ।
विदुराभिष्टुतो नित्यो वार्ष्णेयो मङ्गळात्मकः ॥ १७०

पञ्चविंशतितत्त्वेशश्चतुर्विंशतिदेहभाक् ।
सर्वानुग्राहकः सर्वदाशार्हसततार्चितः ॥ १७१

अचिन्त्यो मधुरालापः साधुदर्शी दुरासदः ।
मनुष्यधर्मानुगतः कौरवेन्द्रक्षयेक्षिता ॥ १७२

उपेन्द्रो दानवारातिरुरुगीतो महाद्युतिः ।
ब्रह्मण्यदेवः श्रुतिमान्गोब्राह्मणहिताशयः ॥ १७३

वरशीलः शिवारम्भः सुविज्ञानविमूर्तिमान् ।
स्वभावशुद्धः सन्मित्रः सुशरण्यः सुलक्षणः ॥ १७४

धृतराष्ट्रगतो दृष्टिप्रदः कर्णविभेदनः ।
प्रतोदधृद्विश्वरूपविस्मारितधनंजयः ॥ १७५

सामगानप्रियो धर्मधेनुर्वर्णोत्तमोऽव्ययः ।
चतुर्युगक्रियाकर्ता विश्वरूपप्रदर्शकः ॥ १७६

ब्रह्मबोधपरित्रातपार्थो भीष्मार्थचक्रभृत् ।
अर्जुनायासविध्वंसी कालदंष्ट्राविभूषणः ॥ १७७

सुजातानन्तमहिमा स्वप्नव्यापारितार्जुनः ।
अकालसन्ध्याघटनः चक्रान्तरित भास्करः ॥ १७८

दुष्टप्रमथनः पार्थप्रतिज्ञापरिपालकः ।
सिन्धुराजशिरःपातस्थानवक्ता विवेकदृक् ॥ १७९

सुभद्राशोकहरणो द्रोणोत्सेकादिविस्मितः ।
पार्थमन्युनिराकर्ता पाण्डवोत्सवदायकः ॥ १८०

अङ्गुष्ठाक्रान्तकौन्तेयरथः शक्तोऽहिशीर्षजित् ।
कालकोपप्रशमनो भीमसेनजयप्रदः ॥ १८१

अश्वत्थामवधायासत्रातपाण्डुसुतः कृती ।
इषीकास्त्रप्रशमनो द्रौणिरक्षाविचक्षणः ॥ १८२

पार्थापहारितद्रौणिचूडामणिरभंगुरः ।
धृतराष्ट्रपरामृष्टभीमप्रतिकृतिस्मयः ॥ १८३

भीष्मबुद्धिप्रदः शान्तः शरच्चन्द्रनिभाननः ।
गदाग्रजन्मा पाञ्चालीप्रतिज्ञापरिपालकः ॥ १८४

गान्धारीकोपदृग्गुप्तधर्मसूनुरनामयः ।
प्रपन्नार्तिभयच्छेत्ता भीष्मशल्यव्यथापहः ॥ १८५

शान्तः शान्तनवोदीर्णसर्वधर्मसमाहितः ।
स्मारितब्रह्मविद्यार्थप्रीतपार्थो महास्त्रवित् ॥ १८६

प्रसादपरमोदारो गाङ्गेयसुगतिप्रदः ।
विपक्षपक्षक्षयकृत्परीक्षित्प्राणरक्षणः ॥ १८७

जगद्गुरुर्धर्मसूनोर्वाजिमेधप्रवर्तकः ।
विहितार्थाप्तसत्कारो मासकाल्पपरिवर्तदः ॥ १८८

उत्तङ्कहर्षदात्मीयदिव्यरूपप्रदर्शकः ।
जनकावगतस्वोक्तभारतः सर्वभावनः ॥ १८९

असोढयादवोद्रेको विहिताप्तादिपूजनः ।
समुद्रस्थापिताश्चर्यमुसलो वृष्णिवाहकः ॥ १९०

मुनिशापायुधः पद्मासनादित्रिदशार्थितः ।
सृष्टिप्रत्यवहारोत्कः स्वधामगमनोत्सुकः ॥ १९१

प्रभासालोकनोद्युक्तो नानाविधनिमित्तकृत् ।
सर्वयादवसंसेव्यः सर्वोत्कृष्टपरिच्छदः ॥ १९२

वेलाकाननसञ्चारी वेलानिलहृतश्रमः ।
कालात्मा यादवोऽनन्तः स्तुतिसन्तुष्टमानसः ॥ १९३

द्विजालोकनसन्तुष्टः पुण्यतीर्थमहोत्सवः ।
सत्काराह्लादिताशेषभूसुरः सुरवल्लभः ॥ १९४

पुण्यतीर्थाप्लुतः पुण्यः पुण्यदस्तीर्थपावनः ।
विप्रसात्कृतगोकोटिः शतकोटिसुवर्णदः ॥ १९५

स्वमायामोहिताशेषवृष्णिवीरो विशेषवित् ।
जलजायुधनिर्देष्टा स्वात्मावेशितयादवः ॥ १९६

देवताभीष्टवरदः कृतकृत्यः प्रसन्नधीः ।
स्थिरशेषायुतबलःसहस्रफणिवीक्षणः ॥ १९७

ब्रह्मवृक्षवरच्छायासीनः पद्मासनस्थितः ।
प्रत्यगात्मा स्वभावार्थः प्रणिधानपरायणः ॥ १९८

व्याधेषुविद्धपूज्याङ्घ्रिर्निषादभयमोचनः ।
पुलिन्दस्तुतिसन्तुष्टः पुलिन्दसुगतिप्रदः ॥ १९९

दारुकार्पितपार्थादिकरणीयोक्तिरीशिता ।
दिव्यदुन्दुभिसंयुक्तः पुष्पवृष्टिप्रपूजितः ॥ २००

पुराणः परमेशानः पूर्णभूमा परिष्टुतः ।
शुकवागमृताब्धीन्दुः गोविन्दो योगिनां पतिः ॥ २०१

वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ।
जगद्गुरुर्जगन्नाथो गीतामृतमहोदधिः ॥ २०२

पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ।
नारायणो यज्ञमूर्तिः पन्नगाशनवाहनः ॥

पतिराद्यः परं ब्रह्म परमात्मा परात्परः ॥ २०३
श्रीपरमात्मा परात्परः ओं नम इति

इदं सहस्रं कृष्णस्य नाम्नां सर्वार्थदायकम् ।
अनन्तरूपी भगवान् व्याख्याताऽऽदौ स्वयम्भुवे ॥ २०४

तेन प्रोक्तं वसिष्ठाय ततो लब्धा पराशरः ।
व्यासाय तेन सम्प्रोक्तं शुको व्यासादवाप्तवान् ॥ २०५

तच्छिष्यैर्बहुभिर्भूमौ ख्यापितं द्वापरे युगे ।
कृष्णाज्ञया हरिहरः कलौ प्राख्यापयद्विभुः ॥ २०६

इदं पठति भक्त्या यः शृणोति च समाहितः ।
स्वसिद्ध्यै प्रार्थयंत्येनं तीर्थक्षेत्रादिदेवताः ॥ २०७

प्रायश्चित्तान्यशेषाणि नालं यानि व्यपोहितुम् ।
तानि पापानि नश्यन्ति सकृदस्य प्रशंसनात् ॥ २०८

ऋणत्रयविमुक्तस्य श्रौतस्मार्तानुवर्तिनः ।
ऋषेस्त्रिमूर्तिरूपस्य फलं विन्देदिदं पठन् ॥ २०९

इदं नामसहस्रं यः पठत्येतच्छृणोति च ।
शिवलिङ्गसहस्रस्य स प्रतिष्ठाफलं लभेत् ॥ २१०

इदं किरीटी संजप्य जयी पाशुपतास्त्रभाक् ।
कृष्णस्य प्राणभूतस्सन् कृष्णं सारथिमासवान् ॥ २११

द्रौपद्या दमयन्त्या च सावित्र्या च सुशीलया ।
दुरितानि जितान्येतज्जपादासं च वाञ्छितम् ॥ २१२

किमिदं बहुना शंसन्मानवो मोदनिर्भरः ।
ब्रह्मानन्दमवाप्यान्ते कृष्णसायुज्यमाप्नुयात् ॥ २१३

—श्रीविष्णुधर्मोत्तरतः

॥ श्रीः ॥

## ॥ श्रीकृष्णसहस्रनामावळिः ॥

ओं कृष्णाय नमः । श्रीवल्लभाय । शार्ङ्गिणे । विष्वक्सेनाय । स्वसिद्धिदाय । क्षीरोदधाम्ने । व्यूहेशाय । शेषशायिने । जगन्मयाय । भक्तिगम्याय । त्रयीमूर्तये । भारार्तवसुधास्तुताय । देवदेवाय । दयासिंधवे । देवाय । देवशिखामणये । सुखभावाय । सुखाधाराय । मुकुन्दाय । मुदिताशयाय नमः ॥ २०

ओं अविक्रियाय नमः । क्रियामूर्तये । अध्यात्मस्व-स्वरूपवते । शिष्टाभिलक्ष्याय । भूतात्मने । धर्मत्राणार्थचेष्टिताय । अन्तर्यामिणे । कालरूपाय । कालावयवसाक्षिकाय । वसुधाया-सहरणाय । नारदप्रेरणोन्मुखाय । प्रभूष्णवे । नारदोद्गीताय । लोकरक्षापरायणाय । रौहिणेयकृतानन्दाय । योगज्ञाननि-

योजकाय । महागुहान्तर्निक्षिप्ताय । पुराणवपुषे । आत्मवते । शूरवंशैकधिये नमः ।। ४०

ओं शौरये नमः । कंसशङ्काविषादकृते । वसुदेवोल्लसच्छक्तये । देवक्यष्टमगर्भगाय । वसुदेवस्तुताय । श्रीमते । देवकीनन्दनाय । हरये । आश्चर्यबालाय । श्रीवत्सलक्ष्मवक्षसे । चतुर्भुजाय । स्वभावोत्कृष्टसद्भावाय । कृष्णाष्टम्यन्तसम्भवाय । प्राजापत्यर्क्षसंभूताय । निशीथसमयोदिताय । शङ्खचक्रगदापद्मपाणये । पद्मनिभेक्षणाय । किरीटिने । कौस्तुभोरस्काय । स्फुरन्मकरकुण्डलाय नमः ।। ६०

ओं पीतवाससे नमः । घनश्यामाय । कुञ्चिताञ्चितकुन्तलाय । सुव्यक्तव्यक्ताभरणाय । सूतिकागृहभूषणाय । कारागारान्धकारघ्नाय । पितृप्राग्जन्मसूचकाय । वसुदेवस्तुताय । स्तोत्राय । तापत्रयनिवारणाय । निरवद्याय । क्रियामूर्तये । न्यायवाक्यनियोजकाय । अदृष्टचेष्टाय । कूटस्थाय । धृतलौकिकविग्रहाय । महर्षिमानसोल्लासाय । महीमङ्गळदायकाय । सन्तोषितसुरव्राताय । साधुचित्तप्रसादकाय नमः ।। ८०

ओं जनकोपायनिर्देष्ट्रे नमः । देवकीनयनोत्सवाय । पितृपाणिपरिष्काराय । मोहितागाररक्षकाय । स्वशक्त्युद्धाटिताशेषकवाटाय । पितृवाहकाय । शेषोरगफणाच्छत्राय । शेषोक्ताख्यासहस्रकाय । यमुनापूरविध्वंसिने । स्वभासोद्भासितव्रजाय । कृतात्मविद्याविन्यासाय । योगमायाग्रसम्भवाय । दुर्गानिवेदितोद्भावाय । यशोदातल्पशायकाय । नन्दगोपोत्सवस्फूर्तये । व्रजानन्दकरोदयाय । सुजातजातकर्मश्रिये । गोपीभद्रोक्तिनिर्वृताय । अलीकनिद्रोपगमाय । पूतनास्तनपीडनाय नमः ।। १००

ओं स्तन्यात्तपूतनाप्राणाय नमः । पूतनाक्रोशकारकाय । विन्यस्तरक्षागोधूळये । यशोदाकरलालिताय । नन्दाघ्रातशिरोमध्याय । पूतनासुगतिप्रदाय । बालाय । पर्यङ्कनिद्राळवे । मुखार्पितपदाङ्गुळये । अञ्जनस्निग्धनयनाय । पर्यायाङ्कुरितस्मिताय । लीलाक्षाय । तरळालोकाय । शकटासुरभंजनाय । द्विजोदितस्वस्त्ययनाय । मंत्रपूतजलाप्लुताय । यशोदोत्संगपर्यंकाय । यशोदामुखवीक्षकाय । यशोदास्तन्यमुदिताय । तृणावर्तादिदुस्सहाय नमः १२०

ओं तृणावर्तासुरध्वंसिने नमः । मातृविस्मयकारकाय । प्रशस्तनामकरणाय । जानुचंक्रमणोत्सुकाय । व्यालंबिचूलिकारत्नाय । घोषगोपप्रहर्षणाय । स्वमुखप्रतिबिंबार्थिने । ग्रीवाव्याघ्रनखोज्ज्वलाय । पंकानुलेपरुचिराय । मांसलोरुकटीतटाय । घृष्टजानुकरद्वंद्वाय । प्रतिबिंबानुकारकृते । अव्यक्तवर्णवाग्वृत्तये । स्मितलक्ष्यरदोद्गमाय । धात्रीकरसमालंबिने । प्रस्खलच्चित्रचंक्रमाय । अनुरूपवयस्याढ्याय । चारुकौमारचापलाय । वत्सपुच्छसमाकृष्टाय । वत्सपुच्छविकर्षणाय नमः १४०

ओं विस्मारितान्यव्यापाराय नमः । गोपगोपीमुदावहाय । अकालवत्सनिर्मोक्त्रे । व्रजव्याक्रोशसुस्मिताय । नवनीतमहाचोराय । दारकाहारदायकाय । पीठोलूखलसोपानाय । क्षीरभांडविभेदनाय । शिक्यभाण्डसमाकर्षिणे । ध्वांतागारप्रवेशकृते । भूषारत्नप्रकाशाढ्याय । गोप्युपालंभभर्त्सिताय । परागधूसराकाराय । मृद्भक्षणकृतेक्षणाय । बालोक्तमृत्कथारंभाय । मित्रान्तर्गूढविग्रहाय । कृतसन्त्रासलोलाक्षाय । जननीप्रत्ययावहाय । मातृदृश्यात्तवदनाय । वक्त्रलक्ष्यचराचराय नमः ॥ १६०

यशोदालालितस्वात्मने नमः । स्वयं स्वाच्छंद्यमोहनाय । सवित्रीस्नेहसंश्लिष्टाय । सवित्रीस्तनलोलुपाय । नवनीतार्थनाप्रह्वाय । नवनीतमहाशनाय । मृषाकोपप्रकंपोष्ठाय । गोष्ठांगणविलोकनाय । दधिमंथघटीभेत्त्रे । किंकिणीक्वाणसूचिताय । हैयंगवीनरसिकाय । मृषाश्रवे । चौर्यशङ्किताय । जननीश्रमविज्ञात्रे । दामबंधनियंत्रिताय । दामाकल्पाय । चलापांगाय । गाढोलूखलबंधनाय । आकृष्टोलूखलाय । अनन्ताय नमः ॥ १८०

ओं कुबेरसुतशापविदे नमः । नारदोक्तिपरामर्शिने । यमळार्जुनभंजनाय । धनदात्मजसङ्घुष्टाय । नन्दमोचितबन्धनाय । बालकोद्गीतनिरताय । बाहुक्षेपोदितप्रियाय । आत्मज्ञाय । मित्रवशगाय । गोपीगीतगुणोदयाय । प्रस्थानशकटारूढाय । बृन्दावनकृतालयाय । गोवत्सपालनैकाग्राय । नानाक्रीडापरिच्छदाय । क्षेपणीक्षेपणप्रीताय । वेणुवाद्यविशारदाय । वृषवत्सानुकरणाय । वृषध्वानविडम्बनाय । नियुद्धलीलासंहृष्टाय । कूजानुकृतकोकिलाय नमः २००

ओं उपात्तहंसगमनाय नमः । सर्वजन्तुरुतानुकृते । भृङ्गानुकारिणे । दध्यन्नचोराय । वत्सपुरस्सराय । बलिने । बकासुरग्राहिणे । बकतालुप्रदाहकाय । भीतगोपार्भकाहूताय । बकचञ्चुविदारणाय । बकासुरारये । गोपालाय । बालाय । बालाद्भुतावहाय । बलभद्रसमाश्लिष्टाय । कृतक्रीडानिलायनाय । क्रीडासेतुविधानज्ञाय । प्लवङ्गोत्प्लवनाय । अद्भुताय । कन्दुकक्रीडनाय नमः ॥ २२०

ओं लुप्तनन्दादिभववेदनाय नमः । सुमनोऽलंकृतशिरसे । स्वादुस्निग्धान्नशिक्यभृते । गुञ्जाप्रालम्बनच्छन्नाय । पिंछैरलकवेषकृते । वन्याशनप्रियाय । शृङ्गरवाकारितवत्सकाय । मनोज्ञ-

पल्लवोत्तंसपुष्पस्वेच्छात्तषट्पदाय । मञ्जुशिंजितमञ्जीर-चरणाय । करकङ्कणाय । अन्योन्यशासनाय । क्रीडापटवे । परमकैतवाय । प्रतिध्वानप्रमुदिताय । शाखाचतुरचंक्रमाय । अघदानवसंहर्त्रे । व्रजविघ्नविनाशनाय । व्रजसञ्जीवनाय । श्रेयोनिधये । दानवमुक्तिदाय नमः ॥ २४०

ओं काळिन्दीपुळिनासीनाय नमः । सहभुक्तव्रजार्भकाय । कक्षाजठरविन्यस्तवेणवे । वल्लवचेष्टिताय । भुजसंध्यन्तरन्यस्त-शृङ्गवेत्राय । शुचिस्मिताय । वामपाणिस्थदध्यन्नकबळाय । कलभाषणाय । अङ्गुळ्यन्तरविन्यस्तफलाय । परमपावनाय । अदृश्यतर्णकान्वेषिणे । वल्लवार्भकभीतिघ्ने । अदृष्टवत्सपव्राताय । ब्रह्मविज्ञातवैभवाय । गोवत्सवत्सपान्वेषिणे । विराट्पुरुष-विग्रहाय । स्वसंकल्पानुरूपार्थवत्सवत्सपरूपधृते । यथावत्स-क्रियारूपाय । यथास्थाननिवेशनाय । यथाव्रजार्भकाकाराय नमः ॥ २६०

ओं गोगोपीस्तन्यपाय नमः । सुखिने । चिराद्बलोहिताय । दान्ताय । ब्रह्मविज्ञातवैभवाय । विचित्रशक्तये । व्यालीनसृष्ट-गोवत्सवत्सपाय । ब्रह्मत्रपाकराय । धातृस्तुताय । सर्वार्थ-साधकाय । ब्रह्मणे । ब्रह्ममयाय । अव्यक्ताय । तेजोरूपाय । सुखात्मकाय । निरुक्ताय । व्याकृतये । व्यक्ताय । निरालंबनभावनाय । प्रभविष्णवे नमः ॥ २८०

ओं अतंत्रीकाय नमः । देवपक्षार्थरूपधृते । अकामाय । सर्ववेदादये । अणीयसे । स्थूलरूपवते । व्यापिने । व्याप्याय । कृपाकर्त्रे । विचित्राचारसम्मताय । छंदोमयाय । प्रधानात्मने । मूर्तामूर्तद्वयाकृतये । अनेकमूर्तये । अक्रोधाय । परस्मै । प्रकृतये । अक्रमाय । सकलावरणोपेताय । सर्वदेवाय नमः ॥ ३००

ॐ महेश्वराय नमः । महाप्रभावनाय । पूर्ववत्सवत्सपदर्शकाय । कृष्णयादवगोपालाय । गोपालोकनहर्षिताय । स्मितेक्षाहर्षितब्रह्मणे । भक्तवत्सलवाक्प्रियाय । ब्रह्मानन्दाश्रुधौतांघ्रये । लीलावैचित्र्यकोविदाय । बलभद्रैकहृदयाय । नामाकारितगोकुलाय । गोपालबालकाय । भव्याय । रज्जुयज्ञोपवीतवते । वृक्षच्छायाहताशान्तये । गोपोत्सङ्गोपबर्हिणाय । गोपसंवाहितपदाय । गोपव्यजनवीजिताय । गोपगानसुखोन्निद्राय । श्रीदामार्जितसौहृदाय नमः ।। ३२०

ॐ सुनन्दसुहृदे नमः । एकात्मने । सुबलप्राणरञ्जनाय । तालीवनकृतक्रीडाय । बलपातितधेनुकाय । गोपीसौभाग्यसम्भाव्याय । गोधूळिच्छुरितालकाय । गोपीविरहसन्तप्ताय । गोपिकाकृतमज्जनाय । प्रलम्बबाहवे । उत्फुल्लपुण्डरीकावतंसकाय । विलासललितस्मेरगर्भलीलावलोकनाय । स्रग्भूषणानुलेपाढ्याय । जनन्युपहृतान्नभुजे । वरशय्याशयाय । राधाप्रेमसल्लापनिर्वृताय । यमुनातटसञ्चारिणे । विषार्तव्रजहर्षदाय । कालियक्रोधजनकाय । वृद्धाहिकुलवेष्टिताय नमः ।। ३४०

ॐ कालियाहिफणारङ्गनटाय नमः । कालियमर्दनाय । नागपत्नीस्तुतिप्रीताय । नानावेषसमृद्धिकृते । अविष्वक्तदृशे । आत्मेशाय । स्वदृशे । आत्मस्तुतिप्रियाय । सर्वेश्वराय । सर्वगुणाय । प्रसिद्धाय । सर्वसात्वताय । अकुण्ठधाम्ने । चन्द्रार्कदृष्टये । आकाशनिर्मलाय । अनिर्देश्यगतये । नागवनितापतिभैक्षदाय । स्वांघ्रिमुद्राङ्कनागेन्द्रमूर्ध्ने । काळीयसंस्तुताय । अभयाय नमः । ३६०

ॐ विश्वतश्चक्षुषे नमः । स्तुतोत्तमगुणाय । प्रभवे । मह्यं । आत्मने । मरुते । प्राणाय । परमात्मने । द्युशीर्षवते ।

नागोपायनहृष्टात्मने। ह्रदोत्सारितकालियाय। बलभद्रसुखालापाय। गोपालिङ्गननिर्वृताय। दावाग्निभीतगोपालगोप्त्रे। दावाग्निनाशनाय। नयनाच्छादनक्रीडालम्पटाय। नृपचेष्टिताय। काकपक्षधराय। सौम्याय। बलवाहक केलिमते नमः ।। ३८०

ओं बलघातितदुर्धर्षप्रलंबाय नमः। बलवत्सलाय। मुञ्जाटव्यग्निशमनाय। प्रावृट्कालविनोदवते। शिलान्यस्तान्नभृते। दैत्यसंहर्त्रे। शाद्वलासनाय। सदाप्तगोपिकोद्गीताय। कर्णिकारावतंसकाय। नटवेषधराय। पद्ममालाङ्काय। गोपिकावृताय। गोपीमनोहरापाङ्गाय। वेणुवादनतत्पराय। विन्यस्तवदनांभोजाय। चारुशब्दकृताननाय। बिम्बाधरार्पितोदारवेणवे। विश्वविमोहनाय। व्रजसंवर्णिताय। श्राव्यवेणुनादाय।।। ४००

ओं श्रुतिप्रियाय नमः। गोगोपगोपीजन्मेप्सु ब्रह्मेन्द्राद्यभिवन्दिताय। गीतस्नुतिसरित्पूराय नमः। नादनर्तितबर्हिणाय। रागपल्लवितस्थाणवे। गीतानमितपादपाय। विस्मारिततृणग्रासमृगाय। मृगविलोभिताय। व्याघ्रादिहिंस्रसहजवैरहर्त्रे। सुगायनाय। गाढोदीरितगोबृन्द प्रेमोत्कर्णिततर्णकाय। निष्पन्दयानब्रह्मादिवीक्षिताय। विश्ववन्दिताय। शाखोत्कर्णशकुन्तौघाय। छत्रायितवलाहकाय। प्रसन्नाय। परमानन्दाय। चित्रायितचराचराय। गोपीकामदनाय। गोपीकुचकुङ्कुममुद्रिताय नमः ।। ४२०

ओं गोपकन्याजलक्रीडाहृष्टाय नमः। गोप्यंशुकापहृते। स्कन्धारोपितगोपस्त्रीवाससे। कुन्दनिभस्मिताय। गोपीनेत्रोत्पलशशिने। गोपिकायाचितांशुकाय। गोपीनमस्क्रियादेष्ट्रे। गोप्येककरवन्दिताय। गोप्यञ्जलिविशेषार्थिने। गोपीक्रीडाविलोभिताय। शान्तवासस्फुरद्गोपीकृताञ्जलये। अघापहाय।

गोपीकेळिविलासार्थिने । गोपीसम्पूर्णकामदाय । गोपस्त्रीवस्त्रदाय । गोपीचित्तचोराय । कुतूहलिने । बृन्दावनप्रियाय । गोपबन्धवे । यज्वान्नयाचित्रे नमः ।। ४४०

ओं यज्ञेशाय नमः । यज्ञभावज्ञाय । यज्ञपत्न्यभिवाञ्छिताय । मुनिपत्नीवितीर्णान्नतृप्ताय । मुनिवधूप्रियाय । द्विजपत्न्यभिभावज्ञाय । द्विजपत्नीवरप्रदाय । प्रतिरुद्धसतीमोक्षप्रदाय । द्विजविमोहित्रे । मुनिज्ञानप्रदाय । यज्वस्तुताय । वासवयागविदे । पितृप्रोक्तक्रियारूपशक्रयागनिवारणाय । शक्रामर्षकराय । शक्रवृष्टिप्रशमनोन्मुखाय । गोवर्धनधराय । गोपगोबृन्दत्राणतत्पराय । गोवर्धनगिरिच्छत्रचण्डदण्डभुजार्गलाय । सप्ताहविधृताद्रीन्द्राय । मेघवाहनगर्वघ्ने नमः ।। ४६०

ओं भुजाग्रोपरिविन्यस्तक्ष्माधरक्ष्माभृते नमः । अच्युताय । स्वस्थानस्थापितगिरये नमः । गोपीदध्यक्षतार्चिताय । सुमनसे । सुमनोवृष्टिहृष्टाय । वासववन्दिताय । कामधेनुपयःपूराभिषिक्ताय । सुरभिस्तुताय । धराङ्घ्रये । ओषधीरोम्णे । धर्मगोप्त्रे । मनोमयाय । ज्ञानयज्ञप्रियाय । शास्त्रनेत्राय । सर्वार्थसारथये । ऐरावतकरानीतवियद्गङ्गाप्लुताय । विभवे । ब्रह्माभिषिक्ताय । गोगोप्त्रे नमः ।। ४८०

ओं सर्वलोकशुभङ्कराय नमः । सर्ववेदमयाय । मग्ननन्दान्वेषिणे । पितृप्रियाय । वरुणोदीरितात्मेक्षाकौतुकाय । वरुणार्चिताय । वरुणानीतजनकाय । गोपज्ञातात्मवैभवाय । स्वर्लोकालोकसंहृष्टगोपवर्गाय । त्रिवर्गदाय । ब्रह्महृद्गोपिताय । गोपद्रष्ट्रे । ब्रह्मपदप्रदाय । शरच्चन्द्रविहारोत्काय । श्रीपतये । वशकाय । क्षमाय । भयापहाय । भर्तृरुद्धगोपिकाध्यानगोचराय । गोपिकानयनास्वाद्याय नमः ।। ५००

ओं गोपीनर्मौक्तिनिर्वृताय नमः । गोपीकामानहरणाय । गोपिकाशतयूथपाय । वैजयन्तीस्रगाकल्पाय । गोपिकामानवर्धनाय । गोपकान्तासुनिर्देष्ट्रे । कान्ताय । मन्मथमन्मथाय । स्वात्मास्यदत्तताम्बूलाय । फलितोत्कृष्टयौवनाय । वल्लवीस्तनसक्ताक्षाय । वल्लवीप्रेमचालिताय । गोपीचेलांचलासीनाय । गोपीनेत्राब्जषट्पदाय । रासक्रीडासमासक्ताय । गोपीमण्डलमण्डनाय । गोपीहेममणिश्रेणिमध्येन्द्रमणये ।उज्ज्वलाय । विद्याधरेन्दुशापघ्नाय । शङ्खचूडशिरोहराय नमः ।। । ५२०

ओं शङ्खचूडशिरोरत्नसम्प्रीणितबलाय नमः । अनघाय । अरिष्टारिष्टकृते । दुष्टकेशिदैत्यनिषूदनाय । सरसाय । सस्मितमुखाय । सुस्थिराय । विरहाकुलाय । सङ्कर्षणार्पितप्रीतये । अक्रूरध्यानगोचराय । अक्रूरसंस्तुताय । गूढाय । गुणवृत्त्युपलक्षिताय । प्रमाणगम्याय । तन्मात्रावयविने । बुद्धितत्पराय । सर्वप्रमाणप्रमथिने । सर्वप्रत्ययसाधकाय । पुरुषाय । प्रधानात्मने नमः ।। ५४०

ओं विपर्यासविलोचनाय नमः । मधुराजनसंवीक्ष्याय । रजकप्रतिघातकाय । विचित्राम्बरसंवीताय । मालाकारवरप्रदाय । कुब्जावक्रत्वनिर्मोक्त्रे । कुब्जायौवनदायकाय । कुब्जाङ्गरागसुरभये । कंसकोदण्डखण्डनाय । धीराय । कुवलयापीडमर्दनाय । कंसभीतिकृते । दन्तिदन्तायुधाय । रङ्गत्रासकाय । मल्लयुद्धविदे । चाणूरहन्त्रे । कंसारये । देवकीहर्षदायकाय । वसुदेवपदानम्राय । पितृबन्धविमोचनाय नमः ।। ५६०

ओं उर्वीभयापहाय नमः । भूपाय । उग्रसेनाधिपत्यदाय । आज्ञास्थितशचीनाथाय । सुधर्मानियनक्षमाय । आद्याय । द्विजातिसत्कर्त्रे । शिष्टाचारप्रदर्शकाय । सान्दीपनिकृताभ्यस्तविद्याभ्या-

सैकधिये। सुधिये। गुर्वभीष्टक्रियादक्षाय। पश्चिमोदधिपूजिताय। हतपञ्चजनप्राप्तपाञ्चजन्याय। यमार्चिताय। धर्मराजजयानीत-गुरुपुत्राय। उरुक्रमाय। गुरुपुत्रप्रदाय। शास्त्रे। मधुराजनमानदाय। जामदग्न्यसमभ्यर्च्याय नमः ॥ ५८०

ओं गोमन्तगिरिसञ्चराय नमः। गोमन्तदावशमनाय। गरुडानीतभूषणाय। चक्राद्यायुधसंशोभिने। जरासन्धमदापहाय। सृगालावनिपालघ्नाय। सृगालात्मजराज्यदाय। विध्वस्तकालय-वनाय। मुचुकुन्दवरप्रदाय। आज्ञापितमहाम्भोधये। द्वारकापुर-कल्पनाय। द्वारकानिलयाय। रुक्मिमानहन्त्रे। यदूद्वहाय। रुचिराय। रुक्मिणीजानये। प्रद्युम्नजनकाय। प्रभवे। अपाकृत-त्रिलोकार्तये। अनिरुद्धपितामहाय नमः ॥ ६००

ओं अनिरुद्धपदान्वेषिणे नमः। चक्रिणे। गरुडवाहनाय। बाणासुरपुरीरोद्ध्रे। रक्षाज्वलनयन्त्रजिते। धूतप्रमथसंरम्भाय। जितमाहेश्वरज्वराय। षट्चक्रशक्तिनिर्जेत्रे। भूतभेताळमोहकृते। शम्भुत्रिशूलजिते। शम्भुजृम्भणाय। शम्भुसंस्तुताय। इन्द्रि-यात्मने। इन्दुहृदयाय। सर्वयोगेश्वरेश्वराय। हिरण्यगर्भहृदयाय। मोहावर्तनिवर्तनाय। आत्मज्ञाननिधये। मेधाकोशाय। तन्मात्र-रूपवते नमः ॥ ६२०

ओं इन्द्राय नमः। अग्निवदनाय। कालनाभाय। सर्वागमा-ध्वगाय। तुरीयाय। सर्वधीसाक्षिणे। द्वन्द्वारामात्मदूरगाय। अज्ञातपाराय। वश्यश्रियै। अव्याकृतविहारवते। आत्मप्रदीपाय। विज्ञानमात्रात्मने। श्रीनिकेतनाय। बाणबाहुवनच्छेत्रे। महेन्द्रप्रीतिवर्धनाय। अनिरुद्धनिरोधज्ञाय। जलेशाहृतगोकुलाय। जलेशविजयिने। वीराय। सत्राजिद्रत्नयाचकाय नमः ॥ ६४०

ओं प्रसेनान्वेषणोद्युक्ताय नमः । जाम्बवद्धृतरत्नदाय । जितर्क्षराजतनयाहर्त्रे । जाम्बवतीप्रियाय । सत्यभामाप्रियाय । कामाय । शतधन्वशिरोहराय । कालिन्दीपतये । अक्रूरबन्धवे । अक्रूररत्नदाय । कैकयीरमणाय । भद्राभर्त्रे । नाग्नजितीधवाय । माद्रीमनोहराय । शैब्याप्राणबन्धवे । उरुक्रमाय । सुशीलादयिताय । मित्रविन्दानेत्रमहोत्सवाय । लक्ष्मणावल्लभाय । रुद्धप्राग्ज्योतिषमहापुराय नमः ॥ ६६०

ओं सुरपाशावृतिच्छेदिने नमः । मुरारये । क्रूरयुद्धविदे । हयग्रीवशिरोहर्त्रे । सर्वात्मने । सर्वदर्शनाय । नरकासुरविच्छेत्रे । नरकात्मजराज्यदाय । पृथ्वीस्तुताय । प्रकाशात्मने । हृद्याय । यज्ञफलप्रदाय । गुणग्राहिणे । गुणद्रष्ट्रे । गूढस्वात्मने । विभूतिमते । कवये । जगदुपद्रष्ट्रे । परमाक्षरविग्रहाय । प्रपन्नपालनाय नमः ॥ ६८०

ओं मालिने नमः । महते । ब्रह्मविवर्धनाय । वाच्यवाचकशक्त्यर्थाय । सर्वव्याकृतसिद्धिदाय । स्वयंप्रभवे । अनिर्वेद्याय । स्वप्रकाशाय । चिरन्तनाय । नादात्मने । मन्त्रकोटीशाय । नानावादनिरोधकाय । कन्दर्पकोटिलावण्याय । परार्थैकप्रयोजकाय । अमरीकृतदेवौघाय । कन्यकाबन्धमोचनाय । षोडशस्त्रीसहस्रेशाय । कान्ताय । कान्तामनोभवाय । क्रीडारत्नाचलाहर्त्रे नमः ॥ ७००

ओं वरुणच्छत्रशोभिताय नमः । शक्राभिवन्दिताय । शक्रजननीकुण्डलप्रदाय । अदितिप्रस्तुतस्तोत्राय । ब्राह्मणोद्धुष्टचेष्टनाय । पुराणाय नमः । संयमिने । जन्मालिप्ताय । षड्विंशकाय । अर्थदाय । यशस्यनीतये । आद्यन्तरहिताय । सत्कथाप्रियाय । ब्रह्मबोधाय । परानन्दाय । पारिजातापहारकाय ।

पौण्ड्रकप्राणहरणाय । काशिराजनिषूदनाय । कृत्यागर्वप्रशमनाय । विचक्रवधदीक्षिताय नमः ।। ७२०

ओं हंसाविध्वंसनाय नमः । साम्बजनकाय । डिम्भकार्दनाय । मुनये । गोप्त्रे । पितृवरप्रदाय नमः । सवनदीक्षिताय । रथिने । सारथ्यनिर्देष्ट्रे । फाल्गुनाय । फाल्गुनिप्रियाय । सप्ताब्धिस्तम्भनोद्भूताय । हरये । सप्ताब्धिभेदनाय । आत्मप्रकाशाय । पूर्णश्रिये । आदिनारायणेक्षिताय । विप्रपुत्रप्रदाय । सर्वमातृसुतप्रदाय । पार्थविस्मयकृते नमः ।। ७४०

ओं पार्थप्रणवार्थप्रबोधनाय नमः । कैलासयात्रासुमुखाय । बदर्याश्रमभूषणाय । घण्टाकर्णक्रियामौढ्यात्तोषिताय । भक्तवत्सलाय । मुनिबृन्दादिभिर्ध्येयाय । घण्टाकर्णवरप्रदाय । तपश्चर्यापराय । चीरवाससे । पिङ्गजटाधराय । प्रत्यक्षीकृतभूतेशाय । शिवस्तोत्रे । शिवस्तुताय । कृष्णास्वयंवरालोककौतुकिने । सर्वसम्मताय । बलसंरंभशमनाय । बलदर्शितपाण्डवाय । यतिवेषार्जुनाभीष्टदायिने । सर्वात्मगोचराय । सुभद्राफाल्गुनोद्वाहकर्त्रे नमः ।। ७६०

ओं प्रीणितफाल्गुनाय नमः । खाण्डवप्रीणितार्चिष्मते । मयदानवमोचनाय । सुलभाय । राजसूयार्हयुधिष्ठिरनियोजकाय । भीमार्दितजरासन्धाय । मागधात्मजराज्यदाय । राजबन्धननिर्मोक्त्रे । राजसूयाग्रपूजनाय । चैद्याद्यसहनाय । भीष्मस्तुताय । सात्वतपूर्वजाय । सर्वात्मने । अर्थसमाहर्त्रे । मन्दराचलधारकाय । यज्ञावताराय । प्रह्लादप्रतिज्ञापरिपालकाय । बलियज्ञसभाध्वंसिने । दृप्तक्षत्रकुलान्तकाय । दशग्रीवान्तकाय नमः ।। ७८०

ओंजेत्रे नमः। रेवतीप्रेमवल्लभाय । सर्वावताराधिष्ठात्रे । वेदबाह्यविमोहनाय । कलिदोषनिराकर्त्रे नमः । दशनाम्ने ।

दृढव्रताय । अमेयात्मने । जगत्स्वामिने । वाग्मिने । चैद्यशिरो-हराय । द्रौपदीरचितस्तोत्राय । केशवाय । पुरुषोत्तमाय । नारायणाय । मधुपतये । माधवाय । दोषवर्जिताय । गोविन्दाय । पुण्डरीकाक्षाय नमः ।। ८००

ओं विष्णवे नमः । मधुसूदनाय । त्रिविक्रमाय । त्रिलोकेशाय । वामनाय । श्रीधराय । पुंसे । हृषीकेशाय । वासुदेवाय । पद्मनाभाय । महाह्रदाय । दामोदराय । चतुर्व्यूहाय । पाञ्चालीमानरक्षणाय । साल्वघ्नाय । समरश्लाघिने । दन्तवक्त्रनिबर्हणाय । दामोदरप्रियसखाय । पृथुकास्वादन-प्रियाय । घृणिने नमः ।। ८२०

ओं दामोदराय नमः । श्रीदाय । गोपीपुनरवेक्षकाय । गोपिकामुक्तिदाय । योगिने । दुर्वासस्तृप्तिकारकाय । अविज्ञातव्रजाकीर्णपाण्डवालोकनाय । जयिने । पार्थसारथ्य-निरताय । प्राज्ञाय । पाण्डवदौत्यकृते । विदुरातिथ्यसन्तुष्टाय । कुन्तीसन्तोषदायकाय । सुयोधनतिरस्कर्त्रे । दुर्योधनविकारविदे । विदुराभिष्टुताय । नित्याय । वार्ष्णेयाय । मङ्गळात्मकाय । पञ्चविंशतितत्त्वेशाय नमः ।। ८४०

ओं चतुर्विंशतिदेहभाजे नमः । सर्वानुग्राहकाय । सर्वदाशार्ह-सततार्चिताय । अचिन्त्याय । मधुरालापाय । साधुदर्शिने । दुरासदाय । मनुष्यधर्मानुगताय । कौरवेन्द्रक्षयेक्षित्रे । उपेन्द्राय । दानवारातये । उरुगीताय । महाद्युतये । ब्रह्मण्यदेवाय । श्रुतिमते । गोब्राह्मणहिताशयाय । वरशीलाय । शिवारम्भाय । सुविज्ञान-विमूर्तिमते । स्वभावशुद्धाय नमः ।। ८६०

ओं सन्मित्राय । सुशरण्याय । सुलक्षणाय । धृतराष्ट्रगताय । दृष्टिप्रदाय । कर्णविभेदनाय । प्रतोदधृते । विश्वरूपविस्मारि-

तधनंजयाय । सामगानप्रियाय । धर्मधेनवे । वर्णोत्तमाय । अव्ययाय । चतुर्युगक्रियाकर्त्रे । विश्वरूपप्रदर्शकाय । ब्रह्मबोधपरित्रातपार्थाय । भीष्मार्थचक्रभृते । अर्जुनायासविध्वंसिने । कालदंष्ट्राविभूषणाय । सुजातानन्तमहिम्ने । स्वप्नव्यापारितार्जुनाय नमः ॥ ८८०

ओं अकालसन्ध्याघटनाय नमः । चक्रान्तरितभास्कराय । दुष्टप्रमथनाय । पार्थप्रतिज्ञापरिपालकाय । सिन्धुराजशिरः-पातस्थानवक्त्रे । विवेकदृशे । सुभद्राशोकहरणाय । द्रोणोत्सेकादि-विस्मिताय । पार्थमन्युनिराकर्त्रे । पाण्डवोत्सवदायकाय । अङ्गुष्ठाक्रान्तकौन्तेय रथाय । शक्ताय । अहिशीर्षजिते । कालकोपप्रशमनाय । भीमसेनजयप्रदाय । अश्वत्थामवधायासत्रा-तपाण्डुसुताय । कृतिने । इषीकास्त्रप्रशमनाय । द्रौणिरक्षा-विचक्षणाय । पार्थापहारितद्रौणिचूडामणये नमः ॥ ९००

ओं अभङ्गुराय नमः । धृतराष्ट्रपरामृष्टभीमप्रतिकृतिस्मयाय । भीष्मबुद्धिप्रदाय । शान्ताय । शरच्चन्द्रनिभाननाय । गदाग्रजन्मने । पाञ्चालीप्रतिज्ञापालकाय । गान्धारीकोपदृग्गुप्तधर्मसूनवे । अनामयाय । प्रपन्नार्तिभयच्छेत्त्रे । भीष्मशल्यव्यथापहाय । शान्ताय । शान्तनवोदीर्णसर्वधर्मसमाहिताय । स्मारितब्रह्मा-विद्यार्थप्रीतपार्थाय । महास्त्रविदे । प्रसादपरमोदाराय । गाङ्गे-यसुगतिप्रदाय । विपक्षपक्षक्षयकृते । परीक्षित्प्राणरक्षणाय । जगद्गुरवे नमः ॥ ९२०

ओं धर्मसूनोर्वाजिमेधप्रवर्तकाय नमः । विहितार्थाप्रस-त्काराय । मासकात्परिवर्तदाय । उत्तङ्कहर्षदाय । आत्मीय-दिव्यरूपप्रदर्शकाय । जनकावगतस्वोक्तभारताय । सर्वभावनाय । असोढयादवोद्रेकाय । विहितासादिपूजनाय । समुद्रस्थापिताश्चर्य-

मुसलाय । वृष्णिवाहकाय । मुनिशापायुधाय । पद्मासनादित्रिदशार्थिताय । सृष्टिप्रत्यवहारोत्काय । स्वधामगमनोत्सुकाय । प्रभासालोकनोद्युक्ताय । नानाविधनिमित्तकृते । सर्वयादवसंसेव्याय । सर्वोत्कृष्टपरिच्छदाय । वेलाकाननसञ्चारिणे नमः ।। ९४०

ओं वेलानिलहृतश्रमाय नमः । कालात्मने । यादवाय । अनन्ताय । स्तुतिसन्तुष्टमानसाय । द्विजालोकनसन्तुष्टाय । पुण्यतीर्थमहोत्सवाय । सत्काराह्लादिताशेषभूसुराय । सुरवल्लभाय । पुण्यतीर्थाप्लुताय । पुण्याय । पुण्यदाय । तीर्थपावनाय । विप्रासत्कृतगोकोटये । शतकोटिसुवर्णदाय । स्वमायामोहिताशेषवृष्णिवीराय । विशेषविदे । जलजायुधनिर्देष्ट्रे । स्वात्मावेशितयादवाय । देवताभीष्टवरदाय नमः ।। ९६०

ओं कृतकृत्याय नमः । प्रसन्नधिये । स्थिरशेषायुतबलाय । सहस्रफणिवीक्षणाय । ब्रह्मवृक्षवरच्छायासीनाय । पद्मासनस्थिताय । प्रत्यगात्मने । स्वभावार्थाय । प्रणिधानपरायणाय । व्याधेषुविद्धपूज्यांघ्रये । निषादभयमोचनाय । पुलिन्दस्तुतिसन्तुष्टाय । पुलिन्दसुगतिप्रदाय । दारुकार्पितपार्थादिकरणीयोक्तये । ईशित्रे । दिव्यदुन्दुभिसंयुक्ताय । पुष्पवृष्टिप्रपूजिताय । पुराणाय । परमेशानाय । पूर्णभूम्ने । परिष्टुताय नमः ।। ९८०

ओं शुकवागमृताब्धीन्दवे नमः । गोविन्दाय । योगिनां पतये । वसुदेवात्मजाय । पुण्याय । लीलामानुषविग्रहाय । जगद्गुरवे । जगन्नाथाय । गीतामृतमहोदधये । पुण्यश्लोकाय । तीर्थपादाय । वेदवेद्याय । दयानिधये । नारायणाय । यज्ञमूर्तये । पन्नगाशनवाहनाय । आद्याय पतये । परस्मै ब्रह्मणे । परमात्मने । परात्पराय नमः ।। १०००

॥ श्रीः ॥

# श्रीगोपालसहस्रनामस्तोत्रम्

कैलासशिखरे रम्ये गौरी पप्रच्छ शङ्करम् ।
ब्रह्माण्डाखिलनाथस्त्वं सृष्टिसंहारकारकः ॥ १
त्वमेव पूज्यसे लोकैर्ब्रह्मविष्णुसुरादिभिः ।
नित्यं पठसि देवेश कस्य स्तोत्रं महेश्वर ? ॥ २
आश्चर्यमिदमत्यन्तं जायते मम शङ्कर ।
तत्प्राणेश महाप्राज्ञ संशयं छिन्धि मे प्रभो ॥ ३
महादेव उवाच
धन्यासि कृतपुण्यासि पार्वति प्राणवल्लभे ।
रहस्यातिरहस्यं च यत्पृच्छसि वरानने ॥ ४
स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ ५
दत्ते च सिद्धिहानिस्स्यात्तस्माद्यत्नेन गोपयेत् ।
इदं रहस्यं परमं पुरुषार्थप्रदायकम् ॥ ६
धनरत्नौघमाणिक्यतुरङ्गमगजादिकम् ।
ददाति स्मरणादेव महामोक्षप्रदायकम् ॥ ७
तत्तेऽहं संप्रवक्ष्यामि शृणुष्वावहिता प्रिये ।
योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्दनः ॥ ८
संसारसागरोत्तारकारणाय नृणां सदा ।
श्रीरङ्गादिकरूपेण त्रैलोक्यं व्याप्य तिष्ठति ॥ ९
ततो लोका महामूढा विष्णुभक्तिविवर्जिताः ।
निश्चयं नाधिगच्छन्ति पुनर्नारायणो हरिः ॥ १०
निरञ्जनो निराकारो भक्तानां प्रीतिकामदः ।
वृन्दावनविहाराय गोपालं रूपमुद्वहन् ॥ ११

मुरळीवादनाधारी राधायै प्रीतिमावहन्।
अंशांशेभ्यस्समुन्मील्य पूर्णरूपकलायुतः ॥ १२

श्रीकृष्णचन्द्रो भगवान्नन्दगोपवरोद्यतः।
धरणीरूपिणी माता यशोदा नन्दगेहिनी ॥ १३

द्वाभ्यां प्रयाचितो नाथो देवक्यां वसुदेवतः।
ब्रह्मणाभ्यर्थितो देवो देवैरपि सुरेश्वरः ॥ १४

जातोऽवन्यां च मुदितो मुरळीवादनेच्छया।
श्रिया सार्थं वचः कृत्वा ततो जातो महीतले ॥ १५

संसारसारसर्वस्वं श्यामलं महदुज्ज्वलम्।
एतज्ज्योतिरहं वन्द्यं चिन्तयामि सनातनम्॥ १६

गौरतेजो विना यस्तु श्यामतेजस्समर्चयेत्।
जपेद्वा ध्यायते पापी स भवेत्पातकी शिवे॥ १७

स ब्रह्महा सुरापी च स्वर्णस्तेयी च पञ्चमः।
एतैर्दोषैर्विलिप्येत तेजोभेदान्महेश्वरि॥ १८

तस्माज्ज्योतिरभूद्द्वेधा राधामाधवरूपकम्।
तस्मादिदं महादेवि गोपालेनैव भाषितम्॥ १९

दुर्वाससो मुनेर्मोहे कार्तिक्यां रासमण्डले।
ततः पृष्टवती राधा सन्देहं भेदमात्मनः ॥ २०

निरञ्जनात्समुत्पन्नं मायातीतं जगन्मयम्।
श्रीकृष्णेन ततः प्रोक्तं राधायै नारदाय च॥ २१

ततो नारदतस्सर्वं विरळा वैष्णवास्तथा।
कलौ जानन्ति देवेशि गोपनीयं प्रयत्नतः ॥ २२

शठाय कृपणयाथ डाम्भिकाय सुरेश्वरि।
ब्रह्महत्यामवाप्नोति तस्माद्यत्नेन गोपयेत्॥ २३

ओं अस्य श्रीगोपालसहस्रनामस्तोत्रमहामन्त्रस्य श्रीनारद ऋषिः, अनुष्टुप्छंदः, श्रीगोपालो देवता, कामो बीजम्, माया शक्तिः, चन्द्रः कीलकम्, श्रीकृष्णचन्द्रभक्तिफलप्राप्तये श्रीगोपाल सहस्रनामस्तोत्रजपे विनियोगः। प्रकारान्तरम्-ओं ऐं क्लीं श्रीम् ह्रीं शक्तिः, श्रीबृन्दावन-निवासः कीलकम्, श्रीराधाप्रियं परं ब्रह्मेति मन्त्रः, धर्मादिचतुर्विध-पुरुषार्थसिद्ध्यर्थे जपे विनियोगः. ओं नारदऋषये नमः शिरसि, अनुष्टुप्छन्दसे नमः मुखे, श्रीगोपालदेवतायै नमः हृदये, क्लीं कीलकाय नमः नाभौ, ह्रीं शक्तये नमः गुह्ये, श्रीं कीलकाय नमः फालयोः, ओं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा इति मूलमन्त्रः, ओं क्लां अङ्गुष्ठाभ्यां नमः ओं क्लीं तर्जनीभ्यां नमः ओं क्लूं मध्यमाभ्यां नमः, ओं क्लैं अनामिकाभ्यां नमः, ओं क्लौं कनिष्ठिकाभ्यां नमः, ओं क्लः करतलकरपृष्ठाभ्यां नमः, ओं क्लां हृदयाय नमः ओं क्लीं शिरसे स्वाहा, ओं क्लूं शिखायै वषट्, ओं क्लैं कवचाय हुम्, ओं क्लौं नेत्रत्रयाय वौषट्, ओं क्लः अस्त्राय फट्. मूलमन्त्रन्यासः - क्लीं अङ्गुष्ठाभ्यां नमः, कृष्णाय तर्जनीभ्यां नमः, गोविन्दाय मध्यमाभ्यां नमः, गोपीजन अनामिकाभ्यां नमः, वल्लभाय कनिष्ठिकाभ्यां नमः, स्वाहा करतलकरपृष्ठाभ्यां नमः, क्लीं हृदयाय नमः, कृष्णाय शिरसे स्वाहा, गोविन्दाय शिखायै वषट्, गोपीजन कवचाय हुम्, वल्लभाय नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट् इति। दिग्बन्धः.

*ध्यानम्*

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम्।

गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥

कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं
नासाग्रे वरमौक्तिकं करतले वेणुं करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं च कलयन् कण्ठे च मुक्तावलिं
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥

****

(ओं क्लीं देवःकामदेवः कामबीजशिरोमणिः ।)

श्रीगोपालो महीपालो वेदवेदाङ्गपारगः ।
कृष्णः कमलपत्राक्षः पुण्डरीकस्सनातनः ॥ १

गोपतिर्भूपतिः शास्ता प्रहर्ता विश्वतोमुखः ।
आदिकर्ता महाकर्ता महाकालः प्रतापवान् ॥ २

जगज्जीवो जगद्धाता जगद्भर्ता जगद्वसुः ।
मत्स्यो भीमः कुहूभर्ता हर्ता वाराहमूर्तिमान् ॥ ३

नारायणो हृषीकेशो गोविन्दो गरुडध्वजः ।
गोकुलेशो महाचन्द्रःशर्वरीप्रियकारकः ॥ ४

कमलामुखलोलाक्षः पुण्डरीकःशुभावहः ।
दुर्वासाः कपिलो भौमस्सिन्धुसागरसंभवः ॥ ५

गोविन्दो गोपतिर्गोत्रः काळिन्दीप्रेमपूरकः ।
गोपस्वामी गोकुलेन्द्रः गोवर्धनवरप्रदः ॥ ६

नन्दादिगोकुलत्राता दाता दारिद्र्यभञ्जनः ।
सर्वमङ्गळदाता च सर्व कामवरप्रदः ॥ ७

आदिकर्ता महीभर्ता सर्वसागरसिन्धुजः ।
गजगामी गजोद्धारी कामी कामकलानिधिः ॥ ८

कळङ्करहितश्चन्द्रबिम्बास्यो बिम्बसत्तमः ।
मालाकारकृपाकारः कोकिलस्वरभूषणः ॥ ९

रामो नीलाम्बरो देवो हली द्विविदमर्दनः ।
सहस्राक्षपुरीभेत्ता महामारीविनाशनः ॥ १०

शिवः शिवतमो भेत्ता बलारातिप्रपूजकः ।
कुमारीवरदायी च वरेण्यो मीनकेतनः ॥ ११

नरो नारायणो धीरो धरापतिरुदारधीः ।
श्रीपतिः श्रीनिधिः श्रीमान् मापतिः प्रतिराजहा ॥ १२

बृन्दापतिः कुलं ग्रामी धाम ब्रह्म सनातनः ।
रेवतीरमणो रामः प्रियश्चञ्चललोचनः ॥ १३

रामायणशरीरश्च रामारामः श्रियः पतिः ।
शर्वरः शर्वरी शर्वः सर्वत्र शुभदायकः ॥ १४

राधो राधयिता राधी राधाचित्तप्रमोदकः ।
राधारतिसुखोपेतो राधामोहनतत्परः ॥ १५

राधावशीकरो राधाहृदयाम्भोजषट्पदः ।
राधालिङ्गनसम्मोदो राधानर्तनकौतुकः ॥ १६

राधासञ्जातसम्प्रीती राधाकामफलप्रदः ।
बृन्दापतिः कोकनिधिः कोकशोकविनाशनः ॥ १७

चन्द्रापतिः चन्द्रपतिश्चण्डकोदण्डभञ्जनः ।
रामो दाशरथी रामो भृगुवंशसमुद्भवः ॥ १८

आत्मारामो जितक्रोधोऽमोहो मोहान्धभञ्जनः ।
वृषभानुभवो भावी काश्यपिः करुणानिधिः ॥ १९

कोलाहलो हलो हाली हली हलधरप्रियः ।
राधामुखाब्जमार्ताण्डो भास्करो रविजो विधुः ॥ २०

विधिर्विधाता वरुणो वारुणो वारुणीप्रियः ।
रोहिणीहृदयानन्दी वसुदेवात्मजो बली ॥ २१

नीलाम्बरो रौहिणेयो जरासन्धवधोऽमलः ।
नागोजवाम्भो विरुदो वीरहा वरदो बली ॥ २२

गोपदो विजयी विद्वान् शिपिविष्टःसनातनः ।
पर्शुरामवचोग्राही वरग्राही सृगालहा ॥ २३

दमघोषोपदेष्टा च रथग्राही सुदर्शनः ।
वीरपत्नीयशस्त्राता जराव्याधिविघातकः ॥ २४

द्वारकावासतत्त्वज्ञो हुताशनवरप्रदः ।
यमुनावेगसंहारी नीलाम्बरधरः प्रभुः ॥ २५

विभुः शरासनो धन्वी गणेशो गणनायकः ।
लक्ष्मणो लक्षणो लक्ष्यो रक्षोवंशविनाशकः ॥ २६

वामनो वामनीभूतो वमनो वमनारुहः ।
यशोदानन्दनः कर्ता यमळार्जुनमुक्तिदः ॥ २७

उलूखली महामानो दामबद्धाह्वयी शमी ।
भक्तानुकारी भगवान् केशवोऽचलधारकः ॥२८

केशिहा मधुहा मोही वृषासुरविघातकः ।
अघासुरविघाती च पूतनामोक्षदायकः ॥ २९

कुब्जाविनोदी भगवान् कंसमृत्युर्महामखी ।
अश्वमेधो वाजपेयो गोमेधो नरमेधवान् ॥ ३०

कन्दर्पकोटिलावण्यः चन्द्रकोटिसुशीतलः ।
रविकोटिप्रतीकाशो वायुकोटिमहाबलः ॥ ३१

ब्रह्मा ब्रह्माण्डकर्ता च कमलावाञ्छितप्रदः ।
कमली कमलाक्षश्च कमलामुखलोलुपः ॥ ३२

कमलाव्रतधारी च कमलाभः पुरन्दरः ।
सौभाग्याधिकचित्तश्च महामायी मदोत्कटः ॥ ३३

ताटकारिस्सुरत्राता मारीचक्षोभकारकः ।
विश्वामित्रप्रियो दान्तो रामो राजीवलोचनः ॥ ३४

लङ्काधिपकुलध्वंसी विभीषणवरप्रदः ।
सीतानन्दकरो रामो वीरो वारिधिबन्धनः ॥ ३५

खरदूषणसंहारी साकेतपुरवासवान् ।
चन्द्रावळीपतिः कूलः केशिकंसवधोऽमरः ॥ ३६

माधवो मधुहा माध्वी माध्वीको माधवीविभुः ।
मुञ्जाटवीगाहमानो धेनुकारिर्धरात्मजः ॥ ३७

वंशीवटविहारी च गोवर्धनवनाश्रयः ।
तथा ताळवनोद्देशी भाण्डीरवनशङ्करः ॥ ३८

तृणावर्तकथाकारी वृषभानुसुतापतिः ।
राधाप्राणसमो राधावदनाब्जमधुव्रतः ॥ ३९

गोपीरञ्जनदैवज्ञो लीलाकमलपूजितः ।
क्रीडाकमलसन्दोहो गोपिकाप्रीतिरञ्जनः ॥ ४०

रञ्जको रञ्जनो रङ्गो रङ्गी रङ्गमहीरुहः ।
कामः कामारिभक्तश्च पुराणपुरुषः कविः ॥ ४१

नारदो देवलो भीमो बालो बालमुखाम्बुजः ।
अम्बुजो ब्रह्मसाक्षी च योगी दत्तवरो मुनिः ॥ ४२

ऋषभः पर्वतो ग्रामो नदीपवनवल्लभः ।
पद्मनाभस्सुरज्येष्ठो ब्रह्मा रुद्रोऽहिभूषितः ॥ ४३

गणानां त्राणकर्ता च गणेशो ग्रहिळो ग्रही ।
गणाश्रयो गणाध्यक्षः क्रोडीकृतजगत्त्रयः ॥ ४४

यादवेन्द्रो द्वारकेन्द्रो मधुरावल्लभो धुरी ।
भ्रमरः कुन्तली कुन्तीसुतरक्षी महामनाः ॥ ४५

यमुनावरदाता च काश्यपस्य वरप्रदः ।
शङ्खचूडवधोद्दामो गोपीरक्षणतत्परः ॥ ४६

पाञ्चजन्यकरो रामी त्रिरामी वनजो जयः ।
फाल्गुनः फल्गुनसखो विराधवधकारकः ॥ ४७

रुक्मिणीप्राणनाथश्च सत्यभामाप्रियंकरः ।
कल्पवृक्षो महावृक्षो दानवृक्षो महाफलः ॥ ४८

अङ्कुशो भूसुरो भावो भामको भ्रामको हरिः ।
सरळः शाश्वतो वीरो यदुवंशशिवात्मकः ॥ ४९

प्रद्युम्नो बलकर्ता च प्रहर्ता दैत्यहा प्रभुः ।
महाधनो महावीरो वनमालाविभूषणः ॥ ५०

तुलसीदामशोभाढ्यो जालन्धरविनाशनः ।
शूरस्सूर्यो मृकण्डुश्च भास्वरो विश्वपूजितः ॥ ५१

रविस्तमोहा वह्निश्च बाडबो बडबानलः ।
दैत्यदर्पविनाशी च गरुडो गरुडाग्रजः ॥ ५२

गोपीनाथो महीनाथो बृन्दानाथोऽवरोधकः ।
प्रपञ्ची पञ्चरूपश्च लता गुल्मश्च गोमती ॥ ५३

गङ्गा च यमुनारूपो गोदा वेत्रवती तथा ।
कावेरी नर्मदा तापी गण्डकी सरयू रजः ॥ ५४

राजसस्तामसस्सत्वी सर्वाङ्गी सर्वलोचनः ।
सुधामयोऽमृतमयो योगिनां वल्लभश्शिवः ॥ ५५

बुद्धो बुद्धिमतां श्रेष्ठो विष्णुर्जिष्णुश्शचीपतिः ।
वंशी वंशधरो लोको विलोको मोहनाशनः ॥ ५६

रवरावो रवो रावो बलो बालो वलाहकः ।
शिवो रुद्रो नलो नीलो लाङ्गली लाङ्गलाश्रयः ॥ ५७

पारदः पावनो हंसो हंसारूढो जगत्पतिः ।
मोहिनीमोहनो मायी महामायो महासुखी ॥ ५८

वृषो वृषाकपिः कालः कालीदमनकारकः ।
कुब्जाभाग्यप्रदो वीरो रजकक्षयकारकः ॥ ५९

कोमलो वारुणो राजा जलजो जलधारकः ।
हारकस्सर्वपापघ्नः परमेष्ठी पितामहः ॥ ६०

खड्गधारी कृपाकारी राधारमणसुन्दरः ।
द्वादशारण्यसम्भोगी शेषनागफणालयः ॥ ६१

कामः श्यामः सुखश्रीदः श्रीपतिः श्रीनिधिः कृती ।
हरिर्हरो नरो नारो नरोत्तम इषुप्रियः ॥ ६२

गोपालचित्तहर्ता च कर्ता संसारतारकः ।
आदिदेवो महादेवो गौरीगुरुरनाश्रयः ॥ ६३

साधुर्मधुर्विधुर्धाता त्राताऽक्रूरपरायणः ।
रोलम्बी च हयग्रीवो वानरारिर्वनाश्रयः ॥ ६४

वनं वनी वनाध्यक्षो महावन्द्यो महामुनिः ।
स्यमन्तकमणीप्राज्ञो विज्ञो विघ्नविघातकः ॥६५

गोवर्धनो वर्धनीयो वर्धनीवर्धनप्रियः ।
वर्धन्यो वर्धनो वर्धी वर्धिष्णुस्तु सुखप्रियः ॥ ६६

वर्धितो वर्धको वृद्धो बृन्दारकजनप्रियः ।
गोपालरमणीभर्ता साम्बकुष्ठविनाशनः ॥ ६७

रुक्मिणीहरणः प्रेमा प्रेमी चन्द्रावलीपतिः ।
श्रीकर्ता विश्वभर्ता च नरो नारायणो बली ॥ ६८

गणो गणपतिश्चैव दत्तात्रेयो महामुनिः ।
व्यासो नारायणो दिव्यो भव्यो भावुकधारकः ॥ ६९

श्वःश्रेयसं शिवं भद्रं भावुकं भविकं शुभम् ।
शुभात्मकः शुभः शास्ता प्रशास्तो मेघनादहा ॥ ७०

ब्रह्मण्यदेवो दीनानामुद्धारकरणक्षमः ।
कृष्णः कमलपत्राक्षः कृष्णः कमललोचनः ॥ ७१

कृष्णः कामी सदाकृष्णः समस्तप्रियकारकः ।
नन्दो नन्दी महानन्दी मादी मादनकः किली ॥ ७२

मिली हिली गिली गोली गोलो गोलालयो गुली ।
गुग्गुली मारकी शाखी वटः पिप्पलकः कृती ॥ ७३

म्लेच्छहा कालहर्ता च यशोदो यश एव च ।
अच्युतः केशवो विष्णुः हरिस्सत्यो जनार्दनः ॥ ७४

हंसो नारायणो नीलो लीनो भक्तिपरायणः ।
जानकीवल्लभो रामो विरामो विषनाशनः ॥ ७५

सिंहभानुर्महाभानुर्वीरभानुर्महोदधिः ।
समुद्रोऽब्धिरकूपारः पारावारस्सरित्पतिः ॥ ७६

गोकुलानन्दकारी च प्रतिज्ञापरिपालकः ।
सदारामः कृपारामो महारामो धनुर्धरः ॥ ७७

पर्वतः पर्वताकारो गयो गेयो द्विजप्रियः ।
कंबलाश्वतरो रामो रामायणप्रवर्तकः ॥ ७८

द्यौर्दिवो दिवसो दिव्यो भव्यो भागी भयापहः ।
पार्वतीभाग्यसहितो भर्ता लक्ष्मीसहायवान् ॥ ७९

विलासी साहसी सर्वी गर्वी गर्वितलोचनः ।
मुरारिर्लोकधर्मज्ञो जीवनो जीवनान्तकः ॥ ८०

यमो यमारिर्यमनो यामी यमविघातकः
वंशुली पांशुली पांसुः पाण्डुरर्जुनवल्लभः ॥ ८१

ललिता चन्द्रिकामाला माली मालाम्बुजाश्रयः ।
अम्बुजाक्षो महायक्षो दक्षश्चिन्तामणिप्रभुः ॥८२

मणिर्दिनमणिश्चैव केदारो बदरीश्रयः ।
बदरीवनसम्प्रीतो व्यासस्सत्यवतीसुतः ॥ ८३

अमरारिनिहन्ता च सुधासिन्धुविधूदयः ।
चन्द्रो रविश्शिवः शूली चक्री चैव गदाधरः ॥ ८४

श्रीकर्ता श्रीपतिश्श्रीदः श्रीदेवो देवकीसुतः ।
श्रीपतिः पुण्डरीकाक्षः पद्मनाभो जगत्पतिः ॥ ८५

वासुदेवोऽप्रमेयात्मा केशवो गरुडध्वजः ।
नारायणः परन्धाम देवदेवो महेश्वरः ॥ ८६

चक्रपाणिः कलापूर्णो वेदवेद्यो दयानिधिः ।
भगवान्सर्वभूतेशो गोपालस्सर्वपालकः ॥ ८७

अनन्तो निर्गुणो नित्यो निर्विकल्पो निरंजनः ।
निराधारो निराकारो निराभासो निराश्रयः ॥ ८८

पुरुषः प्रणवातीतो मुकुन्दः परमेश्वरः ।
क्षणावनिस्सार्वभौमो वैकुण्ठो भक्तवत्सलः ॥ ८९

विष्णुर्दामोदरः कृष्णो माधवो मधुरापतिः ।
देवकीगर्भसम्भूतो यशोदावत्सलो हरिः ॥ ९०

शिवस्सङ्कर्षणश्शम्भुर्भूतनाथो दिवस्पतिः ।
अव्ययस्सर्वधर्मज्ञो निर्मलो निरुपद्रवः ॥ ९१

निर्वाणनायको नित्यो नीलजीमूतसन्निभः ।
कलाध्यक्षश्च सर्वज्ञः कमलारूपतत्परः ॥ ९२

हृषीकेशः पीतवासा वसुदेवप्रियात्मजः ।
नन्दगोपकुमारार्यो नवनीताशनो विभुः ॥ ९३

पुराणः पुरुषः श्रेष्ठश्शङ्खपाणिस्सुविक्रमः ।
अनिरुद्धश्चक्रधरः शार्ङ्गपाणिश्चतुर्भुजः ॥ ९४

गदाधरस्सुरार्तिघ्नो गोविन्दो नन्दकायुधः ।
बृन्दावनचरश्शौरिर्वेणुवाद्यविशारदः ॥ ९५

तृणावर्तान्तको भीमसाहसो बहुविक्रमः ।
शकटासुरसंहारी बकासुरविनाशनः ॥ ९६

धेनुकासुरसंहारी पूतनारिर्नृकेसरी ।
पितामहो गुरुस्साक्षी प्रत्यगात्मा सदाशिवः ॥ ९७

अप्रमेयः प्रभुः प्राज्ञोऽप्रतर्क्यः स्वप्नवर्धनः ।
धन्यो मान्यो भवो भावो घोरश्शान्तो जगद्गुरुः ॥ ९८

अन्तर्यामीश्वरो दिव्यो दैवज्ञो देवसंस्तुतः ।
क्षीरब्धिशयनो धाता लक्ष्मीवान् लक्ष्मणाग्रजः ॥ ९९

धात्रीपतिरमेयात्मा चन्द्रशेखरपूजितः ।
लोकसाक्षी जगच्चक्षुः पुण्यचारित्रकीर्तनः ॥ १००

कोटिमन्मथसौन्दर्यो जगन्मोहनविग्रहः ।
मन्दस्मिततनुर्गोपगोपिकापरिवेष्टितः ॥ १०१

फुल्लारविन्दनयनश्चाणूरान्ध्रनिषूदनः ।
इन्दीवरदळश्यामो बर्हिबर्हावतंसकः ॥ १०२

मुरळीनिनदाह्लादो दिव्यमालाम्बरावृतः ।
सुकपोलयुगस्सुभ्रूयुगळस्सुललाटकः ॥ १०३

कम्बुग्रीवो विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ।
पीनवक्षाश्चतुर्बाहुश्चतुर्मूर्तिस्त्रिविक्रमः ॥ १०४

कलङ्करहितश्शुद्धो दुष्टशत्रुनिबर्हणः ।
किरीटकुण्डलधरः कटकाङ्गदमण्डितः ॥ १०५

मुद्रिकाभरणोपेतः कटिसूत्रविराजितः ।
मञ्जीररञ्जितपदस्सर्वाभरणभूषितः ॥ १०६

विन्यस्तपादयुगळो दिव्यमङ्गळविग्रहः ।
गोपिकानयनानन्दः पूर्णचन्द्रनिभाननः ॥ १०७

समस्तजगदानन्दस्सुन्दरो लोकनन्दनः ।
यमुनातीरसञ्चारी राधामन्मथवैभवः ॥ १०८

गोपनारीप्रियो दान्तो गोपीवस्त्रापहारकः ।
शृङ्गारमूर्तिश्श्रीधामा तारको मूलकारणम् ॥ १०९

सृष्टिसंरक्षणोपायः क्रूरासुरविभञ्जनः ।
नरकासुरसंहारी मुरारिर्वैरिमर्दनः ॥ ११०

आदितेयप्रियो दैत्यभीकरो यदुशेखरः ।
जरासन्धकुलध्वंसी कंसारातिस्सुविक्रमः ॥ १११

पुण्यश्लोकः कीर्तनीयो यादवेंद्रो जगन्नुतः ।
रुक्मिणीरमणस्सत्यभामाजाम्बवतीप्रियः ॥ ११२

मित्रविन्दानाग्नजितीलक्ष्मणासमुपासितः ।
सुधाकरकुले जातोऽनन्तः प्रबलविक्रमः ॥ ११३

सर्वसौभाग्यसम्पन्नो द्वारकापट्टणस्थितः ।
भद्रासूर्यसुतानाथो लीलामानुषविग्रहः ॥ ११४

सहस्रषोडशस्त्रीशो भोगमोक्षैकदायकः ।
वेदान्तवेद्यस्संवेद्यो वैद्यो ब्रह्माण्डनायकः ॥ ११५

गोवर्धनधरो नाथस्सर्वजीवदयापरः ।
मूर्तिमान्सर्वभूतात्मा आर्तत्राणपरायणः ॥ ११६

सर्वज्ञस्सर्वसुलभस्सर्वशास्त्रविशारदः ।
षड्गुणैश्वर्यसंपन्नः पूर्णकामो धुरन्धरः ॥ ११७

महानुभावः कैवल्यदायको लोकनायकः ।
आदिमध्यान्तरहितश्शुद्धसात्विकविग्रहः ॥ ११८

असमानः समस्तात्मा शरणागतवत्सलः ।
उत्पत्तिस्थितिसंहारकारणं सर्वकारणम् ॥ ११९

गम्भीरस्सर्वभावज्ञः सच्चिदानन्दविग्रहः ।
विष्वक्सेनस्सत्यसन्धस्सत्यवाक्सत्यविक्रमः ॥ १२०

सत्यव्रतस्सत्यरतः सत्यधर्मपरायणः ।
आपन्नार्तिप्रशमनो द्रौपदीमानरक्षकः ॥ १२१

कन्दर्पजनकः प्राज्ञो जगन्नाटकवैभवः ।
भक्तवश्यो गुणतीतस्सर्वैश्वर्यप्रदायकः ॥ १२२

दमघोषसुतद्वेषी बाणबाहुविखण्डनः ।
भीष्मभक्तिप्रदो दिव्यः कौरवान्वयनाशनः ॥ १२३

कौन्तेयप्रियबन्धुश्च पार्थस्यन्दनसारथिः ।
नारसिंहो महावीरः स्तम्भजातो महाबलः ॥ १२४

प्रह्लादवरदस्सत्यो देवपूज्योऽभयङ्करः ।
उपेन्द्र इन्द्रावरजो वामनो बलिबन्धनः ॥१२५

गर्जेद्रवरदस्स्वामी सर्वदेवनमस्कृतः ।
शेषपर्यङ्कशयनो वैनतेयरथो जयी ॥ १२६

अव्याहतबलैश्वर्यसंपन्नः पूर्णमानसः ।
योगीश्वरेश्वरस्साक्षी क्षेत्रज्ञो ज्ञानदायकः ॥ १२७

योगिहृत्पङ्कजावासो योगमायासमन्वितः ।
नादबिन्दुकळातीतश्चतुर्वर्गफलप्रदः ॥ १२८

सुषुम्नामार्गसञ्चारी देहस्यान्तरसंस्थितः ।
देहेन्द्रियमनःप्राणसाक्षी चेतःप्रसादकः ॥ १२९

सूक्ष्मस्सर्वगतो देही ज्ञानदर्पणगोचरः ।
तत्त्वत्रयात्मकोऽव्यक्तः कुण्डली समुपाश्रितः ॥ १३०

ब्रह्मण्यस्सर्वधर्मज्ञश्शान्तो दान्तो गतक्लमः ।
श्रीनिवासस्सदानन्दो विश्वमूर्तिर्महाप्रभुः ॥ १३१

सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् ।
समस्तभुवनाधारस्समस्तप्राणरक्षकः ॥ १३२

समस्तस्सर्वभावज्ञो गोपिकाप्राणवल्लभः ।
नित्योत्सवो नित्यसौख्यो नित्यश्रीर्नित्यमङ्गळम् ॥ १३३

व्यूहार्चितो जगन्नाथः श्रीवैकुण्ठपुराधिपः ।
पूर्णानन्दघनीभूतो गोपवेषधरो हरिः ॥ १३४

कलापकुसुमश्यामः कोमलश्शान्तविग्रहः ।
गोपाङ्गनावृतोऽनन्तो बृन्दावनसमाश्रयः ॥ १३५

वेणुनादरतश्श्रेष्ठो देवानां हितकारकः ।
जलक्रीडासमासक्तो नवनीतस्य तस्करः ॥ १३६

गोपालकामिनीजारश्चोरजारशिखामणिः ।
पर ज्योतिः पराकाशः परावासः परिस्फुटः ॥ १३७

अष्टादशाक्षरो मन्त्रो व्यापको लोकपावनः ।
सप्तकोटिमहामन्त्रशेखरो देवशेखरः ॥ १३८

विज्ञानज्ञानसन्धानस्तेजोराशिर्जगत्पतिः ।
भक्तलोकप्रसन्नात्मा भक्तमन्दारविग्रहः ॥ १३९

भक्तदारिद्र्यशमनो भक्तानां प्रीतिदायकः ।
भक्ताधीनमनःपूज्यो भक्तलोकशिवङ्करः ॥ १४०

भक्ताभीष्टप्रदस्सर्वभक्ताघौघनिकृन्तकः ।
अपारकरुणासिन्धुर्भगवान् भक्ततत्परः ॥ १४१

इति श्रीराधिकानाथनाम्नां साहस्रमीरितम् ।
स्मरणात्पापराशीनां खण्डनं मृत्युनाशनम् ॥ १४२

वैष्णवानां प्रियकरं महादारिद्र्यनाशनम् ।
ब्रह्महत्या सुरापानं परस्त्रीगमनं तथा ॥ १४३

परद्रव्यापहरणं परद्वेषसमन्वितम् ।
मानसं वाचिकं कायं यत्पापं पापसम्भवम् ॥ १४४

सहस्रनामपठनात्सर्वे नश्यन्ति तत्क्षणात् ।
महादारिद्र्ययुक्तो वै वैष्णवो विष्णुभक्तिमान् ॥ १४५

कार्तिक्यां यः पठेद्रात्रौ शतमष्टोत्तरं क्रमात् ।
पीताम्बरधरो धीमान्सुगन्धी पुष्पचन्दनैः ॥ १४६

पुस्तकं पूजयित्वा च नैवेद्यादिभिरेव च ।
राधाध्यानाङ्कितो धीरो वनमालाविभूषितः ॥ १४७

शतमष्टोत्तरं देवि पठेन्नामसहस्रकम् ।
चैत्रे कृष्णे च शुक्ले च कुहूसंक्रान्तिवासरे ॥ १४८

पठितव्यं प्रयत्नेन त्रैलोक्यं मोहयेत्क्षणात् ।
तुळसीमालया युक्तो वैष्णवो भक्तितत्परः ॥ १४९

रविवारे च शुक्रे च द्वादश्यां श्राद्धवासरे ।
ब्राह्मणं पूजयित्वा च भोजयित्वा विधानतः ॥ १५०

पठेन्नामसहस्रश्च ततस्सिद्धिः प्रजायते।
महानिशायां सततं वैष्णवो यः पठेत्सदा॥ १५१

देशान्तरगता लक्ष्मीस्समायाति न संशयः।
त्रैलोक्ये तु महादेवि सुन्दर्यः काममोहिताः॥ १५२

मुग्धास्स्वयं समायान्ति वैष्णवश्च भजन्ति ताः।
रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बन्धनात्॥ १५३

गर्भिणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम्।
राजानो वशतां यान्ति किं पुनः क्षुद्रमानुषाः॥ १५४

सहस्रनामश्रवणात्पठनात्पूजनात्प्रिये।
धारणात्सर्वमाप्नोति वैष्णवो नात्र संशयः॥ १५५

वंशीवटे चान्यवटे तथा पिप्पलकेऽथवा।
कदम्बपादपतले श्रीगोपालस्य सन्निधौ॥ १५६

यः पठेद्वैष्णवो नित्यं स याति हरिमन्दिरम्।
कृष्णेनोक्तं राधिकायै तया प्रोक्तं पुरा शिवे॥ १५७

नारदाय मया प्रोक्तं नारदेन प्रकाशितम्।
मया तव वरारोहे प्रोक्तमेतत्सुदुर्लभम्॥ १५८

गोपनीयं प्रयत्नेन न प्रकाश्यं कदाचन।
शठाय पापिने चैव लम्पटाय विशेषतः॥ १५९

न दातव्यं न दातव्यं न दातव्यं कदाचन।
देयं शान्ताय शिष्याय विष्णुभक्तिरताय च॥ १६०

गोदानब्रह्मयज्ञादेर्वाजपेयशतस्य च।
अश्वमेधसहस्रस्य फलं पाठे भवेद्ध्रुवम्॥ १६१

मोहनं स्तम्भनं चैव मारणोच्चाटनादिकम् ।
यद्यद्वाञ्छति चित्तेन तत्तत्प्राप्नोति वैष्णवः ॥ १६२

एकादश्यां नरस्स्नात्वा सुगन्धद्रव्यतैलकैः ।
आहारं ब्राह्मणे दत्वा दक्षिणां स्वर्णभूषणम् ॥ १६३

ततः प्रारम्भकर्ताऽसौ सर्वं प्राप्नोति मानवः ।
शतावृत्तसहस्रं च यः पठेद्वैष्णवो जनः ॥ १६४

श्रीबृन्दावनचन्द्रस्य प्रसादात्सर्वमाप्नुयात् ।
यद्गृहे पुस्तकं देवि पूजितं चैव तिष्ठति ॥ १६५

न मारी न च दुर्भिक्षं नोपसर्गभयं क्वचित् ।
सर्पादिभूतयक्षाद्या नश्यन्ते नात्र संशयः ॥ १३६

श्रीगोपालो महादेवि वसेत्तस्य गृहे सदा ।
यद्गृहे च सहस्रं च नाम्नां तिष्ठति पूजितम् ॥ १६७

—श्रीसम्मोहनतन्त्रतः

॥ श्रीः ॥

## ॥ श्रीगोपालसहस्रनामावळिः ॥

(ओं क्लीं देवाय नमः । कामदेवाय । कामबीज शिरोमणये ।)

श्रीगोपालाय नमः । महीपालाय । वेदवेदांगपारगाय । कृष्णाय । कमलपत्राक्षाय । पुण्डरीकाय । सनातनाय । गोपतये । भूपतये । शास्त्रे । प्रहर्त्रे । विश्वतोमुखाय । आदिकर्त्रे । महाकर्त्रे । महाकालाय । प्रतापवते । जगज्जीवाय । जगद्धात्रे । जगद्भर्त्रे । जगद्वसवे नमः ॥ २०

ओं मत्स्याय नमः । भीमाय । कुहूभर्त्रे । हर्त्रे । वाराहमूर्तिमते । नारायणाय । हृषीकेशाय । गोविंदाय । गरुडध्वजाय । गोकुलेशाय ।

महाचन्द्राय। शर्वरीप्रियकारकाय। कमलामुखलोलाक्षाय। पुण्डरीकाय । शुभावहाय । दुर्वाससे । कपिलाय । भौमाय । सिन्धुसागरसंभवाय । गोविन्दाय नमः ॥ ४०

ओं गोपतये नमः । गोत्राय। काळिंदीप्रेमपूरकाय। गोपस्वामिने। गोकुलेंद्राय । गोवर्धनवरप्रदाय । नन्दादिगोकुलत्रात्रे । दात्रे । दारिद्र्यभंजनाय । सर्वमङ्गळदात्रे । सर्वकामवरप्रदाय । आदिकर्त्रे । महीभर्त्रे । सर्वसागरसिन्धुजाय। गजगामिने। गजोद्धारिणे। कामिने। कामकलानिधये। कळंकरहिताय। चन्द्रबिंबास्याय नमः ६०

ओं बिंबसत्तमाय नमः। मालाकारकृपाकाराय । कोकिलस्वरभूषणाय । रामाय । नीलांबराय । देवाय । हलिने । द्विविदमर्दनाय। सहस्राक्षपुरीभेत्त्रे । महामारीविनाशनाय। शिवाय। शिवतमाय। भेत्त्रे। बलारातिप्रपूजकाय। कुमारीवरदायिने। वरेण्याय। मीनकेतनाय। नराय । नारायणाय। धीराय नमः ८०

ओं धरापतये नमः । उदारधिये। श्रीपतये। श्रीनिधये। श्रीमते। मापतये। प्रतिराजघ्ने। बृन्दापतये। कुलाय। ग्रामिणे। धाम्ने। ब्रह्मणे। सनातनाय । रेवतीरमणाय । रामाय । प्रियाय । चंचललोचनाय । रामायणशरीराय। रामारामाय। श्रियःपतये नमः १००

ओं शर्वराय नमः। शर्वर्यै। शर्वाय। सर्वत्रशुभदायकाय। राधाय। राधयित्रे । राधिने । राधाचित्तप्रमोदकाय । राधारतिसुखोपेताय । राधामोहनतत्पराय । राधावशीकराय । राधाहृदयांभोजषट्पदाय । राधालिंगनसम्मोदाय । राधानर्तनकौतुकाय । राधासंजातसंप्रीतये । राधाकामफलप्रदाय। बृंदापतये। कोकनिधये। कोकशोकविनाशनाय। चन्द्रापतये नमः १२०

ओं चन्द्रपतये नमः । चंडकोदंडभंजनाय। रामाय दाशरथये । रामाय । भृगुवंशसमुद्भवाय। आत्मारामाय। जितक्रोधाय। अमोहाय।

मोहांधभंजनाय। वृषभानुभवाय। भाविने। काश्यपये। करुणानिधये। कोलाहलाय । हलाय । हालिने । हलिने । हलधरप्रियाय । राधामुखाब्जमार्तांडाय। भास्कराय नमः १४०

ओं रविजाय नमः। विधवे। विधये। विधात्रे। वरुणाय। वारुणाय । वारुणीप्रियाय । रोहिणीहृदयानंदिने । वसुदेवात्मजाय । बलिने । नीलांबराय। रौहिणेयाय। जरासंधवधाय। अमलाय। नागोजवांभाय। बिरुदाय। वीरघ्ने। वरदाय। बलिने। गोपदाय नमः १६०

ओं विजयिने नमः । विदुषे । शिपिविष्टाय । सनातनाय । पर्शुरामवचोग्राहिणे। वरग्राहिणे। सृगालघ्ने। दमघोषोपदेष्ट्रे। रथग्राहिणे । सुदर्शनाय । हरग्राहिणे। वीरपत्नीयशस्त्रात्रे। जराव्याधिविघातकाय। द्वारकावासतत्त्वज्ञाय । हुताशनवरप्रदाय । यमुनावेगसंहारिणे । नीलांबरधराय। प्रभवे। विभवे। शरासनाय। धन्विने नमः ॥ १८०

ओं गणेशाय नमः । गणनायकाय । लक्ष्मणाय । लक्षणाय । लक्ष्याय । रक्षोवंशविनाशकाय। वामनाय। वामनीभूताय। वमनाय। वमनारुहाय। यशोदानन्दनाय। कर्त्रे। यमलार्जुनमुक्तिदाय। उलूखलिने । महामानाय। दामबद्धाह्वयिने। शमिने। भक्तानुकारिणे। भगवते। केशवाय नमः ॥ २००

ओं अचलधारकाय नमः । केशिघ्ने । मधुघ्ने । मोहिने । वृषासुरविधातकाय । अघासुरविघातिने । पूतनामोक्षदायकाय । कुब्जाविनोदिने । भगवते । कंसमृत्यवे । महामखिने । अश्वमेधाय । वाजपेयाय । गोमेधाय । नरमेधवते । कंदर्पकोटिलावण्याय । चन्द्रकोटिसुशीतलाय । रविकोटिप्रतीकाशाय । वायुकोटिमहाबलाय । ब्रह्मणे नमः ॥ २२०

ओं ब्रह्मांडकर्त्रे। कमलावांछितप्रदाय। कमलिने। कमलाक्षाय। कमलामुखलोलुपाय । कमलाव्रतधारिणे । कमलाभाय । पुरंदराय ।

सौभाग्याधिकचित्ताय। महामायिने। मदोत्कटाय। ताटकारये। सुरत्रात्रे । मारीचक्षोभकारकाय । विश्वामित्रप्रियाय । दान्ताय । रामाय । राजीवलोचनाय। लंकाधिपकुलध्वंसिने। विभीषणवरप्रदाय नमः ॥ २४०

ओं सीतानन्दकराय नमः । रामाय । वीराय । वारिधिबंधनाय । खरदूषणसंहारिणे । साकेतपुरवासवते । चन्द्रावलीपतये । कूलाय । केशिकंसवधाय। अमराय। माधवाय। मधुघ्ने। माध्विने। माध्वीकाय। माधवीविभवे । मुंजाटवीगाहमानाय । धेनुकारये । धरात्मजाय । वंशीवटविहारिणे। गोवर्धनवनाश्रयाय नमः ॥ २६०

ओं ताळवनोद्देशिने नमः । भांडीरवनशंकराय । तृणावर्त-कथाकारिणे । वृषभानुसुतापतये । राधाप्राणसमाय । राधावदनाब्ज-मधुव्रताय । गोपीरंजनदैवज्ञाय । लीलाकमलपूजिताय । क्रीडाकमल-संदोहाय। गोपिकाप्रीतिरंजनाय। रंजकाय। रंजनाय। रंगाय । रंगिणे। रंगमहीरुहाय । कामाय । कामारिभक्ताय । पुराणपुरुषाय । कवये । नारदाय नमः ॥ २८०

ओं देवलाय नमः । भीमाय । बालाय । बालमुखांबुजाय । अंबुजाय । ब्रह्मसाक्षिणे । योगिने । दत्तवराय । मुनये । ऋषभाय । पर्वताय । ग्रामाय । नदीपवनवल्लभाय । पद्मनाभाय । सुरज्येष्ठाय । ब्रह्मणे । रुद्राय । अहिभूषिताय । गणानां त्राणकर्त्रे । गणेशाय नमः ॥ ३००

ओं ग्रहिळाय नमः । ग्रहिणे । गणाश्रयाय । गणाध्यक्षाय । क्रोडीकृतजगत्त्रयाय। यादवेंद्राय। द्वारकेंद्राय। मधुरावल्लभाय। धुरिणे। भ्रमराय । कुंतलिने । कुंतीसुतरक्षिणे । महामनसे । यमुनावरदात्रे । काश्यपस्य वरप्रदाय । शङ्खचूडवधोद्दामाय । गोपीरक्षणतत्पराय । पांचजन्यकराय। रामिणे। त्रिरामिणे नमः ॥ ३२०

ओं वनजाय नमः । जयाय । फाल्गुनाय । फाल्गुनसखाय । विराधवधकारकाय । रुक्मिणीप्राणनाथाय । सत्यभामाप्रियंकराय । कल्पवृक्षाय। महावृक्षाय। दानवृक्षाय। महाफलाय। अंकुशाय। भूसुराय । भावाय । भामकाय । भ्रामकाय । हरये । सरळाय । शाश्वताय । वीराय नमः ।। ३४०

ओं यदुवंशशिवात्मकाय । प्रद्युम्नाय । बलकर्त्रे । प्रहर्त्रे । दैत्यघ्ने । प्रभवे । महाधनाय । महावीराय । वनमालाविभूषणाय । तुलसीदामशोभाढ्याय। जालन्धरविनाशनाय। शूराय। सूर्याय। मृकंडवे । भास्वराय। विश्वपूजिताय। रवये। तमोघ्ने। वह्नये। बाडबाय नमः ।। ३६०

ओं बडबानलाय नमः । दैत्यदर्पविनाशिने । गरुडाय । गरुडाग्रजाय । गोपीनाथाय। महीनाथाय। बृन्दानाथाय। अवरोधकाय । प्रपंचिने। पंचरूपाय। लतायै। गुल्माय। गोमत्यै। गङ्गायै। यमुनारूपाय । गोदायै। वेत्रवत्यै। कावेर्यै। नर्मदायै। ताप्यै नमः ।। ३८०

ओं गंडक्यै नमः। सरय्वे। रजसे। राजसाय। तामसाय। सत्त्विने । सर्वांगिने। सर्वलोचनाय। सुधामयाय। अमृतमयाय। योगिनां वल्लभाय । शिवाय । बुद्धाय बुद्धिमतां श्रेष्ठाय । विष्णवे । जिष्णवे । शचीपतये । वंशिने। वंशधराय । लोकाय। विलोकाय नमः ।। ४००

ओं मोहनाशनाय नमः । रवरावाय । रवाय । रावाय । बलाय । बालाय। बलाहकाय। शिवाय। रुद्राय। नलाय। नीलाय। लांगलिने। लांगलाश्रयाय। पारदाय। पावनाय। हंसाय। हंसारूढाय। जगत्पतये। मोहिनीमोहनाय। मायिने नमः ।। ४२०

ओं महामायाय नमः। महासुखिने। वृषाय। वृषाकपये। कालाय । कालीदमनकारकाय। कुब्जाभाग्यप्रदाय। वीराय। रजकक्षयकारकाय।

कोमलाय । वारुणाय । राज्ञे । जलजाय । जलधारकाय । हारकाय । सर्वपापघ्नाय । परमेष्ठिने । पितामहाय । खड्गधारिणे । कृपाकारिणे नमः ॥ ४४०

ओं राधारमणसुन्दराय नमः । द्वादशारण्यसंभोगिने । शेषनागफणालयाय । कामाय । श्यामाय । सुखश्रीदाय । श्रीपतये । श्रीनिधये । कृतिने । हरये । हराय । नराय । नाराय । नरोत्तमाय । इषुप्रियाय । गोपालचित्तहर्त्रे । कर्त्रे । संसारतारकाय । आदिदेवाय । महादेवाय नमः ४६०

ओं गौरीगुरवे नमः । अनाश्रयाय । साधवे । मधवे । विधवे । धात्रे । त्रात्रे । अक्रूरपरायणाय । रोलंबिने । हयग्रीवाय । वानरारये । वनाश्रयाय । वनाय । वनिने । वनाध्यक्षाय । महावन्द्याय । महामुनये । स्यमंतकमणिप्राज्ञाय । विज्ञाय । विघ्नविघातकाय नमः ४८०

ओं गोवर्धनाय नमः । वर्धनीयाय । वर्धनीवर्धनप्रियाय । वार्धन्याय । वर्धनाय । वर्धिने । वर्धिष्णवे । सुखप्रियाय । वर्धिताय । वर्धकाय । वृद्धाय । बृंदारकजनप्रियाय । गोपालरमणीभर्त्रे । सांबकुष्ठविनाशनाय । रुक्मिणीहरणाय । प्रेम्णे । प्रेमिणे । चन्द्रावलीपतये । श्रीकर्त्रे । विश्वभर्त्रे नमः ॥ ५००

ओं नराय नमः । नारायणाय । बलिने । गणाय । गणपतये । दत्तात्रेयाय । महामुनये । व्यासाय । नारायणाय । दिव्याय । भव्याय । भावुकधारकाय । श्वःश्रेयसाय । शिवाय । भद्राय । भावुकाय । भविकाय । शुभाय । शुभात्मकाय । शुभाय नमः ॥ ५२०

ओं शास्त्रे नमः । प्रशस्ताय । मेघनादघ्ने । ब्रह्मण्यदेवाय । दीनानामुद्धारकरणक्षमाय । कृष्णाय । कमलपत्राक्षाय । कृष्णाय । कमललोचनाय । कृष्णाय । कामिने । सदाकृष्णाय ।

समस्तप्रियकारकाय । नन्दाय । नन्दिने । महानन्दिने । मादिने । मादनकाय । किलिने । मिलिने नमः ।। ५४०

ओं हिलिने नमः । गिलिने । गोलिने । गोलाय । गोलालयाय । गुलिने । गुग्गुलिने । मारकिने । शाखिने । वटाय । पिप्पलकाय । कृतिने । म्लेच्छघ्ने । कालहर्त्रे । यशोदाय । यशसे । अच्युताय । केशवाय । विष्णवे । हरये नमः ।। ५६०

ओं सत्याय नमः । जनार्दनाय । हंसाय । नारायणाय । नीलाय । लीनाय । भक्तिपरायणाय । जानकीवल्लभाय । रामाय । विरामाय । विषनाशनाय । सिंहभानवे । महाभानवे । वीरभानवे । महोदधये । समुद्राय । अब्धये । अकूपाराय । पारावाराय । सरित्पतये नमः ।। ५८०

ओं गोकुलानन्दकारिणे नमः । प्रतिज्ञापरिपालकाय । सदारामाय । कृपारामाय । महारामाय । धनुर्धराय । पर्वताय । पर्वताकाराय । गयाय । गेयाय । द्विजप्रियाय । कम्बलाश्वतराय । रामाय । रामायणप्रवर्तकाय । दिवे । दिवो । दिवसाय । दिव्याय । भव्याय । भागिने । भयापहाय नमः ।। ६००

ओं पार्वतीभाग्यसहिताय नमः । भर्त्रे । लक्ष्मीसहायवते । विलासिने । साहसिने । सर्विने । गर्विने । गर्वितलोचनाय । मुरारये । लोकधर्मज्ञाय । जीवनाय । जीवनांतकाय । यमाय । यमारये । यमनाय । यमिने । यमविघातकाय । वंशुलिने । पांशुलिने । पांसवे नमः ।। ६२०

ओं पाण्डवे नमः । अर्जुनवल्लभाय । ललितायै । चन्द्रिकामालायै । मालिने । मालांबुजाश्रयाय । अंबुजाक्षाय । महायक्षाय । दक्षाय । चिंतामणिप्रभवे । मणये । दिनमणये । केदाराय । बदरीश्रयाय । बदरीवनसंप्रीताय । व्यासाय । सत्यवतीसुताय । अमरारिनिहंत्रे । सुधासिंधुविधूदयाय । चन्द्राय नमः ।। ६४०

ओं रवये नमः। शिवाय। शूलिने। चक्रिणे। गदाधराय। श्रीकर्त्रे। श्रीपतये। श्रीदाय। श्रीदेवाय। देवकीसुताय। श्रीपतये। पुंडरीकाक्षाय। पद्मनाभाय। जगत्पतये। वासुदेवाय। अप्रमेयात्मने। केशवाय। गरुडध्वजाय। नारायणाय। परस्मै धाम्ने नमः ॥ ६६०

ओं देवदेवाय नमः। महेश्वराय। चक्रपाणये। कलापूर्णाय। वेदवेद्याय। दयानिधये। भगवते। सर्वभूतेशाय। गोपालाय। सर्वपालकाय। अनन्ताय। निर्गुणाय। नित्याय। निर्विकल्पाय। निरंजनाय। निराधाराय। निराकाराय। निराभासाय। निराश्रयाय। पुरुषाय नमः ॥ ६८०

ओं प्रणवातीताय नमः। मुकुन्दाय। परमेश्वराय। क्षणावनये। सार्वभौमाय। वैकुण्ठाय। भक्तवत्सलाय। विष्णवे। दामोदराय। कृष्णाय। माधवाय। मधुरापतये। देवकीगर्भसंभूताय। यशोदावत्सलाय। हरये। शिवाय। संकर्षणाय। शंभवे। भूतनाथाय। दिवस्पतये नमः ॥ ७००

ओं अव्ययाय नमः। सर्वधर्मज्ञाय। निर्मलाय। निरुपद्रवाय। निर्वाणनायकाय। नित्याय। नीलजीमूतसन्निभाय। कलाध्यक्षाय। सर्वज्ञाय। कमलारूपतत्पराय। हृषीकेशाय। पीतवाससे। वसुदेवप्रियात्मजाय। नन्दगोपकुमारार्याय। नवनीताशनाय। विभवे। पुराणपुरुषाय। श्रेष्ठाय। शङ्खपाणये। सुविक्रमाय नमः ७२०

ओं अनिरुद्धाय नमः। चक्रधराय। शार्ङ्गपाणये। चतुर्भुजाय। गदाधराय। सुरार्तिघ्नाय। गोविंदाय। नन्दकायुधाय। बृन्दावनचराय। शौरये। वेणुवाद्यविशारदाय। तृणावर्तान्तकाय। भीमसाहसाय। बहुविक्रमाय। शकटासुसंहारिणे। बकासुरविनाशनाय। धेनुकासुरसंहारिणे। पूतनारये। नृकेसरिणे। पितामहाय नमः ॥ ७४०

ओं गुरवे नमः। साक्षिणे। प्रत्यगात्मने। सदाशिवाय। अप्रमेयाय। प्रभवे। प्राज्ञाय। अप्रतर्क्याय। स्वप्नवर्धनाय। धन्याय। मान्याय। भवाय। भावाय। घोराय। शान्ताय। जगद्गुरवे। अन्तर्यामिणे। ईश्वराय। दिव्याय। दैवज्ञाय नमः ॥ ७६०

ओं देवसंस्तुताय नमः। क्षीराब्धिशयनाय। धात्रे। लक्ष्मीवते। लक्ष्मणाग्रजाय। धात्रीपतये। अमेयात्मने। चन्द्रशेखरपूजिताय। लोकसाक्षिणे। जगच्चक्षुषे। पुण्यचारित्रकीर्तनाय। कोटिमन्मथसौंदर्याय। जगन्मोहनविग्रहाय। मंदस्मिततनवे। गोपगोपिकापरिवेष्टिताय। फुल्लारविन्दनयनाय। चाणूरान्ध्रनिषूदनाय नमः। इन्दीवरदळश्यामाय। बर्हिबर्हावतंसकाय। मुरळीनिनदाह्लादाय नमः ७८०

ओं दिव्यमालांबरावृताय नमः। सुकपोलयुगाय। सुभ्रूयुगलाय। सुललाटकाय। कंबुग्रीवाय। विशालाक्षाय। लक्ष्मीवते। शुभलक्षणाय। पीनवक्षसे। चतुर्बाहवे। चतुर्मूर्तये। त्रिविक्रमाय। कळंकरहिताय। शुद्धाय। दुष्टशत्रुनिबर्हणाय। किरीटकुंडलधराय। कटकांगदमंडिताय। मुद्रिकाभरणोपेताय। कटिसूत्रविराजिताय। मंजीररंजितपदाय नमः ॥ ८००

ओं सर्वाभरणभूषिताय नमः। विन्यस्तपादयुगळाय। दिव्यमङ्गळ-विग्रहाय। गोपिकानयनानन्दाय। पूर्णचन्द्रनिभाननाय। समस्तजग-दानन्दाय। सुन्दराय। लोकनन्दनाय। यमुनातीरसञ्चारिणे। राधामन्मथ-वैभवाय। गोपनारीप्रियाय। दान्ताय। गोपीवस्त्रापहाराकाय। शृङ्गारमूर्तये। श्रीधाम्ने। तारकाय। मूलकारणाय। सृष्टिसंरक्षणोपायाय। क्रूरासुरविभंजनाय। नरकासुरसंहारिणे नमः ८२०

ओं मुरारये नमः। वैरिमर्दनाय। आदितेयप्रियाय। दैत्यभीकराय। यदुशेखराय। जरासन्धकुलध्वंसिने। कंसारातये। सुविक्रमाय। पुण्य-

श्लोकाय । कीर्तनीयाय । यादवेन्द्राय । जगन्नुताय । रुक्मिणीरमणाय । सत्यभामाजाम्बवतीप्रियाय । मित्रविन्दानाग्नजितीलक्ष्मणासमुपासिताय । सुधाकरकुले जाताय । अनन्ताय । प्रबलविक्रमाय । सर्वसौभाग्यसंपन्नाय । द्वारकापट्टणस्थिताय नमः ।। ८४०

ओं भद्रासूर्यसुतानाथाय नमः । लीलामानुषविग्रहाय । सहस्रषोडशस्त्रीशाय । भोगमोक्षैकदायकाय । वेदान्तवेद्याय । संवेद्याय । वैद्याय । ब्रह्माण्डनायकाय । गोवर्धनधराय । नाथाय । सर्वजीवदयापराय । मूर्तिमते । सर्वभूतात्मने । आर्तत्राणपरायणाय । सर्वज्ञाय । सर्वसुलभाय । सर्वशास्त्रविशारदाय । षड्गुणैश्वर्यसंपन्नाय । पूर्णकामाय । धुरन्धराय नमः ।। ८६०

ओं महानुभावाय नमः । कैवल्यदायकाय । लोकनायकाय । आदिमध्यान्तरहिताय । शुद्धाय । सात्त्विकविग्रहाय । असमानाय । समस्तात्मने । शरणागतवत्सलाय । उत्पत्तिस्थितिसंहारकारणाय । सर्वकारणाय । गम्भीराय । सर्वभावज्ञाय । सच्चिदानन्दविग्रहाय । विष्वक्सेनाय । सत्यसन्धाय । सत्यवाचे । सत्यविक्रमाय । सत्यव्रताय । सत्यरताय नमः ।। ८८०

ओं सत्यधर्मपरायणाय नमः । आपन्नार्तिप्रशमनाय । द्रौपदीमानरक्षकाय । कन्दर्पजनकाय । प्राज्ञाय । जगन्नाटकवैभवाय । भक्तवश्याय । गुणातीताय । सर्वैश्वर्यप्रदायकाय । दमघोषसुतद्वेषिणे । बाणबाहुविखण्डनाय । भीष्ममुक्तिप्रदाय । दिव्याय । कौरवान्वयनाशनाय । कौन्तेयप्रियबन्धवे । पार्थस्यंदनसारथये । नारसिंहाय । महावीराय । स्तम्भजाताय । महाबलाय नमः ।। ९००

ओं प्रह्लादवरदाय नमः । सत्याय । देवपूज्याय । अभयंकराय । उपेन्द्राय । इन्द्रावरजाय । वामनाय । बलिबन्धनाय । गजेन्द्रवरदाय । स्वामिने । सर्वदेवनमस्कृताय । शेषपर्यङ्कशयनाय । वैनतेयरथाय । जयिने ।

अव्याहतबलैश्वर्यसंपन्नाय । पूर्णमानसाय । योगीश्वरेश्वराय । साक्षिणे । क्षेत्रज्ञाय । ज्ञानदायकाय नमः ९२०

ओं योगिहृत्पङ्कजावासाय नमः। योगमायासमन्विताय। नादबिन्दुकलातीताय । चतुर्वर्गफलप्रदाय । सुषुम्नामार्गसंचारिणे । देहस्यान्तरसंस्थिताय । देहेन्द्रियमनःप्राणसाक्षिणे । चेतःप्रसादकाय । सूक्ष्माय । सर्वगताय। देहिने। ज्ञानदर्पणगोचराय। तत्त्वत्रयात्मकाय। अव्यक्ताय । कुण्डलिने। समुपाश्रिताय। ब्रह्मण्याय। सर्वधर्मज्ञाय। शान्ताय । दान्ताय नमः ९४०

ओं गतक्लमाय नमः । श्रीनिवासाय । सदानन्दाय । विश्वमूर्तये । महाप्रभवे। सहस्रशीर्ष्णे पुरुषाय। सहस्राक्षाय। सहस्रपदे। समस्तभुवनाधाराय। समस्तप्राणरक्षकाय। समस्ताय। सर्वभावज्ञाय। गोपिकाप्राणवल्लभाय। नित्योत्सवाय। नित्यसौख्याय। नित्यश्रियै। नित्यमङ्गलाय। व्यूहार्चिताय। जगन्नाथाय नमः ९६०

ओं श्रीवैकुण्ठपुराधिपाय। पूर्णानन्दघनीभूताय। गोपवेषधराय । हरये। कलापकुसुमश्यामाय। कोमलाय। शान्तविग्रहाय । गोपाङ्गनावृताय। अनन्ताय। बृन्दावनसमाश्रयाय। वेणुनादरताय। श्रेष्ठाय । देवानां हितकारकाय । जलक्रीडासमासक्ताय । नवनीतस्य तस्कराय । गोपालकामिनीजाराय। चोरजारशिखामणये। परस्मै ज्योतिषे। पराकाशाय । परावासाय नमः । ९८०

ओं ओं परिस्फुटाय नमः । अष्टादशाक्षराय मन्त्राय। व्यापकाय। लोकपावनाय। सप्तकोटिमहामन्त्रशेखराय। देवशेखराय। विज्ञानज्ञानसन्धानाय । तेजोराशये । जगत्पतये । भक्तलोकप्रसन्नात्मने । भक्तमन्दारविग्रहाय । भक्तदारिद्र्यशमनाय । भक्तानां प्रीतिदायकाय । भक्ताधीनमनःपूज्याय । भक्तलोकशिवङ्कराय । भक्ताभीष्टप्रदाय । सर्वभक्ताघौघनिकृतंकाय। अपारकरुणासिन्धवे। भगवते। भक्ततत्पराय नमः ॥ १०००

श्रीः

# श्री राधाकृष्णयुगलसहस्रनामस्तोत्रम् ।।

(नारदीयपुराणतः)

सनत्कुमार उवाच—

किं त्वं नारद जानासि पूर्वजन्मनि यत्त्वया ।
प्राप्तं भगवतः साक्षाच्छूलिनो युगलात्मकम् ।। १

कृष्णमन्त्ररहस्यं च स्मर विस्मृतिमागतम् ।
सूत उवाच—
इत्युक्तो नारदो विप्राः कुमारेण तु धीमता ।। २

ध्यानं विवेशाशु चिरं चरितं पूर्वजन्मनः ।
ततश्चिरं ध्यानपरो नारदो भगवत्प्रियः ।। ३

ज्ञात्वा सर्वं सुवृत्तान्तं सुप्रसन्नाननोऽब्रवीत् ।
भगवन्सर्ववृत्तान्तः पूर्वकल्पसमुद्भवः ।। ४

मम स्मृतिमनुप्राप्तो विना युगललम्भनम् ।
तच्छ्रुत्वा वचनं तस्य नारदस्य महात्मनः ।। ५

सनत्कुमारो भगवान् व्याजहार यथातथम् ।
सनत्कुमार उवाच—
शृणु विप्र प्रवक्ष्यामि यस्मिञ्जन्मनि शूलिनः ।। ६

प्राप्तं कृष्णरहस्यं वै सावधानो भवाधुना ।
अस्मात्सारस्वतात्कल्पात्पूर्वस्मिन्पंचविंशके ।। ७

कल्पे त्वं काश्यपो जातो नारदो नाम नामतः ।
तत्रैकदा त्वं कैलासं प्राप्तः कृष्णस्य योगिनः ।। ८

संप्रष्टुं परमं तत्वं शिवं कैलासवासिनम्।
त्वया पृष्टो महादेवो रहस्यं स्वप्रकाशितम्॥ ९

कथयामास तत्वेन नित्यलीलानुगं हरेः।
ततस्तदन्ते तु पुनः त्वया विज्ञापितो हरः॥ १०

नित्यं लीलां हरेर्द्रष्टुं ततः प्राह सदाशिवः।
गोपीजनपदस्यान्ते वल्लभेति पदं ततः॥ ११

चरणाच्छरणं पश्चात्प्रपद्ये इति वै मनुः।
(गोपीजनवल्लभचरणं शरणं प्रपद्ये।)
मन्त्रस्यास्य ऋषिः प्रोक्तो सुरभिश्चन्द्र एव च॥ १२

गायत्री देवता चास्य वल्लवीवल्लभो विभुः।
प्रपन्नोऽस्मीति तद्भक्तौ विनियोग उदाहृतः॥ १३

नास्य सिद्धादिकं विप्र शोधनं न्यासकल्पनम्।
केवलं चिन्तनं सद्यो नित्यलीलाप्रकाशकम्॥ १४

आभ्यन्तरस्य धर्मस्य साधनं वच्मि साम्प्रतम्॥ १५

संगृह्य मन्त्रं गुरुभक्तियुक्तो विचिन्त्य सर्वं मनसा तदीहितम्।
कृपां तदीयां निजधर्मसंस्थो विभावयन्नात्मनि तोषयेद्गुरुम्॥ १६

सतां शिक्षेत वै धर्मान्प्रपन्नानां भयापहान्।
ऐहिकामुष्मिकीचिन्ताविधुरान् सिद्धिदायकान्॥ १७

स्वेष्टदेवधिया नित्यं तोषयेद्वैष्णवांस्तथा।
भर्त्सनादिकमेतेषां न कदाचिद्विचिन्तयेत्॥ १८

पूर्वकर्मवशाद्द्रव्यमैहिकं भोग्यमेव च।
आयुष्यकं तथा कृष्णः स्वयमेव करिष्यति॥ १९

श्रीकृष्णं नित्यलीलास्थं चिन्तयेत्स्वधियाऽनिशम्।
श्रीमदर्चावतारेण कृष्णं परिचरेत्सदा ॥ २०

अनन्यचिन्तनीयोऽसौ प्रपन्नैः शरणार्थिभिः।
स्थेयं च देहगेहादावुदासीनतया बुधैः ॥ २१

गुरोरवज्ञां साधूनां निन्दां भेदं हरे हरौ।
वेदनिन्दां हरेर्नाम बलात्पापसमीहनम् ॥ २२

अर्थवादं हरेर्नाम्नि पाषण्डं नामसंग्रहे।
अलसे नास्तिके चैव हरिनामोपदेशनम् ॥ २३

नामविस्मरणं चापि नाम्न्यनादरमेव च।
सन्त्यजेद्दूरतो वत्स दोषानेतान्सुदारुणान् ॥ २४

प्रपन्नोऽस्मीति सततं चिन्तयेद् हृद्गतं हरिम्।
स एव पालनं नित्यं करिष्यति ममेति च ॥ २५

तवास्मि राधिकानाथ कर्मणा मनसा गिरा।
कृष्णकान्तेति चैवास्मि युवामेव गतिर्मम ॥ २६

दासाः सखायः पितरः प्रेयस्यश्च हरेरिह।
सर्वे नित्या मुनिश्रेष्ठ चिन्तनीया महात्मभिः ॥ २७

गमनागमने नित्यं करोति वनगोष्ठयोः।
गोचारणं वयस्यैश्च विनाऽसुरविघातनम् ॥ २८

सखायो द्वादशाख्याता हरेः श्रीदामपूर्वकाः।
राधिकायाः सुशीलाद्याः सख्यो द्वात्रिंशदीरिताः ॥ २९

आत्मानं चिन्तयेद्वत्स तासां मध्ये मनोरमाम्।
रूपयौवनसंपन्नां किशोरीं च स्वलंकृताम् ॥ ३०

35

नानाशिल्पकलाभिज्ञां कृणभोगानुरूपिणीम्।
तत्सेवनसुखाह्लादभावेनातिसुनिर्वृताम्॥ ३१

ब्राह्मं मुहूर्तमारभ्य यावदर्धनिशा भवेत्।
तावत्परिचरेत्तौ तु यथाकालानुसेवया॥ ३२

सहस्रं च तयोर्नाम्नां पठेन्नित्यं समाहितः।
एतत्साधनमुद्दिष्टं प्रपन्नानां मुनीश्वर॥ ३३

नाख्येयं कस्यचित्तुभ्यं मया तत्वं प्रकाशितम्।
सनत्कुमार उवाच—
ततस्त्वं नारद पुनः पृष्टवान्वै सदाशिवम्॥ ३४

नाम्नां सहस्रं तच्चापि प्रोक्तवांस्तच्छृणुष्व मे।
ध्यात्वा वृन्दावने रम्ये यमुनातीरसंगतम्॥ ३५

कल्पवृक्षं समाश्रित्य तिष्ठन्तं राधिकायुतम्।
पठेन्नामसहस्रं तु युगलाख्यं महामुने॥ ३६

अस्य श्रीराधाकृष्णयुगल स्वरूपसहस्रनामस्तोत्रमहामन्त्रस्य सदाशिव ऋषिः अनुष्टुप्छन्दः। श्रीराधाकृष्णयुगलस्वरूपो देवता। ध्यानम्—

श्रीकृष्णं पुण्डरीकाक्षं वृन्दावननिवासिनम्।
मुरलीवादनपरं राधिकाप्राणवल्लभम्॥

कस्तूरीफालतिलकं किरीटेन विराजितम्।
कंठेश्रीवनमालं च गोपालं श्यामरूपिणम्॥

श्रीवत्सचिह्नहृदयं गलेकौस्तुभभूषणम्।
पीताम्बरमुदाराङ्गं शङ्खचक्रगदाधरम्॥

रत्नसिंहासनस्थं तं रत्नभूषणभूषितम्।
श्रीराधाप्राणनाथं च वासुदेवमहं भजे ॥

श्वेतचम्पकवर्णाभां कोटिचन्द्रसमप्रभाम्।
शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम् ॥

ईषद्धास्यप्रसन्नास्यां पक्वबिम्बाधरांबराम्।
रत्नकेयूरवलयां रत्नमञ्जीररञ्जिताम् ॥

रत्नकुण्डलयुग्मेन विचित्रेण विराजिताम्।
कृष्णसौभाग्यसंयुक्तां कृष्णप्राणाधिकां वराम् ॥

वह्निशुद्धांशुकाधानां रत्नमालाविभूषिताम्।
रासमण्डलमध्यस्थां रत्नसिंहासनस्थिताम् ॥

कृष्णभक्तिरतां शान्तां राधादेवीमहं भजे ॥

अथ जपः गोपीजनवल्लभचरणं शरणं प्रपद्ये इति।

श्रीकृष्णनामानि-५००

देवकीनन्दनः शौरिर्वासुदेवो बलानुजः।
गदाग्रजः कंसमोहः कंससेवकमोहनः ॥ ३७

भिन्नार्गलो भिन्नलोहः पितृवाह्यः पितृस्तुतः।
मातृस्तुतः शिवध्येयो यमुनाजलभेदनः ॥ ३८

व्रजवासी व्रजानन्दी नन्दबालो दयानिधिः।
लीलाबालः पद्मनेत्रो गोकुलोत्सव ईश्वरः ॥ ३९

गोपिकानन्दनः कृष्णः गोपानन्दः सतां गतिः।
बकप्राणहरो विष्णुर्बकमुक्तिप्रदो हरिः ॥ ४०

बलदोलाशयशयः श्यामलः सर्वसुन्दरः ।
पद्मनाभो हृषीकेशः क्रीडामनुजबालकः ॥ ४१

लीलाविध्वस्तशकटो वेदमन्त्राभिषेचितः ।
यशोदानन्दनः कान्तो मुनिकोटिनिषेवितः ॥ ४२

नित्यं मधुवनावासी वैकुण्ठः संभवः क्रतुः ।
रमापतिर्यदुपतिर्मुरारिर्मधुसूदनः ॥ ४३

माधवो मानहारी च श्रीपतिर्भूधरः प्रभुः ।
बृहद्वनमहालीलो नन्दसूनुर्महासनः ॥ ४४

तृणावर्तप्राणहारी यशोदाविस्मयप्रदः ।
त्रैलोक्यवक्त्रः पद्माक्षः पद्महस्तः प्रियङ्करः ॥ ४५

ब्रह्मण्यो धर्मगोप्ता च भूपतिः श्रीधरः स्वराट् ।
अजाध्यक्षः शिवाध्यक्षो धर्माध्यक्षो महेश्वरः ॥ ४६

वेदान्तवेद्यो ब्रह्मस्थः प्रजापतिरमोघदृक् ।
गोपीकरावलम्बी च गोपबालकसुप्रियः ॥ ४७

बालानुयायी बलवान् श्रीदामप्रिय आत्मवान् ।
गोपीगृहाङ्गणपतिर्भद्रः सुश्लोकमङ्गलः ॥ ४८

नवनीतहरो बालो नवनीतप्रियाशनः ।
बालवृन्दी मर्कवृन्दी चकिताक्षः पलायितः ॥ ४९

यशोदातर्जितः कम्पी मायारुदितशोभनः ।
दामोदरोऽप्रमेयात्मा दयालुर्भक्तवत्सलः ॥ ५०

सुबद्धोलूखलो नम्रशिराः गोपीकदर्थितः ।
वृक्षभङ्गी शोकभङ्गी धनदात्मजमोक्षणः ॥ ५१

देवर्षिवचनश्लाघी भक्तवात्सल्यसागरः ।
व्रजकोलाहलकरो व्रजानन्दविवर्धनः ॥ ५२

गोपात्मा प्रेरकः साक्षी वृन्दावननिवासकृत् ।
वत्सपालो वत्सपतिर्गोपदारकमण्डनः ॥ ५३

बालक्रीडो बालरतिर्बालकः कनकाङ्गदी ।
पीताम्बरो हेममाली मणिमुक्ताविभूषणः ॥ ५४

किङ्किणी कटकी सूत्री नूपुरी मुद्रिकान्वितः ।
वत्सासुरपतिध्वंसी बकासुरविनाशनः ॥ ५५

अघासुरविनाशी च विनिद्रीकृतबालकः ।
आद्य आत्मप्रदः संज्ञी यमुनातीरभोजनः ॥ ५६

गोपालमण्डलीमध्यः सर्वगोपालभूषणः ।
कृतहस्ततलग्रासो व्यञ्जनाश्रितशाखिकः ॥ ५७

कृतबाहुशृङ्गयष्टिर्गुञ्जालङ्कृतकण्ठकः ।
मयूरपिंच्छमकुटो वनमालाविभूषितः ॥ ५८

गैरिकाचित्रितवपुर्नवमेघवपुः स्मरः ।
कोटिकन्दर्पलावण्यो लसन्मकरकुण्डलः ॥ ५९

आजानुबाहुर्भगवान्निद्रारहितलोचनः ।
कोटिसागरगाम्भीर्यः कालकालः सदाशिवः ॥ ६०

विरिञ्चिमोहनवपुर्गोपवत्सवपुर्धरः ।
ब्रह्माण्डकोटिजनको ब्रह्ममोहविनाशकः ॥ ६१

ब्रह्मा ब्रह्मेडितः स्वामी शक्रदर्पादिनाशनः ।
गिरिपूजोपदेष्टा च धृतगोवर्धनाचलः ॥ ६२

पुरन्दरेडितः पूज्यः कामधेनुप्रपूजितः ।
सर्वतीर्थाभिषिक्तश्च गोविन्दो गोपरक्षकः ॥ ६३

कालियार्तिकरः क्रूरो नागपत्नीडितो विराट् ।
धेनुकारिः प्रलम्बारिर्वृषासुरविमर्दनः ॥ ६४

मायासुरात्मजध्वंसी केशिकण्ठविदारकः ।
गोपगोप्ता धेनुगोप्ता दावाग्निपरिशोषकः ॥ ६५

गोपकन्यावस्त्रहारी गोपकन्यावरप्रदः ।
यज्ञपत्न्यन्नभोजी च मुनिमानापहारकः ॥ ६६

जलेशमानमथनो नन्दगोपालजीवनः ।
गन्धर्वशापमोक्ता च शङ्खचूडशिरोहरः ॥ ६७

वंशी वटी वेणुवादी गोपीचिन्तापहारकः ।
सर्वगोप्ता समाह्वानः सर्वगोपीमनोरथः ॥ ६८

व्यङ्गधर्मप्रवक्ता च गोपीमण्डलमोहनः ।
रासक्रीडारसास्वादी रसिको राधिकाधवः ॥ ६९

किशोरीप्राणनाथश्च वृषभानुसुताप्रियः ।
सर्वगोपीजनानन्दी गोपीजनविमोहनः ॥ ७०

गोपिकागीतचरितो गोपीनर्तनलालसः ।
गोपीस्कन्धाश्रितकरो गोपिकाचुम्बनप्रियः ॥ ७१

गोपिकामार्जितमुखो गोपीव्यजनवीजितः ।
गोपिकाकेशसंस्कारी गोपिकापुष्पसंस्तरः ॥ ७२

गोपिकाहृदयालम्बी गोपीवहनतत्परः ।
गोपिकामदहारी च गोपिकापरमार्जितः ॥ ७३

गोपिकाकृतसंनी(ह्ली)लो गोपिकासंस्मृतप्रियः ।
गोपिकावन्दितपदो गोपिकावशवर्तनः ॥ ७४

राधापराजितः श्रीमान्निकुञ्जे सुविहारवान् ।
कुञ्जप्रियः कुञ्जवासी वृन्दावन विकासनः ॥ ७५

यमुनाजलसिक्ताङ्गो यमुनासौख्यदायकः ।
शशिसंस्तम्भनः शूरः कामी कामविमोहनः ॥ ७६

कामाद्यः कामनाथश्च काममानसभेदनः ।
कामदः कामरूपश्च कामिनीकामसंचयः ॥ ७७

नित्यक्रीडो महालीलः सर्वः सर्वगतस्तथा ।
परमात्मा पराधीशः सर्वकारणकारणः ॥ ७८

गृहीतनारदवचा ह्यक्रूरपरिचिन्तितः ।
अक्रूरवन्दितपदो गोपिकातोषकारकः ॥ ७९

अक्रूरवाक्यसंग्राही मथुरावासकारणः ।
अक्रूरतापशमनो रजकायुःप्रणाशनः ॥ ८०

मथुरानन्ददायी च कंसवस्त्रविलुण्ठनः ।
कंसवस्त्रपरीधानो गोपवस्त्रप्रदायकः ॥ ८१

सुदामगृहगामी च सुदामपरिपूजितः ।
तन्तुवायकसंप्रीतः कुब्जाचन्दनलेपनः ॥ ८२

कुब्जारूपप्रदो विज्ञो मुकुन्दो विष्टरश्रवाः ।
सर्वज्ञो मथुरालोकी सर्वलोकाभिनन्दनः ॥ ८३

कृपाकटाक्षदर्शी च दैत्यारिर्देवपालकः ।
सर्वदुः खप्रशमनो धनुर्भङ्गी महोत्सवः ॥ ८४

कुवलयापीडहन्ता दन्तस्कन्धबलाग्रणीः ।
कल्परूपधरो धीरो दिव्यवस्त्रानुलेपनः ॥ ८५

मल्लरूपो महाकालः कामरूपी बलान्विनः ।
कंसत्रासकरो भीमो मुष्टिकान्तश्च कंसहा ॥ ८६

चाणूरघ्नो भयहरः शलारिस्तोशलान्तकः ।
वैकुण्ठवासी कंसारिः सर्वदुष्टनिषूदनः ॥ ८७

देवदुन्दुभिनिर्घोषी पितृशोकनिवारणः ।
यादवेन्द्रः सतां नाथो यादवारिप्रमर्दनः ॥ ८८

शौरिशोकविनाशी च देवकीतापनाशनः ।
उग्रसेनपरित्राता उग्रसेनाभिपूजितः ॥ ८९

उग्रसेनाभिषेकी च उग्रसेनदयापरः ।
सर्वसात्वतसाक्षी च यदूनामभिनन्दनः ॥ ९०

सर्वमाथुरसंसेव्यः करुणो भक्तबान्धवः ।
सर्वगोपालधनदो गोपीगोपाललालसः ॥ ९१

शौरिदत्तोपवीती च उग्रसेनदयाकरः ।
गुरुभक्तो ब्रह्मचारी निगमाध्ययने रतः ॥ ९२

संकर्षणसहाध्यायी सुदामसुहृदेव च ।
विद्यानिधिः कलाकोशो मृतपुत्रप्रदस्तथा ॥ ९३

चक्री पांचजनी चैव सर्वनारकिमोचनः ।
यमार्चितः परो देवो नामोच्चारवशोऽच्युतः ॥ ९४

कुब्जाविलासी सुभगो दीनबन्धुरनूपमः ।
अक्रूरगृहगोप्ता च प्रतिज्ञापालकः शुभः ॥ ९५

जरासन्धजयी विद्वान् यवनान्तो द्विजाश्रयः ।
मुचुकुन्दप्रियकरो जरासन्धपलायितः ॥ ९६

द्वारकाजनको गूढो ब्रह्मण्यः सत्यसंगरः ।
लीलाधरः प्रियकरो विश्वकर्मयशःप्रदः ॥ ९७

रुक्मिणीप्रियसन्देशो रुक्मशोकविवर्धनः ।
चैद्यशोकालयः श्रेष्ठो दुष्टराजन्यनाशनः ॥ ९८

रुक्मिवैरूप्यकरणः रुक्मिणीवचने रतः ।
बलभद्रवचोग्राही मुक्तरुक्मी जनार्दनः ॥ ९९

रुक्मिणीप्राणनाथश्च सत्यभामापतिः स्वयम् ।
भक्तपक्षी भक्तिवश्यो ह्यक्रूरमणिदायकः । १००

शतधन्वप्राणहारी ऋक्षराजसुताप्रियः ।
सत्राजित्तनयाकान्तो मित्रविन्दापहारकः ॥ १०१

सत्यापतिर्लक्ष्मणाजित्पूज्यो भद्राप्रियङ्करः ।
नरकासुरघाती च लीलाकन्याहरो जयी ॥ १०२

मुरारिर्मदनेशोपि धरित्रीदुःखनाशनः ।
वैनतेयी स्वर्गगामी अदित्यै कुण्डलप्रदः ॥ १०३

इन्द्रार्चितो रमाकान्तो वज्रिभार्याप्रपूजितः ।
पारिजातापहारी च शक्रमानापहारकः ॥ १०४

प्रद्युम्नजनकः साम्बतातो बहुसुतो विधुः ।
गर्गाचार्यः सत्यगतिः धर्माधारो धराधरः ॥ १०५

द्वारकामण्डनः श्लोक्यः सुश्लोको निगमालयः ।
पौण्ड्रकप्राणहारी च काशीराजशिरोहरिः ॥ १०६

अवैष्णवप्रदाही सुदक्षिणभयावहः ।
जरासन्धविदारी च धर्मनन्दनयज्ञकृत् ।। १०७

शिशुपालशिरश्छेदी दन्तवक्त्रविनाशनः ।
विदूरथांतकः श्रीशः श्रीदो द्विविदनाशनः ।। १०८

रुक्मिणीमानहारी च रुक्मिणीमानवर्धनः ।
देवर्षिशापहर्ता च द्रौपदीवाक्यपालकः ।। १०९

दुर्वासोभयहारी च पांचालीस्मरणागतः ।
पार्थदूतः पार्थमन्त्री पार्थदुःखौघनाशनः ।। ११०

पार्थमानापहारी च पार्थजीवनदायकः ।
पांचालीवस्त्रदाता च विश्वपालकपालकः ।। १११

श्वेताश्वसारथिः सत्यः सत्यसाध्यो भयापहः ।
सत्यसन्धः सत्यरतिः सत्यप्रिय उदारधीः ।। ११२

महासेनजयी चैव शिवसैन्यविनाशनः ।
बाणासुरभुजच्छेत्ता बाणबाहुवरप्रदः ।। ११३

तार्क्ष्यमानापहारी च तार्क्ष्यतेजोविवर्धनः ।
रामस्वरूपधारी च सत्यभामामुदावहः ।। ११४

रत्नाकरजलक्रीडो व्रजलीलाप्रदर्शकः ।
स्वप्रतिज्ञापरध्वंसी भीष्माज्ञापरिपालकः ।। ११५

वीरायुधहरः कालः कालिकेशो महाबलः ।
वर्वरीषशिरोहारी वर्वरीषशिरःप्रदः ।। ११६

धर्मपुत्रजयी शूरो दुर्योधनमदान्तकः ।
गोपिकाप्रीतिनिर्बन्धनित्यक्रीडो व्रजेश्वरः ।। ११७

राधाकुण्डरतिर्धन्यः सदान्दोलसमाश्रितः ।
सदामधुवनानन्दी सदाबृन्दावनप्रियः ॥ ११८

अशोकवनसन्नद्धः सदा तिलकसङ्गतः ।
सदा गोवर्धनरतिः सदा गोकुलवल्लभः ॥ ११९

भाण्डीरवटसंवासी नित्यं वंशीवरस्थितः ।
नन्दिग्रामकृतावासो वृषभानुग्रहप्रियः ॥ १२०

गृहीतकामिनीरूपो नित्यं रासविलासकृत् ।
वल्लवीजनसंगोप्ता वल्लवीजनवल्लभः ॥ १२१

देवशर्मकृपाकर्ता कल्पपादपसंस्थितः ।
शिलानुगन्धनिलयः पादचारी घनच्छविः ॥ १२२

अतसीकुसुमप्रख्यः सदा लक्ष्मीकृपाकरः ।
त्रिपुरारिप्रियकरो ह्युग्रधन्वाऽपराजितः ॥ १२३

षड्धुरध्वंसकर्ता च निकुम्भप्राणहारकः ।
वज्रनाभपुरध्वंसी पौण्ड्रकप्राणहारकः ॥ १२४

बहुलाश्वप्रीतिकर्ता द्विजवर्यप्रियंकरः ।
शिवसंकटहारी च वृकासुरविनाशनः ॥ १२५

भृगुसत्कारकारी च शिवसात्विकताप्रदः ।
गोकर्णपूजकः साम्बकुष्ठविध्वंसकारणम् ॥ १२६

वेदस्तुतो वेदवेत्ता यदुवंशविवर्धनः ।
यदुवंशविनाशी च उद्धवोद्धारकारकः ॥ १२७

(इति कृष्ण नामावलिः-५०० अथ राधानामावलिः-५००)

राधा च राधिका चैव आनन्दा वृषभानुजा।
वृन्दावनेश्वरी पुण्या कृष्णमानसहारिणी॥ १२८

प्रगल्भा चतुरी कामा कामिनी हरिमोहिनी।
ललिता मधुरा माध्वी किशोरी कनकप्रभा॥ १२९

जितचन्द्रा जितमृगा जितसिंहा जितद्विपा।
जितरम्भा जितपिका गोविन्दहृदयोद्भवा॥ १३०

जितबिम्बा जितशुका जितपद्मा कुमारिका।
श्रीकृष्णाकर्षणा देवी नित्यं युग्मस्वरूपिणी॥ १३१

नित्यं विहारिणी कान्ता रसिका कृष्णवल्लभा।
आमोदिनी मोदवती नन्दनन्दनभूषिता॥ १३२

दिव्याम्बरा दिव्यहारा मुक्तामणिविभूषिता।
कुंजप्रिया कुंजवासा कुंजनायकनायिका॥ १३३

चारुरूपा चारुवक्त्रा चारुहेमाङ्गदा शुभा।
श्रीकृष्णवेणुसंगीता मुरलीहारिणी शिवा॥ १३४

भद्रा भगवती शान्ता कुमुदा सुन्दरी प्रिया।
कृष्णक्रीडा कृष्णरतिः श्रीकृष्णसहचारिणी॥ १३५

वंशीवटप्रियस्थाना युग्मायुग्मस्वरूपिणी।
भाण्डीरवासिनी शुभ्रा गोपीनाथप्रियासखी॥ १३६

श्रुतिनिश्वसिता दिव्या गोविन्दरसदायिनी।
श्रीकृष्णप्रार्थनीशाना महानन्दप्रदायिनी॥ १३७

वैकुण्ठजनसंसेव्या कोटिलक्ष्मीसुखावहा।
कोटिकन्दर्पलावण्या रतिकोटिरतिप्रदा॥ १३८

भक्तिग्राह्या भक्तिरूपा लावण्यसरसी उमा।
ब्रह्मरुद्रादिसंराध्या नित्यं कौतूहलान्विता ॥ १३९

नित्यलीला नित्यकामा नित्यशृंगारभूषिता।
नित्यबृन्दावनरसा नन्दनन्दनसंयुता ॥ १४०

गोपिकामण्डलीयुक्ता नित्यं गोपालसंगता।
गोरसक्षेपणी शूरा सानन्दानन्ददायिनी ॥ १४१

महालीला प्रकृष्टा च नागरी नगचारिणी।
नित्यमाघूर्णिता पूर्णा कस्तूरीतिलकान्विता ॥ १४२

पद्मा श्यामा मृगाक्षी च सिद्धिरूपा रसावहा।
कोटिचन्द्रानना गौरी कोटिकोकिलसुस्वरा ॥ १४३

शीलसौन्दर्यनिलया नन्दनन्दनलालिता।
अशोकवनसंवासा भाण्डीरवनसंगता ॥ १४४

कल्पद्रुमतलाविष्टा कृष्णा विश्वा हरप्रिया।
अजागम्या भवागम्या गोवर्धनकृतालया ॥ १४५

यमुनातीरनिलया शश्वद्गोविन्दजल्पिनी।
शश्वन्मानवती स्निग्धा श्रीकृष्णपरिवन्दिता ॥ १४६

कृष्णस्तुला कृष्णवृता श्रीकृष्णहृदयालया।
देवद्रुमफला सेव्या वृन्दावनरसालया ॥ १४७

कोटितीर्थमयी सत्या कोटितीर्थफलप्रदा।
कोटियोगसुदुष्प्राप्या कोटियज्ञदुराश्रया ॥ १४८

मानसा शशिलेखा च श्रीकोटिसुभगाऽनघा।
कोटिमुक्तसुखा सौम्या लक्ष्मीकोटिविलासिनी ॥ १४९

तिलोत्तमा त्रिकालस्था त्रिकालज्ञाऽप्यधीश्वरी ।
त्रिवेदज्ञा त्रिलोकज्ञा तुरीयान्तनिवासिनी ॥ १५०

दुर्गाराध्या रमाराध्या विश्वाराध्या चिदात्मिका ।
देवाराध्या पराराध्या ब्रह्माराध्या परात्मिका ॥ १५१

शिवाराध्या प्रेमसाध्या भक्ताराध्या रसात्मिका ।
कृष्णप्राणार्पिणी भामा शुद्धप्रेमविलासिनी ॥ १५२

कृष्णाराध्या भक्तिसाध्या भक्तबृन्दनिषेविता ।
विश्वाधारा कृपाधारा जीवाधाराऽतिनायिका ॥ १५३

शुद्धप्रेममयी लज्जा नित्यसिद्धा शिरोमणिः ।
दिव्यरूपा दिव्यभोगा दिव्यवेषा मुदान्विता ॥ १५४

दिव्यांगनावृन्दसारा नित्यनूतनयौवना ।
परब्रह्मावृता ध्येया महारूपा महोज्ज्वला ॥ १५५

कोटिसूर्यप्रभा कोटिचन्द्रबिम्बाधिकच्छविः ।
कोमलामृतवागाद्या वेदाद्या वेददुर्लभा ॥ १५६

कृष्णासक्ता कृष्णभक्ता चन्द्रावलिनिषेविता ।
कलाषोडशसंपूर्णा कृष्णदेहार्धधारिणी ॥ १५७

कृष्णबुद्धिः कृष्णसारा कृष्णरूपविहारिणी ।
कृष्णकान्ता कृष्णधना कृष्णमोहनकारिणी ॥ १५८

कृष्णदृष्टिः कृष्णगोप्त्री कृष्णदेवी कुलोद्वहा ।
सर्वभूतस्थितात्मा च सर्वलोकनमस्कृता ॥ १५९

कृष्णदात्री प्रेमधात्री स्वर्णगात्री मनोरमा ।
नगधात्री यशोदात्री महादेवी शुभंकरी ॥ १६०

श्रीशेषदेवजननी अवतारगणप्रसूः ।
उत्पलांकाऽरविन्दांका प्रसादांकाऽद्वितीयका ॥ १६१

रथांका कुंजरांका च कुंडलांका पदस्थिता ।
छत्रांका विद्युदंका च पुष्पमालांकितापि च ॥ १६२

दंडांका मुकुटांका च पूर्णचन्द्रा शुकांकिता ।
कृष्णान्नाहारपाका च वृन्दाकुंजविहारिणी ॥ १६३

कृष्णप्रबोधनकरी कृष्णशेषान्नभोजिनी ।
पद्मकेसरमध्यस्था संगीतागमवेदिनी ॥ १६४

कोटिकल्पान्तभ्रूभंगा अप्राप्तप्रलयाच्युता ।
सर्वसत्वनिधिः पद्मशंखादिनिधिसेविता ॥ १६५

अणिमादिगुणैश्वर्या देवबृन्दविमोहिनी ।
सर्वानन्दप्रदा सर्वा सुवर्णलतिकाकृतिः ॥ १६६

कृष्णाभिसारसंकेता मालिनी नृत्यपंडिता ।
गोपीसिन्धुसकाशाह्वा गोपमण्डलशोभिनी ॥ १६७

श्रीकृष्णप्रीतिदा ऽभीता प्रत्यङ्गपुलकांचिता ।
श्रीकृष्णालिंगनरता गोविन्दविरहाक्षमा ॥ १६८

अनन्तगुणसंपन्ना कृष्णकीर्तनलालसा ।
बीजत्रयमयी मूर्तिः कृष्णानुग्रहवांछिता ॥ १६९

विमलादिनिषेव्या च ललिताद्यर्चिता सती ।
पद्मबृन्दस्थिता हृष्टा त्रिपुरापरिसेविता ॥ १७०

बृंदावत्यर्चिता श्रद्धा दुर्ज्ञेया भक्तवल्लभा ।
दुर्लभा सान्द्रसौख्यात्मा श्रेयोहेतुः सुभोगदा ॥ १७१

सारंगा शारदा बोधा सद्वृन्दावनचारिणी।
ब्रह्मानन्दा चिदानन्दा ध्यानानन्दाऽर्धमात्रिका॥ १७२

गन्धर्वा सुरतज्ञा च गोविन्दप्राणसंगमा।
कृष्णांगभूषणा रत्नभूषणा स्वर्णभूषिता॥ १७३

श्रीकृष्णहृदयावासमुक्ताकनकनालिका।
सद्रत्नकंकणयुता श्रीमन्नीलगिरिस्थिता॥ १७४

स्वर्णनूपुरसंपन्ना स्वर्णकिंकिणिमंडिता।
अशेषरासकुतुका रंभोरूस्तनुमध्यमा॥ १७५

पराकृतिः परानन्दा परस्वर्गविहारिणी।
प्रसूनकबरीचित्रा महासिन्दूरसुन्दरी॥ १७६

कैशोरवयसा बाला प्रमदाकुलशेखरी।
कृष्णाधरसुधास्वादा श्यामप्रेमविनोदिनी॥ १७७

शिखिपिच्छलसच्चूडा स्वर्णचंपकभूषिता।
कुंकुमालक्तकस्तूरीमंडिता चापराजिता॥ १७८

हेमहारान्विता पुष्पहाराढ्या रसवत्यपि।
माधुर्यमधुरा पद्मा पद्महस्ता सुविश्रुता॥ १७९

भ्रूभंगाभंगकोदण्डकटाक्षशरसन्धिनी।
शेषदेवशिरःस्था च नित्यस्थलविहारिणी॥ १८०

कारुण्यजलमध्यस्था नित्यमत्ताऽधिरोहिणी।
अष्टभाषावती चाष्टनायिका लक्षणान्विता॥ १८१

सुनीतिज्ञा श्रुतिज्ञा च सर्वज्ञा दुःखहारिणी।
रजोगुणेश्वरी चैव शरच्चन्द्रनिभानना॥ १८२

केतकीकुसुमाभासा सदा सिन्धुवनस्थिता।
हेमपुष्पाधिककरा पञ्चशक्तिमयीहिता॥ १८३

स्तनकुम्भी नराढ्या च क्षीणापुण्या यशस्विनी।
वैराजसूयजननी श्रीशा भुवनमोहिनी॥ १८४

महाशोभा महामाया महाकान्तिर्महास्मृतिः।
महामोहा महाविद्या महाकीर्तिर्महारतिः॥ १८५

महाधैर्या महावीर्या महाशक्तिर्महाद्युतिः।
महागौरी महासंपन्महाभोगविलासिनी॥ १८६

समया भक्तिदाऽशोका वात्सल्यरसदायिनी।
सुहृद्भक्तिप्रदा स्वच्छा माधुर्यरसवर्षिणी॥ १८७

भावभक्तिप्रदा शुद्धप्रेमभक्तिविधायिनी।
गोपरामाऽभिरामा च क्रीडारामा परेश्वरी॥ १८८

नित्यरामा चात्मरामा कृष्णरामा रसेश्वरी।
एकानेकजगद्व्याप्ता विश्वलीला प्रकाशिनी॥ १८९

सरस्वतीशा दुर्गेशा जगदीशा जगद्विधिः।
विष्णुवंशनिवासा च विष्णुवंशसमुद्भवा॥ १९०

विष्णुवंशस्तुता कर्त्री विष्णुवंशावनी सदा।
आरामस्था वनस्था च सूर्यपुत्र्यवगाहिनी॥ १९१

प्रीतिस्था नित्ययन्त्रस्था गोलोकस्था विभूतिदा।
स्वानुभूतिस्थिता व्यक्ता सर्वलोकनिवासिनी॥ १९२

अमृता ह्यद्भुता श्रीमन्नारायणसमीडिता।
अक्षराऽपि च कूटस्था महापुरुषसंभवा॥ १९३ 36

औदार्यभावसाध्या च स्थूलसूक्ष्माऽतिरूपिणी।
शिरीषपुष्पमृदुला गांगेयमुकुरप्रभा॥ १९४

नीलोत्पलजिताक्षी च सद्रत्नकबरान्विता।
प्रेमपर्यङ्कनिलया तेजोमण्डलमध्यगा॥ १९५

कृष्णाङ्गगोपनाऽभेदा लीलावरणनायिका।
सुधासिन्धुसमुल्लासाऽमृतास्यन्दविधायिनी॥ १९६

कृष्णचित्ता रासचित्ता प्रेमचित्ता हरिप्रिया।
अचिन्तनगुणग्रामा कृष्णलीला मलापहा॥ १९७

राससिन्धुशशाङ्का च रासमण्डलमण्डिनी।
नतव्रता सिंहरीच्छा सुमूर्तिः सुरवन्दिता॥ १९८

गोपीचूडामणिर्गोपीगणेड्या विरजाधिका।
गोपप्रेष्ठा गोपकन्या गोपनारी सुगोपिका॥ १९९

गोपधामा सुदामाम्बा गोपाली गोपमोहिनी।
गोपभूषा कृष्णभूषा श्रीवृन्दावनचन्द्रिका॥ २००

वीणादिघोषनिरता रासोत्सवविकासिनी।
कृष्णचेष्टा परिज्ञाता कोटिकन्दर्पमोहिनी॥ २०१

श्रीकृष्णगुणगानाढ्या देवसुन्दरिमोहिनी।
कृष्णचन्द्रमनोज्ञा च कृष्णदेवसहोदरी॥ २०२

कृष्णाभिलाषिणी कृष्णप्रेमानुग्रहवांछिता।
क्षेमा च मधुरालापा भ्रुवोर्माया सुभद्रिका॥ २०३

प्रकृतिः परमानन्दा नीपद्रुमतलस्थिता।
कृपाकटाक्षा बिम्बोष्ठी रम्भा चारुनितम्बिनी॥ २०४

स्मरकेलिनिधाना च गण्डताटङ्कमण्डिता।
हेमाद्रिकान्तिरुचिरा प्रेमाद्या मदमन्थरा ॥ २०५

कृष्णचिन्ता प्रेमचिन्ताऽतिचिन्ता च कृष्णदा।
रासचिन्ता भावचिन्ता शुद्धचिन्ता महारसा ॥ २०६

कृष्णदृष्टित्रुटियुगा दृष्टिपक्ष्मविनिन्दिनी।
कन्दर्पजननी मुख्या वैकुण्ठगतिदायिनी ॥ २०७

रासभावा प्रियाश्लिष्टा प्रेष्ठा प्रथमनायिका।
शुद्धा सुधादेहिनी च श्रीरामा रसमञ्जरी ॥ २०८

सुप्रभावा शुभाचारा स्वर्णदी नर्मदाम्बिका।
गोमती चन्द्रभागेड्या सरयूताम्रपर्णिसूः ॥ २०९

निष्कलङ्कचरित्रा च निर्गुणा च निरञ्जना।
एतन्नामसहस्रं तु युग्मरूपस्य नारद ॥ २१०

पठनीयं प्रयत्नेन वृन्दावनरसावहम्।
महापापप्रशमनं वन्ध्यात्वविनिवर्तकम् ॥ २११

दारिद्र्यशमनं रोगनाशनं कामदं महत्।
पापापहं वैरिहरं राधामाधवभक्तिदम् ॥ २१२

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे।
राधासंगसुधासिन्धौ नमो नित्यविहारिणे ॥ २१३

राधादेवी जगत्कर्त्री जगत्पालनतत्परा।
जगल्लयविधात्री च सर्वेशी सर्वसूतिका ॥ २१४

तस्या नामसहस्रं वै मया प्रोक्तं मुनीश्वर।
भुक्तिमुक्तिप्रदं दिव्यं किं भूयः श्रोतुमिच्छसि ॥ २१५

श्रीः

# श्रीराधाकृष्णयुगलसहस्रनामावलिः

श्रीकृष्णनामावलिः-५००

ओं देवकीनन्दनाय नमः । शौरये । वासुदेवाय । बलानुजाय । गदाग्रजाय । कंसमोहाय । कंससेवकमोहनाय । भिन्नार्गलाय । भिन्नलोहाय । पितृवाह्याय । पितृस्तुताय । मातृस्तुताय । शिवध्येयाय । यमुनाजलभेदनाय । व्रजवासिने । व्रजानन्दिने । नन्दबालाय । दयानिधये । लीलाबालाय । पद्मनेत्राय नमः ॥ २०

ओं गोकुलोत्सवाय नमः । ईश्वराय । गोपिकानन्दनाय । कृष्णाय । गोपानन्दाय । सताङ्गतये । बकप्राणहराय । विष्णवे । बकमुक्तिप्रदाय । हरये । बलदोलाशयशयाय । श्यामलाय । सर्वसुन्दराय । पद्मनाभाय । हृषीकेशाय । क्रीडामनुजबालकाय । लीलाविध्वस्तशकटाय । वेदमन्त्राभिषेचिताय । यशोदानन्दनाय । कान्ताय । ४०

ओं मुनिकोटिनिषेविताय । नित्यं मधुवनावासिने । वैकुण्ठाय । संभवाय । क्रतवे । रमापतये । यदुपतये । मुरारये । मधुसूदनाय । माधवाय । मानहारिणे । श्रीपतये । भूधराय । प्रभवे । बृहद्वनमहालीलाय । नन्दसूनवे । महासनाय । तृणावर्तप्राणहारिणे । यशोदाविस्मयप्रदाय । त्रैलोक्यवक्त्राय नमः । ६०

ओं पद्माक्षाय नमः । पद्महस्ताय । प्रियंकराय । ब्रह्मण्याय । धर्मगोप्त्रे । भूपतये । श्रीधराय । स्वराजे । अजाध्यक्षाय । शिवाध्यक्षाय । धर्माध्यक्षाय । महेश्वराय । वेदान्तवेद्याय । ब्रह्मस्थाय । प्रजापतये । अमोघदृशे । गोपीकरावलम्बिने । गोपबालकसुप्रियाय । बालानुयायिने । बलवते नमः । ८०

ओं श्रीदामप्रियाय नमः । आत्मवते । गोपीगृहाङ्गणरतये । भद्राय । सुश्लोकमङ्गलाय । नवनीतहराय । बालाय । नवनीतप्रियाशनाय । बालबृन्दिने । मर्कबृन्दिने । चकिताक्षाय । पलायिताय । यशोदा-तर्जिताय । कंपिने । मायारुदितशोभनाय । दामोदराय । अप्रमेयात्मने । दयालवे । भक्तवत्सलाय । सुबद्धोलूखलाय नमः ॥ १००

ओं नम्रशिरसे नमः । गोपीकदर्थिताय । वृक्षभङ्गिने । शोकभङ्गिने । धनदात्मजमोक्षणाय । देवर्षिवचनश्लाधिने । भक्तवात्सल्यसागराय । व्रजकोलाहलकराय । व्रजानन्दविवर्धनाय । गोपात्मने । प्रेरकाय । साक्षिणे । वृन्दावननिवासकृते । वत्सपालाय । वत्सपतये । गोपदारकमण्डनाय । बालक्रीडाय । बालरतये । बालकाय । कनकाङ्गदिने नमः ॥ १२०

ओं पीताम्बराय नमः । हेममालिने । मणिमुक्ताविभूषणाय । किङ्किणिने । कटकिने । सूत्रिणे । नूपुरिणे । मुद्रिकान्विताय । वत्सासुरपतिध्वंसिने । बकासुरविनाशनाय । अघासुरविनाशिने । विनिद्रीकृतबालकाय । आद्याय । आत्मप्रदाय । संङ्गिने । यमुनातीर-भोजनाय । गोपालमण्डली मध्याय । सर्वगोपालभूषणाय । कृतहस्ततलग्रासाय । व्यञ्जनाश्रितशाखिकाय नमः । १४०

ओं कृतबाहु शृङ्गयष्टये नमः । गुञ्जालङ्कृतकण्ठकाय । मयूरपिंच्छ-मुकुटाय । वनमालाविभूषिताय । गैरिकाचित्रितवपुषे । नवमेघवपुषे । स्मराय । कोटिकन्दर्पलावण्याय । लसन्मकरकुण्डलाय । आजानुबाहवे । भगवते । निद्रारहितलोचनाय । कोटिसागरगाम्भीर्याय । कालकालाय । सदाशिवाय । विरिंचिमोहनवपुषे । गोपवत्सवपुर्धराय । ब्रह्माण्डकोटि-जनकाय । ब्रह्ममोहविनाशकाय । ब्रह्मणे नमः । १६०

ओं ब्रह्मोडिताय नमः । स्वामिने । शक्रदर्पादिनाशनाय । गिरिपूजोपदेष्ट्रे । धृतगोवर्धनाचलाय । पुरन्दरेडिताय । पूज्याय । कामधेनुप्रपूजिताय । सर्वतीर्थाभिषिक्ताय । गोविन्दाय । गोपरक्षकाय । कालीयार्तिकराय । क्रूराय । नागपत्नीडिताय । विराजे । धेनुकारये । प्रलंबारये । वृषासुरविमर्दनाय । मायासुरात्मजध्वंसिने । केशिकण्ठविदारकाय नमः । १८०

ओं गोपगोप्त्रे नमः । धेनुगोप्त्रे । दावाग्निपरिशोषकाय । गोपकन्यावस्त्रहारिणे । गोपकन्यावरप्रदाय । यज्ञपत्न्यन्नभोजिने । मुनिमानापहारकाय । जलेशमानमथनाय । नन्दगोपालजीवनाय । गन्धर्वशापमोक्त्रे । शङ्खचूडशिरोहराय । वंशिने । वटिने । वेणुवादिने । गोपीचिन्तापहारकाय । सर्वगोप्त्रे । समाह्वानाय । सर्वगोपीमनोरथाय । व्यङ्गधर्मप्रवक्त्रे । गोपीमण्डलमोहनाय नमः ।। २००

ओं रासक्रीडारसास्वादिने नमः । रसिकाय । राधिकाधवाय । किशोरीप्राणनाथाय । वृषभानुसुताप्रियाय । सर्वगोपीजनानन्दिने । गोपीजनविमोहनाय । गोपिकागीतचरिताय । गोपीनर्तनलालसाय । गोपीस्कन्धाश्रितकराय । गोपिकाचुम्बनप्रियाय । गोपिकामार्जित-मुखाय । गोपीव्यजनवीजिताय । गोपिकाकेशसंस्कारिणे । गोपिकापुष्प-संस्तराय । गोपिकाहृदयालम्बिने । गोपीवहनतत्पराय । गोपिकाम-दहारिणे । गोपिकापरिमार्जिताय । गोपिकाकृतसंनी(ली)लाय नमः ।। २२०

ओं गोपिकासंस्मृतप्रियाय । गोपिकावन्दितपदाय । गोपिकावश-वर्तनाय । राधापराजिताय । श्रीमते । निकुंजे सुविहारवते । कुंजप्रियाय । कुंजवासिने । वृन्दावनविकासनाय । यमुनाजलसिक्ताङ्गाय ।

यमुनासौख्यदायकाय । शशिसंस्तम्भनाय । शूराय । कामिने । कामविमोहनाय । कामाद्याय । कामनाथाय । काममानसभेदनाय । कामदाय । कामरूपाय नमः । २४०

ओं कामिनीकामसंचयाय । नित्यक्रीडाय । महालीलाय । सर्वाय । सर्वगताय । परमात्मने । पराधीशाय । सर्वकारणकारणाय । गृहीतनारदवचसे । अक्रूरपरिचिन्तिताय । अक्रूरवन्दितपदाय । गोपिकातोषकारकाय । अक्रूरवाक्यसंग्राहिणे । मथुरावासकारणाय । अक्रूरतापशमनाय । रजकायुःप्रणाशनाय । मथुरानन्ददायिने । कंसवस्त्रविलुण्ठनाय । कंसवस्त्रपरीधानाय । गोपवस्त्रप्रदायकाय नमः ॥ २६०

ओं सुदामगृहगामिने नमः । सुदामपरिपूजिताय । तन्तुवायकसंप्रीताय । कुब्जाचन्दनलेपनाय । कुब्जारूपप्रदाय । विज्ञाय । मुकुन्दाय । विष्टरश्रवसे । सर्वज्ञाय । मथुरालोकिने । सर्वलोकाभिनन्दनाय । कृपाकटाक्षदर्शिने । दैत्यारिणे । देवपालकाय । सर्वदुःखप्रशमनाय । धनुर्भंगिने । महोत्सवाय । कुवलयापीडहन्त्रे । दन्तस्कन्धबलाग्रण्ये । कल्परूपधराय नमः ॥ २८०

ओं धीराय नमः । दिव्यवस्त्रानुलेपनाय । मल्लरूपाय । महाकालाय । कामरूपिणे । बलान्विताय । कंसत्रासकराय । भीमाय । मुष्टिकान्ताय । कंसघ्ने । चाणूरघ्नाय । भयहराय । शलारये । तोशलान्तकाय । वैकुण्ठवासिने । कंसारये । सर्वदुष्टनिषूदनाय । देवदुन्दुभिनिर्घोषिणे । पितृशोक निवारणाय । यादवेन्द्राय नमः ॥ ३००

ओं सतां नाथाय नमः । यादवारिप्रमर्दनाय । शौरिशोकविनाशिने । देवकीतापनाशनाय । उग्रसेनपरित्रात्रे । उग्रसेनाभि-

पूजिताय। उग्रसेनाभिषेकिने। उग्रसेनदयापराय। सर्वसात्वतसाक्षिणे। यदूनां अभिनन्दनाय। सर्वमाथुरसंसेव्याय। करुणाय। भक्तबान्धवाय । सर्वगोपलधनदाय । गोपीगोपालालसाय । शौरिदत्तोपवीतिने । उग्रसेनदयाकराय । गुरुभक्ताय । ब्रह्मचारिणे । निगमाध्यायने रताय नमः । ३२०

ओं सङ्कर्षणसहाध्यायिने नमः । सुदामसुहृदे । विद्यानिधये । कलाकोशाय । मृतपुत्रप्रदाय । चक्रिणे । पांचजनिने । सर्वनारकिमोचनाय । यमार्चिताय । पराय देवाय । नामोच्चारवशाय । अच्युताय । कुब्जाविलासिने। सुभगाय। दीनबन्धवे। अनूपमाय। अक्रूरगृहगोप्त्रे। प्रतिज्ञापालकाय। शुभाय। जरासन्धजयिने नमः ॥ ३४०

ओं विदुषे नमः। यवनान्ताय। द्विजाश्रयाय। मुचुकुन्दप्रियकराय । जरासन्धपलायिताय । द्वारकाजनकाय । गूढाय । ब्रह्मण्याय । सत्यसङ्गराय । लीलाधराय । प्रियकराय । विश्वकर्मयशःप्रदाय । रुक्मिणीप्रियसन्देशाय । रुक्मशोकविवर्धनाय । चैद्यशोकालयाय । श्रेष्ठाय । दुष्टराजन्यनाशनाय। रुक्मिवैरूप्यकरणाय। रुक्मिणीवचने रताय। बलभद्रवचोग्राहिणे नमः । ३६०

ओं मुक्तरुक्मिणे नमः। जनार्दनाय। रुक्मिणीप्राणनाथाय। स्वयं सत्यभामापतये। भक्तपक्षिणे। भक्तिवश्याय। अक्रूरमणि- दायकाय । शतधन्वप्राणहारिणे। ऋक्षराजसुताप्रियाय। सत्राजित्तनयाकान्ताय । मित्रविन्दापहारकाय । सत्यापतये । लक्ष्मणाजिते । पूज्याय । भद्राप्रियङ्कराय। नरकासुरघातिने। लीलाकन्याहराय। जयिने। मुरारये । मदनेशाय नमः । ३८०

धरित्रीदुःखनाशनाय । वैनतेयिने । स्वर्गगामिने । अदित्यै कुण्डलप्रदाय । इन्द्रार्चिताय । रमाकान्ताय । वज्रिभार्याप्रपूजिताय । पारिजातापहारिणे । शक्रमानापहारकाय । प्रद्युम्नजनकाय । साम्बताताय । बहुसुताय । विधवे । गर्गाचार्याय । सत्यगतये । धर्माधाराय । धराधराय । द्वारकामण्डनाय । श्लोक्याय । सुश्लोकाय नमः । ४००

ओं निगमालयाय । पौण्ड्रकप्राणहारिणे । काशीराजशिरोहरये । अवैष्णवप्रदाहिने । सुदक्षिणभयावहाय । जरासन्धविदारिणे । धर्मनन्दनयज्ञकृते । शिशुपालशिरश्छेदिने । दन्तवक्त्रविनाशनाय । विदूरथांतकाय । श्रीशाय । श्रीदाय । द्विविदनाशनाय । रुक्मिणीमानहारिणे । रुक्मिणीमानवर्धनाय । देवर्षिशापहर्त्रे । द्रौपदीवाक्यपालकाय । दुर्वासभयहारिणे । पांचालीस्मरणागताय । पार्थदूताय नमः । ४२०

ओं पार्थमन्त्रिणे नमः । पार्थदुःखौघनाशनाय । पार्थमानापहारिणे । पार्थजीवनदायकाय । पाञ्चालीवस्त्रदात्रे । विश्वपालकपालकाय । श्वेताश्वसारथये । सत्याय । सत्यसाध्याय । भयापहाय । सत्यसन्धाय । सत्यरतये । सत्यप्रियाय । उदारधिये । महासेनजयिने । शिवसैन्यविनाशानाय । बाणासुरभुजच्छेत्रे । बाणाबाहुवरप्रदाय । तार्क्ष्यमानापहारिणे । तार्क्ष्यतेजोविवर्धनाय नमः ।। ४४०

ओं रामस्वरूपधारिणे नमः । सत्यभामामुदावहाय । रत्नाकरजलक्रीडाय । व्रजलीलाप्रदर्शकाय । स्वप्रतिज्ञापरध्वंसिने । भीष्माज्ञापरिपालकाय । वीरायुधहराय । कालाय । कालिकेशाय । महाबलाय । वर्वरीषशिरोहारिणे । वर्वरीषशिरःप्रदाय । धर्मपुत्रजयिने । शूरदुर्योधनमदान्तकाय । गोपिकाप्रीतिनिर्बन्धनित्यक्रीडाय । व्रजेश्वराय ।

राधाकुण्डरतये। धन्याय। सदान्दोलसमाश्रिताय। सदामधुवनानन्दिने नमः ॥ ४६०

ओं सदाबृन्दावनप्रियाय। अशोकवनसन्नद्धाय। सदातिलक-सङ्गताय। सदागोवर्धनरतये। सदागोकुलवल्लभाय। भाण्डीरवट-संवासिने। नित्यं वंशीवरस्थिताय। नन्दिग्रामकृतावासाय। वृषभानुग्रह-प्रियाय। गृहीतकामिनीरूपाय। नित्यं रासविलासकृते। वल्लवीजन-संगोप्त्रे। वल्लवीजनवल्लभाय। देवशर्मकृपाकर्त्रे। कल्पपादपसंस्थिताय। शिलानुगन्धनिलयाय। पादचारिणे। घनच्छवये। अतसीकुसुमप्रख्याय। सदालक्ष्मीकृपाकराय नमः। ४८०

ओं त्रिपुरारिप्रियकराय नमः। उग्रधन्वने। अपराजिताय। षड्धुरध्वंसकर्त्रे। निकुम्भप्राणहारकाय। वज्रनाभपुरध्वंसिने। पौंड्रकप्राणहारकाय। बहुलाश्वप्रीतिकर्त्रे। द्विजवर्यप्रियंकराय। शिवसङ्कटहारिणे। वृकासुरविनाशनाय। भृगुसत्कारकारिणे। शिवसात्त्विकताप्रदाय। गोकर्णपूजकाय। साम्बकुष्ठविध्वंसकारणाय। वेदस्तुताय। वेदवेत्त्रे। यदुवंशविवर्धनाय। यदुवंशविनाशिने। उद्धवोद्धारकारकाय नमः। ५००

श्री राधानामावलिः-५००

ओं राधायै नमः। राधिकायै। आनन्दायै। वृषभानुजायै। वृन्दावनेश्वर्यै। पुण्यायै। कृष्णमानसहारिण्यै। प्रगल्भायै। चतुर्यै। कामायै। कामिन्यै। हरिमोहिन्यै। ललितायै। मधुरायै। माध्व्यै। किशोर्यै। कनकप्रभायै। जितचन्द्रायै। जितमृगायै। जितसिंहायै नमः ॥ ५२०

ओं जितद्विपायै नमः। जितरम्भायै। जितपिकायै। गोविन्दहृदयोद्भवायै। जितबिम्बायै। जितशुकायै। जितपद्मायै।

कुमारिकायै। श्रीकृष्णाकर्षणायै। देव्यै। नित्यं युग्मस्वरूपिण्यै। नित्यं विहारिण्यै। कान्तायै। रसिकायै। कृष्णवल्लभायै। आमोदिन्यै। मोदवत्यै। नन्दनन्दनभूषितायै। दिव्याम्बरायै। दिव्यहारायै नमः। ५४०

ओं मुक्तामणिविभूषितायै नमः। कुञ्जप्रियायै। कुञ्जवासायै। कुञ्जनायकनायिकायै। चारुरूपायै। चारुवक्त्रायै। चारुहेमाङ्गदायै। शुभायै। श्रीकृष्णवेणुसंगीतायै। मुरलीहारिण्यै। शिवायै। भद्रायै। भगवत्यै। शान्तायै। कुमुदायै। सुन्दर्यै। प्रियायै। कृष्णक्रीडायै। कृष्णरत्यै। श्रीकृष्णसहचारिण्यै नमः। ५६०

ओं वंशीवटप्रियस्थानायै। युग्मायुग्मस्वरूपिण्यै। भाण्डीर-वासिन्यै। शुभ्रायै। गोपीनाथप्रियासख्यै। श्रुतिनिश्वसितायै। दिव्यायै। गोविन्दरसदायिन्यै। श्रीकृष्णप्रार्थन्यै। ईशानायै। महानन्दप्रदायिन्यै। वैकुण्ठजनसंसेव्यायै। कोटिलक्ष्मीसुखावहायै। कोटिकन्दर्पलावण्यायै। रतिकोटिरतिप्रदायै। भक्तिग्राह्यायै। भक्तिरूपायै। लावण्यसरस्यै। उमायै। ब्रह्मरुद्रादिसंराध्यायै नमः। ५८०

ओं नित्यं कौतूहलान्वितायै नमः। नित्यलीलायै। नित्यकामायै। नित्यशृंगारभूषितायै। नित्यवृन्दावनरसायै। नन्दनन्दनसंयुतायै। गोपिकामण्डलीयुक्तायै। नित्यं गोपालसंगतायै। गोरसक्षेपिण्यै। शूरायै। सानन्दायै। आनन्ददायिन्यै। महालीलायै। प्रकृष्टायै। नागर्यै। नगचारिण्यै। नित्यमाघूर्णितायै। पूर्णायै। कस्तूरीतिलकान्वितायै। पद्मायै नमः॥ ६००

ओं श्यामायै नमः। मृगाक्ष्यै। सिद्धिरूपायै। रसावहायै। कोटिचन्द्राननायै। गौर्यै। कोटिकोकिलसुस्वरायै। शीलसौन्दर्य-

निलयायै । नन्दनन्दनलालितायै। अशोकवनसंवासायै। भाण्डीरवन-संगतायै। कल्पद्रुमतलाविष्टायै । कृष्णायै । विश्वायै । हरिप्रियायै । अजागम्यायै। भवागम्यायै। गोवर्धनकृतालयायै। यमुनातीरनिलयायै। शश्वद्गोविन्दजल्पिन्यै नमः ।। ६२०

ओं शश्वन्मानवत्यै नमः । स्निग्धायै । श्रीकृष्णपरिवन्दितायै । कृष्णस्तुतायै । कृष्णवृतायै । श्रीकृष्णहृदयालयायै । देवद्रुमफलायै । सेव्यायै । वृन्दावनरसालयायै । कोटितीर्थमय्यै । सत्यायै । कोटितीर्थफलप्रदायै । कोटियोगसुदुष्प्राप्यायै । कोटियज्ञदुराश्रयायै । मानसायै । शशिलेखायै । श्रीकोटिसुभगायै । अनघायै । कोटिमुक्त-सुखायै । सौम्यायै नमः ।। ६४०

ओं लक्ष्मीकोटिविलासिन्यै । तिलोत्तमायै । त्रिकालस्थायै । त्रिकालज्ञायै । अधीश्वर्यै । त्रिवेदज्ञायै । त्रिलोकज्ञायै । तुरीयान्तनि-वासिन्यै । दुर्गाराध्यायै। रमाराध्यायै। विश्वाराध्यायै। चिदात्मिकायै। देवाराध्यायै। पराराध्यायै। ब्रह्माराध्यायै। परात्मिकायै। शिवाराध्यायै । प्रेमसाध्यायै। भक्ताराध्यायै। रसात्मिकायै नमः । ६६०

ओं कृष्णप्राणार्पिण्यै नमः । भामायै । शुद्धप्रेमविलासिन्यै । कृष्णाराध्यायै । भक्तिसाध्यायै । भक्तवृन्दनिषेवितायै। विश्वाधारायै । कृपाधारायै । जीवाधारायै । अतिनायिकायै । शुद्धप्रेममय्यै । लज्जायै । नित्यसिद्धायै । शिरोमणये । दिव्यरूपायै । दिव्यभोगायै । दिव्यवेषायै । मुदान्वितायै। दिव्याङ्गनावृन्दसारायै। नित्यनूतनयौवनायै नमः ।। ६८०

ओं परब्रह्मावृतायै नमः । ध्येयायै । महारूपायै । महोज्ज्वलायै । कोटिसूर्य प्रभायै । कोटिचन्द्रबिम्बाधिकच्छवये । कोमलायै । अमृतवागाद्यायै। वेदाद्यायै । वेददुर्लभायै । कृष्णासक्तायै ।

कृष्णभक्तायै । चन्द्रावलिनिषेवितायै । कलाषोडशसंपूर्णायै । कृष्णदेहार्धधारिण्यै । कृष्णबुद्धये । कृष्णसारायै । कृष्णरूपविहारिण्यै । कृष्णकान्तायै । कृष्णधनायै नमः । ७००

ओं कृष्णमोहनकारिण्यै नमः । कृष्णदृष्टये । कृष्णगोप्त्र्यै । कृष्णदेव्यै । कुलोद्वहायै । सर्वभूतस्थितात्मने । सर्वलोकनमस्कृतायै । कृष्णदात्र्यै । प्रेमधात्र्यै । स्वर्णगात्र्यै । मनोरमायै । नगधात्र्यै । यशोदात्र्यै । महादेव्यै । शुभंकर्यै । श्रीशेषदेवजनन्यै । अवतारगणप्रसुवे । उत्पलांकायै । अरविन्दांकायै । प्रसादांकायै नमः ।। ७२०

ओं अद्वितीयकायै नमः । रथांकायै । कुंजारांकायै । कुण्डलांकायै । पदस्थितायै । छत्रांकायै । विद्युदंकायै । पुष्पमालांकितायै । दंडांकायै । मुकुटांकायै । पूर्णचन्द्रायै । शुकाङ्कितायै । कृष्णान्नाहारपाकायै । वृन्दाकुञ्जविहारिण्यै । कृष्णप्रबोधनकर्यै । कृष्णशेषान्नभोजिन्यै । पद्मकेसरमध्यस्थायै । संगीतागमवेदिन्यै । कोटिकल्पान्तभ्रूभंगायै । अप्राप्तप्रलयाच्युतायै नमः ।। ७४०

ओं सर्वसत्वनिधये । पद्मशङ्खादिनिधिसेवितायै । अणिमादिगुणैश्वर्यायै । देवबृन्दविमोहिन्यै । सर्वानन्दप्रदायै । सर्वायै । सुवर्णलतिकाकृतयै । कृष्णाभिसारसङ्केतायै । मालिन्यै । नृत्यपण्डितायै । गोपीसिन्धुसकाशाह्वायै । गोपमण्डलशोभिन्यै । श्रीकृष्णप्रीतिदायै । अभीतायै । प्रत्यङ्गपुलकाञ्चितायै । श्रीकृष्णालिङ्गनरतायै । गोविन्दविरहाक्षमायै । अनन्तगुणसंपन्नायै । कृष्णकीर्तनलालसायै । बीजत्रयमय्यै मूर्त्यै नमः ।। ७६०

ओं कृष्णानुग्रहवांछितायै नमः । विमलादिनिषेव्यायै । ललिताद्यर्चितायै सत्यै । पद्मबृन्दस्थितायै हृष्टायै । त्रिपुरापरिसेवितायै ।

बृन्दावत्यर्चितायै । श्रद्धायै । दुर्ज्ञेयायै । भक्तवल्लभायै । दुर्लभायै । सान्द्रसौख्यात्मने । श्रेयोहेतवे । सुभोगदायै । सारंगायै । शारदायै । बोधायै । सद्वृन्दावनचारिण्यै नमः । ब्रह्मानन्दायै । चिदानन्दायै । ध्यानानन्दायै नमः । ७८०

ओं अर्धमात्रिकायै नमः । गन्धर्वायै । सुरतज्ञायै । गोविन्दप्राणसङ्गमायै । कृष्णाङ्गभूषणायै । रत्नभूषणायै । स्वर्णभूषितायै। श्री कृष्णहृदयावासमुक्ताकनकनालिकायै। सद्रत्नकङ्कणयुतायै। श्रीमन्नीलगिरिस्थितायै । स्वर्णनूपुरसंपन्नायै । स्वर्णकिङ्किणिमण्डितायै । अशेषरासकुतुकायै । रंभोरवे । तनुमध्यमायै । पराकृतये । परानन्दायै । परस्वर्गविहारिण्यै। प्रसूनकबरीचित्रायै। महासिन्दूरसुन्दर्यै नमः । ८००

ओं कैशोरवयसा बालायै । प्रमदाकुलशेखर्यै । कृष्णाधरसुधास्वादायै । श्यामप्रेमविनोदिन्यै। शिखिपिन्छलसच्चूडायै। स्वर्णचम्पकभूषितायै । कुङ्कुमालक्तकस्तूरीमण्डितायै । अपराजितायै । हेमहारान्वितायै। पुष्पहाराढ्यायै। रसवत्यै। माधुर्यमधुरायै। पद्मायै। पद्महस्तायै । सुविश्रुतायै । भ्रूभङ्गाभङ्गकोदण्डकटाक्ष शरसन्धिन्यै । शेषदेवशिरःस्थायै । नित्यस्थलविहारिण्यै । कारुण्यजलमध्यस्थायै । नित्यमत्तायै नमः ।। ८२०

ओं अधिरोहिण्यै नमः । अष्टभाषावत्यै । अष्टनायिकायै । लक्षणान्वितायै। सुनीतिज्ञायै। श्रुतिज्ञायै। सर्वज्ञायै। दुःखहारिण्यै। रजोगुणेश्वर्यै । शरच्चान्द्रनिभाननायै । केतकीकुसुमाभासायै । सदासिन्धुवनस्थितायै। हेमपुष्पाधिककरायै। पञ्चशक्तिमयीहितायै। स्तनकुम्भ्यै। नराढ्यायै। क्षीणापुण्यायै। यशस्विन्यै। वैराजसूयजनन्यै । श्रीशायै नमः ।। ८४०

ओं भुवनमोहिन्यै नमः। महाशोभायै। महामायायै। महाकान्त्यै । महास्मृत्यै । महामोहायै । महाविद्यायै । महाकीर्त्यै । महारत्यै । महाधैर्यायै । महावीर्यायै। महाशक्त्यै। महाद्युत्यै। महागौर्यै। महासंपदे । महाभोगविलासिन्यै । समयायै । भक्तिदायै । अशोकायै । वात्सल्यरसदायिन्यै नमः । ८६०

ओं सुहृद्भक्तिप्रदायै नमः । स्वच्छायै । माधुर्यरसवर्षिण्यै । भावभक्तिप्रदायै। शुद्धप्रेमभक्तिविधायिन्यै। गोपरामायै। अभिरामायै । क्रीडारामायै । परेश्वर्यै । नित्यरामायै । आत्मरामायै । कृष्णरामायै । रसेश्वर्यै । एकानेकजगद्व्यापायै। विश्वलीलायै। प्रकाशिन्यै। सरस्वती-शायै । दुर्गेशायै। जगदीशायै। जगद्विधये नमः। ८८०

ओं विष्णुवंशनिवासायै। विष्णुवंशसमुद्भवायै। विष्णुवंशस्तुतायै । कर्त्र्यै । सदा विष्णुवंशावन्यै। आरामस्थायै। वनस्थायै। सूर्यपुत्र्यवगाहिन्यै । प्रीतिस्थायै । नित्ययन्त्रस्थयै । गोलोकस्थायै । विभूतिदायै । स्वानुभूतिस्थितायै । व्यक्तायै । सर्वलोकनिवासिन्यै । अमृतायै। अद्भुतायै। श्रीमन्नारायणसमीडितायै। अक्षरायै। कूटस्थायै नमः। ९००

ओं महापुरुषसंभवायै नमः। औदार्यभावसाध्यायै। स्थूलसूक्ष्मायै । अतिरूपिण्यै । शिरीषपुष्पमृदुलायै । गाङ्गेयमुकुरप्रभायै । नीलोत्पलजिताक्ष्यै । सद्रत्नकबरान्वितायै । प्रेमपर्यङ्कनिलयायै । तेजोमण्डलमध्यगायै। कृष्णाङ्गगोपनायै। अभेदायै। लीलावरणनायिकायै। सुधासिन्धुसमुल्लासायै। अमृतास्यन्दविधायिन्यै । कृष्णचित्तायै । रासचित्तायै । प्रेमचित्तायै । हरिप्रियायै । अचिन्तनगुणग्रामायै नमः ॥ ९२०

ओं कृष्णलीलायै । मलापहायै । रासिसिन्धुशशाङ्कायै । रासमण्डलमण्डिन्यै । नतव्रतायै । सिंहरीच्छायै । सुमूर्तये । सुरवन्दितायै । गोपीचूडामणये । गोपीगणेड्यायै । विरजाधिकायै । गोपप्रेष्ठायै । गोपकन्यायै । गोपनार्यै । सुगोपिकायै । गोपधाम्ने । सुदामांबायै । गोपाल्यै । गोपमोहिन्यै । गोपभूषायै नमः । ९४०

ओं कृष्णभूषायै नमः । श्रीवृन्दावनचन्द्रिकायै । वीणादिघोषनिरतायै । रासोत्सवविकासिन्यै । कृष्णचेष्टापरिज्ञातायै । कोटिकन्दर्पमोहिन्यै । श्रीकृष्णगुणगानाढ्यायै । देवसुन्दरिमोहिन्यै । कृष्णचन्द्रमनोज्ञायै । कृष्णदेवसहोदर्यै । कृष्णाभिलाषिण्यै । कृष्णप्रेमानुग्रहवाञ्छितायै । क्षेमायै । मधुरालापायै । भ्रुवोर्मायायै । सुभद्रिकायै । प्रकृत्यै । परमानन्दायै । नीपद्रुमतलस्थितायै । कृपाकटाक्षायै नमः । ९६०

ओं बिम्बोष्ठ्यै नमः । रम्भायै । चारुनितम्बिन्यै । स्मरकेलिनिधानायै । गण्डताटङ्कमण्डितायै । हेमाद्रिकान्तिरुचिरायै । प्रेमाद्यायै । मदमन्थरायै । कृष्णचिन्तायै । प्रेमचिन्तायै । अतिचिन्तायै । कृष्णदायै । रासचिन्तायै । भावचिन्तायै । शुद्धचिन्तायै । महारसायै । कृष्णदृष्टित्रुटियुगायै । दृष्टिपक्ष्मविनिन्दिन्यै । कन्दर्पजनन्यै । मुख्यायै नमः । ९८०

ओं वैकुण्ठगतिदायिन्यै नमः । रासभावायै । प्रियाश्लिष्टायै । प्रेष्ठायै । प्रथमनायिकायै । शुद्धायै । सुधादेहिन्यै । श्रीरामायै । रसमंजर्यै । सुप्रभावायै । शुभाचारायै । स्वर्णद्यै । नर्मदायै । अम्बिकायै । गोमत्यै । चन्द्रभागेड्यायै । सरयूताम्रपर्णिसुवे । निष्कलङ्कचरित्रायै । निर्गुणायै । निरञ्जनायै नमः । १०००

॥ श्रीः ॥

# ॥ श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् ।

श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ।
वसुदेवात्मजःपुण्यो लीलामानुषविग्रहः ॥ १

श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधः ॥ २

देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ३

पूतनाजीवितहरः शकटासुरभंजनः ।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ ४

नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः ।
नवनीतनवाहारो मुचुकुन्दप्रसादकः ॥ ५

षोडशस्त्रीसहस्रेशस्त्रिभङ्गीमधुराकृतिः ।
शुकवागमृताब्धीन्दुर्गोविन्दो योगिनां पतिः ॥ ६

वत्सवाटचरोऽनन्तो धेनुकासुरभंजनः ।
तृणीकृततृणावर्तो यमळार्जुनभंजनः ॥ ७

उत्तालतालभेत्ता च तमालश्यामलाकृतिः ।
गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥ ८

इलापतिः परंज्योतिर्यादवेन्द्रो यदूद्वहः ।
वनमाली पीतवासाः पारिजातापहारकः ॥ ९

गोवर्धनाचलोद्धर्ता गोपालस्सर्वपालकः ।
अजो निरंजनः कामजनकः कंजलोचनः ॥ १०

मधुहा मधुरानाथो द्वारकानायको बली ।
बृन्दावनान्तसञ्चारी तुलसीदामभूषणः ॥ ११

स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ।
कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः ॥ १२

मुष्टिकासुरचाणूरमल्लयुद्धविशारदः ।
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः ॥ १३

अनादिब्रह्मचारी च कृष्णाव्यसनकर्शकः ।
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः ॥ १४

विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ।
सत्यवाक्सत्यसङ्कल्पःसत्यभामारतो जयी ॥ १५

सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ।
जगद्गुरुर्जगन्नाथो वेणुनादविशारदः ॥ १६

वृषभासुरविध्वंसी बाणासुरकरान्तकः ।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ १७

पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ।
काळीयफणिमाणिक्यरंजितश्रीपदाम्बुजः ॥ १८

दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशकः ।
नारायणः परं ब्रह्म पन्नगाशनवाहनः ॥ १९

जलक्रीडासमासक्तगोपीवस्त्रापहारकः ।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ॥ २०

सर्वतीर्थात्मकस्सर्वग्रहरूपी परात्परः ।
एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ॥ २१

कृष्णनामामृतं नाम परमानन्दकारकम् ।
अत्युपद्रवदोषघ्नं परमायुष्यवर्धनम् ॥ २२

*___*___*

श्रीः

# श्रीकृष्णाष्टोत्तरशतनामावळिः

ओं श्रीकृष्णाय नमः । कमलानाथाय । वासुदेवाय । सनातनाय । वसुदेवात्मजाय । पुण्याय । लीलामानुषविग्रहाय । श्रीवत्सकौस्तुभधराय । यशोदावत्सलाय । हरये । चतुर्भुजात्त-चक्रासिगदाशङ्खाद्युदायुधाय । देवकीनन्दनाय । श्रीशाय । नन्दगोपप्रियात्मजाय । यमुनावेगसंहारिणे । बलभद्रप्रियानुजाय । पूतनाजीवितहराय । शकटासुरभंजनाय । नन्दव्रजजनानन्दिने । सच्चिदानन्दविग्रहाय नमः ॥ २०

ओं नवनीतविलिप्ताङ्गाय नमः । नवनीतनटाय । अनघाय । नवनीतनवाहाराय । मुचुकुन्दप्रसादकाय । षोडशस्त्रीसहस्रेशाय । त्रिभङ्गीमधुराकृतये । शुकवागमृताब्धीन्दवे । गोविन्दाय । योगिनां पतये । वत्सवाटचराय । अनन्ताय । धेनुकासुरभंजनाय । तृणीकृततृणावर्ताय । यमळार्जुनभंजनाय । उत्तालतालभेत्त्रे । तमालश्यामलाकृतये । गोपगोपीश्वराय । योगिने । कोटिसूर्य-समप्रभाय नमः ॥ ४०

ओं इलापतये नमः । परस्मै ज्योतिषे । यादवेन्द्राय । यदूद्वहाय । वनमालिने । पीतवाससे । पारिजातापहारकाय । गोवर्धनाचलोद्धर्त्रे । गोपालाय । सर्वपालकाय । अजाय । निरंजनाय । कामजनकाय । कंजलोचनाय । मधुघ्ने । मधुरा-नाथाय । द्वारकानायकाय । बलिने । बृन्दावनान्तसञ्चारिणे । तुलसीदामभूषणाय नमः ॥ ६०

ओं स्यमन्तकमणेर्हर्त्रे नमः । नरनारायणात्मकाय । कुब्जा-कृष्णांबरधराय । मायिने । परमपूरुषाय । मुष्टिकासुरचाणूरमल्लयुद्ध-

विशारदाय । संसारवैरिणे । कंसारये । मुरारये । नरकान्तकाय । अनादिब्रह्मचारिणे । कृष्णाव्यसनकर्शकाय । शिशुपालशिरश्छेत्रे । दुर्योधनकुलान्तकाय । विदुराक्रूरवरदाय । विश्वरूपप्रदर्शकाय । सत्यवाचे । सत्यसङ्कल्पाय । सत्यभामारताय । जयिने नमः ॥ ८०

ओं सुभद्रापूर्वजाय नमः । जिष्णवे । भीष्ममुक्तिप्रदायकाय । जगद्गुरवे । जगन्नाथाय । वेणुनादविशारदाय । वृषभासुरविध्वंसिने । बाणासुरकरान्तकाय । युधिष्ठिरप्रतिष्ठात्रे । बर्हिबर्हावतंसकाय । पार्थसारथये । अव्यक्ताय । गीतामृतमहोदधये । काळीयफणिमाणिक्यमण्डितश्रीपदाम्बुजाय । दामोदराय । यज्ञभोक्त्रे । दानवेंद्रविनाशकाय । नारायणाय । परस्मै ब्रह्मणे । पन्नगाशनवाहनाय नमः ॥ १००

ओं जलक्रीडासमासक्तगोपीवस्त्रापहारकाय । पुण्यश्लोकाय । तीर्थपादाय । वेदवेद्याय । दयानिधये । सर्वतीर्थात्मकाय । सर्वग्रहरूपिणे । परात्पराय नमः ॥ १०८

# कृष्णाष्टोत्तरशतनामस्तोत्रम्

प्रेमामृतरसायनम्

कृष्णः करोतु कल्याणं कंसकुञ्जरकेसरी ।
काळिन्दीजलकल्लोलकोलाहलकुतूहली ॥ १

एकदा कृष्णविरहाद्ध्यायन्ती प्रियसंगमम् ।
मनोबाष्पनिरासाय जल्पन्तीदं मुहुर्मुहुः ॥ २

कृष्णः कृष्णेन्दिरानन्दो गोविन्दो गोकुलोत्सवः ।
गोपालो गोपगोपीशो वल्लवेन्द्रो व्रजेश्वरः ॥ ३

प्रत्यहं नूतनतरस्तरुणानन्दविग्रहः ।
आनन्दैकरसास्वादी संतोषाक्षयकोशभूः ॥ ४

आभीरिकानवानङ्गः परमानन्दकन्दलः ।
बृन्दावनकलानाथो व्रजानन्दनवाङ्कुरः ॥ ५

नयनानन्दकुसुमो व्रजभाग्यफलोदयः ।
प्रतिक्षणातिसुभगो मोहनो मधुराकृतिः ॥ ६

सुधानिर्यासनिचयः सुन्दरः श्यामलाकृतिः ।
नवयौवनसंभिन्नप्रेमामृतरसार्णवः ॥ ७

इन्द्रनीलमणिस्वच्छदलिताञ्जनचिक्कणः ।
इन्दीवरसुखस्पर्शो नीरदस्निग्धसुन्दरः ॥८

कर्पूरागरुकस्तूरीकुङ्कुमार्द्राङ्गधूसरः ।
सुकुञ्चितकचन्यस्तलसच्चारुशिखण्डकः ॥ ९

मत्तालिविभ्रमत्पारिजातपुष्पावतंसकः ।
आननेन्दुजितानन्दपूर्णशारदचन्द्रमाः ॥ १०

श्रीमल्ललाटपाटीरतिलकालिकरञ्जितः ।
नीलोन्नतभ्रूविलसन्मदालसविलोचनः ॥ ११

आकर्णरक्तसौन्दर्यलहरीदृष्टिमन्थरः ।
घूर्णायमाननयनसाचीक्षणविचक्षणः ॥ १२

अपाङ्गेङ्गितसौभाग्यतरलीकृतचेतनः ।
ईषन्मीलितलोलाक्षः सुनासापुटसुन्दरः ॥ १३

गण्डप्रान्तोल्लसत्स्वर्णमकराकृतिकुण्डलः ।
प्रसन्नानन्दवदनो जगदाह्लादकारकः ॥ १४

सुस्मितामृतलावण्यप्रकाशीकृतदिङ्मुखः ।
सिन्दूरारुणसुस्निग्धमाणिक्यदशनच्छदः ॥ १५

पीयूषाधिकमाधुर्यसूक्तिश्रुतिरसायनः ।
त्रिभङ्गीललितस्तिर्यग्ग्रीवस्त्रैलोक्यमोहनः ॥ १६

कुञ्चिताधरसंसक्तकूजद्वेणुविनोदवान् ।
कङ्कणाङ्गदकेयूरमुद्रिकाविलसद्भुजः ॥ १७

स्वर्णसूत्रपुटन्यस्तकौस्तुभामुक्तकन्धरः ।
मुक्ताहारोल्लसद्वक्षःस्फुरच्छ्रीवत्सलाञ्छनः ॥ १७

आपीनहृदयो नीपमालावान्बन्धुरोदरः ।
संवीतपीतवसनो रशनाविलसत्कटिः ॥ १९

अन्तरीणकटीबद्धप्रपदान्दोलिताञ्चलः ।
अरविन्दपदद्वन्द्वकलक्वणितनूपुरः ॥ २०

बन्धूकारुणमाधुर्यसुकुमारपदाम्बुजः ।
नखचन्द्रजिताशेषदर्पणेन्दुमणिप्रभः ॥ २१

ध्वजवज्राङ्कुशाम्भोजराजच्चरणपल्लवः ।
त्रैलोक्याद्भुतसौन्दर्यपरिपाकमनोहरः ॥ २२

साक्षात्केलिकलामूर्तिः परिहासरसार्णवः ।
यमुनोपवनश्रेणीविलासी व्रजनायकः ॥ २३

गोपाङ्गनाजनासक्त बृन्दारण्यपुरंदरः ।
आभीरनगरीप्राणनायकः कामशेखरः ॥ २४

यमुनानाविको गोपीपारावारकृतोद्यमः ।
राधावरोधनिरतः कदम्बवनमन्दिरः ॥ २५

व्रजयोषित्सदाहृद्यो गोपीलोचनतारकः ।
यमुनानन्दरसिकः पूर्णानन्दकुतूहली ॥ २६

गोपिकाकुचकस्तूरीपङ्किलः केळिलालसः ।
अलक्षितकुटीरस्थो राधासर्वस्वसम्पुटः ॥ २७

वल्लवीवदनाम्भोजमधुमत्तमधुव्रतः ।
निगूढरसविद्गोपीचित्ताह्लादकलानिधिः ॥ २८

कालिन्दीपुलिनानन्दक्रीडाताण्डवपण्डितः ।
आभीरिकानवानङ्गरससिन्धुसुधाकरः ॥ २९

विदग्धगोपवनिताचित्ताकूतविनोदकः ।
नानोपायनपाणिस्वगोपनारीगणावृतः ॥ ३०

वाञ्छाकल्पतरुः कामकलाधरशिरोमणिः ।
कोटिकन्दर्पलावण्यः कोटीन्दुतुलितद्युतिः ॥ ३१

जगत्त्रयमनोमोहाकरो मन्मथमन्मथः ।
गोपीसीमन्तिनीशश्वद्भावापेक्षापरायणः ॥ ३२

नवीनमधुरस्नेहप्रेयसीप्रेमसञ्चयः ।
गोपीमनोरथाक्रान्तो नाट्यलीलाविशारदः ॥ ३३

प्रत्यङ्गरभसावेशप्रमदाप्राणवल्लभः ।
रासोल्लासमदोन्मत्तराधिकारतिलंपटः ॥ ३४

खेलालीलापरिश्रान्तस्वेदाङ्कुरचिताननः ।
गोपिकाकामुकः श्रीमान्मलयानिलसेवितः ॥ ३५

सकृत्प्रपन्नजनतासंरक्षणधुरन्धरः ।
सुप्रसन्नो वासुदेवो गोपिकाजनवल्लभः ॥ ३६

इत्येवं प्राणनाथस्य नाम्नामष्टोत्तरं शतम् ।
भक्त्या यस्तु पठेन्नित्यं स याति परमां गतिम् ॥ ३७

# श्री कृष्णाष्टोत्तरशतनामावलिः

ओं श्रीकृष्णाय नमः । कृष्णेन्दिरानन्दाय । गोविन्दाय । गोकुलोत्सवाय । गोपालाय । गोपगोपीशाय । वल्लवेन्द्राय । व्रजेश्वराय । प्रत्यहं नूतनतराय । तरुणानन्दविग्रहाय । । आनन्दैकरसास्वादिने । सन्तोषाक्षयकोशभुवे । आभीरिकानवानङ्गाय । परमानन्दकन्दलाय । बृन्दावनकलानाथाय । व्रजानन्दनवाङ्कुराय । नयनानन्दकुसुमाय । व्रजभाग्यफलोदयाय । प्रतिक्षणातिसुभगाय । मोहनाय नमः । २०

ओं मधुराकृतये नमः । सुधानिर्यासनिचयाय । सुन्दराय । श्यामलाकृतये । नवयौवनसंभिन्नप्रेमामृतरसार्णवाय । इन्द्रनीलमणि-स्वच्छदलिताञ्जनचिक्कणाय । इन्दीवरसुखस्पर्शाय । नीरदस्निग्ध-सुन्दराय । कर्पूरागरुकस्तूरीकुङ्कुमार्द्राङ्गधूसराय । सुकुञ्चितकचन्य-स्तलसच्चारुशिखण्डकाय । मत्तालिविभ्रमत्पारिजातपुष्पावतंसकाय । आननेन्दुजितानन्दपूर्णशारदचन्द्रमसे । श्रीमल्ललाटपाटीरतिलकालि-करञ्जिताय । नीलोन्नत-भ्रूविलसन्मदालसविलोचनाय । आकर्णरक्तसौन्दर्यलहरीदृष्टिमन्थराय । घूर्णायमाननयनसाचीक्षण-विचक्षणाय । अपाङ्गेङ्गितसौभाग्य-तरलीकृतचेतनाय । ईषन्मीलित-लोलाक्षाय । सुनासापुटसुन्दराय । गण्डप्रान्तोल्लसत्स्वर्णमकरा-कृतिकुण्डलाय नमः । ४०

ओं प्रसन्नानन्दवदनाय नमः । जगदाह्लादकारकाय । सुस्मितामृ-तलावण्यप्रकाशीकृतदिङ्मुखाय । सिन्दूरारुणसुस्निग्धमाणिक्य-दशनच्छदाय । पीयूषाधिकमाधुर्यसूक्तिश्रुतिरसायनाय । त्रिभङ्गी-ललिताय । तिर्यग्ग्रीवाय । त्रैलोक्यमोहनाय । कुञ्चिताधरसंसक्तकूज-द्वेणुविनोदवते । कङ्कणाङ्गदकेयूरमुद्रिकाविलसद्भुजाय । स्वर्णसूत्र-पुटन्यस्तकौस्तुभामुक्तकन्धराय । मुक्ताहारोल्लसद्वक्षःस्फुरत्श्रीवत्स-लाञ्छनाय । आपीनहृदयाय । नीपमालावते । बन्धुरोदराय ।

संवीतपीतवसनाय । रशनाविलसत्कटये । अन्तरीण-कटीबद्धप्रपदान्दोलिताञ्चलाय । अरविन्दपदद्वन्द्वकलक्वणितनूपुराय । बन्धूकारुणमाधुर्यसुकुमारपदाम्बुजाय नमः । ६०

ओं नखचन्द्रजिताशेषदर्पणेन्दुमणिप्रभाय नमः । ध्वजवज्राङ्कुशाम्भोजराजच्चरणपल्लवाय । त्रैलोक्याद्भुतसौन्दर्यपरिपाकमनोहराय । साक्षात्केलिकलामूर्तये । परिहासरसार्णवाय । यमुनोपवन-श्रेणीविलासिने । व्रजनायकाय । गोपाङ्गनाजनासक्तबृन्दारण्य-पुरन्दराय । आभीरनगरीप्राणनायकाय । कामशेखराय । यमुनानाविकाय । गोपीपारावारकृतोद्यमाय । राधावरोधनिरताय । कदम्बवनमन्दिराय । व्रजयोषित्सदाहृद्याय । गोपीलोचनतारकाय । यमुनानन्दरसिकाय । पूर्णानन्दकुतूहलिने । गोपिकाकुचकस्तूरी-पङ्किलाय । केळिलालसाय नमः । ८०

ओं अलक्षितकुटीरस्थाय नमः । राधासर्वस्वसम्पुटाय । वल्लवी-वदनाम्भोजमधुमत्तमधुव्रताय । निगूढरसविदे । गोपीचित्ताह्लादकला-निधये । कालिन्दीपुलिनानन्दक्रीडाताण्डवपण्डिताय । आभीरिका-नवानङ्गरससिन्धुसुधाकराय । विदग्धगोपवनिताचित्ताकूतविनोदकाय । नानोपायनपाणिस्वगोपनारीगणावृताय । वाञ्छाकल्पतरवे । काम-कलाधरशिरोमणये । कोटिकन्दर्पलावण्याय । कोटीन्दुतुलितद्युतये । जगत्त्रयमनोमोहाकाराय । मन्मथमन्मथाय । गोपीसीमन्तिनी-शश्वद्भावापेक्षापरायणाय । नवीनमधुरस्नेहप्रेयसीप्रेमसञ्चयाय । गोपी-मनोरथाक्रान्तनाट्यलीलाविशारदाय । प्रत्यङ्गरभसावेशप्रमदा-प्राणवल्लभाय । रासोल्लासमदोन्मत्तराधिकारतिलम्पटाय नमः । १००

ओं खेलालीलापरिश्रान्तस्वेदाङ्कुरचिताननाय नमः । गोपिकाकामुकाय । श्रीमते । मलयानिलसेविताय । सकृत्प्रपन्नजनता-संरक्षणधुरन्धराय । सुप्रसन्नाय । वासुदेवाय । गोपिकाजनवल्लभाय । रुक्मिणीसत्यभामासमेत श्री राजगोपालपरब्रह्मणे नमः ।

# ।। गोपालाष्टोत्तरशतनामावलिः ।।

(गोकारादिः)

ओं गोपालतनयाय नमः । गोपाय । गोपगोकुलनायकाय । गोपालाय । गोकुलानन्दाय । गोपसंरक्षणोत्सुकाय । गोवत्सरूपिणे । गोपोषिणे । गोपिकासुतरूपधृते । गोपीदधिघृतक्षीरशिक्य-भाजनलुण्ढकाय । गोपिकागण्डसंसक्तश्रीमद्वदनपङ्कजाय । गोपि-काक्ष्यञ्जनासक्तमञ्जुलाधरपल्लवाय । गोपीरदनसंदष्टरक्तिमाधर-शोभिताय । गोपीपीनकुचद्वन्द्वमर्दनात्यन्तनिर्दयाय । गोपिका-गानसंसक्ताय । गोपिकानर्तनोत्सुकाय । गोपीसंभाषणरताय । गोपक्रीडामहोत्सवाय । गोपीवस्त्रापहारिणे । गोपीकृतनखक्षताय नमः । २०

ओं गोपिकासहभोक्त्रे नमः । गोपिकापादसेवकाय । गोपिका-धवरूपिणे । गोपस्त्रीमूर्तिवेषधृते । गोपीगानानुसरणमुरळीगा-नरञ्जकाय । गोपिकापुण्यनिवहाय । गोपिकाजनवल्लभाय । गोपिका-दत्तसूपान्नदधिक्षीरघृताशनाय । गोपीचर्वितताम्बूलग्रहणोत्सुकमान-साय । गोपीभुक्तावशिष्टान्नसंपूरितनिजोदराय । गोपीमुखाब्ज-मार्ताण्डाय । गोपीनयनगोचराय । गोपस्त्रीपञ्चीवशिखाय । गोपिकाहृदयालयाय । गोपीहृदब्जभ्रमराय । गोपीचारित्रगानवते । गोपस्त्रीपरमप्रीतये । गोपिकाध्याननिष्ठिताय । गोपिकानयनानन्दाय । गोपस्त्रीमध्यसंस्थिताय नमः । ४०

ओं गोपनारीमनोहारिणे नमः । गोपस्त्रीदत्तभूषणाय । गोपीसौदामिनीमेघाय । गोपीनीरधिचन्द्रमसे । गोपिकालङ्कृतात्यन्त-सूक्ष्मोष्णीषसुकञ्चुकाय । गोपीभुजोपधानाय । गोपीचित्तफलप्रदाय । गोपिकासङ्गमश्रान्ताय । गोपिकासुरतप्रियाय । गोपीफुल्लमुखाम्भोज-सुधास्वादनलम्पटाय । गोपस्त्रीदत्तपीठस्थाय । गोपीसल्लापसादराय ।

गोपीवामाङ्कसंरूढाय । गोपिकाभ्यञ्जनेरताय । गोपीभावपरिज्ञात्रे । गोपस्त्रीदर्शनोन्मिषाय । गोपिकाकृतशुश्रूषाय । गोपिकालिङ्गनोत्सुकाय । गोवर्धनाचलोद्धर्त्रे । गोदोहनलसत्कराय नमः । ६०

ओं गोबृन्दवीताय नमः । गोविन्दाय । गोपिकागोपगोवृताय । गोपालाङ्कणसंचारिणे । गोपबालानुरञ्जकाय । गोधनाय । गोवृताय । गोपाय । गोपगोगोपिकार्तिघ्ने । गोनामभाषित्रे । गोप्त्रे । गोपमानसरञ्जकाय । गोसहस्रालिमध्यस्थाय । गोपबालशतावृताय । गोबृन्दभाषाविज्ञात्रे । गोपद्रव्यापहारकाय । गोपवेषाय । गोपनाथाय । गोपभाषणसंभ्रमाय । गोपदासाय नमः । ८०

ओं गोपपूज्याय नमः । गोपालकशुभप्रदाय । गोपनेत्रे । गोपपित्रे । गोपसंकटमोचकाय । गोपमात्रे । गोपसखाय । गोपभ्रात्रे । गोपजाय । गोपबन्धवे । गोपपुण्याय । गोपसन्तानभूरुहाय । गोपालनीतदध्यन्नभोक्त्रे । गोपाललालिताय । गोपालप्राणदात्रे । गोपगोपीजनावृताय । गोकुलोत्सवसन्तोषिणे । गोदधिक्षीरचोरकाय । गोवर्धनरताय । गोपाय नमः ।

ओं गोपाह्वानकृतादराय । गोग्रासहारिणे । गोकण्डूविमोचननखावलये । गोहिताय । गोकुलाराध्याय । गोगोपीजनवल्लभाय । गोलोकनाथाय । गोगोपगोपिकाबृन्दवन्दिताय नमः । १०८

इत्येवं गोपिकानाथनाम्नामष्टोत्तरं शतम् ।
जपान्ते यः पठेन्नित्यं तस्य सिद्धिर्भवेन्मनोः ॥

## ॥ नारायणाष्टोत्तरशतनामावलिः ॥

ओं विष्णवे नमः । लक्ष्मीपतये । कृष्णाय । वैकुण्ठाय । गरुडध्वजाय । परब्रह्मणे । जगन्नाथाय । वासुदेवाय । त्रिविक्रमाय । दैत्यान्तकाय । मधुरिपवे । तार्क्ष्यवाहाय । सनातनाय । नारायणाय ।

पद्मनाभाय । हृषीकेशाय । सुधाप्रदाय । माधवाय । पुण्डरीकाक्षाय । स्थितिकर्त्रे नमः । २०

ओं परात्पराय नमः । वनमालिने । यज्ञरूपाय । चक्रपाणये । गदाधराय । उपेन्द्राय । केशवाय । हंसाय । समुद्रमथनाय । हरये । गोविन्दाय । ब्रह्मजनकाय । कैटभासुरमर्दनाय । श्रीधराय । कामजनकाय । शेषशायिने । चतुर्भुजाय । पाञ्चजन्यधराय । श्रीमते । शार्ङ्गपाणये नमः । ४०

ओं जनार्दनाय नमः । पीताम्बरधराय । देवाय । सूर्यचन्द्रविलोचनाय । मत्स्यरूपिणे । कूर्मरूपिणे । क्रोडरूपिणे । नृकेसरिणे । वामनाय । भार्गवाय । रामाय । हलिने । कल्किने । हयाननाय । विश्वम्भराय । शिंशुमाराय । श्रीकराय । कपिलाय । ध्रुवाय । दत्तात्रेयाय नमः ।। ६०

ओं अच्युताय नमः । अनन्ताय । मुकुन्दाय । उदधि(पक्षि)वाहनाय । धन्वन्तरये । श्रीनिवासाय । प्रद्युम्नाय । पुरुषोत्तमाय । श्रीवत्सकौस्तुभधराय । मुरारातये । अधोक्षजाय । ऋषभाय । मोहिनीरूपधारिणे । संकर्षणाय । पृथवे । क्षीराब्धिशायिने । भूतात्मने । अनिरुद्धाय । भक्तवत्सलाय । नराय नमः ।। ८०

ओं गजेन्द्रवरदाय नमः । त्रिधाम्ने । भूतभावनाय । श्वेतद्वीपसुवास्तव्याय । सूर्यमण्डलमध्यगाय । सनकादिमुनिध्येयाय । भगवते । शङ्करप्रियाय । नीलाकान्ताय । धराकान्ताय । वेदात्मने । बादरायणाय । भागीरथीजन्मभूमिपादपद्माय । सतां प्रभवे । स्वभुवे । विभवे । घनश्यामाय । जगत्कारणाय । अव्ययाय । बुद्धावताराय नमः । १००

ओं शान्तात्मने नमः । लीलामानुषविग्रहाय । दामोदराय । विराड्रूपाय । भूतभव्यभवत्प्रभवे । आदिदेवाय । देवदेवाय । प्रह्लादपरिपालकाय नमः । ओं नमो नारायणाय ।।

## ।। चम्पकारण्यनाथाष्टोत्तरशतनामानि ।।

ओं श्रीकृष्णाय नमः । राजगोपालाय । श्रीकान्ताय । देवकीसुताय । श्रीचम्पकेश्वराय । श्रीमते । गोविन्दाय । गरुडध्वजाय । वासुदेवाय । अरविन्दाक्षाय । चम्पकारण्यनायकाय । रुक्मिणीवल्लभाय । विष्णवे । गोभिलाभीष्टदायकाय । केशवाय । केशिसंहारिणे । कालिन्दीरमणाय । हरये । स्वायम्भुवविमानस्थाय । सदागोप्रलयार्चिताय नमः । २०

ओं दक्षिणद्वारकानाथाय नमः । श्रीचम्पकवनाश्रयाय । हरिद्रातटिनीतीरविलासिने । विश्ववन्दिताय । नन्दसूनवे । यदुश्रेष्ठाय । नारदस्तुतवैभवाय । राजशेखरराजेन्द्रकृतघ्नत्वविमोचकाय । राधा-पयोधरासक्ताय । राजशेखरपूजिताय । माधवाय । मधुरानाथाय । महामायाय । अघनाशाय । नारायणाय । हृषीकेशाय । श्रीधराय । गोपिकासुताय । दामोदराय । जगन्नाथाय नमः । ४०

ओं भगवते नमः । पुरुषोत्तमाय । उरुगायाय । त्रिलोकेशाय । वामनाय । मधुसूदनाय । त्रिभङ्गिने । मधुराकाराय । परमात्मने । त्रिविक्रमाय । लावण्यधाम्ने । नित्यश्रिये । सत्यभामाप्रियङ्कराय । वेत्रराजितहस्ताग्राय । वेणुनादविनोदवते । सत्यभामांसविन्यस्त-वामपाणिसरोरुहाय । मन्दस्मितमुखाम्भोजाय । मङ्गलालयविग्रहाय । श्रीचम्पकमहीपालाय । विजयप्रियसारथये नमः । ६०

ओं यशोदानन्दजनकाय नमः । दधिभाण्डप्रभेदकाय । दयाबिन्दुलसद्गात्राय । नवनीतापहारकाय । उलूखलनिबद्धाङ्गाय । मुकुन्दाय । मुक्तिदायकाय । आश्चर्यमूर्तये । आर्तिघ्नाय । नन्दगोपविमोचकाय । भक्तप्रियाय । भक्तवश्याय । भृगुसेव्याङ्घ्रिपङ्कजाय । वत्सदानवसंहर्त्रे । वत्सलाय । वत्सपालकाय ।

गोवर्धनाचलधराय । गोपालाय । गोकुलेश्वराय । आभीरकामिनीकान्ताय नमः । ८०

ओं बालाय नमः । शकटभेदनाय । वेत्रधारिणे । व्रजाध्यक्षाय । वासुदेवाय । गवीश्वराय । बर्हावतंसरुचिराय । बृन्दावनमहोत्सवाय । तृणताग्रमहारत्नगोपदण्डलसत्कराय । मन्दारहारविलसच्चाम्पेयकुसुमप्रियाय । कमलार्चितपादाब्जाय । कमलासनवन्दिताय । रक्ताब्जनायिकानाथाय । रासक्रीडारतोत्सुकाय । हरिद्रासिन्धुसलिलक्रीडासक्तवधूटिकाय । वेणुवाद्यैकरसिकाय । देवाय । वैणविकोत्तमाय । प्रणयिस्कन्धनिक्षिप्तभुजमालाविराजिताय । संप्राप्तदिव्यस्त्रीभावाय नमः ॥ १००

ओं मुक्तसङ्गाय । वरप्रदाय । पीताम्बारधराय । श्यामाय । वनमालिने । जनार्दनाय । चम्पकारण्यनिलयाय । दक्षिणद्वारकेश्वराय नमः । १०८ ॥ (चंपकारण्यं-मन्नार्गुडी)

## ॥ श्री राधाकृष्णाष्टोत्तरशतनामावलिः ॥

ओं राधिकारमणाय नमः । राधास्वान्तस्थाय । राधिकापतये । राधामुखाब्जमार्ताण्डाय । राधिकारतिलोलुपाय । राधाधरसुधासक्ताय । राधाप्रस्तावसादराय । राधासनसुखासीनाय । राधारमितविग्रहाय । राधासर्वस्वभूताय । राधालिङ्गनतत्पराय । राधासंलापमुदिताय । राधाकृतनखक्षताय । राधावरोधनिरताय । राधिकास्तनशायिताय । राधिकासहभोक्त्रे । राधासर्वस्वसंपुटाय । राधापयोधरासक्ताय । राधालीलाविमोहिताय । राधिकानयनोन्नेयाय नमः । २०

ओं राधानयनपूजिताय नमः । राधिकानयनानन्दाय । राधिकाहृदयालयाय । राधामङ्गलसर्वस्वाय । राधामङ्गलकारणाय । राधिकाध्यानसंतुष्टाय । राधाध्यानपरायणाय । राधाकथाविलासिने ।

राधानियमितान्तराय । राधाचित्तहराय । राधास्वाधीनकरणत्रयाय । राधाशुश्रूषणरताय । राधिकापरिचारकाय । राधिकावासितस्वान्ताय । राधिकास्वान्तवासिताय । राधिका-कलिताकल्पाय । राधाकल्पितभूषणाय । राधिकाहृदयानन्दाय । राधाकूतविनोदवते । राधिकानयनाधीनाय नमः । ४०

ओं राधिकानिहितेक्षणाय नमः । राधाविलासमुदिताय । राधानयनगोचराय । राधापाङ्गहताय । राधापाङ्गविभ्रमवञ्चिताय । राधिकापुण्यनिवहाय । राधिकाकुचमर्दनाय । राधिकासंगमश्रान्ताय । राधिकाबाहुसन्दिताय । राधापुण्यफलाय । राधानखाङ्कपरिमण्डिताय । राधाचर्चितगन्धाढ्याय । राधादृतविलासवते । राधालीलारताय । राधाकुचमण्डलशायिताय । राधातपःफलाय । राधासंक्रान्ताय । राधिकाजयिने । राधानयनविक्रीताय । राधासंश्लेषणोत्सुकाय नमः । ६०

ओं राधिकावचनप्रीताय नमः । राधिकानर्तनोद्यताय । राधापाणिगृहीत्रे । राधिकानर्मदायकाय । राधातर्जनसंतुष्टाय । राधालिङ्गनतत्पराय । राधाचरित्रगायिने । राधागीतचरित्रवते । राधिकाचित्तसंमोहाय । राधामोहितमानसाय । राधावश्यमतये । राधाभुक्तशेषसुभोजनाय । राधाकेलिकलासक्ताय । राधिकाकृत-भोजनाय । राधाभ्यञ्जनपारीणाय । राधाक्ष्यञ्जनचित्रिताय । राधिकाश्रवणानन्दवचनाय । राधिकायनाय । राधिकामङ्गलाय । राधापुण्याय नमः । ८०

ओं राधायशःपराय नमः । राधाजीवितकालाय । राधिकाजीवनौषधाय । राधाविरहसंतप्ताय । राधाबर्हिणीनीरदाय । राधिकामन्मथाय । राधास्तनकुड्मलमोहिताय । राधिकारूपविक्रीताय । राधालावण्यवञ्चिताय । राधाक्रीडावनावासिने । राधाक्रीडाविलासवते ।

राधासंनुतचारित्राय । राधाचरितसादराय । राधासंकल्पसन्तानाय । राधिकामितदायकाय । राधिकागण्डसंसक्तराकाचन्द्रमुखाम्बुजाय । राधिकाक्ष्यञ्जनापीच्यकोमलाधरविद्रुमाय । राधिकारदसंदष्टरक्तिमाधरमञ्जुलाय । राधापीनकुचद्वन्द्वमर्दनोद्युक्तमानसाय । राधाचरितसंवादिवेणुवादनतत्पराय नमः । १००

ओं राधिकामुखलावण्यसुधाम्भोनिधिचन्द्रमसे नमः । राधिकासदनोद्यानजलक्रीडाविहारवते । राधिकाकुचकस्तूरीपत्रलेखनतत्पराय । राधिकागात्रसंस्पर्शसुखसन्तुष्टमानसाय । राधिकाकार्यकारिणे । राधिकाकारितेङ्गिताय । राधाभुजलताश्लिष्टाय । राधावसनभूषिताय नमः ॥ १०८

राधिकारमणस्योक्तं पुण्यमष्टोत्तरं शतम् ।
इदं यः कीर्तयेन्नित्यं स सर्वफलमाप्नुयात् ॥

॥श्रीः॥

## ॥ श्रीगोपालशतनामस्तोत्रम् ।

पार्वत्युवाच–

देवदेव महादेव सर्ववाञ्छाप्रपूरक ।
पुरा प्रियं देवदेव कृष्णस्य परमाद्भुतम् ॥ १ ॥

नाम्नां शतं समासेन कथयामीति सूचितम् ।
श्रीभगवानुवाच ॥
शृणु प्राणप्रिये देवि गोपनादतिगोपितम् ॥ २ ॥

मम प्राणस्वरूपं च तव स्नेहात्प्रकाश्यते ।
यस्यैकवारं पठनात्सर्वयज्ञफलं लभेत् ॥ ३ ॥

मोहनस्तम्भनाकर्षः पठनाज्जायते नृणाम् ॥
स मुक्तः सर्वपापेभ्यो यस्य स्मरणमात्रतः ॥ ४ ॥

स्वयमायान्ति तस्यैव निश्चलाः सर्वसम्पदः ॥
राजानो दासतां यान्ति वह्नयो यान्ति शीतताम्
जलस्तम्भं रिपुस्तम्भं शत्रूणां वञ्चनं तथा ॥ ५ ॥

अस्य श्रीगोपालशतनामस्तोत्रस्य नारद ऋषिः, । अनुष्टुपूछन्दः । श्रीगोपालः परमात्मा देवता । श्रीगोपालप्रीत्यर्थे शतनामपाठे विनियोगः।

गोपालो गोपतिर्गोप्ता गोविन्दो गोकुलप्रियः ।
गंभीरो गगनो गोपीप्राणभृत् प्राणधारकः ॥ ६ ॥

पतितानन्दनो नन्दी नन्दीशः कंससूदनः ।
नारायणो नरत्राता नरकार्णवतारकः ॥ ७ ॥

नवनीतप्रियो नेता नवीनघनसुन्दरः ।
नवबालकवात्सल्यो ललितानन्दतत्परः ॥ ८ ॥

पुरुषार्थप्रदः प्रेमप्रवीणः परमाकृतिः ।
करुणः करुणानाथः कैवल्यसुखदायकः ॥ ९ ॥

कदम्बकुसुमावेशी कदम्बवनमन्दिरः ।
कादम्बी विमदामोदघूर्णलोचनपंकजः ॥ १० ॥

कामी कान्तकलानन्दी कान्तः कामनिधिः कविः ।
कौमोदकीगदापाणिः कवीन्द्रो गतिमान्हरः ॥ ११ ॥

कमलेशः कलानाथः कैवल्यः सुखसागरः ।
केशवः केशिहा केशः कलिकल्मषनाशनः ॥ १२ ॥

कृपालुः करुणासेवी कृपोन्मीलितलोचनः ।

स्वच्छन्दः सुन्दरः सुन्दः सुरवृन्दनिषेवितः ॥ १३ ॥

सर्वज्ञः सर्वदो दाता सर्वपापविनाशनः ।
सर्वाह्लादकरः सर्वः सर्ववेदविदां प्रभुः ॥ १४ ॥

वेदान्तवेद्यो वेदात्मा वेदप्राणकरो विभुः ।
विश्वात्मा विश्वविद्विश्वप्राणदो विश्ववन्दितः ॥ १५ ॥

विश्वेशः शमनस्त्राता विश्वेश्वरसुखप्रदः ।
विश्वदो विश्वहारी च पूरकः करुणानिधिः ॥ १६ ॥

धनेशो धनदो धन्वी धीरो धीरजनप्रियः ।
धरासुखप्रदो धाता दुर्धरान्तकरो धरः ॥ १७ ॥

रमानाथो रमानन्दो रसज्ञो हृदयास्पदः ।
रसिको रसदो रासी रासानन्दकरो रसः ॥ १८ ॥

राधिकाराधितो राधाप्राणेशः प्रेमसागरः ।
नाम्नां शतं समासेन तव स्नेहात्प्रकाशितम् ॥ १९ ॥

अप्रकाश्यमिदं मन्त्रं गोपनीयं प्रयत्नतः ।
यस्य तस्यैकपठनात्सर्वविद्यानिधिर्भवेत् ॥ २० ॥

पूजयित्वा दयानाथं ततः स्तोत्रमुदीरयेत् ।
पठनाद्देवदेवेशि भोगमुक्तफलं लभेत् ॥ २१ ॥

सर्वपापविनिर्मुक्तः सर्वदेवाधिपो भवेत् ।
जपलक्षेण सिद्धं स्यात्सत्यं सत्यं न संशयः ।
किमुक्तेनैव बहुना विष्णुतुल्यो भवेन्नरः ॥ २२ ॥

*___*___*

## ॥श्रीगोपालशतनामावलिः॥

गोपालाय नमः। गोपतये। गोप्त्रे। गोविन्दाय। गोकुलप्रियाय। गंभीराय। गगनाय। गोपीप्राणभृते। प्राणधारकाय। पतितानन्दनाय। नन्दिने। नन्दीशाय। कंससूदनाय। नारायणाय। नरत्रात्रे। नरकार्णवतारकाय। नवनीतप्रियाय। नेत्रे। नवीनघनसुन्दराय। नवबालकवात्सल्याय नमः ॥ २० ॥

ललितानन्दतत्पराय नमः। पुरुषार्थप्रदाय। प्रेमप्रवीणाय। परमाकृतये। करुणाय। करुणानाथाय। कैवल्यसुखदायकाय। कदम्बकुसुमावेशिने। कदम्बवनमन्दिराय। कार्दबिने। विमदामोदघूर्णलोचनपङ्कजाय। कामिने। कान्ताकलानन्दिने। कान्ताय। कामनिधये। कवये। कौमोदकीगदापाणये। कवीन्द्राय। गतिमते। हराया नमः॥ ४०

कमलेशाय नमः। कलानाथाय। कैवल्याय। सुखसागराय। केशवाय। केशिघ्ने। केशाय। कलिकल्मषनाशनाय। कृपालवे। करुणासेविने। कृपोन्मीलितलोचनाय। स्वच्छन्दाय। सुन्दराय। सुन्दाय। सुरवृन्दनिषेविताय। सर्वज्ञाय। सर्वदाय। दात्रे। सर्वपापविनाशनाय। सर्वाह्लादकराय नमः॥ ६०

सर्वाय नमः। सर्ववेदविदां प्रभवे। वेदान्तवेद्याय। वेदात्मने। वेदप्राणकराय। विभवे। विश्वात्मने। विश्वविदे। विश्वप्राणदाय। विश्ववन्दिताय। विश्वेशाय। शमनाय। त्रात्रे। विश्वेश्वरसुखप्रदाय। विश्वदाय। विश्वहारिणे। पूरकाय। करुणानिधये। धनेशाय। धनदाय नमः॥ ८०

धन्विने नमः। धीराय। धीरजनप्रियाय। धरासुखप्रदाय। धात्रे। दुर्धराय। अन्तकराय। धराय। रमानाथाय। रमानन्दाय। रसज्ञाय। हृदयास्पदाय। रसिकाय। रसदाय। रासिने। रासानन्दकराय। रसाय। राधिकाराधिताय। राधाप्राणेशाय। प्रेमसागराय नमः॥ १००

# श्रीविठ्ठलाष्टोत्तरशतनामस्तोत्रम्

श्रुत्वा नामसहस्रं श्रीविठ्ठलस्य गुणान्वितम्।
पार्वती परिपप्रच्छ शंकरं लोकशंकरम्॥ १॥

श्रीपार्वत्युवाच॥

देवदेव महादेव देवानुग्रहविग्रह।
अष्टोत्तरशतं नाम्नां तस्य देवस्य मे वद॥ २॥

जनः कलिमलादिग्धोऽलसः कामाविलो जडः।
पाठाद्यस्य सकृद्वापि सौशील्यादियुतो भवेत्॥ ३॥

तदहं श्रोतुमिच्छामि तवाज्ञानं न विद्यते।
इत्युक्तो भार्यया शंभुः संस्मरन् पुरुषोत्तमम्॥ ४॥

कटिस्थितकरद्वन्द्वं जगाद नगपुत्रिकाम्।
श्रीशंकर उवाच–
देवि लोकोपकाराय कृतः प्रश्नस्त्वयानघे॥ ५॥

हिताय सर्वजन्तूनां नाम्नामष्टोत्तरं शतम्।
श्रीविठ्ठलस्य देवस्य वाग्मिसिद्धिप्रदं नृणाम्॥ ६॥

अष्टोत्तरशतस्याहमृषिः प्रोक्तो मनीषिभिः।
छन्दोऽनुष्टुब् देवता श्रीविठ्ठलः परिकीर्तितः॥ ७॥

ध्यायेच्छ्रीविठ्ठलाख्यं समपदकमलं पद्मपत्रायताक्षं
गम्भीरस्निग्धहासं कटिनिहितकरं नीलमेघावभासम्।
विद्युद्भासो वसानं मणिमयमकुटं कुण्डलोद्भासिगण्डं
मायूरस्रग्विभूषाभयवरसहितं कौस्तुभोद्भासिताङ्गम्॥ ८॥

ओं क्लीं विठ्ठलः पुण्डरीकाक्षः पुण्डरीकनिभेक्षणः।
पुण्डरीकाश्रमपदः पुण्डरीकजलाप्लुतः॥ ९॥

पुण्डरीकक्षेत्रवासः पुण्डरीकवरप्रदः।
शारदाधिष्ठितद्वारः शारदेन्दुनिभाननः॥ १०॥

नारदाधिष्ठितद्वारो नारदेशप्रपूजितः ।
भुवनाधीश्वरीद्वारो भुवनाधीश्वरीश्वरः ॥ ११ ॥

दुर्गाश्रितोत्तरद्वारो दुर्गमागसंवृतः ।
क्षुल्लपेशीपिनद्धोरुगोपेष्ट्याश्लिष्टजानुकः ॥ १२ ॥

कटिस्थितकरद्वन्द्वो वरदाभयमुद्रितः ।
त्रेतातोरणपालस्थत्रिविक्रम इतीरितः ॥ १३ ॥

तितऊक्षेत्रपोऽश्वत्थकोटीश्वरवरप्रदः ।
स एव करवीरस्थो नारीनारायणेति च ॥ १४ ॥

नीरासंगमसंस्थश्च सैकतप्रतिमार्चितः ।
वेणुनादेन देवानां मनःश्रवणमङ्गलः ॥ १५ ॥

देवकन्याकोटिकोटिनीराजितपदाम्बुजः ।
पद्मतीर्थस्थिताश्वत्थो नरो नारायणो महान् ॥ १६ ॥

चन्द्रभागासरोनीरकेलिलोलदिगम्बरः ।
ससध्रीचीत्सवीषूचीरितिश्रुत्यर्थरूपधृक् ॥ १७ ॥

ज्योतिर्मयक्षेत्रवासी सर्वोत्कृष्टत्रयात्मकः ।
स्वकुण्डलप्रतिष्ठाता पञ्चायुधजलप्रियः ॥ १८ ॥

क्षेत्रपालाग्रपूजार्थी पार्वतीपतिपूजितः ।
चतुर्मुखस्तुतो विष्णुर्जगन्मोहनरूपधृक् ॥ १९ ॥

मन्त्राक्षरावलीहृत्स्थकौस्तुभोरःस्थलप्रियः ।
स्वमन्त्रोज्जीवितजनः सर्वकीर्तनवल्लभः ॥ २० ॥

वासुदेवो दयासिन्धुर्गोगोपीपरिवारितः ।
युधिष्ठिरहतारातिर्मुक्तकेशी वरप्रदः ॥ २१ ॥

बलदेवोपदेष्टा च रुक्मिणीपुत्रनायकः ।
गुरुपुत्रप्रदो नित्यमहिमा भक्तवत्सलः ॥ २२ ॥

भक्तारिहा महादेवो भक्ताभिलषितप्रदः ।
सव्यसाची ब्रह्मविद्यागुरुर्मोहापकारकः ॥ २३ ॥

भीमामार्गप्रदाता च भीमसेनमतानुगः ।
गन्धर्वानुग्रहकरो ह्यपराधसहो हरिः ॥ २४ ॥
स्वप्नदर्शी स्वप्नदृश्यो भक्तदुःस्वप्नशान्तिकृत् ।
आपत्कालानुपेक्षी चानपेक्षोऽपेक्षितो जनैः ॥ २५ ॥
सत्योपयाचनः सत्यसंधः सत्याभितारकः ।
सत्याजानी रमाजानी राधाजानी रथाङ्गभाक् ॥ २६ ॥
सिञ्चनः क्रीडनो गोपैर्दधिदुग्धापहारकः ।
बोधिन्युत्सवयुक् तीर्थः शयन्युत्सवभूमिभाक् ॥ २७ ॥
मार्गशीर्षोत्साक्रान्तवेणुनादपदाङ्कभूः ।
दध्यन्नव्यञ्जनाभोक्ता दधिभुक्कामपूरकः ॥ २८ ॥
बिलान्तर्धानसत्केलिलोलुपो गोपवल्लभः ।
सखिनेत्रे पिधायाशु कोऽहंपृच्छाविशारदः ॥ २९ ॥
समासमप्रश्नपूर्वमुष्टिमुष्टिप्रदर्शकः ।
कुटिलीलासु कुशलः कुटिलालकमण्डितः ॥ ३० ॥
सारीलीलानुसारी च वाहक्रीडापरः सदा ।
कार्णाटकीरतिरतो मङ्गलोपवनस्थितः ॥ ३१ ॥
माध्याह्नतीर्थपूरेक्षाविस्मायितजगत्त्रयः ।
निवारितक्षेत्रविघ्नो दुष्टदुर्बुद्धिभञ्जनः ॥ ३२ ॥
वालुकावृक्षपाषाणपशुपक्षिप्रतिष्ठितः ।
आशुतोषो भक्तवशः पांडुरङ्गः सुपावनः ॥ ३३ ॥
पुण्यकीर्तिः परं ब्रह्म ब्रह्मण्यः कृष्ण एव च ।
अष्टोत्तरशतं नाम्नां विठ्ठलस्य महात्मनः ॥ ३४ ॥
इति ते कथितं देवि पवित्रं मङ्गलं महत् ।
त्रिकालमेककालं वा यः पठेन्नियतः शुचिः ॥ ३५ ॥
करस्थाः सिद्धयस्तस्य सत्यं सत्यं वदाम्यहम् ।
अपुत्रो बहुपुत्रः स्यादविद्यः सर्वविद्यते ॥ ३६ ॥

निर्धनो धनदो नूनं भवेदस्य निषेवणात्।
अविनाभूतभार्यश्च जितारातिर्निरामयः ॥ ३७ ॥
बहुनोक्तेन किं देवि हरिवल्लभतामियात्।
सूत उवाच–
श्रुत्वा तन्महदाश्चर्यमष्टोत्तरशतं परम् ॥ ३८ ॥
पुनः पुनः प्रणम्येशं पार्वती वाक्यमब्रवीत्।
पार्वत्युवाच–
तत्क्षेत्रवसतिश्चैव तत्तीर्थस्यावगाहनम् ॥ ३९ ॥
तन्मूर्तिदर्शनं चैव तन्नामावलिकीर्तनम्।
देहि मे सर्वदा स्वामिन्नेकाग्रमनसा विभो ॥ ४० ॥
श्रीशंकर उवाच–
तदस्तु तव देवेशि ममाप्येतन्मनीषितम्।
इत्युक्त्वा प्रययौ तस्य निवासं परमादरात् ॥ ४१ ॥

श्रीपद्मपुराणे–

## श्रीविठ्ठलाष्टोत्तरशतनामावलिः

ओं क्लीं। विठ्ठलाय नमः। पुण्डरीकाक्षाय। पुण्डरीकनिभेक्षणाय। पुण्डरीकाश्रमपदाय। पुण्डरीकजलाप्लुताय। पुण्डरीकक्षेत्रवासाय। पुण्डरीकवरप्रदाय। शारदाधिष्ठितद्वाराय। शारदेन्दुनिभाननाय। नारदाधिष्ठितद्वाराय। नारदेशप्रपूजिताय। भुवनाधीश्वरीद्वाराय। भुवनाधीश्वरीश्वराय। दुर्गाश्रितोत्तरद्वाराय। दुर्गमागमसंवृताय। क्षुल्लपेशीपिनद्धोरुगोपेष्टचाश्लिष्टजानुकाय। कटिस्थितकरद्वन्द्वाय। वरदाभयमुद्रिताय। त्रेतातोरण पालस्थ त्रिविक्रमाय। तितऊक्षेत्रपाय नमः ॥ २०

अश्वत्थकोटीश्वरवरप्रदाय नमः। करवीरस्थाय नारीनारायणाय। नीरासंगमसंस्थाय। सैकतप्रतिमार्चिताय। वेणुनादेन देवानां मनः-श्रवणमङ्गलाय। देवकन्याकोटिकोटिनीराजितपदाम्बुजाय। पद्मतीर्थस्थि

ताश्वत्थाय । नराय । नारायणाय महते । चन्द्रभागासरोनीरकेलिलोल-दिगंबराय । ससध्रीचीत्सविषूचीरितिश्रुत्यर्थरूपधृषे । ज्योतिर्मयक्षेत्र-वासिने । सर्वोत्कृष्टत्रयात्मकाय । स्वकुण्डलप्रतिष्ठात्रे । पञ्चायुधजल-प्रियाय । क्षेत्रपालाग्रपूजार्थिने । पार्वतीपूजिताय । चतुर्मुखस्तुताय । जगन्मोहनरूपधृषे विष्णवे नमः ।। ४०

मन्त्राक्षरावली हृत्स्थकौस्तुभोरःस्थलप्रियाय नमः । स्वमन्त्रो-ज्जीवितजनाय । सर्वकीर्तनवल्लभाय । वासुदेवाय । दयासिन्धवे । गोगोपीपरिवारिताय । युधिष्ठिरहतारातये । मुक्तकेशिने । वरप्रदाय । बलदेवोपदेष्ट्रे । रुक्मिणीपुत्रनायकाय । गुरुपुत्रप्रदाय । नित्यमहिम्ने । भक्तवत्सलाय । भक्तारिघ्ने । महादेवाय । भक्ताभिलषितप्रदाय । सव्यसाचिने । ब्रह्मविद्यागुरवे । मोहापहारकाय नमः ।। ६०

भीमामार्गप्रदात्रे नमः । भीमसेन मतानुगाय । गन्धर्वानुग्रहकराय । अपराधसहाय हरये । स्वप्न दर्शिने । स्वप्नदृश्याय । भक्तदुःस्वप्न-शान्तिकृते । आपत्कालानुपेक्षिणे । अनपेक्षाय । जनैरपेक्षिताय । सत्योपयाचनाय । सत्यसन्धाय । सत्याभितारकाय । सत्याजानये । रमाजानये । राधाजानये । रथाङ्गभाजे । सिञ्चनाय । गोपैःक्रीडनाय । दधिदुग्धापहारकाय नमः ।। ८०

बोधन्युत्सवयुक्तीर्थाय नमः । शयन्युत्सव भूमिभाजे । मार्ग-शीर्षोत्सवाक्रान्त वेणुनादपदाङ्कभुवे । दध्यन्नव्यञ्जनाभोक्त्रे । दधिभुजे । कामपूरकाय । बिलान्तर्धानसत्के लिलोलुपाय । गोपवल्लभाय । सखिनेत्रे पिधायाशु कोऽहं पृच्छाविशारदाय । समासमप्रश्नपूर्वमुष्टिमुष्टिप्रदर्शकाय । कुटिलीलासुकुशलाय । कुटिलालकमण्डिताय । सारीलीलानुसारिणे । सदा वाहक्रीडापराय । कार्णाटकीरतिरताय । मङ्गलोपवनस्थिताय । माध्याह्नतीर्थपूरेक्षाविस्मायितजगत्त्रयाय । निवारितक्षेत्रविघ्नाय । दुष्टदुर्बुद्धिभञ्जनाय । वालुकावृक्षपाषाण पशुपक्षिप्रतिष्ठिताय नमः । आशुतोषाय नमः । भक्तवशाय । पाण्डुरङ्गाय । सुपावनाय । पुण्यकीर्तये । परस्मै ब्रह्मणे । ब्रह्मण्याय । कृष्णाय नमः ।। १०८

# श्रीराधिकासहस्रनामस्तोत्रम्

(नारदपाञ्चरात्रे ज्ञानामृतसारतः)

श्रीपार्वत्युवाच—

देवदेव जगन्नाथ भक्तानुग्रहकारक।
यद्यस्ति मयि कारुण्यं यद्यस्ति मयि ते दया॥ १

यद्यत् त्वया निगदितं तत्सर्वं मे श्रुतं प्रभो।
गुह्याद् गुह्यतरं यत्तु यत्ते मनसि काशते॥ २

त्वया न गदितं यत्तु यस्मै कस्मै कदाचन।
तस्मात् कथय देवेश सहस्रं नाम चोत्तमम्॥ ३

श्रीराधाया महादेव्या गोप्या भक्तिप्रसाधनम्।
ब्रह्माण्डकर्त्री हर्त्री सा कथं गोपीत्वमागता॥ ४

श्री महादेव उवाच—
शृणु देवि विचित्रार्थां कथां पापहरां शुभाम्।
नास्ति जन्मानि कर्माणि तस्या नूनं महेश्वरि॥ ५

यदा हरिश्चरित्राणि कुरुते कार्यगौरवात्।
तदा विधत्ते रूपाणि हरिसांनिध्यसाधिनी॥ ६

तस्या गोपीत्वभावस्य कारणं गदितं पुरा।
इदानीं शृणु देवेशि नाम्नां चैव सहस्रकम्॥ ७

यन्मया कथितं नैव तन्त्रेष्वपि कदाचन।
तव स्नेहात्प्रवक्ष्यामि भक्त्या धार्यं मुमुक्षुभिः॥ ८

मम प्राणसमा विद्या भाव्यते मे त्वहर्निशम्।
शृणुष्व गिरिजे नित्यं पठस्व च यथामति ॥ ९

यस्याः प्रसादात् कृष्णस्तु गोलोकेशः परः प्रभुः।
अस्या नामसहस्रस्य ऋषिर्नारद एव च।
देवी राधा परा प्रोक्ता चतुर्वर्गप्रसाधिनी ॥ १०

*अथ सहस्रनामस्तोत्रम्*

श्री राधा राधिका कृष्णवल्लभा कृष्णसंयुता।
वृन्दावनेश्वरी कृष्णप्रिया मदनमोहिनी ॥ ११

श्रीमती कृष्णकान्ता च कृष्णानन्दप्रदायिनी।
यशस्विनी यशोगम्या यशोदानन्दवल्लभा ॥ १२

दामोदरप्रिया गोपी गोपानन्दकरी तथा।
कृष्णाङ्गवासिनी हृद्या हरिकान्ता हरिप्रिया ॥ १३

प्रधानगोपिका गोपकन्या त्रैलोक्यसुन्दरी।
वृन्दावनविहारिणी विकासितमुखाम्बुजा ॥ १४

गोकुलानन्दकर्त्री च गोकुलानन्ददायिनी।
गतिप्रदा गीतगम्या गमनागमनप्रिया ॥ १५

विष्णुप्रिया विष्णुकान्ता विष्णोरङ्कनिवासिनी।
यशोदानन्दपत्नी च यशोदानन्दगेहिनी ॥ १६

कामारिकान्ता कामेशी कामलालसविग्रहा।
जयप्रदा जया जीवाजीवानन्दप्रदायिनी ॥ १७

नन्दनन्दनपत्नी च वृषभानुसुता शिवा।
गणाध्यक्षा गवाध्यक्षा गवां गतिरनुत्तमा ॥ १८

काञ्चनाभा हेमगात्रा काञ्चनाङ्गदधारिणी।
अशोका शोकरहिता विशोका शोकनाशिनी ॥ १९

गायत्री वेदमाता च वेदातीता विदुत्तमा।
नीतिशास्त्रप्रिया नीतिर्गतिर्मतिरभीष्टदा ॥ २०

वेदप्रिया वेदगर्भा वेदमार्गप्रवर्द्धिनी।
वेदगम्या वेदपरा विचित्रकनकोज्ज्वला ॥ २१

तथोज्ज्वलप्रदा नित्या तथैवोज्ज्वलगात्रिका।
नन्दप्रिया नन्दसुताराध्याऽऽनन्दप्रदा शुभा ॥ २२

शुभाङ्गी विमलाङ्गी च विलासिन्यपराजिता।
जननी जन्मशून्या च जन्ममृत्युजरापहा ॥ २३

गतिर्गतिमतां धात्री धात्र्यानन्दप्रदायिनी।
जगन्नाथप्रिया शैलवासिनी हेमसुन्दरी ॥ २४

किशोरी कमला पद्मा पद्महस्ता पयोददा।
पयस्विनी पयोदात्री पवित्रा सर्वमङ्गला ॥ २५

महाजीवप्रदा कृष्णकान्ता कमलसुन्दरी।
विचित्रवासिनी चित्रवासिनी चित्ररूपिणी ॥ २६

निर्गुणा सुकुलीना च निष्कुलीना निराकुला।
गोकुलान्तरगेहा च योगानन्दकरी तथा ॥ २७

वेणुवाद्या वेणुरतिर्वेणुवाद्यपरायणा ।
गोपलास्यप्रिया सौम्यरूपा सौम्यकुलोद्वहा ।। २८

मोहाऽमोहा विमोहा च गतिनिष्ठा गतिप्रदा ।
गीर्वाणवन्द्या गीर्वाणा गीर्वाणगणसेविता ।। २९

ललिता च विशोका च विशाखा चित्रमालिनी ।
जितेन्द्रिया शुद्धसत्त्वा कुलीना कुलदीपिका ।। ३०

दीपप्रिया दीपदात्री विमला विमलोदका ।
कान्तारवासिनी कृष्णा कृष्णचन्द्रप्रिया मतिः ।। ३१

अनुत्तरा दुःखहन्त्री दुःखकर्त्री कुलोद्वहा ।
मतिर्लक्ष्मीर्धृतिर्लज्जा कान्तिः पुष्टिः स्मृतिः क्षमा ।। ३२

क्षीरोदशायिनी देवी देवारिकुलमर्दिनी ।
वैष्णवी च महालक्ष्मीः कुलपूज्या कुलप्रिया ।। ३३

संहर्त्री सर्वदैत्यानां सावित्री वेदगामिनी ।
वेदातीता निरालम्बा निरालम्बगणप्रिया ।। ३४

निरालंबजनैः पूज्या निरालोका निराश्रया ।
एकाङ्गी सर्वगा सेव्या ब्रह्मपत्नी सरस्वती ।। ३५

रासप्रिया रासगम्या रासाधिष्ठातृदेवता ।
रसिका रसिकानन्दा स्वयं रासेश्वरी परा ।। ३६

रासमण्डलमध्यस्था रासमण्डलशोभिता ।
रासमण्डलसेव्या च रासक्रीडामनोहरा ।। ३७

पुण्डरीकाक्षनिलया पुण्डरीकाक्षगेहिनी।
पुण्डरीकाक्षसेव्या च पुण्डरीकाक्षवल्लभा ॥ ३८

सर्वजीवेश्वरी सर्वजीववन्द्या परात्परा।
प्रकृतिः शम्भुकान्ता च सदाशिवमनोहरा ॥ ३९

क्षुत् पिपासा दया निद्रा भ्रान्तिः श्रान्तिः क्षमाकुला।
वधूरूपा गोपपत्नी भारती सिद्धयोगिनी ॥ ४०

सत्यरूपा नित्यरूपा नित्याङ्गी नित्यगेहिनी।
स्थानदात्री तथा धात्री महालक्ष्मीः स्वयंप्रभा ॥ ४१

सिन्धुकन्याऽऽस्थानदात्री द्वारकावासिनी तथा।
बुद्धिः स्थितिः स्थानरूपा सर्वकारणकारणा ॥ ४२

भक्तप्रिया भक्तगम्या भक्तानन्दप्रदायिनी।
भक्तकल्पद्रुमातीता तथातीतगुणा तथा ॥ ४३

मनोऽधिष्ठातृदेवी च कृष्णप्रेमपरायणा।
निरामया सौम्यदात्री तथा मदनमोहिनी ॥ ४४

एकाऽनंशा शिवा क्षेमा दुर्गा दुर्गतिनाशिनी।
ईश्वरी सर्ववन्द्या च गोपनीया शुभङ्करी ॥ ४५

पालिनी सर्वभूतानां तथा कामाङ्गहारिणी।
सद्यो मुक्तिप्रदा देवी वेदसारा परात्परा ॥ ४६

हिमालयसुता सर्वा पार्वती गिरिजा सती।
दक्षकन्या देवमाता मन्दलज्जा हरेस्तनूः ॥ ४७

वृन्दारण्यप्रिया वृन्दा वृन्दावनविलासिनी।
विलासिनी वैष्णवी च ब्रह्मलोकप्रतिष्ठिता॥ ४८

रुक्मिणी रेवती सत्यभामा जाम्बवती तथा।
सुलक्ष्मणा मित्रविन्दा कालिन्दी जह्नुकन्यका॥ ४९

परिपूर्णा पूर्णतरा तथा हैमवती गतिः।
अपूर्वा ब्रह्मरूपा च ब्रह्माण्डपरिपालिनी॥ ५०

ब्रह्माण्डभाण्डमध्यस्था ब्रह्माण्डभाण्डरूपिणी।
अण्डरूपाऽण्डमध्यस्था तथाण्डपरिपालिनी॥ ५१

अण्डबाह्याण्डसंहर्त्री शिवब्रह्महरिप्रिया।
महाविष्णुप्रिया कल्पवृक्षरूपा निरन्तरा॥ ५२

सारभूता स्थिरा गौरी गौराङ्गी शशिशेखरा।
श्वेतचम्पकवर्णाभा शशिकोटिसमप्रभा॥ ५३

मालतीमाल्यभूषाढ्या मालतीमाल्यधारिणी।
कृष्णस्तुता कृष्णकान्ता वृन्दावनविलासिनी॥ ५४

तुलस्यधिष्ठातृदेवी संसारार्णवपारदा।
सारदाऽऽहारदाऽम्भोदा यशोदा गोपनन्दिनी॥ ५५

अतीतगमना गौरी परानुग्रहकारिणी।
करुणार्णवसम्पूर्णा करुणार्णवधारिणी॥ ५६

माधवी माधवमनोहारिणी श्यामवल्लभा।
अन्धकारभयध्वस्ता मङ्गल्या मङ्गलप्रदा॥ ५७

श्रीगर्भा श्रीप्रदा श्रीशा श्रीनिवासाच्युतप्रभा ।
श्रीरूपा श्रीहरा श्रीदा श्रीकामा श्रीस्वरूपिणी ॥ ५८

श्रीदामानन्ददात्री च श्रीदामेश्वरवल्लभा ।
श्रीनितम्बा श्रीगणेशा श्रीस्वरूपाश्रिता श्रुतिः ॥ ५९

श्रीक्रियारूपिणी श्रीला श्रीकृष्णभजनान्विता ।
श्रीराधा श्रीमती श्रेष्ठा श्रेष्ठरूपा श्रुतिप्रिया ॥ ६०

योगेशी योगमाता च योगातीता युगप्रिया ।
योगप्रिया योगगम्या योगिनीगणवन्दिता ॥ ६१

जपाकुसुमसंकाशा दाडिमीकुसुमोपमा ।
नीलाम्बरधरा धीरा धैर्यरूपधराधृतिः ॥ ६२

रत्नसिंहासनस्था च रत्नकुण्डलभूषिता ।
रत्नालङ्कारसंयुक्ता रत्नमालाधरा परा ॥ ६३

रत्नेन्द्रसारहाराढ्या रत्नमालाविभूषिता ।
इन्द्रनीलमणिन्यस्तपादपद्मशुभा शुचिः ॥ ६४

कार्तिकी पौर्णमासी च अमावस्या भयापहा ।
गोविन्दराजगृहिणी गोविन्दगणपूजिता ॥ ६५

वैकुण्ठनाथगृहिणी वैकुण्ठपरमालया ।
वैकुण्ठदेवदेवाढ्या तथा वैकुण्ठसुन्दरी ॥ ६६

मदालसा वेदवती सीता साध्वी पतिव्रता ।
अन्नपूर्णा सदानन्दरूपा कैवल्यसुन्दरी ॥ ६७

कैवल्यदायिनी श्रेष्ठा गोपीनाथमनोहरा।
गोपीनाथेश्वरी चण्डी नायिकानयनान्विता ॥ ६८

नायिका नायकप्रीता नायकानन्दरूपिणी।
शेषा शेषवती शेषरूपिणी जगदम्बिका ॥ ६९

गोपालपालिका माया जायाऽऽनन्दप्रदा तथा।
कुमारी यौवनानन्दा युवती गोपसुन्दरी ॥ ७०

गोपमाता जानकी च जनकानन्दकारिणी।
कैलासवासिनी रम्भा वैराग्यकुलदीपिका ॥ ७१

कमलाकान्तगृहिणी कमला कमलालया।
त्रैलोक्यमाता जगतामधिष्ठात्री प्रियाम्बिका ॥ ७२

हरकान्ता हररता हरानन्दप्रदायिनी।
हरपत्नी हरप्रीता हरतोषणतत्परा ॥ ७३

हरेश्वरी रामरता रामा रामेश्वरी रमा।
श्यामला चित्रलेखा च तथा भुवनमोहिनी ॥ ७४

सुगोपी गोपवनिता गोपराज्यप्रदा शुभा।
अङ्गारपूर्णा माहेयी मत्स्यराजसुता सती ॥ ७५

कौमारी नारसिंही च वाराही नवदुर्गिका।
चञ्चलाचञ्चलामोदा नारी भुवनसुन्दरी ॥ ७६

दक्षयज्ञहरा दाक्षी दक्षकन्या सुलोचना।
रतिरूपा रतिप्रीता रतिश्रेष्ठा रतिप्रदा ॥ ७७

रतिलक्षणगेहस्था विरजा भुवनेश्वरी।
शङ्कास्पदा हरेर्जाया जामातृकुलवन्दिता ॥ ७८

वकुला वकुलामोदधारिणी यमुनाजया।
विजया जयपत्नी च यमलार्जुनभञ्जिनी ॥ ७९

वक्रेश्वरी वक्ररूपा वक्रवीक्षणवीक्षिता।
अपराजिता जगन्नाथा जगन्नाथेश्वरी यतिः ॥ ८०

खेचरी खेचरसुता खेचरत्वप्रदायिनी।
विष्णुवक्षःस्थलस्था च विष्णुभावनतत्परा ॥ ८१

चन्द्रकोटिसुगात्री च चन्द्राननमनोहरा।
सेवासेव्या शिवा क्षेमा तथा क्षेमकरी वधूः ॥ ८२

यादवेन्द्रवधूः शैब्या शिवभक्ता शिवान्विता।
केवला निष्कला सूक्ष्मा महाभीमाऽभयप्रदा ॥ ८३

जीमूतरूपा जैमूती जितामित्रप्रमोदिनी।
गोपालवनिता नन्दा कुलजेन्द्रनिवासिनी ॥ ८४

जयन्ती यमुनाङ्गी च यमुनातोषकारिणी।
कलिकल्मषभङ्गा च कलिकल्मषनाशिनी ॥ ८५

कलिकल्मषरूपा च नित्यानन्दकरी कृपा।
कृपावती कुलवती कैलासाचलवासिनी ॥ ८६

वामदेवी वामभागा गोविन्दप्रियकारिणी।
नरेन्द्रकन्या योगेशी योगिनी योगरूपिणी ॥ ८७

योगसिद्धा सिद्धरूपा सिद्धक्षेत्रनिवासिनी।
क्षेत्राधिष्ठातृरूपा च क्षेत्रातीता कुलप्रदा ॥ ८८

केशवानन्ददात्री च केशवानन्ददायिनी।
केशवाकेशवप्रीता कैशवीकेशवप्रिया ॥ ८९

रासक्रीडाकरी रासवासिनी राससुन्दरी।
गोकुलान्वितदेहा च गोकुलत्वप्रदायिनी ॥ ९०

लवङ्गनाम्नी नारङ्गी नारङ्गकुलमण्डना।
एलालवङ्गकर्पूरमुखवासमुखान्विता ॥ ९१

मुख्या मुख्यप्रदा मुख्यरूपा मुख्यनिवासिनी।
नारायणी कृपातीता करुणामयकारिणी ॥ ९२

कारुण्या करुणा कर्णा गोकर्णा नागकर्णिका।
सर्पिणी कौलिनी क्षेत्रवासिनी जगदन्वया ॥ ९३

जटिला कुटिला नीला नीलाम्बरधरा शुभा।
नीलाम्बरविधात्री च नीलकण्ठप्रिया तथा ॥ ९४

भगिनी भागिनी भोग्या कृष्णभोग्या भगेश्वरी।
बलेश्वरी बलाराध्या कान्ता कान्तनितम्बिनी ॥ ९५

नितम्बिनी रूपवती युवती कृष्णपीवरी।
विभावरी वेत्रवती संकटा कुटिलालका ॥ ९६

नारायणप्रिया शैला सृकणीपरिमोहिता।
दृक्पातमोहिता प्रातराशिनी नवनीतिका ॥ ९७

नवीना नवनारी च नारङ्गफलशोभिता।
हैमी हेममुखी चन्द्रमुखी शशिसुशोभना॥ ९८

अर्धचन्द्रधरा चन्द्रवल्लभा रोहिणी तमिः।
तिमिंगिलकुलामोदमत्स्यरूपाङ्गहारिणी॥ ९९

कारिणी सर्वभूतानां कार्यातीता किशोरिणी।
किशोरवल्लभा केशकारिका कामकारिका॥ १००

कामेश्वरी कामकला कालिन्दीकूलदीपिका।
कलिन्दतनयातीरवासिनी तीरगेहिनी॥ १०१

कादम्बरीपानपरा कुसुमामोदधारिणी।
कुमुदा कुमुदानन्दा कृष्णेशी कामवल्लभा॥ १०२

तर्कालि वैजयन्ती च निम्बदाडिम्बरूपिणी।
बिल्ववृक्षप्रिया कृष्णाम्बरा बिल्वोपमस्तनी॥ १०३

बिल्वात्मिका बिल्ववसुर्बिल्ववृक्षनिवासिनी।
तुलसीतोषिका तैतिलानन्द परितोषिका॥ १०४

गजमुक्ता महामुक्ता महामुक्तिफलप्रदा।
अनङ्गमोहिनीशक्तिरूपा शक्तिस्वरूपिणी॥ १०५

पञ्चशक्तिस्वरूपा च शैशवानन्दकारिणी।
गजेन्द्रगामिनी श्यामलताऽनङ्गलता तथा॥ १०६

योषिच्छक्तिस्वरूपा च योषिदानन्दकारिणी।
प्रेमप्रिया प्रेमरूपा प्रेमानन्दतरङ्गिणी॥ १०७

प्रेमहारा प्रेमदात्री प्रेमशक्तिमयी तथा ।
कृष्णप्रेमवती धन्या कृष्णप्रेमतरङ्गिणी ॥ १०८

प्रेमभक्तिप्रदा प्रेमा प्रेमानन्दतरङ्गिणी ।
प्रेमक्रीडापरीताङ्गी प्रेमभक्तितरङ्गिणी ॥ १०९

प्रेमार्थदायिनी सर्वश्वेता नित्यतरङ्गिणी ।
हावभावान्विता रौद्रा रुद्रानन्दप्रकाशिनी ॥ ११०

कपिला शृङ्खला केशपाशसम्बाधिनी घटी ।
कुटीरवासिनी धूम्रा धूम्रकेशा जलोदरी ॥ १११

ब्रह्माण्डगोचरा ब्रह्मरूपिणी भवभाविनी ।
संसारनाशिनी शैवा शैवलानन्ददायिनी ॥ ११२

शिशिरा हेमरागाढ्या मेघरूपाऽतिसुन्दरी ।
मनोरमा वेगवती वेगाढ्या वेदवादिनी ॥ ११३

दयान्विता दयाधारा दयारूपा सुसेविनी ।
किशोरसङ्गसंसर्गा गौरचन्द्रानना कला ॥ ११४

कलाधिनाथवदना कलानाथाधिराहिणी ।
विरागकुशला हेमपिङ्गला हेममण्डना ॥ ११५

भाण्डीरतालवनगा कैवर्ती पीवरी शुकी ।
शुकदेवगुणातीता शुकदेवप्रिया सखी ॥ ११६

विकलोत्कर्षिणी कोषा कौशेयाम्बरधारिणी ।
कौषावरी कोषरूपा जगदुत्पत्तिकारिका ॥ ११७

सृष्टिस्थितिकरी संहारिणी संहारकारिणी।
केशशैवलधात्री च चन्द्रगात्रा सुकोमला॥ ११८

पद्माङ्गरागसंरागा विन्ध्याद्रिपरिवासिनी।
विन्ध्यालया श्यामसखी सखीसंसाररागिणी॥ ११९

भूता भविष्या भव्या च भव्यगात्रा भवातिगा।
भवनाशान्तकारिण्याकाशरूपा सुवेशिनी॥ १२०

रतिरङ्गपरित्यागा रतिवेगा रतिप्रदा।
तेजस्विनी तेजोरूपा कैवल्यपथदा शुभा॥ १२१

भक्तिहेतुर्मुक्तिहेतुर्लङ्घिनी लङ्घनक्षमा।
विशालनेत्रा वैशाली विशालकुलसम्भवा॥ १२२

विशालगृहवासा च विशालबदरीरतिः।
भक्त्यतीता भक्तिगतिर्भक्तिका शिवभक्तिदा॥ १२३

शिवभक्तिस्वरूपा च शिवार्धाङ्गविहारिणी।
शिरीषकुसुमामोदा शिरीषकुसुमोज्ज्वला॥ १२४

शिरीषमृद्वी शैरीषी शिरीषकुसुमाकृतिः।
वामाङ्गहारिणी विष्णोः शिवभक्तिसुखान्विता॥ १२५

विजिता विजितामोदा गणगा गणतोषिता।
हयास्या हेरम्बसुता गणमाता सुखेश्वरी॥ १२६

दुःखहन्त्री दुःखहरा सेवितेप्सितसर्वदा।
सर्वज्ञत्वविधात्री च कुलक्षेत्रनिवासिनी॥ १२७

लवङ्गा पाण्डवसखी सखीमध्यनिवासिनी ।
ग्राम्यगीता गया गम्या गमनातीतनिर्भरा ॥ १२८

सर्वाङ्गसुन्दरी गङ्गा गङ्गाजलमयी तथा ।
गङ्गेरिता पूतगात्रा पवित्रकुलदीपिका ॥ १२९

पवित्रगुणशीलाढ्या पवित्रानन्ददायिनी ।
पवित्रगुणसीमाढ्या पवित्रकुलदीपिनी ॥ १३०

कल्पमाना कंसहरा विन्ध्याचलनिवासिनी ।
गोवर्धनेश्वरी गोवर्धनहास्या हयाकृतिः ॥ १३१

मीनावतारा मीनेशी गगनेशी हया गजी ।
हरिणी हारिणी हारधारिणी कनकाकृतिः ॥ १३२

विद्युत्प्रभा विप्रमाता गोपमाता गयेश्वरी ।
गवेश्वरी गवेशी च गवीशीगतिवासिनी ॥ १३३

गतिज्ञा गीतकुशला दनुजेन्द्रनिवारिणी ।
निर्वाणधात्री नैर्वाणी हेतुयुक्ता गयोत्तरा ॥ १३४

पर्वताधिनिवासा च निवासकुशला तथा ।
संन्यासधर्मकुशला संन्यासेशी शरन्मुखी ॥ १३५

शरच्चन्द्रमुखी श्यामहारा क्षेत्रनिवासिनी ।
वसन्तरागसंरागा वसन्तवसनाकृतिः ॥ १३६

चतुर्भुजा षड्भुजा च द्विभुजा गौरविग्रहा ।
सहस्रास्या विहास्या च मुद्रास्या मोददायिनी ॥ १३७

प्राणप्रिया प्राणरूपा प्राणरूपिण्यपावृता ।
कृष्णप्रीता कृष्णरता कृष्णतोषणतत्परा ।। १३८

कृष्णप्रेमरता कृष्णभक्ता भक्तफलप्रदा ।
कृष्णप्रेमा प्रेमभक्ता हरिभक्तिप्रदायिनी ।। १३९

चैतन्यरूपा चैतन्यप्रिया चैतन्यरूपिणी ।
उग्ररूपा शिवक्रोडा कृष्णक्रोडा जलोदरी ।। १४०

महोदरी महादुर्गकान्तारस्थसुवासिनी ।
चन्द्रावली चन्द्रकेशी चन्द्रप्रेमतरङ्गिणी ।। १४१

समुद्रमथनोद्भूता समुद्रजलवासिनी ।
समुद्रामृतरूपा च समुद्रजलवासिका ।। १४२

केशपाशरता निद्रा क्षुधा प्रेमतरङ्गिका ।
दूर्वादलश्यामतनुर्दूर्वादलतनुच्छविः ।। १४३

नागरी नागरागारा नागरानन्दकारिणी ।
नागरालिङ्गनपरा नागराङ्गणमङ्गला ।। १४४

उच्चनीचा हैमवतीप्रिया कृष्णतरङ्गदा ।
प्रेमालिङ्गनसिद्धाङ्गी सिद्धसाध्यविलासिका ।। १४५

मङ्गलामोदजननी मेखलामोदधारिणी ।
रत्नमञ्जीरभूषाङ्गी रत्नभूषणभूषणा ।। १४६

जम्बालमालिका कृष्णप्राणा प्राणविमोचना ।
सत्यप्रदा सत्यवती सेवकानन्ददायिका ।। १४७

जगद्योनिर्जगद्बीजा विचित्रमणिभूषणा।
राधारमणकान्ता च राध्या राधनरूपिणी॥ १४८

कैलासवासिनी कृष्णप्राणसर्वस्वदायिनी।
कृष्णावतारनिरतकृष्णभक्तफलार्थिनी॥ १४९

याचकायाचकानन्दकारिणी याचकोज्ज्वला।
हरिभूषणभूषाढ्याऽऽनन्दयुक्ताऽऽर्द्रपादगा॥ १५०

हैं-हैं-तालधरा थैं-थैं-शब्दशक्तिप्रकाशिनी।
हे-हे-शब्दस्वरूपा च ही-ही-वाक्यविशारदा॥ १५१

जगदानन्दकर्त्री च सान्द्रानन्दविशारदा।
पण्डिता पण्डितगुणा पण्डितानन्दकारिणी॥ १५२

परिपालनकर्त्री च तथा स्थितिविनोदिनी।
तथा संहारशब्दाढ्या विद्वज्जनमनोहरा॥ १५३

विदुषां प्रीतिजननी विद्वत्प्रेमविवर्धिनी।
नादेशी नादरूपा च नादबिन्दुविधारिणी॥ १५४

शून्यस्थानस्थिता शून्यरूपपादपवासिनी।
कार्तिकव्रतकर्त्री च वासनाहारिणी तथा॥ १५५

जलाशया जलतला शिलातलनिवासिनी।
क्षुद्रकीटाङ्गसंसर्गा सङ्गदोषविनाशिनी॥ १५६

कोटिकन्दर्पलावण्या कोटिकन्दर्पसुन्दरी।
कन्दर्पकोटिजननी कामबीजप्रदायिनी॥ १५७

कामशास्त्रविनोदा च कामशास्त्रप्रकाशिनी।
कामप्रकाशिका कामिन्यणिमाद्यष्टसिद्धिदा॥ १५८

यामिनी यामिनीनाथवदना यामिनीश्वरी।
यागयोगहरा भुक्तिमुक्तिदात्री हिरण्यदा॥ १५९

कपालमालिनी देवी धामरूपिण्यपूर्वदा।
कृपान्विता गुणागौण्या गुणातीतफलप्रदा॥ १६०

कूष्माण्डभूतवेतालनाशिनी शारदान्विता।
शीतला शबला हेलालीला लावण्यमङ्गला॥ १६१

विद्यार्थिनी विद्यमाना विद्या विद्यास्वरूपिणी।
आन्वीक्षिकीशास्त्ररूपा शास्त्रसिद्धान्तकारिणी॥ १६२

नागेन्द्रा नागमाता च क्रीडाकौतुकरूपिणी।
हरिभावनशीला च हरितोषणतत्परा॥ १६३

हरिप्राणा हरप्राणा शिवप्राणा शिवान्विता।
नरकार्णवसंहर्त्री नरकार्णवनाशिनी॥ १६४

नरेश्वरी नरातीता नरसेव्या नराङ्गना।
यशोदानन्दनप्राणवल्लभा हरिवल्लभा॥ १६५

यशोदानन्दनारम्या यशोदानन्दनेश्वरी।
यशोदानन्दनाक्रीडा यशोदाक्रोडवासिनी॥ १६६

यशोदानन्दनप्राणा यशोदानन्दनार्थदा।
वत्सला कोशला काला करुणार्णवरूपिणी॥ १६७

स्वर्गलक्ष्मीर्भूमिलक्ष्मीर्द्रौपदीपाण्डवप्रिया।
तथार्जुनसखी भौमी भैमी भीमकुलोद्भवा॥ १६८

भुवनामोहना क्षीणा पानासक्ततरा तथा।
पानार्थिनी पानपात्रा पानपानन्ददायिनी॥ १६९

दुग्धमन्थनकर्माढ्या दधिमन्थनतत्परा।
दधिभाण्डार्थिनी कृष्णक्रोधिनी नन्दनाङ्गना॥ १७०

घृतलिप्ता तक्रयुक्ता यमुनापारकौतुका।
विचित्रकथका कृष्णहास्यभाषणतत्परा॥ १७१

गोपाङ्गनावेष्टिता च कृष्णसङ्गार्थिनी तथा।
रासासक्ता रासरतिरासवासक्तवासना॥ १७२

हरिद्राहरिता हारिण्यानन्दार्पितचेतना।
निश्चैतन्या च निश्चेता तथा दारुहरिद्रिका॥ १७३

सुबलस्य स्वसा कृष्णभार्या भाषातिवेगिनी।
श्रीदामस्य सखी दामदायिनी दामधारिणी॥ १७४

कैलासिनी केशिनी च हरिदम्बरधारिणी।
हरिसांनिध्यदात्री च हरिकौतुकमङ्गला॥ १७५

हरिप्रदा हरिद्वारा यमुनाजलवासिनी।
जैत्रप्रदा जितार्थिनी चतुरा चातुरी तमी॥ १७६

तमिस्राऽऽतपरूपा च रौद्ररूपा यशोऽर्थिनी।
कृष्णार्थिनी कृष्णकला कृष्णानन्दविधायिनी॥ १७७

कृष्णार्थवासना कृष्णरागिणी भवभाविनी।
कृष्णार्थरहिता भक्ताभक्तभक्तिशुभप्रदा ॥ १७८

श्रीकृष्णरहिता दीना तथा विरहिणी हरेः।
मथुरा मथुराराजगेहभावनभावना ॥ १७९

अलकेश्वरपूज्या च कुबेरेश्वरवल्लभा।
श्रीकृष्णभावनामोदा तथोन्मादविधायिनी ॥ १८०

कृष्णार्थव्याकुला कृष्णसारचर्मधरा शुभा।
धनधान्यविधात्री च जाया काया हया हयी ॥ १८१

प्रणवा प्रणवेशी च प्रणवार्थस्वरूपिणी।
ब्रह्मविष्णुशिवार्धाङ्गहारिणी शैवशिंशपा ॥ १८२

राक्षसीनाशिनी भूतप्रेतप्राणविनाशिनी।
सकलेप्सितदात्री च शची साध्वी अरुन्धती ॥ १८३

पतिव्रता पतिप्राणा पतिवाक्यविनोदिनी।
अशेषसाधिनी कल्पवासिनी कल्परूपिणी ॥ १८४

फलश्रुतिः

इत्येतत् कथितं देवि राधानामसहस्रकम्।
यः पठेत् पाठयेद्वापि तस्य तुष्यति माधवः ॥ १८५

किं तस्य यमुनाभिर्वा नदीभिःसर्वतः प्रिये।
कुरुक्षेत्रादितीर्थैश्च यस्य तुष्टो जनार्दनः ॥ १८६

स्तोत्रस्यास्य प्रसादेन किं न सिध्यति भूतले।
ब्राह्मणो ब्रह्मवर्चाः स्यात् क्षत्रियो जगतीपतिः ॥ १८७

वैश्यो निधिपतिर्भूयात् शूद्रो मुच्येत जन्मतः ।
ब्रह्महत्यासुरापानस्तेयादेरतिपातकात् ॥ १८८

सद्यो मुच्येत देवेशि सत्यं सत्यं न संशयः ।
राधानामसहस्रस्य समानं नास्ति भूतले ॥ १८९

स्वर्गे वाप्यथ पाताले गिरौ वा जलतोऽपि वा ।
नातः परं शुभं स्तोत्रं तीर्थं नातः परं परम् ॥ १९०

एकादश्यां शुचिर्भूत्वा यः पठेत् सुसमाहितः ।
तस्य सर्वार्थसिद्धिःस्यात् शृणुयाद् वा सुशोभने ॥ १९१

द्वादश्यां पौर्णमास्यां वा तुलसीसंनिधौ शिवे ।
यः पठेच्छृणुयाद्वापि तस्य तत्तत् फलं शृणु ॥ १९२

अश्वमेधं राजसूयं बार्हस्पत्यं तथाऽऽत्रिकम् ।
अतिरात्रं वाजपेयमग्निष्टोमं तथा शुभम् ॥ १९३

कृत्वा यत्फलमाप्नोति श्रुत्वा तत्फलमाप्नुयात् ।
कार्तिके चाष्टमीं प्राप्य पठेद्वा शृणुयादपि ॥ १९४

सहस्रयुगकल्पान्तं वैकुण्ठवसतिं लभेत् ।
ततश्च ब्रह्मभवने शिवस्य भवने पुनः ॥ १९५

सुराधिनाथभवने पुनर्याति सलोकताम् ।
गङ्गातीरं समासाद्य यः पठेच्छृणुयादपि ॥ १९६

विष्णोः सारूप्यमायाति सत्यं सत्यं सुरेश्वरि ।
मम वक्त्रगिरेर्जाता पार्वतीवदनाश्रिता ॥ १९७

राधानामसहस्राख्या नदी त्रैलोक्यपावनी।
पठ्यते हि मया नित्यं भक्त्या शक्त्या यथोचितम्॥ १९८

मम प्राणसमं ह्यन्यत् तव प्रीत्या प्रकाशितम्।
नाभक्ताय प्रदातव्यं पाखण्डाय कदाचन॥ १९९

नास्तिकाय विरागाय रागयुक्ताय सुन्दरि।
तथा देयं महास्तोत्रं हरिभक्ताय शङ्करि॥ २००

वैष्णवेषु यथाशक्तिदात्रे पुण्यार्थशालिने।
राधानामसुधावारि मम वक्त्रसुधाम्बुधेः॥ २०१

उद्धृतासौ त्वया यत्नाद् यतस्त्वं वैष्णवाग्रणीः॥ २०२

विशुद्धसत्त्वाय यथार्थवादिने द्विजस्य सेवानिरताय मन्त्रिणे।
दात्रे यथाशक्ति सुभक्तिमानसे राधापदध्यानपराय शोभने॥ २०३

हरिपादाब्जमधुपमनोभूताय मानसे।
राधापादसुधास्वादशालिने वैष्णवाय च॥ २०४

दद्यात् स्तोत्रं महापुण्यं हरिभक्तिप्रसाधनम्।
जन्मान्तरं न पश्यन्ति राधाकृष्णपदार्थिनः॥ २०५

मम प्राणा वैष्णवा हि तेषां रक्षार्थमेव हि।
शूलं मया धार्यते हि नान्यथा मेऽत्र कारणम्॥ २०६

हरिभक्तिद्विषामर्थे शूलं संधार्यते मया।
शृणु देवि यथार्थं मे गदितं मयि सुव्रते॥ २०८

भक्तासि मे प्रियासि त्वमतः स्नेहात् प्रकाशितम्।
कदापि नोच्यते देवि मया नामसहस्रकम्॥ २०८

॥ श्रीः ॥

# श्री राधिकासहस्रनामावलिः

ओं श्रीराधायै नमः। राधिकायै। कृष्णवल्लभायै। कृष्णसंयुतायै। वृन्दावनेश्वर्यै। कृष्णप्रियायै। मदनमोहिन्यै। श्रीमत्यै। कृष्णकान्तायै। कृष्णानन्द प्रदायिन्यै। यशस्विन्यै। यशोगम्यायै। यशोदानन्दवल्लभायै । दामोदरप्रियायै। गोप्यै। गोपानन्दकर्यै । कृष्णाङ्गवासिन्यै। हृद्यायै। हरिकान्तायै। हरिप्रियायै नमः। २०

ओं प्रधानगोपिकायै नमः। गोपकन्यायै। त्रैलोक्यसुन्दर्यै। वृन्दावनविहारिण्यै। विकासितमुखाम्बुजायै। गोकुलानन्दकर्त्र्यै। गोकुलानन्ददायिन्यै। गतिप्रदायै। गीतगम्यायै। गमनागमनप्रियायै। विष्णुप्रियायै। विष्णुकान्तायै। विष्णोरङ्कनिवासिन्यै। यशोदा-नन्दपत्न्यै। यशोदानन्दगेहिन्यै। कामारिकान्तायै। कामेश्यै। कामलालसविग्रहायै । जयप्रदायै। जयायै नमः। ४०

ओं जीवायै नमः। जीवानन्दप्रदायिन्यै। नन्दनन्दनपत्न्यै। वृषभानुसुतायै। शिवायै। गणाध्यक्षायै। गवाध्यक्षायै। गवां अनुत्तमायै गत्यै। काञ्चनाभायै। हेमगात्रायै। काञ्चनाङ्गदधारिण्यै। अशोकायै। शोकरहितायै। विशोकायै। शोकनाशिन्यै। गायत्र्यै। वेदमात्रे। वेदातीतायै। विदुत्तमायै। नीतिशास्त्रप्रियायै नमः। ६०

ओं नीत्यै नमः। गत्यै। अभीष्टदायै। मत्यै। वेदप्रियायै। वेदगर्भायै । वेदमार्गप्रवर्धिन्यै। वेदगम्यायै। वेदपरायै। विचित्रकन-कोज्ज्वलायै। उज्ज्वलप्रदायै। नित्यायै। उज्ज्वलगात्रिकायै। नन्दप्रियायै । नन्दसुताराध्यायै। आनन्दप्रदायै। शुभायै। शुभाङ्ग्यै। विमलाङ्ग्यै। विलासिन्यै। अपराजितायै नमः। ८०

ओं जनन्यै नमः । जन्मशून्यायै । जन्ममृत्युजरापहायै । गतिमताङ्गत्यै । धात्र्यै । धात्र्यानन्दप्रदायिन्यै । जगन्नाथप्रियायै । शैलवासिन्यै । हेमसुन्दर्यै । किशोर्यै । कमलायै । पद्मायै । पद्महस्तायै । पयोददायै । पयस्विन्यै । पयोदात्र्यै । पवित्रायै । सर्वमङ्गलायै । महाजीवप्रदायै । कृष्णकान्तायै नमः । १००

ओं कमलसुन्दर्यै नमः । विचित्रवासिन्यै । चित्रवासिन्यै । चित्ररूपिण्यै । निर्गुणायै । सुकुलीनायै । निष्कुलीनायै । निराकुलायै । गोकुलान्तरगेहायै । योगानन्दकर्यै । वेणुवाद्यायै । वेणुरत्यै । वेणुवाद्यपरायणायै । गोपलास्यप्रियायै । सौम्यरूपायै । सौम्य-कुलोद्वहायै । मोहायै । अमोहायै । विमोहायै । गतिनिष्ठायै नमः । १२०

ओं गतिप्रदायै नमः । गीर्वाणवन्द्यायै । गीर्वाणायै । गीर्वाणगण-सेवितायै । ललितायै । विशोकायै । विशाखायै । चित्रमालिन्यै । जितेन्द्रियायै । शुद्धसत्त्वायै । कुलीनायै । कुलदीपिकायै । दीपप्रियायै । दीपदात्र्यै । विमलायै । विमलोदकायै । कान्तारवासिन्यै । कृष्णायै । कृष्णचन्द्रप्रियायै । मत्यै नमः । १४०

अनुत्तरायै नमः । दुःखहन्त्र्यै । दुःखकर्त्र्यै । कुलोद्वहायै । मत्यै । लक्ष्म्यै । धृत्यै । लज्जायै । कान्त्यै । पुष्ट्यै । स्मृत्यै । क्षमायै । क्षीरोदशायिन्यै । देव्यै । देवारिकुलमर्दिन्यै । वैष्णव्यै । महालक्ष्म्यै । कुलपूज्यायै । कुलप्रियायै । सर्वदैत्यानां संहर्त्र्यै नमः । १६०

ओं सावित्र्यै नमः । वेदगामिन्यै । वेदातीतायै । निरालम्बायै । निरालम्बगणप्रियायै । निरालम्बजनैः पूज्यायै । निरालोकायै । निरा-श्रयायै । एकाङ्ग्यै । सर्वगायै । सेव्यायै । ब्रह्मपत्न्यै । सरस्वत्यै । रासप्रियायै । रासगम्यायै । रासाधिष्ठातृदेवतायै । रसिकायै । रसिकानन्दायै । स्वयं रासेश्वर्यै । परायै नमः । १८०

ओं रासमण्डलमध्यस्थायै नमः । रासमण्डलशोभितायै । रासमण्डल- सेव्यायै । रासक्रीडामनोहरायै । पुण्डरीकाक्षनिलयायै । पुण्डरी- काक्षगेहिन्यै । पुण्डरीकाक्षसेव्यायै । पुण्डरीकाक्षवल्लभायै । सर्वजीवेश्वर्यै । सर्वजीववन्द्यायै । परात्परायै । प्रकृत्यै । शम्भुकान्तायै । सदाशिवमनोहरायै । क्षुधे । पिपासायै । दयायै । निद्रायै । भ्रान्त्यै । श्रान्त्यै नमः । २००

ओं क्षमाकुलायै नमः । वधूरूपायै । गोपपत्न्यै । भारत्यै । सिद्धयोगिन्यै । सत्यरूपायै । नित्यरूपायै । नित्याङ्ग्यै । नित्यगेहिन्यै । स्थानदात्र्यै । धात्र्यै । महालक्ष्म्यै । स्वयंप्रभायै । सिन्धुकन्यायै । आस्थानदात्र्यै । द्वारकावासिन्यै । बुद्ध्यै । स्थित्यै । स्थानरूपायै । सर्वकारणकारणायै नमः । २२०

ओं भक्तप्रियायै नमः । भक्तगम्यायै । भक्तानन्दप्रदायिन्यै । भक्तकल्पद्रुमातीतायै । अतीतगुणायै । मनोऽधिष्ठातृदेव्यै । कृष्णप्रेमपरायणायै । निरामयायै । सौम्यदात्र्यै । मदनमोहिन्यै । एकायै । अनंशायै । शिवायै । क्षेमायै । दुर्गायै । दुर्गतिनाशिन्यै । ईश्वर्यै । सर्ववन्द्यायै । गोपनीयायै । शुभंकर्यै नमः । २४०

ओं सर्वभूतानां पालिन्यै नमः । कामाङ्गहारिण्यै । सद्योमुक्तिप्रदायै देव्यै । वेदसारायै । परात्परायै । हिमालयसुतायै । सर्वायै । पार्वत्यै । गिरिजायै सत्यै । दक्षकन्यायै । देवमात्रे । मन्दलज्जायै । हरेस्तन्वै । वृन्दारण्यप्रियायै वृन्दायै । वृन्दावनविलासिन्यै । विलासिन्यै । वैष्णव्यै । ब्रह्मलोकप्रतिष्ठितायै । रुक्मिण्यै । रेवत्यै नमः । २६०

ओं सत्यभामायै नमः । जाम्बवत्यै । सुलक्ष्मणायै । मित्रविन्दायै । कालिन्द्यै । जह्नुकन्यकायै । परिपूर्णायै । पूर्णतरायै । हैमवत्यै । गत्यै ।

अपूर्वायै। ब्रह्मरूपायै। ब्रह्माण्डपरिपालिन्यै। ब्रह्माण्डभाण्डमध्यस्थायै । ब्रह्माण्डभाण्डरूपिण्यै । अण्डरूपायै । अण्डमध्यस्थायै । अण्डपरि-पालिन्यै । अण्डबाह्याण्डसंहर्त्र्यै । शिवब्रह्महरिप्रियायै नमः । २८०

ओं महाविष्णुप्रियायै। कल्पवृक्षरूपायै। निरन्तरायै। सारभूतायै । स्थिरायै । गौर्यै । गौराङ्ग्यै । शशिशेखरायै । श्वेतचम्पकवर्णाभायै । शशिकोटिसमप्रभायै। मालतीमाल्यभूषाढ्यायै। मालतीमाल्यधारिण्यै । कृष्णस्तुतायै। कृष्णकान्तायै। वृन्दावनविलासिन्यै। तुलस्यधिष्ठातृदेव्यै । संसारार्णवपारदायै। सारदायै। आहारदायै। अंभोदायै नमः । ३००

ओं यशोदायै नमः । गोपनन्दिन्यै । अतीतगमनायै । गौर्यै । परानुग्रहकारिण्यै। करुणार्णवसम्पूर्णायै। करुणार्णवधारिण्यै। माधव्यै । माधवमनोहारिण्यै। श्यामवल्लभायै। अन्धकारभयध्वस्तायै। मङ्गल्यायै । मङ्गलप्रदायै। श्रीगर्भायै। श्रीप्रदायै। श्रीशायै। श्रीनिवासाच्युतप्रभायै। श्रीरूपायै। श्रीहरायै। श्रीदायै नमः । ३२०

ओं श्रीकामायै नमः । श्रीस्वरूपिण्यै । श्रीदामानन्ददात्र्यै । श्रीदामेश्वरवल्लभायै। श्रीनितम्बायै। श्रीगणेशायै। श्रीस्वरूपाश्रितायै। श्रुत्यै। श्रीक्रियारूपिण्यै। श्रीलायै। श्रीकृष्णभजनान्वितायै। श्रीराधायै । श्रीमत्यै । श्रेष्ठायै । श्रेष्ठरूपायै । श्रुतिप्रियायै । योगेश्यै । योगमात्रे । योगातीतायै। युगप्रियायै नमः । ३४०

ओं योगप्रियायै नमः। योगगम्यायै । योगिनीगणवन्दितायै । जपाकुसमसंकाशायै। दाडिमीकुसुमोपमायै। नीलाम्बरधरायै। धीरायै। धैर्यरूपधराधृत्यै । रत्नसिंहासनस्थायै ।रत्नकुण्डलभूषितायै । रत्नालङ्कारसंयुक्तायै। रत्नमालाधरायै। परायै। रत्नेन्द्रसारहाराढ्यायै। रत्नमालाविभूषितायै । इन्द्रनीलमणिन्यस्तपादपद्मशुभायै । शुचये । कार्तिक्यै पौर्णमास्यै। अमावास्यायै। भयापहायै नमः । ३६०

ओं गोविन्दराजगृहिण्यै नमः । गोविन्दगणपूजितायै । वैकुण्ठनाथगृहिण्यै । वैकुण्ठपरमालयायै । वैकुण्ठदेवदेवाढ्यायै । वैकुण्ठसुन्दर्यै । मदालसायै । वेदवत्यै । सीतायै । साध्व्यै । पतिव्रतायै । अन्नपूर्णायै । सदानन्दरूपायै । कैवल्यसुन्दर्यै । कैवल्यदायिन्यै । श्रेष्ठायै । गोपीनाथमनोहरायै । गोपीनाथायै । ईश्वर्यै । चण्ड्यै नमः । ३८०

ओं नायिकानयनान्वितायै नमः । नायिकायै । नायकप्रीतायै । नायकानन्दरूपिण्यै । शेषायै । शेषवत्यै । शेषरूपिण्यै । जगदम्बिकायै । गोपालपालिकायै । मायायै । जायायै । आनन्दप्रदायै । कुमार्यै । यौवनानन्दायै । युवत्यै । गोपसुन्दर्यै । गोपमातायै । जानक्यै । जनकानन्दकारिण्यै । कैलासवासिन्यै नमः । ४००

ओं रम्भायै नमः । वैराग्यकुलदीपिकायै । कमलाकान्तगृहिण्यै । कमलायै । कमलालयायै । त्रैलोक्यमात्रे । जगतामधिष्ठात्र्यै । प्रियांबिकायै । हरकान्तायै । हररतायै । हरानन्दप्रदायिन्यै । हरपत्न्यै । हरप्रीतायै । हरतोषणतत्परायै । हरेश्वर्यै । रामरतायै । रामायै । रामेश्वर्यै । रमायै । श्यामलायै नमः । ४२०

ओं चित्रलेखायै नमः । भुवनमोहिन्यै । सुगोप्यै । गोपवनितायै । गोपराज्यप्रदायै । शुभायै । अङ्गारपूर्णायै । माहेय्यै । मत्स्यराजसुतायै । सत्यै । कौमार्यै । नारसिंह्यै । वाराह्यै । नवदुर्गिकायै । चञ्चलाचञ्चलामोदायै । नार्यै भुवनसुन्दर्यै । दक्षयज्ञहरायै । दाक्ष्यै । दक्षकन्यायै । सुलोचनायै नमः ।। ४४०

ओं रतिरूपायै नमः । रतिप्रीतायै । रतिश्रेष्ठायै । रतिप्रदायै । रतिलक्षणगेहस्थायै । विरजायै । भुवनेश्वर्यै । शङ्कास्पदायै । हरेर्जायायै । जामातृकुलवन्दितायै । वकुलायै । वकुलामोदधारिण्यै । यमुनाजयायै ।

विजयायै । जयपत्न्यै । यमलार्जुनभञ्जिन्यै । वक्रेश्वर्यै । वक्ररूपायै । वक्रवीक्षणवीक्षितायै । अपराजितायै नमः । ४६०

ओं जगन्नाथायै नमः । जगन्नाथेश्वर्यै । यत्यै । खेचर्यै । खेचर-सुतायै । खेचरत्वप्रदायिन्यै । विष्णुवक्षःस्थलस्थायै । विष्णुभावन-तत्परायै । चन्द्रकोटिसुगात्र्यै । चन्द्राननमनोहरायै । सेवासेव्यायै । शिवायै । क्षेमायै । क्षेमकर्यै । वध्वै । यादवेन्द्रवध्वै । शैब्यायै । शिवभक्तायै । शिवान्वितायै । केवलायै नमः । ४८०

ओं निष्कलायै नमः । सूक्ष्मायै । महाभीमायै । अभयप्रदायै । जीमूतरूपायै । जैमूत्यै । जितामित्रप्रमोदिन्यै । गोपालवनितायै । नन्दायै । कुलजेन्द्रनिवासिन्यै । जयन्त्यै । यमुनाङ्ग्यै । यमुनातोष-कारिण्यै । कलिकल्मषभङ्गायै । कलिकल्मषनाशिन्यै । कलिकल्म-षरूपायै । नित्यानन्दकर्यै । कृपायै । कृपावत्यै । कुलवत्यै नमः । ५००

ओं कैलासाचलवासिन्यै नमः । वामदेव्यै । वामभागायै । गोविन्दप्रियकारिण्यै । नरेन्द्रकन्यायै । योगेश्यै । योगिन्यै । योग-रूपिण्यै । योगसिद्धायै । सिद्धरूपायै । सिद्धक्षेत्रनिवासिन्यै । क्षेत्राधिष्ठातृरूपायै । क्षेत्रातीतायै । कुलप्रदायै । केशवानन्ददात्र्यै । केशवानन्ददायिन्यै । केशवाकेशवप्रीतायै । कैशवीकेशवप्रियायै । रासक्रीडाकर्यै । रासवासिन्यै नमः । ५२०

ओं राससुन्दर्यै नमः । गोकुलान्वितदेहायै । गोकुलत्वप्रदायिन्यै । लवङ्गनाम्न्यै । नारङ्ग्यै । नारङ्गकुलमण्डनायै । एलालवङ्गकर्पूरमुखवासमुखान्वितायै । मुख्यायै । मुख्यप्रदायै । मुख्यरूपायै । मुख्यनिवासिन्यै । नारायण्यै । कृपातीतायै । करुणामयकारिण्यै । कारुण्यायै । करुणायै । कर्णायै । गोकर्णायै । नागकर्णिकायै । सर्पिण्यै नमः । ५४०

ओं कौलिन्यै नमः । क्षेत्रवासिन्यै । जगदन्वयायै । जटिलायै । कुटिलायै । नीलायै । नीलाम्बरधरायै । शुभायै । नीलाम्बरविधात्र्यै । नीलकण्ठप्रियायै । भगिन्यै । भागिन्यै । भोग्यायै । कृष्णभोग्यायै । भगेश्वर्यै । बलेश्वर्यै । बलाराध्यायै । कान्तायै । कान्तनितम्बिन्यै । नितम्बिन्यै नमः । ५६०

ओं रूपवत्यै नमः । युवत्यै । कृष्णपीवर्यै । विभावर्यै । वैत्रवत्यै । संकटायै । कुटिलालकायै । नारायणप्रियायै । शैलायै । सृकिणीपरिमोहितायै । दृक्पातमोहितायै । प्रातराशिन्यै । नवनीतिकायै । नवीनायै । नवनार्यै । नारङ्गफलशोभितायै । हैम्यै । हेममुख्यै । चन्द्रमुख्यै । शशिसुशोभनायै नमः । ५८०

ओं अर्धचन्द्रधरायै नमः । चन्द्रवल्लभायै । रोहिण्यै । तम्यै । तिमिङ्गिलकुलामोदमत्स्यरूपाङ्गहारिण्यै । सर्वभूतानां कारिण्यै । कार्यातीतायै । किशोरिण्यै । किशोरवल्लभायै । केशकारिकायै । कामकारिकायै । कामेश्वर्यै । कामकलायै । कालिन्दीकूलदीपिकायै । कलिन्दतनयातीरवासिन्यै । तीरगेहिन्यै । कादम्बरीपानपरायै । कुसुमामोदधारिण्यै । कुमुदायै । कुमुदानन्दायै नमः । ६००

ओं कृष्णेश्यै नमः । कामवल्लभायै । तर्काल्यै । वैजयन्त्यै । निम्बदाडिम्बरूपिण्यै । बिल्ववृक्षप्रियायै । कृष्णाम्बरायै । बिल्वोपमस्तन्यै । बिल्वात्मिकायै । बिल्ववसवे । बिल्ववृक्ष निवासिन्यै । तुलसीतोषिकायै । तैतिलानन्दपरितोषिकायै । गजमुक्तायै । महामुक्तायै । महामुक्तिफलप्रदायै । अनङ्गमोहिनी शक्तिरूपायै । शक्तिस्वरूपिण्यै । पञ्चशक्तिस्वरूपायै । शैशवानन्दकारिण्यै नमः । ६२०

ओं गजेन्द्रगामिन्यै नमः। श्यामलतायै। अनङ्गलतायै। योषिच्छक्तिस्वरूपायै। योषिदानन्दकारिण्यै। प्रेमप्रियायै। प्रेमरूपायै। प्रेमानन्दतरङ्गिण्यै। प्रेमहारायै। प्रेमदात्र्यै। प्रेमशक्तिमय्यै। कृष्णप्रेमवत्यै। धन्यायै। कृष्णप्रेमतरङ्गिण्यै। प्रेमभक्तिप्रदायै। प्रेमायै। प्रेमानन्दतरङ्गिण्यै। प्रेमक्रीडापरीताङ्ग्यै। प्रेमभक्तितरङ्गिण्यै। प्रेमार्थदायिन्यै नमः। ६४०

ओं सर्वश्वेतायै नमः। नित्यतरङ्गिण्यै। हावभावान्वितायै। रौद्रायै। रुद्रानन्दप्रकाशिन्यै। कपिलायै। शृङ्खलायै। केशपाशसंबाधिन्यै। घट्यै। कुटीरवासिन्यै। धूम्रायै। धूम्रकेशायै। जलोदर्यै। ब्रह्माण्डगोचरायै। ब्रह्मरूपिण्यै। भवभाविन्यै। संसारनाशिन्यै। शैवायै। शैवलानन्ददायिन्यै। शिशिरायै नमः। ६६०

ओं हेमरागाढ्यायै नमः। मेघरूपायै। अतिसुन्दर्यै। मनोरमायै। वेगवत्यै। वेगाढ्यायै। वेदवादिन्यै। दयान्वितायै। दयाधारायै। दयारूपायै। सुसेविन्यै। किशोरसङ्गसंसर्गायै। गौरचन्द्राननायै। कलायै। कलाधिनाथवदनायै। कलानाथाधिरोहिण्यै। विरागकुशलायै। हेमपिङ्गलायै। हेममण्डनायै। भाण्डीरतालवनगायै नमः। ६८०

ओं कैवर्त्यै नमः। पीवर्यै। शुक्यै। शुकदेवगुणातीतायै। शुकदेवप्रियायै। सख्यै। विकलोत्कर्षिण्यै। कोषायै। कौशेयाम्बरधारिण्यै। कौषावर्यै। कोषरूपायै। जगदुत्पत्तिकारिकायै। सृष्टिस्थितिकर्यै। संहारिण्यै। संहारकारिण्यै। केशशैवलधात्र्यै। चन्द्रगात्रायै। सुकोमलायै। पद्माङ्गरागसंरागायै। विन्ध्याद्रिपरिवासिन्यै नमः। ७००

ओं विन्ध्यालयायै नमः । श्यामसख्यै । सखीसंसाररागिण्यै । भूतायै । भविष्यायै । भव्यायै । भव्यगात्रायै । भवातिगायै । भवनाशान्तकारिण्यै । आकाशरूपायै । सुवेशिन्यै । रत्यै । अङ्गपरित्यगायै । रतिवेगायै । रतिप्रदायै । तेजस्विन्यै । तेजोरूपायै । कैवल्यपथदायै । शुभायै । भक्तिहेतवे नमः । ७२०

ओं मुक्तिहेतवे नमः । लङ्घिन्यै । लङ्घनक्षमायै । विशालनेत्रायै । वैशाल्यै । विशालकुलसम्भवायै । विशालगृहवासायै । विशालबदरीरत्यै । भक्त्यतीतायै । भक्तिगत्यै । भक्तिकायै । शिवभक्तिदायै । शिवभक्तिस्वरूपायै । शिवार्धाङ्गविहारिण्यै । शिरीषकुसुमामोदायै । शिरीषकुसुमोज्ज्वलायै । शिरीषमृद्ध्यै । शैरीष्यै । शिरीषकुसुमाकृत्यै । शैरीष्यै । विष्णोः वामाङ्गहारिण्यै नमः । ७४०

ओं शिवभक्तिसुखान्वितायै नमः । विजितायै । विजितामोदायै । गणगायै । गणतोषितायै । हयास्यायै । हेरम्बसुतायै । गणमात्रे । सुखेश्वर्यै । दुःखहन्त्र्यै । दुःखहरायै । सेवितेप्सितसर्वदायै । सर्वज्ञत्वविधात्र्यै । कुलक्षेत्रनिवासिन्यै । लवङ्गायै । पाण्डवसख्यै । सखीमध्यनिवासिन्यै । ग्राम्यगीतायै । गयायै । गम्यायै नमः । ७६०

ओं गमनातीतनिर्भरायै नमः । सर्वाङ्गसुन्दर्यै । गङ्गायै । गङ्गाजलमय्यै । गङ्गेरितायै । पूतगात्रायै । पवित्रकुलदीपिकायै । पवित्रगुणशीलाढ्यायै । पवित्रानन्ददायिन्यै । पवित्रगुणसीमाढ्यायै । पवित्रकुलदीपिन्यै । कल्पमानायै । कंसहरायै । विन्ध्याचलनिवासिन्यै । गोवर्द्धनेश्वर्यै । गोवर्द्धनहास्यायै । हयाकृत्यै । मीनावतारायै । मीनेश्यै । गगनेश्यै नमः । ७८०

ओं हयायै नमः । गज्यै । हरिण्यै । हारिण्यै । हारधारिण्यै । कनकाकृत्यै । विद्युत्प्रभायै । विप्रमात्रे । गोपमात्रे । गयेश्वर्यै । गवेश्वर्यै ।

गवेश्यै । गवीशीगतिवासिन्यै । गतिज्ञायै । गीतकुशलायै । दनुजेन्द्रनिवारिण्यै । निर्वाणधात्र्यै । नैर्वाण्यै । हेतुयुक्तायै । गयोत्तरायै नमः । ८००

ओं पर्वताधिनिवासायै नमः । निवासकुशलायै । संन्यासधर्मकुशलायै । संन्यासेश्यै । शरन्मुख्यै । शरच्चन्द्रमुख्यै । श्यामहारायै । क्षेत्रनिवासिन्यै । वसन्तरागसंरागायै । वसन्तवसनाकृत्यै । चतुर्भुजायै । षड्भुजायै । द्विभुजायै । गौरविग्रहायै । सहस्रास्यायै । विहास्यायै । मुद्रास्यायै । मोददायिन्यै । प्राणप्रियायै । प्राणरूपायै नमः । ८२०

ओं प्राणरूपिण्यै नमः । अपावृतायै । कृष्णप्रीतायै । कृष्णरतायै । कृष्णतोषणतत्परायै । कृष्णप्रेमरतायै । कृष्णभक्तायै । भक्तफलप्रदायै । कृष्णप्रेमायै । प्रेमभक्तायै । हरिभक्तिप्रदायिन्यै । चैतन्यरूपायै । चैतन्यप्रियायै । चैतन्यरूपिण्यै । उग्ररूपायै । शिवक्रोडायै । कृष्णक्रोडायै । जलोदर्यै । महोदर्यै । महादुर्गकान्तारस्थसुवासिन्यै नमः । ८४०

ओं चन्द्रावल्यै नमः । चन्द्रकेश्यै । चन्द्रप्रेमतरङ्गिण्यै । समुद्रमथनोद्भूतायै । समुद्रजलवासिन्यै । समुद्रामृतरूपायै । समुद्रजलवासिकायै । केशपाशरतायै । निद्रायै । क्षुधायै । प्रेमतरङ्गिकायै । दूर्वादलश्यामतनवे । दूर्वादलतनुच्छवये । नागर्यै । नागरागारायै । नागरानन्दकारिण्यै । नागरालिङ्गनपरायै । नागराङ्गणमङ्गलायै । उच्चनीचायै । हैमवतीप्रियायै नमः । ८६०

ओं कृष्णतरङ्गदायै नमः । प्रेमालिङ्गनसिद्धाङ्ग्यै । सिद्धसाध्यविलासिकायै । मङ्गलामोदजनन्यै । मेखलामोदधारिण्यै । रत्नमञ्जीरभूषाङ्ग्यै । रत्नभूषणभूषणायै । जम्बालमालिकायै । कृष्णप्राणायै ।

प्राणविमोचनायै । सत्यप्रदायै । सत्यवत्यै । सेवकानन्ददायिकायै । जगद्योनये । जगद्बीजायै । विचित्रमणिभूषणायै । राधारमणकान्तायै । राध्यायै । राधनरूपिण्यै । कैलासवासिन्यै नमः । ८८०

ओं कृष्णप्राणसर्वस्वदायिन्यै । कृष्णावतारनिरतकृष्णभक्त-फलार्थिन्यै । याचकायाचकानन्दकारिण्यै । याचकोज्ज्वलायै । हरिभूषणभूषाढ्यायै । आनन्दयुक्तायै । आर्द्रपादगायै । है-है-तालधरायै । थै-थै-शब्दशक्तिप्रकाशिन्यै । हे-हे-शब्दस्वरूपायै । ही-ही-वाक्यविशारदायै । जगदानन्दकर्त्र्यै । सान्द्रानन्दविशारदायै । पण्डितापण्डितगुणायै । पण्डितानन्दकारिण्यै । परिपालनकर्त्र्यै । स्थितिविनोदिन्यै । संहारशब्दाढ्यायै । विद्वज्जनमनोहरायै । विदुषां प्रीतिजनन्यै नमः । ९००

ओं विद्वत्प्रेमविवर्द्धिन्यै नमः । नादेश्यै । नादरूपायै । नादबिन्दुविधारिण्यै । शून्यस्थानस्थितायै। शून्यरूपपादपवासिन्यै । कार्तिकव्रतकर्त्र्यै । वासनाहारिण्यै । जलाशयायै । जलतलायै । शिलातलनिवासिन्यै । क्षुद्रकीटाङ्गसंसर्गायै । सङ्गदोषविनाशिन्यै । कोटिकन्दर्पलावण्यायै । कोटिकन्दर्पसुन्दर्यै । कन्दर्पकोटिजनन्यै । कामबीजप्रदायिन्यै । कामशास्त्रविनोदायै । कामशास्त्रप्रकाशिन्यै । कामप्रकाशिकायै नमः । ९२०

ओं कामिन्यै नमः । अणिमाद्यष्टसिद्धिदायै । यामिन्यै । यामिनीनाथवदनायै । यामिनीश्वर्यै । यागयोगहरायै । भुक्तिमुक्तिदात्र्यै । हिरण्यदायै । कपालमालिन्यै । देव्यै । धामरूपिण्यै । अपूर्वदायै । कृपान्वितायै । गुणागौण्यायै । गुणातीतफलप्रदायै । कूष्माण्डभूतवे-तालनाशिन्यै । शारदान्वितायै । शीतलायै । शबलायै । हेलालीलायै नमः । ९४०

ओं लावण्यमङ्गलायै । विद्यार्थिन्यै । विद्यमानायै । विद्यायै । विद्यास्वरूपिण्यै । आन्वीक्षिकीशास्त्ररूपायै । शास्त्रसिद्धान्तकारिण्यै । नागेन्द्रायै । नागमातायै । क्रीडाकौतुकरूपिण्यै । हरिभावनशीलायै । हरितोषणतत्परायै । हरिप्राणायै । हरप्राणायै । शिवप्राणायै । शिवान्वितायै । नरकार्णवसंहर्त्र्यै । नरकार्णवनाशिन्यै । नरेश्वर्यै । नरातीतायै नमः । ९६०

ओं नरसेव्यायै नमः । नराङ्गनायै । यशोदानन्दनप्राणवल्लभायै । हरिवल्लभायै । यशोदानन्दनारम्यायै । यशोदानन्दनेश्वर्यै । यशोदानन्दनाक्रीडायै । यशोदाक्रोडवासिन्यै । यशोदानन्दनप्राणायै । यशोदानन्दनार्थदायै । वत्सलायै । कोशलायै । कालायै । करुणार्णवरूपिण्यै । स्वर्गलक्ष्म्यै । भूमिलक्ष्म्यै । द्रौपदीपाण्डवप्रियायै । अर्जुनसख्यै । भौम्यै । भैम्यै नमः । ९८०

ओं भीमकुलोद्भवायै नमः । भुवनामोहनायै । क्षीणायै । पानासक्ततरायै । पानार्थिन्यै । पानपात्रायै । पानपानन्ददायिन्यै । दुग्धमन्थनकर्माढ्यायै । दधिमन्थनतत्परायै । दधिभाण्डार्थिन्यै । कृष्णक्रोधिन्यै । नन्दनाङ्गनायै । घृतलिप्तायै । तक्रयुक्तायै । यमुनापारकौतुकायै । विचित्रकथकायै । कृष्णहास्यभाषणतत्परायै । गोपाङ्गनावेष्टितायै । कृष्णसङ्गार्थिन्यै । रासासक्तायै नमः । १०००

ओं रासरत्यै नमः । आसवासक्तवासनायै । हरिद्राहरितायै । हारिण्यै । आनन्दार्पितचेतनायै । निश्चैतन्यायै । निश्चेतायै । दारुहरिद्रिकायै । सुबलस्य स्वस्रे । कृष्णभार्यायै । भाषातिवेगिन्यै । श्रीदामस्य सख्यै । दामदायिन्यै । दामधारिण्यै । कैलासिन्यै । केशिन्यै । हरिदम्बरधारिण्यै । हरिसान्निध्यदात्र्यै । हरिकौतुकमङ्गलायै । हरिप्रदायै नमः । १०२०

ओं हरिद्वारायै नमः । यमुनाजलवासिन्यै । जैत्रप्रदायै । जितार्थिन्यै । चतुरायै । चातुर्यै । तम्यै । तमिस्रायै । आतपरूपायै । रौद्ररूपायै । यशोऽर्थिन्यै । कृष्णार्थिन्यै । कृष्णकलायै । कृष्णानन्दविधायिन्यै । कृष्णार्थवासनायै । कृष्णरागिण्यै । भवभाविन्यै । कृष्णार्थरहितायै । भक्ताभक्तभक्तिशुभप्रदायै । श्रीकृष्णरहितायै नमः । १०४०

ओं दीनायै नमः । हरेः विरहिण्यै । मथुरायै । मथुराराजगेहभावन-भावनायै । अलकेश्वरपूज्यायै । कुबेरेश्वरवल्लभायै । श्रीकृष्णभावना-मोदायै । उन्मादविधायिन्यै । कृष्णार्थव्याकुलायै । कृष्णसारचर्मधरायै । शुभायै । धनधान्यविधात्र्यै । जायायै । कायायै । हयायै । हय्यै । प्रणवायै । प्रणवेश्यै । प्रणवार्थस्वरूपिण्यै । ब्रह्मविष्णुशिवार्धाङ्गहारिण्यै नमः । १०६०

ओं शैवशिंशपायै नमः । राक्षसीनाशिन्यै । भूतप्रेतप्राणविना-शिन्यै । सकलेप्सितदात्र्यै । शच्यै । साध्व्यै । अरुन्धत्यै । पतिव्रतायै । पतिप्राणायै । पतिवाक्यविनोदिन्यै । अशेषसाधिन्यै । कल्पवासिन्यै । कल्परूपिण्यै नमः । १०७३

॥ श्री ॥

## श्रीराधिकाष्टोत्तरशतनामस्तोत्रम्

अवीक्षितेश्वरी काचिद्वृन्दावनमहेश्वरीम् ।
तत्पदांभोजमात्रैकगतिः दास्यतिकातरा ॥ १

पतिता तत्सरस्तीरे रुदत्यार्तरवाकुलम् ।
तच्छ्रीवक्त्रेक्षणप्राप्त्यै नामान्येतानि सञ्जगौ । २

राधा गन्धर्विका गोष्ठयुवराजैककामिता ।
गन्धर्वाराधिता चन्द्रकान्तिर्माधवसङ्गिनी ॥ ३

दामोदराद्वैतसखी कार्तिकोत्कीर्तिदेश्वरी ।
मुकुन्ददयिताबृन्द धम्मिल्लमणिमञ्जरी ॥ ४

भास्करोपासिका वार्षभानवी वृषभानुजा ।
अनङ्गमञ्जरीज्येष्ठा श्रीदामावरजोत्तमा ॥ ५

कीर्तिदाकन्यका मातृस्नेहपीयूषपुत्रिका ।
विशाखासवयाः प्रेष्ठविशाखाजीविताधिका ॥ ६

प्राणाद्वितीयललिता बृन्दावनविहारिणी ।
ललिताप्राणरक्षैकलक्षा बृन्दावनेश्वरी ॥ ७

व्रजेन्द्रगृहिणी कृष्णप्रायस्नेहनिकेतनम् ।
व्रजगोगोपगोपालीजीवमात्रैकजीवनम् ॥ ८

स्नेहलाभीरराजेन्द्रा वत्सलाच्युतपूर्वजा ।
गोविन्दप्रणयाधारा सुरभीसेवनोत्सुका ॥ ९

धृतनन्दीश्वरक्षेमा गमनोत्कण्ठिमानसा ।
स्वदेहाद्वैतताद्दष्टधनिष्ठाध्येयदर्शना ॥ १०

गोपेन्द्रमहिषीपाकशालावेदिप्रकाशिका ।
आयुर्वर्धाकरद्धानारोहिणीघ्रातमस्तका ॥ ११

सुबलान्यस्तसारूप्या सुबलाप्रीतितोषिता ।
मुखराद्दक्सुधानप्त्री जटिलाद्दष्टिभासिता ॥ १२

मधुमङ्गलनर्मोक्तिजनितस्मितचन्द्रिका ।
पौर्णमासीबहिःखेलत्प्राणपञ्जरसारिका ॥ १३

स्वगणाद्वैतजीवातुः स्वीयाहङ्कारवर्धिनी।
स्वगणोपेन्द्रपादाब्जस्पर्शालम्भनहर्षिणी ॥ १४

स्वीयबृन्दावनोद्यानपालिकीकृतबृन्दका।
ज्ञातवृन्दाटवीसर्वलतातरुमृगद्विजा ॥ १५

ईषच्चन्दनसंघृष्ट नवकाश्मीरदेहभाः।
जपापुष्पप्रीतहरी पट्टचीनारुणाम्बरा ॥ १६

चरणाब्जतलज्योतिररुणीकृतभूतला।
हरिचित्तचमत्कारि चारुनूपुरनिःस्वना ॥ १७

कृष्णश्रान्तिहरश्रोणीपीठवल्गितघण्टिका।
कृष्णसर्वस्वपीनोद्यत्कुचाञ्चन्मणिमालिका ॥ १८

नानारत्नोल्लसच्छङ्खचूडचारुभुजद्वया।
स्यमन्तकमणिभ्राजन्मणिबन्धातिबन्धुरा ॥ १९

सुवर्णदर्पणज्योतिरुल्लंघिमुखमण्डला।
पक्कदाडिमबीजाभ दन्ताकृष्टाघभिच्छुका ॥ २०

अब्जरागादिसृष्टाब्जकलिकाकर्णभूषणा।
सौभाग्यकज्जलाङ्काक्त नेत्रानन्दितखञ्जना ॥ २१

सुवृत्तमौक्तिकामुक्तानासिकातिलपुष्पिका।
सुचारुनवकस्तूरीतिलकाञ्चितफालका ॥ २२

दिव्यवेणीविनिर्धूतकेकीपिञ्छवरस्तुतिः।
नेत्रान्तसारविध्वंसकृतचाणूरजिद्धृतिः ॥ २३

स्फुरत्कैशोरतारुण्यसन्धिबन्धुरविग्रहा।
माधवोल्लासकोन्मत्त पिकोरुमधुरस्वरा ॥ २४

प्राणायुतशतप्रेष्ठमाधवोत्कीर्तिलंपटा।
कृष्णापाङ्गतरङ्गोद्यत्स्मितपीयूषबुद्बुदा ॥ २५

पुञ्जीभूतजगल्लज्जावैदग्धीदिग्धविग्रहा।
करुणाविद्रवद्देहा मूर्तिमन्माधुरीघटा ॥ २६

जगद्गुणवतीवर्गगीयमानगुणोच्चया।
शच्यादिसुभगावृन्दवन्द्यमानोरुसौभगा ॥ २७

वीणावादनसङ्गीत रसलास्यविशारदा।
नारदप्रमुखोद्गीतजगदानन्दिसद्यशाः ॥ २८

गोवर्धनगुहागेहगृहिणीकुञ्जमण्डना।
चण्डांशुनन्दिनीबद्धभगिनीभावविभ्रमा ॥ २९

दिव्यकुन्दलतानर्मसख्य दामविभूषणा।
गोवर्धनधराह्लादि शृङ्गाररसपण्डिता ॥ ३०

गिरीन्द्रधरवक्षःश्रीः शंखचूडारिजीवनम्।
गोकुलेन्द्रसुतप्रेमकामभूपेन्द्रपट्टणम् ॥ ३१

वृषविध्वंसनर्मोक्ति स्वनिर्मितसरोवरा।
निजकुण्डजलक्रीडाजितसंकर्षणानुजा ॥ ३२

मुरमर्दनमत्तेभविहारामृतदीर्घिका।
गिरीन्द्रधरपारीन्द्ररतियुद्धोरुसिंहिका ॥ ३३

स्वतनूसौरभोन्मत्तीकृतमोहनमाधवा।
दोर्मूलोच्चलनक्रीडाव्याकुलीकृतकेशवा ॥ ३४

निजकुण्डतटीकुञ्ज क्लृप्तकेलीकलोद्यमा।
दिव्यमल्लीकुलोल्लासि शय्याकल्पितविग्रहा ॥ ३५

कृष्णवामभुजन्यस्त चारुदक्षिणगण्डका ।
सव्यबाहुलताबद्धकृष्णदक्षिणसद्भुजा ॥ ३६

कृष्णदक्षिणचारूरुश्लिष्टवामोरुरंभिका ।
गिरीन्द्रधरदृग्वक्षोमर्दिसुस्तनपर्वता ॥ ३७

गोविन्दाधरपीयूषवासिताधरपल्लवा ।
सुधासञ्चयचारूक्ति शीतलीकृतमाधवा ॥ ३८

गोविन्दोद्गीर्णतांबूल रागरज्यत्कपोलिका ।
कृष्णसंभोग सफलीकृतमन्मथसंभवा ॥ ३९

गोविन्दमार्जितोद्दामरतिप्रस्विन्नसन्मुखा ।
विशाखाविजितक्रीडाशान्तिनिद्रालुविग्रहा ॥ ४०

गोविन्दचरणन्यस्तकायमानसजीवना ।
स्वप्राणार्बुदनिर्मञ्छ्य हरिपादरजःकणा ॥ ४१

अणुमात्राच्युतादर्शशप्यमानात्मलोचना ।
नित्यनूतनगोविन्दवक्त्रशुभ्रांशुदर्शना ॥ ४२

निःसीमहरिमाधुर्यसौन्दर्याद्येकभोगिनी ।
सापत्न्यधाममुरलीमात्रभाग्यकटाक्षिणी ॥ ४३

गाढबुद्धिबलक्रीडाजितवंशीविकर्षिणी ।
नर्मोक्तिचन्द्रिकोत्फुल्ल कृष्णकामाब्धिवर्धिनी ॥ ४४

व्रजचन्द्रेन्द्रियग्राम विश्रामविधुशालिका ।
कृष्णसर्वेन्द्रियोन्मादि राधेत्यक्षरयुग्मका ॥ ४५

इदं श्रीराधिकानाम्नामष्टोत्तरशतोज्ज्वलम् ।
श्रीराधालंभकं नाम स्तोत्रं चारु रसायनम् ॥ ४६

योऽधीते परमप्रीत्या दीनः कातरमानसः ।
स नाथामचिरेणैव सनाथामीक्षते ध्रुवम् ॥ ४७

श्रीः

# राधिकाष्टोत्तर शतनामावलिः

राधायै नमः । गन्धर्विकायै । गोष्ठयुवराजैककामितायै । गन्धर्वाराधितायै । चन्द्रकान्त्यै । माधवसङ्गिन्यै ।दामोदराद्वैतसख्यै । कार्तिकोत्कीर्तिदेश्वर्यै । मुकुन्ददयितावृन्दधम्मिल्लमणिमञ्जर्यै । भास्करोपासिकायै । वार्षभानव्यै । वृषभानुजायै । अनङ्गमञ्जरीज्येष्ठायै । श्रीदामावरजोत्तमायै । कीर्तिदाकन्यकायै । मातृस्नेहपीयूषपुत्रिकायै । विशाखासवयसे । प्रेष्ठविशाखाजीविताधिकायै । प्राणाद्वितीयललितायै । बृन्दावनविहारिण्यै नमः ।। २०

ललिताप्राणरक्षैकलक्षायै नमः । बृन्दावनेश्वर्यै । व्रजेन्द्रगृहिण्यै । कृष्णप्रायस्नेहनिकेतनायै । व्रजगोगोपगोपालीजीवमात्रैकजीवनायै । स्नेहलाभीरराजेन्द्रायै । वत्सलाच्युतपूर्वजायै । गोविन्दप्रणयाधारायै । सुरभीसेवनोत्सुकायै । धृतनन्दीश्वरक्षेमायै । गमनोत्कण्ठिमानसायै । स्वदेहाद्वैततादृष्टधनिष्ठाध्येयदर्शनायै । गोपेन्द्रमहिषीपाकशालावेदिप्रकाशिकायै । आयुर्वर्धाकरद्धानारोहिणीघ्रातमस्तकायै । सुबलान्यस्तसारूप्यायै । सुबलाप्रीतितोषितायै । मुखरादृक्सुधानप्त्र्यै । जटिलादृष्टिभासितायै । मधुमङ्गलनर्मोक्तिजनितस्मितचन्द्रिकायै । पौर्णमासीबहिःखेलत्प्राणपञ्जरसारिकायै नमः ।।४०

स्वगणाद्वैतजीवातवे नमः । स्वीयाहङ्कारवर्धिन्यै । स्वगणोपेन्द्रपादाब्जस्पर्शालंभनहर्षिण्यै । स्वीयबृन्दावनोद्यानपालिकीकृतवृन्दकायै । ज्ञातबृन्दाटवीसर्वलतातरुमृगद्विजायै । ईषच्चन्दनसंघृष्टनवकाश्मीरदेहभासे । जपापुष्पहप्रीतहर्यै । पट्टचीनारुणाम्बरायै । चरणाब्जतलज्योतिररुणीकृतभूतलायै । हरिचित्तचमत्कारिचारुनू-

पुरनिःस्वनायै । कृष्णश्रान्तिहरश्रोणीपीठवालीतघण्टिकायै । कृष्णसर्वस्वपीनोद्यत्कुचाञ्चन्मणिमालिकायै । नानारत्नोल्लसच्छंख-चूड़चारुभुजद्वयायै । स्यमन्तकमणिभ्राजन्मणिबन्धातिबन्धुरायै । सुवर्णदर्पणज्योतिरुल्लंघिमुखमण्डलायै । पक्वदाडिमबीजाभदन्ता-कृष्टाघभिच्छुकायै । अब्जरागादिसृष्टाब्जकलिकाकर्णभूषणायै । सौभाग्यकज्जलाङ्काक्त नेत्रानन्दितखञ्जनायै । सुवृत्तमौक्तिकामुक्ता-नासिकातिलपुष्पिकायै । सुचारुनवकस्तूरीतिलकाञ्चितफालकायै ॥ ६०

दिव्यवेणीविनिर्धूतकेकीपिञ्छवरस्तुत्यै । नेत्रान्तसारविध्वं-सकृतचाणूरजिद्धृत्यै । स्फुरत्कैशोरतारुण्यसन्धिबन्धुरविग्रहायै । माधवोल्लासकोन्मत्तपिकोरुमधुरस्वरायै । प्राणायुतशतप्रेष्ठमाधवोत्कीर्ति लंपटायै । कृष्णापाङ्गतरङ्गोद्यत्स्मितपीभूषबुद्बुदायै । पुञ्जीभूतजग-ल्लज्जावैदग्धीदिग्धविग्रहायै । करुणाविद्रवद्देहायै । मूर्तिमन्माधुरीघटायै । जगद्गुणवतीवर्गगीयमानगुणोच्चयायै । शच्यादिसुभगावृन्दवन्द्यमानो-रुसौभगायै । वीणावादनसङ्गीतरसलास्यविशारदायै । नारदप्रमुखोद्गीत जगदानन्दिसद्यशसे । गोवर्धनगुहागेहगृहिणीकुञ्जमण्डनायै । चण्डांशुनन्दिनीबद्धभगिनीभावविभ्रमायै । दिव्यकुन्दलतानर्मसख्य-दामविभूषणायै । गोवर्धनधराह्लादिशृङ्गाररसपण्डितायै । गिरीन्द्र-धरवक्षःश्रियै । शंखचूडारिजीवनाय । गोकुलेन्द्रसुतप्रेम कामभूपेन्द्र-पट्टणाय नमः ॥ ८०

वृषविध्वंसनर्मोक्तिस्वनिर्मितसरोवरायै । निजकुण्डजलक्रीडा - जितसंकर्षणानुजायै । मुरमर्दनमत्तेभविहारामृतदीर्घिकायै । गिरीन्द्रधर-पारीन्द्ररतिरुद्धोरुसिंहिकायै । स्वतनूसौरभोन्मत्तीकृतमोहनमाधवायै । दोर्मूलोच्चलनक्रीडाव्याकुलीकृतकेशवायै । निजकुण्डतटीकुञ्जक्लृप्त-केलीकलोद्यमायै । दिव्यमल्लीकुलोल्लासिशय्याकल्पितविग्रहायै ।

कृष्णवामभुजन्यस्तचारुदक्षिणगण्डकायै । सव्यबाहुलताबद्ध कृष्ण-दक्षिणसद्भुजायै । कृष्णदक्षिणचारूरुश्लिष्टवामोरुरंभिकायै । गिरीन्द्र-धरदृग्वक्षोमर्दिसुस्तन-पर्वतायै । गोविन्दाधरपीयूषवासिताधरपल्लवायै । सुधासञ्चयचारूक्तिशीतलीकृतमाधवायै । गोविन्दोद्गीर्णतांबूलरा-गरज्यत्कपोलिकायै । कृष्णसंभोगसफलीकृतमन्मथसंभवायै । गोविन्द-मार्जितोद्दामरतिप्रस्विन्नसन्मुखायै । विशाखाविजितक्रीडाशान्ति-निद्रालुविग्रहायै । गोविन्दचरणन्यस्तकायमानसजीवनायै । स्वप्राणा-र्बुदनिर्मञ्छ्यहरिपादरजःकणायै नमः ॥ १००

अणुमात्राच्युतादर्शशप्यमानात्मलोचनायै नमः । नित्यनूतन-गोविन्दवक्त्रशुभ्रांशुदर्शनायै । निःसीमहरिमाधुर्य सौन्दर्याद्येकभो-गिन्यै । सापत्न्यधाममुरलीमात्रभाग्यकटाक्षिण्यै । गाढबुद्धिबलक्रीडा-जितवंशीविकर्षिण्यै । नर्मोक्तिचन्द्रिकोत्फुल्लकृष्णकामाब्धिवर्धिन्यै । व्रज चन्द्रेन्द्रियग्रामविश्रामविधुशालिकायै । कृष्णसर्वेन्द्रियोन्मादिराधे-त्यक्षरयुग्मकायै नमः ॥ १०८

## राधा पुनातु

राधा पुनातु जगदच्युतदत्तचित्ता

मन्था नमाकलयती दधिरिक्तपात्रे ।
यस्याः स्तनस्तबचकूकचूलोलदृष्टिः
देवोऽपि दोहनधिया वृषभं दुदोह ॥

सुधाधाम्नः कान्तिस्तव वदनपङ्केरुहगुणैः
जितेव म्लानत्वं व्रजति सहसा प्राणदयिते ।
वदत्येवं कान्ते दिवसविरहातङ्कचकिता
तदङ्गे संलग्ना तव दिशतु राधा प्रियशतम् ॥

# श्रीवेङ्कटेशसहस्रनामस्तोत्रम्

श्री वसिष्ठ उवाच—

भगवन् केन विधिना नामभिर्वेङ्कटेश्वरम्।
पूजयामास तं देवं ब्रह्मा तु कमलैः शुभैः ॥ १

पृच्छामि तानि नामानि गुणयोगपराणि किम्।
मुख्यवृत्तीनि किं ब्रूहि लक्षकाण्यथवा हरेः ॥ २

नारद उवाच—

नामान्यनन्तानि हरेः गुणयोगानि कानिचित्।
मुख्यवृत्तीनि चान्यानि लक्षकाण्यपराणि च ॥ ३

परमार्थैः सर्वशब्दैरेको ज्ञेयः परः पुमान्।
आदिमध्यान्तरहितस्त्वव्यक्तोऽनन्तरूपभृत् ॥ ४

चन्द्रार्कवह्निवाय्वाद्या ग्रहर्क्षाणि नभो दिशः।
अन्वयव्यतिरेकाभ्यां सन्ति नो सन्ति यन्मते ॥ ५

तस्य देवस्य नाम्नां हि पारं गन्तुं हि कः क्षमः।
तथाऽपि चाभिधानानि वेङ्कटेशस्य कानिचित् ॥ ६

ब्रह्मगीतानि पुण्यानि तानि वक्ष्यामि सुव्रत।
यदुच्चारणमात्रेण विमुक्ताघः परं व्रजेत् ॥ ७

वेङ्कटेशस्य नाम्नां हि सहस्रस्य ऋषिर्विधिः।
छन्दोऽनुष्टप्तथा देवः श्रीवत्साङ्को रमापतिः ॥ ८

बीजभूतस्तथोङ्कारो ह्रीं क्लीं शक्तिश्च कीलकम्।
ओं नमो वेङ्कटेशायेत्यादिर्मन्त्रोऽत्र कथ्यते ॥ ९

42 ब्रह्माण्डगर्भः कवचमस्त्रं चक्रगदाधरः।
विनियोगोऽभीष्टसिद्धौ हृदयं सामगायनः ॥ १०

अस्य श्री वेङ्कटेशसहस्रनामस्तोत्रमहामन्त्रस्य, ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । श्रीवत्साङ्को रमापतिर्देवता । ओं बीजं, ह्रीं शक्तिः । क्लीं कीलकम् । ब्रह्माण्डगर्भ इति कवचम् । चक्रगदाधर इत्यस्त्रम् । सामगायन इति हृदयम् । ओं नमो वेङ्कटेशायेत्यादिर्मन्त्रः । श्री वेङ्कटेशप्रीत्यर्थे जपे विनियोगः । ध्यानं—

भास्वच्चन्द्रमसौ यदीयनयने भार्या यदीया रमा
यस्माद्विश्वसृडप्यभूद्यमिकुलं यद्ध्यानयुक्तं सदा ।
नाथो यो जगतां नगेन्द्रदुहितुर्नाथोऽपि यद्भक्तिमान्
तातो यो मदनस्य यो दुरितहा तं वेङ्कटेशं भजे ॥

ऊर्ध्वौ हस्तौ यदीयौ सुररिपुदळने बिभ्रतौ शङ्खचक्रे
सेव्यावङ्घ्री स्वकीयावभिदधदधरो दक्षिणो यस्य पाणिः ।
तावन्मात्रं भवाब्धिं गमयति भजतामूरुगो वामपाणिः
श्रीवत्साङ्कश्च लक्ष्मीर्यदुरसि लसतस्तं भजे वेङ्कटेशम् ॥

इति ध्यायन् वेङ्कटेशं श्रीवत्साङ्कं रमापतिम् ।
वेङ्कटेशो विरूपाक्ष इत्यारभ्य जपेत्क्रमात् ॥ १०

वेङ्कटेशो विरूपाक्षो विश्वेशो विश्वभावनः ।
विश्वसृड् विश्वसंहर्ता विश्वप्राणो विराड्वपुः ॥ ११

शेषाद्रिनिलयोऽशेषभक्तदुःखप्रणाशनः ।
शेषस्तुत्यः शेषशायी विशेषज्ञो विभुः स्वभूः ॥ १२

विष्णुर्जिष्णुश्च वर्धिष्णुरुत्सविष्णुः सहिष्णुकः ।
भ्राजिष्णुश्च ग्रसिष्णुश्च वर्तिष्णुश्च भरिष्णुकः ॥ १३

कालयन्ता कालगोप्ता कालः कालान्तकोऽखिलः ।
कालगम्यः कालकण्ठवन्द्यः कालकलेश्वरः ॥ १४

शम्भुः स्वयम्भूरम्भोजनाभिः स्तम्भितवारिधिः ।
अम्भोधिनन्दिनीजानिः शोणाम्भोजपदप्रभः ॥ १५

कम्बुग्रीवः शम्बरारिरूपः शम्बरजेक्षणः ।
बिम्बाधरो बिम्बरूपी प्रतिबिम्बक्रियातिगः ॥ १६

गुणवान् गुणगम्यश्च गुणातीतो गुणप्रियः ।
दुर्गुणध्वंसकृत्सर्वसुगुणो गुणभासकः ॥ १७

परेशः परमात्मा च परं ज्योतिः परा गतिः ।
परं पदं वियद्वासाः पारम्पर्यशुभप्रदः ॥ १८

ब्रह्माण्डगर्भो ब्रह्मण्यो ब्रह्मसृड्ब्रह्मबोधितः ।
ब्रह्मस्तुत्यो ब्रह्मवादी ब्रह्मचर्यपरायणः ॥ १९

सत्यव्रतार्थसन्तुष्टस्सत्यरूपी झषाङ्गवान् ।
सोमकप्राणहारी चानीताम्नायोऽब्धिसञ्चरः ॥ २०

देवासुरवरस्तुत्यः पतन्मन्दरधारकः ।
धन्वन्तरिः कच्छपाङ्गः पयोनिधिविमन्थकः ॥ २१

अमरामृतसन्धाता धृतसम्मोहिनीवपुः ।
हरमोहकमायावी रक्षःसन्दोहभञ्जनः ॥ २२

हिरण्याक्षविदारी च यज्ञो यज्ञविभावनः ।
यज्ञीयोर्वीसमुद्धर्ता लीलाक्रोडः प्रतापवान् ॥ २३

दण्डकासुरविध्वंसी वक्रदंष्ट्रः क्षमाधरः ।
गन्धर्वशापहरणः पुण्यगन्धो विचक्षणः ॥ २४

करालवक्त्रः सोमार्कनेत्रः षड्गुणवैभवः ।
श्वेतघोणी घूर्णितभ्रूर्घुर्घुरध्वनिविभ्रमः ॥ २५

द्राघीयान् नीलकेशी च जाग्रदम्बुजलोचनः ।
घृणावान् घृणिसम्मोहो महाकालाग्निदीधितिः ॥ २६

ज्वालाकरालवदनो महोल्काकुलवीक्षणः ।
सटानिर्भिन्नमेघौघो दंष्ट्रारुग्व्याप्तदिक्तटः ॥ २७

उच्छ्वासाकृष्टभूतेशो निःश्वासत्यक्तविश्वसृट् ।
अन्तर्भ्रमज्जगद्गर्भोऽनन्तो ब्रह्मकपालहृत् ॥ २८

उग्रो वीरो महाविष्णुर्ज्वलनः सर्वतोमुखः ।
नृसिंहो भीषणो भद्रो मृत्युमृत्युः सनातनः ॥ २९

सभास्तम्भोद्भवो भीमः शिरोमाली महेश्वरः ।
द्वादशादित्यचूडालः कल्पधूमसटाच्छविः ॥ ३०

हिरण्यकोरःस्थलभिन्नखः सिंहमुखोऽनघः ।
प्रह्लादवरदो धीमान् भक्तसङ्घप्रतिष्ठितः ॥ ३१

ब्रह्मरुद्रादिसंसेव्यः सिद्धसाध्यप्रपूजितः ।
लक्ष्मीनृसिंहो देवेशो ज्वालाजिह्वोऽन्त्रमालिकः ॥ ३२

खड्गी खेटी महेष्वासी कपाली मुसली हली ।
पाशी शूली महाबाहुर्ज्वरघ्नो रोगलुण्ठकः ॥ ३३

मौञ्जीयुक् छात्रको दण्डी कृष्णाजिनधरो वटुः ।
अधीतवेदो वेदान्तोद्धारको ब्रह्मनैष्ठिकः ॥ ३४

अहीनशयनप्रीतः आदितेयोऽनघो हरिः ।
संवित्प्रियस्सामवेद्यो बलिवेश्मप्रतिष्ठितः ॥ ३५

बलिक्षालितपादाब्जो विन्ध्यावलिविमानितः ।
त्रिपादभूमिस्वीकर्ता विश्वरूपप्रदर्शकः ॥ ३६

धृतत्रिविक्रमः स्वाङ्घ्रिनखभिन्नाण्डखर्परः ।
पज्जातवाहिनीधारापवित्रितजगत्त्रयः ॥ ३७

विधिसम्मानितः पुण्यो दैत्ययोद्धा जयोर्जितः ।
सुरराज्यप्रदः शुक्रमदहृत् सुगतीश्वरः ॥ ३८

जामदग्न्यः कुठारी च कार्तवीर्यविदारणः ।
रेणुकायाश्शिरोहारी दुष्टक्षत्रियमर्दनः ॥ ३९

वर्चस्वी दानशीलश्च धनुष्मान् ब्रह्मवित्तमः ।
अत्युदग्रः समग्रश्च न्यग्रोधो दुष्टनिग्रहः॥ ४०

रविवंशसमुद्भूतो राघवो भरताग्रजः ।
कौसल्यातनयो रामो विश्वामित्रप्रियङ्करः ॥ ४१

ताटकारिः सुबाहुघ्नो बलातिबलमन्त्रवान् ।
अहल्याशापविच्छेदी प्रविष्टजनकालयः ॥ ४२

स्वयंवरसभासंस्थ ईशचापप्रभञ्जनः ।
जानकीपरिणेता च जनकाधीशसंस्तुतः ॥ ४३

जमदग्नितनूजातयोद्धाऽयोध्याधिपाग्रणीः ।
पितृवाक्यप्रतीपालस्त्यक्तराज्यः सलक्ष्मणः ॥ ४४

ससीतश्चित्रकूटस्थो भरताहितराज्यकः ।
काकदर्पप्रहर्ता च दण्डकारण्यवासकः ॥ ४५

पञ्चवट्यां विहारी च स्वधर्मपरिपोषकः ।
विराधहाऽगस्त्यमुख्यमुनिसम्मानितः पुमान् ॥ ४६

इन्द्रचापधरः खड्गधरश्चाक्षयसायकः ।
खरान्तको दूषणारिस्त्रिशिरस्करिपुर्वृषः ॥ ४७

ततः शूर्पणखानासाच्छेत्ता वल्कलधारकः ।
जटावान् पर्णशालास्थो मारीचबलमर्दकः ॥ ४८

पक्षिराट्कृतसंवादो रवितेजा महाबलः ।
शबर्यानीतफलभुक् हनूमत्परितोषितः ॥ ४९

सुग्रीवाभयदो दैत्यकायक्षेपणभासुरः ।
सप्ततालसमुच्छेत्ता वालिहृत्कपिसंवृतः ॥ ५०

वायुसूनुकृतासेवस्त्यक्तपम्पः कुशासनः ।
उदन्वत्तीरगः शूरो विभीषणवरप्रदः ॥ ५१

सेतुकृद्दैत्यहा प्राप्तलङ्कोऽलङ्कारवान् स्वयम् ।
अतिकायशिरश्छेत्ता कुम्भकर्णविभेदनः ॥ ५२

दशकण्ठशिरोध्वंसी जाम्बवत्प्रमुखावृतः ।
जानकीशः सुराध्यक्षः साकेतेशः पुरातनः ॥ ५३

पुण्यश्लोको वेदवेद्यः स्वामितीर्थनिवासकः ।
लक्ष्मीसरःकेळिलोलो लक्ष्मीशो लोकरक्षकः ॥ ५४

देवकीगर्भसंभूतो यशोदेक्षणलालितः ।
वसुदेवकृतस्तोत्रो नन्दगोपमनोहरः ॥ ५५

चतुर्भुजः कोमलाङ्गो गदावान्नीलकुन्तलः ।
पूतनाप्राणसंहर्ता तृणावर्तविनाशनः ॥ ५६

गर्गारोपितनामाङ्को वासुदेवो ह्यधोक्षजः ।
गोपिकास्तन्यपायी च बलभद्रानुजोऽच्युतः ॥ ५७

वैयाघ्रनखभूषश्च वत्सजिद्वत्सवर्धनः ।
क्षीरसाराशनरतो दधिभाण्डप्रमर्दनः ॥ ५८

नवनीतापहर्ता च नीलनीरदभासुरः ।
आभीरदृष्टदौर्जन्यो नीलपद्मनिभाननः ॥ ५९

मातृदर्शितविश्वास्य उलूखलनिबन्धनः ।
नलकूबरशापान्तो गोधूलिच्छुरिताङ्गकः ॥ ६०

गोसङ्घरक्षकः श्रीशो बृन्दारण्यनिवासकः ।
वत्सान्तको बकद्वेषी दैत्याम्बुदमहानिलः ॥ ६१

महाजगरचण्डाग्निः शकटप्राणकण्टकः ।
इन्द्रसेव्यः पुण्यगात्रः खरजिच्चण्डदीधितिः ॥ ६२

तालपक्वफलाशी च काळीयफणिदर्पहा ।
नागपत्नीस्तुतिप्रीतः प्रलम्बासुरखण्डनः ॥ ६३

दावाग्निबलसंहारी फलहारी गदाग्रजः ।
गोपाङ्गनाचेलचोरः पाथोलीलाविशारदः ॥ ६४

वंशगानप्रवीणश्च गोपीहस्ताम्बुजार्चितः ।
मुनिपत्न्याहृताहारो मुनिश्रेष्ठो मुनिप्रियः ॥ ६५

गोवर्द्धनाद्रिसन्धर्ता सङ्क्रन्दनतमोऽपहः ।
सदुद्यानविलासी च रासक्रीडापरायणः ॥ ६६

वरुणाभ्यार्चितो गोपीप्रार्थितः पुरुषोत्तमः ।
अक्रूरस्तुतिसम्प्रीतः कुब्जायौवनदायकः ॥ ६७

मुष्टिकोरःप्रहारी च चाणूरोदरदारणः ।
मल्लयुद्धाग्रगण्यश्च पितृबन्धनमोचकः ॥ ६८

मत्तमातङ्गपञ्चास्यः कंसग्रीवानिकृन्तनः ।
उग्रसेनप्रतिष्ठाता रत्नसिंहासनस्थितः ॥ ६९

कालनेमिखलद्वेषी मुचुकुन्दवरप्रदः ।
साल्वसेवितदुर्धर्षराजस्मयनिवारणः ॥ ७०

रुक्मिगर्वापहारी च रुक्मिणीनयनोत्सवः ।
प्रद्युम्नजनकः कामी प्रद्युम्नो द्वारकाधिपः ॥ ७१

मण्याहर्ता महामायो जाम्बवत्कृतसङ्गरः ।
जाम्बूनदाम्बरधरो गम्यो जाम्बवतीविभुः ॥ ७२

कालिन्दीप्रथितारामकेलिर्गुञ्जावतंसकः ।
मन्दारसुमनोभास्वान् शचीशाभीष्टदायकः ॥ ७३

सत्राजिन्मानसोल्लासी सत्याजानिः शुभावहः ।
शतधन्वहरः सिद्धः पाण्डवप्रियकोत्सवः ॥ ७४

भद्रप्रियः सुभद्राया भ्राता नाग्नजितीविभुः ।
किरीटकुण्डलधरः कल्पपल्लवलालितः ॥ ७५

भैष्मीप्रणयभाषावान् मित्रविन्दाधिपोऽभयः ।
स्वमूर्तिकेलिसम्प्रीतो लक्ष्मणोदारमानसः ॥ ७६

प्राग्ज्योतिषाधिपध्वंसी तत्सैन्यान्तकरोऽमृतः ।
भूमिस्तुतो भूरिभोगो भूषणाम्बरसंयुतः ॥ ७७

बहुरामाकृताह्लादो गन्धमाल्यानुलेपनः ।
नारदादृष्टचरितो देवेशो विश्वराड् गुरुः ॥ ७८

बाणबाहुविदारश्च तापज्वरविनाशकः ।
उषोद्धर्षयिताऽव्यक्तः शिववाक्तुष्टमानसः ॥ ७९

महेशज्वरसंस्तुत्यः शीतज्वरभयान्तकः ।
नृगराजोद्धारकश्च पौण्ड्रकादिवधोद्यतः ॥ ८०

विविधारिच्छलोद्विग्नब्राह्मणेषु दयापरः ।
जरासन्धबलद्वेषी केशिदैत्यभयङ्करः ॥ ८१

चक्री चैद्यान्तकः सभ्यो राजबन्धविमोचकः ।
राजसूयहविर्भोक्ता स्निग्धाङ्गः शुभलक्षणः ॥ ८२

धानाभक्षणसम्प्रीतः कुचेलाभीष्टदायकः ।
सत्त्वादिगुणगम्भीरो द्रौपदीमानरक्षकः ॥ ८३

भीष्मध्येयो भक्तवश्यो भीमपूज्यो दयानिधिः ।
दन्तवक्त्रशिरश्छेत्ता कृष्णः कृष्णासखः स्वराट् ॥ ८४

वैजयन्तीप्रमोदी च बर्हिबर्हविभूषणः ।
पार्थकौरवसन्धानकारी दुःशासनान्तकः॥ ८५

बुद्धो विशुद्धः सर्वज्ञः क्रतुहिंसाविनिन्दकः ।
त्रिपुरस्त्रीमानभङ्गः सर्वशास्त्रविशारदः ॥ ८६

निर्विकारो निर्ममश्च निराभासो निरामयः ।
जगन्मोहकधर्मी च दिग्वस्त्रो दिक्पतीश्वरः ॥ ८७

कल्की म्लेच्छप्रहर्ता च दुष्टनिग्रहकारकः ।
धर्मप्रतिष्ठाकारी च चातुर्वर्ण्यविभागकृत् ॥ ८८

युगान्तको युगाक्रान्तो युगकृद्युगभासकः ।
कामारिः कामकारी च निष्कामः कामितार्थदः ॥ ८९

भर्गो वरेण्यं सवितुः शार्ङ्गी वैकुण्ठमन्दिरः ।
हयग्रीवः कैटभारिः ग्राहघ्नो गजरक्षकः ॥ ९०

सर्वसंशयविच्छेत्ता सर्वभक्तसमुत्सुकः ।
कपर्दी कामहारी च कला काष्ठा स्मृतिर्धृतिः ॥ ९१

अनादिरप्रमेयौजाः प्रधानः सन्निरूपकः ।
निर्लेपो निःस्पृहोऽसङ्गो निर्भयो नीतिपारगः ॥ ९२

निष्प्रेष्यो निष्क्रियः शान्तो निष्प्रपञ्चो निधिर्नयः ।
कर्म्यकर्मी विकर्मी च कर्मेप्सुः कर्मभावनः ॥ ९३

कर्माङ्गः कर्मविन्यासो महाकर्मी महाव्रती ।
कर्मभुक्कर्मफलदः कर्मेशः कर्मनिग्रहः ॥ ९४

नरो नारायणो दान्तः कपिलः कामदः शुचिः ।
तप्ता जप्ताऽक्षमालावान् गन्ता नेता लयो गतिः ॥ ९५

शिष्टो द्रष्टा रिपुद्वेष्टा रोष्टा वेष्टा महानटः ।
रोद्धा बोद्धा महायोद्धा श्रद्धावान् सत्यधीः शुभः ॥ ९६

मन्त्री मन्त्रो मन्त्रगम्यो मन्त्रकृत् परमन्त्रहृत् ।
मन्त्रभृन्मन्त्रफलदो मन्त्रेशो मन्त्रविग्रहः ॥ ९७

मन्त्राङ्गो मन्त्रविन्यासो महामन्त्रो महाक्रमः ।
स्थिरधीः स्थिरविज्ञानः स्थिरप्रज्ञः स्थिरासनः ॥ ९८

स्थिरयोगः स्थिराधारः स्थिरमार्गः स्थिरागमः ।
निःश्रेयसो निरीहोऽग्निर्निरवद्यो निरञ्जनः ॥ ९९

निर्वैरो निरहङ्कारो निर्दम्भो निरसूयकः ।
अनन्तोऽनन्तबाहूरुरनन्ताङ्घ्रिरनन्तदृक् ॥ १००

अनन्तवक्त्रोऽनन्ताङ्गोऽनन्तरूपो ह्यनन्तकृत् ।
ऊर्ध्वरेता ऊर्ध्वलिङ्गो ह्यूर्ध्वमूर्धोर्ध्वशाखकः ॥ १०१

ऊर्ध्व ऊर्ध्वाध्वरक्षी च ह्यूर्ध्वज्वालो निराकुलः ।
बीजं बीजप्रदो नित्यो निदानं निष्कृतिः कृती ॥ १०२

महानणीयान् गरिमा सुषमा चित्रमालिकः ।
नभस्स्पृङ्नभसो ज्योतिर्नभस्वान्निर्नभा नभः ।। १०३

अभुर्विभुः प्रभुः शम्भुर्महीयान् भूर्भुवाकृतिः ।
महानन्दो महाशूरो महोराशिर्महोत्सवः ।। १०४

महाक्रोधो महाज्वालो महाशान्तो महागुणः ।
सत्यव्रतः सत्यपरः सत्यसन्धः सतां गतिः ।। १०५

सत्येशः सत्यसङ्कल्पः सत्यचारित्रलक्षणः ।
अन्तश्चरो ह्यन्तरात्मा परमात्मा चिदात्मकः ।। १०६

रोचनो रोचमानश्च साक्षी शौरिर्जनार्दनः ।
मुकुन्दो नन्दनिष्पन्दः स्वर्णबिन्दुः पुरन्दरः ।। १०७

अरिन्दमः सुमन्दश्च कुन्दमन्दारहासवान् ।
स्यन्दनारूढचण्डाङ्गो ह्यानन्दी नन्दनन्दनः ।। १०८

अनसूयानन्दनोऽत्रिनेत्रानन्दः सुनन्दवान् ।
शङ्खवान्पङ्कजकरः कुङ्कुमाङ्को जयाङ्कुशः ।। १०९

अम्भोजमकरन्दाढ्यो निष्पङ्कोऽगरुपङ्किलः ।
इन्द्रश्चन्द्ररथश्चन्द्रोऽतिचन्द्रश्चन्द्रभासकः ।। ११०

उपेन्द्र इन्द्रराजश्च वागिन्द्रश्चन्द्रलोचनः ।
प्रत्यक् पराक् परं धाम परमार्थः परात्परः ।। १११

अपारवाक् पारगामी पारावारः परावरः ।
सहस्वानर्थदाता च सहनः साहसी जयी ।। ११२

तेजस्वी वायुविशिखी तपस्वी तापसोत्तमः ।
ऐश्वर्योद्भूतिकृद्भूतिरैश्वर्याङ्गकलापवान् ।। ११३

अम्भोधिशायी भगवान् सर्वज्ञस्सामपारगः ।
महायोगी महाधीरो महाभोगी महाप्रभुः ।। ११४

महावीरो महातुष्टिर्महापुष्टिर्महागुणः ।
महादेवो महाबाहुर्महाधर्मो महेश्वरः ।। ११५

समीपगो दूरगामी स्वर्गमार्गनिरर्गलः ।
नगो नगधरो नागो नागेशो नागपालकः ।। ११६

हिरण्यमयः स्वर्णरेता हिरण्यार्चिर्हिरण्यदः ।
गुणगण्यः शरण्यश्च पुण्यकीर्तिः पुराणगः ।। ११७

जन्यभृज्जन्यसन्नद्धो दिव्यपञ्चायुधो वशी ।
दौर्जन्यभङ्गः पर्जन्यः सौजन्यनिलयोऽलयः ।। ११८

जलन्धरान्तको भस्मदैत्यनाशी महामनाः ।
श्रेष्ठः श्रविष्ठो द्राघिष्ठो गरिष्ठो गरुडध्वजः ।। ११९

ज्येष्ठो द्रढिष्ठो वर्षिष्ठो द्राघीयान् प्रणवः फणी ।
सम्प्रदायकरः स्वामी सुरेशो माधवो मधुः ।। १२०

निर्निमेषो विधिर्वेधा बलवान् जीवनं बली ।
स्मर्ता श्रोता विकर्ता च ध्याता नेता समोऽसमः ।। १२१

होता पोता महावक्ता रन्ता मन्ता खलान्तकः ।
दाता ग्राहयिता माता नियन्ताऽनन्तवैभवः ।। १२२

गोप्ता गोपयिता हन्ता धर्मजागरिता धवः ।
कर्ता क्षेत्रकरः क्षेत्रप्रदः क्षेत्रज्ञ आत्मवित् ।। १२३

क्षेत्री क्षेत्रहरः क्षेत्रप्रियः क्षेमकरो मरुत् ।
भक्तिप्रदो मुक्तिदायी शक्तिदो युक्तिदायकः ।।१२४

शक्तियुङ्मौक्तिकस्रग्वी सूक्तिराम्नायसूक्तिगः ।
धनञ्जयो धनाध्यक्षो धनिको धनदाधिपः ॥ १२५

महाधनो महामानी दुर्योधनविमानितः ।
रत्नाकरो रत्नरोची रत्नगर्भाश्रयः शुचिः ॥ १२६

रत्नसानुनिधिर्मौलिरत्नभा रत्नकङ्कणः ।
अन्तर्लक्ष्योऽन्तरभ्यासी चान्तर्ध्येयो जितासनः ॥ १२७

अन्तरङ्गो दयावांश्च ह्यन्तर्मायो महार्णवः ।
सरसः सिद्धरसिकः सिद्धिः साध्यः सदागतिः ॥ १२८

आयुःप्रदो महायुष्मानर्चिष्मानोषधीपतिः ।
अष्टश्रीरष्टभागोऽष्टककुब्व्याप्तयशा व्रती ॥ १२९

अष्टापदः सुवर्णाभो ह्यष्टमूर्तिस्त्रिमूर्तिमान् ।
अस्वप्नः स्वप्नगः स्वप्नः सुस्वप्नफलदायकः ॥ १३०

दुःस्वप्नध्वंसको ध्वस्तदुर्निमित्तः शिवङ्करः ।
सुवर्णवर्णः सम्भाव्यो वर्णितो वर्णसम्मुखः ॥ १३१

सुवर्णमुखरीतीरशिवध्यातपदाम्बुजः ।
दाक्षायणीवचस्तुष्टो दूर्वासोदृष्टिगोचरः ॥ १३२

अम्बरीषव्रतप्रीतो महाकृत्तिविभञ्जनः ।
महाभिचारकध्वंसी कालसर्पभयान्तरः ॥ १३३

सुदर्शनः कालमेघश्यामश्श्रीमन्त्रभावितः ।
हेमाम्बुजसरःस्नायी श्रीमनोभाविताकृतिः ॥ १३४

श्रीप्रदत्ताम्बुजस्रग्वी श्रीकेलिः श्रीनिधिर्भवः ।
श्रीप्रदो वामनो लक्ष्मीनायकश्च चतुर्भुजः ॥ १३५

संतृप्तस्तर्पितस्तीर्थस्नातृसौख्यप्रदर्शकः ।
अगस्त्यस्तुतिसंहृष्टो दर्शिताव्यक्तभावनः ।। १३६

कपिलार्चिः कपिलवान् सुस्नाताघविपाटनः ।
वृषाकपिः कपिस्वामिमनोऽन्तःस्थितविग्रहः ।। १३७

वह्निप्रियोऽर्थसंभाव्यो जनलोकविधायकः ।
वह्निप्रभो वह्नितेजाः शुभाभीष्टप्रदो यमी ।। १३८

वारुणक्षेत्रनिलयो वरुणो वारणार्चितः ।
वायुस्थानकृतावासो वायुगो वायुसंभृतः ।। १३९

यमान्तकोऽभिजननो यमलोकनिवारणः ।
यमिनामग्रगण्यश्च संयमी यमभावितः ।। १४०

इन्द्रोद्यानसमीपस्थ इन्द्रदृग्विषयः प्रभुः ।
यक्षराट्सरसीवासो ह्यक्षय्यनिधिकोशकृत् ।। १४१

स्वामितीर्थकृतावासः स्वामिध्येयो ह्यधोक्षजः ।
वराहाद्यष्टतीर्थाभिसेवि(षेचि)ताङ्घ्रिसरोरुहः ।। १४२

पाण्डुतीर्थभिषिक्ताङ्गो युधिष्ठिरवरप्रदः ।
भीमान्तःकरणारूढः श्वेतवाहनसख्यवान् ।। १४३

नकुलाभयदो माद्रीसहदेवाभिवन्दितः ।
कृष्णाशपथसन्धाता कुन्तीस्तुतिरतो दमी ।। १४४

नारदादिमुनिस्तुत्यो नित्यकर्मपरायणः ।
दर्शिताव्यक्तरूपश्च वीणानादप्रमोदितः ।। १४५

षट्कोटितीर्थचर्यावान् देवतीर्थकृताश्रमः ।
बिल्वामलजलस्नायी सरस्वत्यम्बुसेवितः ।। १४६

तुम्बुरूदकसंस्पर्शजनचित्ततमोऽपहः ।
मत्स्यवामनकूर्मादितीर्थराजः पुराणभृत् ॥ १४७

चक्रध्येयपदाम्भोजः शङ्खपूजितपादुकः ।
रामतीर्थविहारी च बलभद्रप्रतिष्ठितः ॥ १४८

जामदग्न्यसरस्तीर्थजलसेचनतर्पितः ।
पापापहारिकीलालसुस्नाताघविनाशनः ॥ १४९

नभोगङ्गाभिषिक्तश्च नागतीर्थाभिषेकवान् ।
कुमारधारातीर्थस्थो वटुवेषः सुमेखलः ॥ १५०

वृद्धस्य सुकुमारत्वप्रदः सौन्दर्यवान् सुखी ।
प्रियंवदो महाकुक्षिरिक्ष्वाकुकुलनन्दनः ॥ १५१

नीलगोक्षीरधाराभूर्वराहाचलनायकः ।
भरद्वाजप्रतिष्ठावान् बृहस्पतिविभावितः ॥ १५२

अञ्जनाकृतपूजावान् आञ्जनेयकरार्चितः ।
अञ्जनाद्रिनिवासश्च मुञ्जकेशः पुरन्दरः ॥ १५३

किन्नरद्वयसम्बन्धिबन्धमोक्षप्रदायकः ।
वैखानसमखारम्भो वृषज्ञेयो वृषाचलः ॥ १५४

वृषकायप्रभेत्ता च क्रीडनाचारसंभ्रमः ।
सौवर्चलेयविन्यस्तराज्यो नारायणप्रियः ॥ १५५

दुर्मेधोभञ्जकः प्राज्ञो ब्रह्मोत्सवमहोत्सुकः ।
भद्रासुरशिरश्छेत्ता भद्रक्षेत्री सुभद्रवान् ॥ १५६

मृगयाऽक्षीणसन्नाहः शङ्खराजन्यतुष्टिदः ।
स्थाणुस्थो वैनतेयाङ्गभावितो ह्यशरीरवान् ॥ १५७

भोगीन्द्रभोगसंस्थानो ब्रह्मादिगणसेवितः ।
सहस्रार्कच्छटाभास्वद्विमानान्तःस्थितो गुणी ॥ १५८

विष्वक्सेनकृतस्तोत्रः सनन्दनवरीवृतः ।
जाह्नव्यादिनदीसेव्यः सुरेशाद्यभिवन्दितः ॥ १५९

सुराङ्गनानृत्यपरो गन्धर्वोद्गायनप्रियः ।
राकेन्दुसङ्काशनखः कोमलाङ्घ्रिसरोरुहः ॥ १६०

कच्छपप्रपदः कुन्दगुल्फकः स्वच्छकूर्परः ।
मेदुरस्वर्णवस्त्राढ्यकटिदेशस्थमेखलः ॥ १६१

प्रोल्लसच्छुरिकाभास्वत्कटिदेशः शुभङ्करः ।
अनन्तपद्मजस्थाननाभिर्मौक्तिकमालिकः ॥ १६२

मन्दारचाम्पेयमाली रत्नाभरणसंभृतः ।
लम्बयज्ञोपवीती च चन्द्रश्रीखण्डलेपवान् ॥ १६३

वरदोऽभयदश्चक्री शङ्खी कौस्तुभदीप्तिमान् ।
श्रीवत्साङ्कितवक्षस्को लक्ष्मीसंश्रितहृत्तटः ॥ १६४

नीलोत्पलनिभाकारः शोणाम्भोजसमाननः ।
कोटिमन्मथलावण्यश्चन्द्रिकास्मितपूरितः ॥ १६५

सुधास्वच्छोर्ध्वपुण्ड्रश्च कस्तूरितिलकाञ्चितः ।
पुण्डरीकेक्षणः स्वच्छो मौलिशोभाविराजितः ॥ १६६

पद्मस्थः पद्मनाभश्च सोममण्डलगो बुधः ।
वह्निमण्डलगः सूर्यः सूर्यमण्डलसंस्थितः ॥ १६७

श्रीपतिर्भूमिजानिश्च विमलाद्यभिसंवृतः ।
जगत्कुटुम्बजनिता रक्षकः कामितप्रदः ॥ १६८

अवस्थात्रययन्ता च विश्वतेजस्स्वरूपवान्।
ज्ञप्तिर्ज्ञेयो ज्ञानगम्यो ज्ञानातीतः सुरातिगः ॥ १६९

ब्रह्माण्डान्तर्बहिर्व्याप्तो वेङ्कटाद्रिगदाधरः ।
वेङ्कटाद्रिगदाधर ओं नम इति ।
एवं श्री वेङ्कटेशस्य कीर्तितं परमाद्भुतम् ॥ १७०

नाम्नां सहस्रं संश्राव्यं पवित्रं पुण्यवर्धनम्।
श्रवणात्सर्वदोषघ्नं रोगघ्नं मृत्युनाशनम् ॥ १७१

दारिद्र्यभेदनं धर्म्यं सर्वैश्वर्यफलप्रदम्।
कालाहिविषविच्छेदि ज्वरापस्मारभञ्जनम् ॥ १७२

शत्रुक्षयकरं राजग्रहपीडानिवारणम्।
ब्रह्मराक्षसकूष्माण्डभेतालभयभञ्जनम् ॥ १७३

विद्याभिलाषी विद्यावान् धनार्थी धनवान् भवेत्।
अनन्तकल्पजीवी स्यादायुष्कामो महायशाः ॥ १७४

पुत्रार्थी सुगुणान्पुत्रान् लभेतायुष्मतस्ततः ।
सङ्ग्रामे शत्रुविजयी सभायां प्रतिवादिजित् ॥ १७५

दिव्यैर्नामभिरेभिस्तु तुलसीपूजनात्सकृत्।
वैकुण्ठवासी भगवत्सदृशो विष्णुसन्निधौ ॥ १७६

कह्लारपूजनान्मासात् द्वितीय इव यक्षराट्।
नीलोत्पलार्चनात्सर्वराजपूज्यः सदा भवेत् ॥ १७७

हृत्संस्थितैर्नामभिस्तु भूयाद्दृग्विषयो हरिः ।
वाञ्छितार्थं तदा दत्वा वैकुण्ठं च प्रयच्छति ॥ १७८

त्रिसन्ध्यं यो जपेन्नित्यं संपूज्य विधिना विभुम्।
त्रिवारं पञ्चवारं वा प्रत्यहं क्रमशो यमी ॥ १७९

मासादलक्ष्मीनाशः स्यात् द्विमासात् स्यान्नरेन्द्रता।
त्रिमासान्महदैश्वर्यं ततस्संभाषणं भवेत्॥ १८०

मासं पठन्न्यूनकर्मपूर्तिं च समवाप्नुयात्।
मार्गभ्रष्टश्च सन्मार्गं गतस्वः स्वं स्वकीयकम्॥ १८१

चाञ्चल्यचित्तोऽचाञ्चल्यं मनस्स्वास्थ्यं गच्छति।
आयुरारोग्यमैश्वर्यं ज्ञानं मोक्षं च विन्दति॥ १८२

सर्वान्कामानवाप्नोति शाश्वतं च पदं तथा।
सत्यं सत्यं पुनस्सत्यं सत्यं सत्यं न संशयः॥१८३

—श्रीब्रह्माण्डपुराणे श्रीवेङ्कटाचलमाहात्म्यतः

---

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम्।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम्॥
श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम्।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे॥

## श्रीवेङ्कटेशसहस्रनामावलिः

ओं श्रीवेङ्कटेशाय नमः। विरूपाक्षाय। विश्वेशाय। विश्वभावनाय। विश्वसृजे। विश्वसंहर्त्रे। विश्वप्राणाय। विराड्वपुषे। शेषाद्रिनिलयाय। अशेषभक्तदुःखप्रणाशनाय। शेषस्तुत्याय। शेषशायिने। विशेषज्ञाय। विभवे। स्वभुवे। विष्णवे। जिष्णवे। वर्धिष्णवे। उत्सहिष्णवे। सहिष्णुकाय नमः॥ २०

ओं भ्राजिष्णवे नमः। ग्रसिष्णवे। वर्तिष्णवे। भरिष्णुकाय। कालयन्त्रे। कालगोप्त्रे। कालाय। कालान्तकाय। अखिलाय।

कालगम्याय । कालकण्ठवन्द्याय । कालकलेश्वराय । शम्भवे । स्वयम्भुवे । अम्भोजनाभये । स्तम्भितवारिधये । अम्भोधिनन्दिनी-जानये । शोणाम्भोजपदप्रभाय । कम्बुग्रीवाय । शम्बरारिरूपाय नमः ।। ४०

ओं शम्बरजेक्षणाय नमः । बिम्बाधराय । बिम्बरूपिणे । प्रतिबिम्बक्रियातिगाय । गुणवते । गुणगम्याय । गुणातीताय । गुणप्रियाय । दुर्गुणध्वंसकृते । सर्वसुगुणाय । गुणभासकाय । परेशाय । परमात्मने । परस्मै ज्योतिषे । परायै गतये । परस्मै पदाय । वियद्वाससे । पारम्पर्यशुभप्रदाय । ब्रह्माण्डगर्भाय । ब्रह्मण्याय नमः ।। ६०

ओं ब्रह्मसृजे नमः । ब्रह्मबोधिताय । ब्रह्मस्तुत्याय । ब्रह्मवादिने । ब्रह्मचर्यपरायणाय । सत्यव्रतार्थसंतुष्टाय । सत्यरूपिणे । झषाङ्गवते । सोमकप्राणहारिणे । आनीताम्नायाय । अब्धिसञ्चराय । देवासुरवर-स्तुत्याय । पतन्मन्दरधारकाय । धन्वन्तरये । कच्छपाङ्गाय । पयोनिधि-विमन्थकाय । अमरामृतसन्धात्रे । धृतसम्मोहिनीवपुषे । हरमोहकमा-याविने । रक्षःसन्दोहभञ्जनाय नमः ।। ८०

ओं हिरण्याक्षविदारिणे नमः । यज्ञाय । यज्ञविभावनाय । यज्ञीयोर्वीसमुद्धर्त्रे । लीलाक्रोडाय । प्रतापवते । दण्डकासुरविध्वंसिने । वक्रदंष्ट्राय । क्षमाधराय । गन्धर्वशापहरणाय । पुण्यगन्धाय । विचक्षणाय । करालवक्त्राय । सोमार्कनेत्राय । षड्गुणवैभवाय । श्वेतघोणिने । घूर्णितभ्रुवे । घुर्घुरध्वनिविभ्रमाय । द्राघीयसे । नीलकेशिने नमः ।। १००

ओं जाग्रदम्बुजलोचनाय नमः । घृणावते । घृणिसम्मोहाय । महाकालाग्निदीधितये । ज्वालाकरालवदनाय । महोल्काकुलवीक्षणाय । सटानिर्भिन्नमेघौघाय । दंष्ट्रारुग्व्याप्तदिक्तटाय । उच्छ्वासाकृष्टभूतेशाय । निःश्वासत्यक्तविश्वसृजे । अन्तर्भ्रमज्जगद्गर्भाय । अनन्ताय ।

ब्रह्मकपालहृते। उग्राय। वीराय। महाविष्णवे। ज्वलनाय। सर्वतोमुखाय। नृसिंहाय। भीषणाय नमः ।। १२०

ओं भद्राय नमः। मृत्युमृत्यवे। सनातनाय। सभास्तम्भोद्भवाय। भीमाय। शिरोमालिने। महेश्वराय। द्वादशादित्यचूडालाय। कल्पधूमसटाच्छवये। हिरण्यकोरःस्थलभिन्नखाय। सिंहमुखाय। अनघाय। प्रह्लादवरदाय। धीमते। भक्तसंघप्रतिष्ठिताय। ब्रह्मरुद्रादिसंसेव्याय। सिद्धसाध्यप्रपूजिताय। लक्ष्मीनृसिंहाय। देवेशाय ज्वालाजिह्वान्त्रमालिकाय नमः ।। १४०

ओं खड्गिने नमः। खेटिने। महेष्वासिने। कपालिने। मुसलिने। हलिने। पाशिने। शूलिने। महाबाहवे। ज्वरघ्नाय। रोगलुण्ठकाय। मौञ्जीयुजे। छात्रकाय। दण्डिने। कृष्णाजिनधराय। वटवे। अधीतवेदाय। वेदान्तोद्धारकाय। ब्रह्मनैष्ठिकाय। अहीनशयनप्रीताय नमः ।। १६०

ओं आदितेयाय नमः। अनघाय। हरये। संवित्प्रियाय। सामवेद्याय। बलिवेश्मप्रतिष्ठिताय। बलिक्षालितपादाब्जाय। विन्ध्यावलिविमानिताय। त्रिपादभूमिस्वीकर्त्रे। विश्वरूपप्रदर्शकाय। धृतत्रिविक्रमाय। स्वाङ्घ्रिनखभिन्नाण्डखर्पराय। पज्जातवाहिनीधारा-पवित्रितजगत्त्रयाय। विधिसम्मानिताय। पुण्याय। दैत्ययोद्ध्रे। जयोर्जिताय। सुरराज्यप्रदाय। शुक्रमदहृते। सुगतीश्वराय नमः। १८०

ओं जामदग्न्याय नमः। कुठारिणे। कार्तवीर्यविदारणाय। रेणुकायाःशिरोहारिणे। दुष्टक्षत्रियमर्दनाय। वर्चस्विने। दानशीलाय। धनुष्मते।ब्रह्मवित्तमाय। अत्युदग्राय। समग्राय।न्यग्रोधाय। दुष्टनिग्रहाय। रविवंशसमुद्भूताय। राघवाय। भरताग्रजाय। कौसल्यातनयाय। रामाय। विश्वामित्रप्रियङ्कराय। ताटकारये नमः ।। २००

ओं सुबाहुघ्नाय नमः । बलातिबलमन्त्रवते । अहल्याशापविच्छेदिने । प्रविष्टजनकालयाय । स्वयंवरसभासंस्थाय । ईशचापप्रभंजनाय । जानकीपरिणेत्रे । जनकाधीशसंस्तुताय । जमदग्नितनूजातयोद्ध्रे । अयोध्याधिपाग्रण्यै । पितृवाक्यप्रतीपालाय । त्यक्तराज्याय । सलक्ष्मणाय । ससीताय । चित्रकूटस्थाय । भरताहितराज्यकाय । काकदर्पप्रहर्त्रे । दण्डकारण्यवासकाय । पञ्चवट्यां विहारिणे । स्वधर्मपरिपोषकाय नमः । २२०

ओं विराधघ्ने नमः ।अगस्त्यमुख्यमुनिसम्मानिताय । पुंसे । इन्द्रचापधराय । खड्गधराय । अक्षयसायकाय । खरान्तकाय । दूषणारये । त्रिशिरस्करिपवे । वृषाय । शूर्पणखानासाच्छेत्त्रे । वल्कलधारकाय । जटावते । पर्णशालास्थाय । मारीचबलमर्दकाय । पक्षिराट्कृतसंवादाय । रवितेजसे । महाबलाय । शबर्यानीतफलभुजे । हनूमत्परितोषिताय नमः ।। २४०

ओं सुग्रीवाभयदाय नमः । दैत्यकायक्षेपणभासुराय । सप्तसाल-समुच्छेत्रे । वालिहृते । कपिसंवृताय । वायुसूनुकृतासेवाय । त्यक्तपम्पाय । कुशासनाय । उदन्वत्तीरगाय । शूराय । विभीषणवरप्रदाय । सेतुकृते । दैत्यघ्ने । प्राप्तलङ्काय । स्वयं अलङ्कारवते । अतिकायशिरश्छेत्रे । कुम्भकर्णविभेदनाय । दशकण्ठशिरोध्वंसिने । जाम्बवत्प्रमुखावृताय । जानकीशाय नमः । २६०

ओं सुराध्यक्षाय नमः । साकेतेशाय । पुरातनाय । पुण्यश्लोकाय । वेदवेद्याय । स्वामितीर्थनिवासकाय । लक्ष्मीसरःकेलिलोलाय । लक्ष्मीशाय । लोकरक्षकाय । देवकीगर्भसम्भूताय । यशोदेक्षण-लालिताय । वसुदेवकृतस्तोत्राय । नन्दगोपमनोहराय । चतुर्भुजाय । कोमलाङ्गाय । गदावते । नीलकुन्तलाय ।पूतनाप्राणसंहर्त्रे । तृणावर्तविनाशनाय । गर्गारोपितनामाङ्काय नमः । २८०

ओं वासुदेवाय नमः । अधोक्षजाय । गोपिकास्तन्यपायिने । बलभद्रानुजाय । अच्युताय । वैयाघ्रनखभूषाय । वत्सजिते । वत्सवर्धनाय । क्षीरसाराशनरताय । दधिभाण्डप्रमर्दनाय । नवनीतापहर्त्रे । नीलनीरदभासुराय । आभीरदृष्टदौर्जन्याय । नीलपद्मनिभाननाय । मातृदर्शितविश्वास्याय । उलूखलनिबन्धनाय । नलकूबरशापान्ताय । गोधूलिच्छुरिताङ्गकाय । गोसङ्घरक्षकाय । श्रीशाय नमः ।। ३००

ओं बृन्दारण्यनिवासकाय नमः । वत्सान्तकाय । बकद्वेषिणे । दैत्याम्बुदमहानिलाय । महाजगरचण्डाग्नये । शकटप्राणकंटकाय । इन्द्रसेव्याय । पुण्यगात्राय । खरजिते । चण्डदीधितये । तालपक्वफलाशिने । कालीयफणिदर्पघ्ने । नागपत्नीस्तुतिप्रीताय । प्रलम्बासुरखण्डनाय । दावाग्निबलसंहारिणे । फलहारिणे । गदाग्रजाय । गोपाङ्गनाचेलचोराय । पाथोलीलाविशारदाय । वंशगानप्रवीणाय नमः ।। ३२०

ओं गोपीहस्ताम्बुजार्चिताय नमः । मुनिपत्न्याहृताहाराय । मुनिश्रेष्ठाय । मुनिप्रियाय । गोवर्धनाद्रिसन्धर्त्रे । संक्रन्दनतमोऽपहाय । सदुद्यानविलासिने । रासक्रीडापरायणाय । वरुणाभ्यार्चिताय । गोपीप्रार्थिताय । पुरुषोत्तमाय । अक्रूरस्तुतिसंप्रीताय । कुब्जायौवनदायकाय । मुष्टिकोरःप्रहारिणे । चाणूरोदरदारणाय । मल्लयुद्धाग्रगण्याय । पितृबन्धनमोचकाय । मत्तमातङ्गपञ्चास्याय । कंसग्रीवानिकृन्तनाय । उग्रसेनप्रतिष्ठात्रे नमः ।। ३४०

ओं रत्नसिंहासनस्थिताय नमः । कालनेमिखलद्वेषिणे । मुचुकुन्दवरप्रदाय । साल्वसेवितदुर्धर्षराजस्मयनिवारणाय । रुक्मिगर्वापहारिणे । रुक्मिणीनयनोत्सवाय । प्रद्युम्नजनकाय । कामिने । प्रद्युम्नाय । द्वारकाधिपाय । मण्याहर्त्रे । महामायाय । जाम्बवत्कृतसङ्गराय ।

जाम्बूनदाम्बरधराय। गम्याय। जाम्बवतीविभवे । कालिन्दीप्रथितारामकेलये। गुंजावतंसकाय। मन्दारसुमनोभास्वते। शचीशाभीष्टदायकाय नमः ॥ ३६०

ओं सत्राजिन्मानसोल्लासिने नमः । सत्याजानये । शुभावहाय । शतघन्वहराय। सिद्धाय। पाण्डवप्रियकोत्सवाय। भद्रप्रियाय। सुभद्राया भ्रात्रे । नाग्नजितीविभवे । किरीटकुण्डलधराय । कल्पपल्लवलालिताय । भैष्मीप्रणयभाषावते । मित्रविन्दाधिपाय । अभयाय । स्वमूर्तिकेलिसम्प्रीताय । लक्ष्मणोदारमानासाय । प्राग्ज्योतिषाधिपध्वंसिने । तत्सैन्यान्तकराय। अमृताय। भूमिस्तुताय नमः । ३८०

ओं भूरिभोगाय नमः । भूषणाम्बरसंयुताय। बहुरामाकृताह्लादाय । गन्धमाल्यानुलेपनाय। नारदादृष्टचरिताय। देवेशाय। विश्वराजे। गुरवे। बाणबाहुविदाराय । तापज्वरविनाशकाय । उषोद्धर्षयित्रे । अव्यक्ताय । शिववाक्तुष्टमानसाय । महेशज्वरसंस्तुत्याय । शीतज्वरभयान्तकाय । नृगराजोद्धारकाय। पौण्ड्रकादिवधोद्यताय। विविधारिच्छलोद्विग्नब्राह्मणेषु दयापराय। जरासन्धबलद्वेषिणे। केशिदैत्यभयङ्कराय नमः । ४००

ओं चक्रिणे नमः । चैद्यान्तकाय। सभ्याय। राजबन्धविमोचकाय । राजसूयहविर्भोक्त्रे। स्निग्धाङ्गाय। शुभलक्षणाय। धानाभक्षणसम्प्रीताय । कुचेलाभीष्टदायकाय । सत्त्वादिगुणगम्भीराय । द्रौपदीमानरक्षकाय । भीष्मध्येयाय । भक्तवश्याय । भीमपूज्याय । दयानिधये । दन्तवक्त्रशिरच्छेत्रे। कृष्णाय। कृष्णासखाय। स्वराजे। वैजयन्तीप्रमोदिने नमः। ४२०

ओं बर्हिबर्हविभूषणाय नमः । पार्थकौरवसन्धानकारिणे । दुःशासनान्तकाय । बुद्धाय । विशुद्धाय । सर्वज्ञाय । क्रतुहिंसाविनिन्दकाय । त्रिपुरस्त्रीमानभङ्गाय। सर्वशास्त्रविशारदाय। निर्विकाराय।

निर्ममाय। निराभासाय। निरामयाय। जगन्मोहकधर्मिणे । दिग्वस्त्राय । दिक्पतीश्वराय । कल्किने । म्लेच्छप्रहर्त्रे । दुष्टनिग्रहकारकाय । धर्मप्रतिष्ठाकारिणे नमः ।। ४४०

ओं चातुर्वर्ण्यविभागकृते नमः । युगान्तकाय । युगाक्रान्ताय । युगकृते । युगभासकाय । कामारये । कामकारिणे । निष्कामाय । कामितार्थदाय । सवितुर्वरेण्याय भर्गसे । शार्ङ्गिणे । वैकुण्ठमन्दिराय । हयग्रीवाय । कैटभारये । ग्राहघ्नाय । गजरक्षकाय । सर्वसंशयविच्छेत्रे । सर्वभक्तसमुत्सुकाय । कपर्दिने । कामहारिणे नमः । ४६०

ओं कलायै नमः । काष्ठायै । स्मृतये । धृतये । अनादये । अप्रमेयौजसे । प्रधानाय । सन्निरूपकाय । निर्लेपाय । निःस्पृहाय । असङ्गाय । निर्भयाय । नीतिपारगाय । निष्प्रेष्याय । निष्क्रियाय । शान्ताय । निष्प्रपञ्चाय । निधये । नयाय । कर्मिणे नमः । ४८०

ओं अकर्मिणे नमः । विकर्मिणे । कर्मेप्सवे । कर्मभावनाय । कर्माङ्गाय । कर्मविन्यासाय । महाकर्मिणे । महाव्रतिने । कर्मभुजे । कर्मफलदाय । कर्मेशाय । कर्मनिग्रहाय । नराय । नारायणाय । दान्ताय । कपिलाय । कामदाय । शुचये । तप्त्रे । जप्त्रे नमः । ५००

ओं अक्षमालावते नमः । गन्त्रे । नेत्रे । लयाय । गतये । शिष्टाय । द्रष्ट्रे । रिपुद्वेष्ट्रे । रोष्ट्रे । वेष्ट्रे । महानटाय । रोद्धे । बोद्धे । महायोद्धे । श्रद्धावते । सत्यधिये । शुभाय । मन्त्रिणे । मन्त्राय । मन्त्रगम्याय नमः । ५२०

ओं मन्त्रकृते नमः । परमन्त्रहृते । मन्त्रभृते । मन्त्रफलदाय । मन्त्रेशाय । मन्त्रविग्रहाय । मन्त्राङ्गाय । मन्त्रविन्यासाय । महामन्त्राय । महाक्रमाय । स्थिरधिये । स्थिरविज्ञानाय । स्थिरप्रज्ञाय । स्थिरासनाय । स्थिरयोगाय । स्थिराधाराय । स्थिरमार्गाय । स्थिरागमाय । निःश्रेयसाय । निरीहाय नमः । ५४०

ओं अग्नये नमः । निरवद्याय । निरञ्जनाय । निर्वैराय । निरहङ्काराय । निर्दम्भाय । निरसूयकाय । अनन्ताय । अनन्तबाहूरवे । अनन्ताङ्घ्रये । अनन्तदृशे । अनन्तवक्त्राय । अनन्ताङ्गाय । अनन्तरूपाय । अनन्तकृते । ऊर्ध्वरेतसे । ऊर्ध्वलिङ्गाय । ऊर्ध्वमूर्ध्ने । ऊर्ध्वशाखकाय । ऊर्ध्वाय नमः । ५६०

ओं ऊर्ध्वाध्वरक्षिणे नमः । ऊर्ध्वज्वालाय । निराकुलाय । बीजाय । बीजप्रदाय । नित्याय । निदानाय । निष्कृतये । कृतिने । महते । अणीयसे । गरिम्णे । सुषमायै । चित्रमालिकाय । नभःस्पृशे । नभसो ज्योतिषे । नभस्वते । निर्नभसे । नभसे । अभवे नमः । ५८०

ओं विभवे नमः । प्रभवे । शम्भवे । महीयसे । भूर्भुवाकृतये । महानन्दाय । महाशूराय । महोराशये । महोत्सवाय । महाक्रोधाय । महाज्वालाय । महाशान्ताय । महागुणाय । सत्यव्रताय । सत्यपराय । सत्यसन्धाय । सतां गतये । सत्येशाय । सत्यसङ्कल्पाय । सत्यचारित्रलक्षणाय नमः । ६००

ओं अन्तश्चराय । अन्तरात्मने । परमात्मने । चिदात्मकाय । रोचनाय । रोचमानाय । साक्षिणे । शौरये । जनार्दनाय । मुकुन्दाय । नन्दनिष्पन्दाय । स्वर्णबिन्दवे । पुरन्दराय । अरिन्दमाय । सुमन्दाय । कुन्दमन्दारहासवते । स्यन्दनारूढचण्डाङ्गाय । आनन्दिने । नन्दनन्दनाय । अनसूयानन्दनाय नमः । ६२०

अत्रिनेत्रानन्दाय नमः । सुनन्दवते । शङ्खवते । पङ्कजकराय । कुङ्कुमाङ्काय । जयाङ्कुशाय । अम्भोजमकरन्दाढ्याय । निष्पङ्काय । अगरुपङ्किलाय । इन्द्राय । चन्द्ररथाय । चन्द्राय । अतिचन्द्राय । चन्द्रभासकाय । उपेन्द्राय । इन्द्रराजाय । वागिन्द्राय । चन्द्रलोचनाय । प्रतीचे । पराचे नमः । ६४०

ओं परस्मै धाम्ने नमः । परमार्थाय । परात्पराय । अपारवाचे । पारगामिने । पारावाराय नमः । परावराय । सहस्वते । अर्थदात्रे । सहनाय । साहसिने । जयिने । तेजस्विने । वायुविशिखिने । तपस्विने । तापसोत्तमाय । ऐश्वर्योद्भूतिकृते । भूतये । ऐश्वर्याङ्गकलापवते । अम्भोधिशायिने नमः । ६६०

ओं भगवते नमः । सर्वज्ञाय । सामपारगाय । महायोगिने । महाधीराय । महाभोगिने । महाप्रभवे । महावीराय । महातुष्टये । महापुष्टये । महागुणाय । महादेवाय । महाबाहवे । महाधर्माय । महेश्वराय । समीपगाय । दूरगामिने । स्वर्गमार्गनिरर्गलाय । नगाय । नगधराय नमः ॥ ६८०

ओं नागाय नमः । नागेशाय । नागपालकाय । हिरण्मयाय । स्वर्णरेतसे । हिरण्यार्चिषे । हिरण्यदाय । गुणगण्याय । शरण्याय । पुण्यकीर्तये । पुराणगाय । जन्यभृते । जन्यसन्नद्धाय । दिव्यपञ्चायुधाय । वशिने । दौर्जन्यभङ्गाय । पर्जन्याय । सौजन्यनिलयाय । अलयाय । जलन्धरान्तकाय नमः । ७००

ओं भस्मदैत्यनाशिने नमः । महामनसे । श्रेष्ठाय । श्रविष्ठाय । द्राघिष्ठाय । गरिष्ठाय । गरुडध्वजाय । ज्येष्ठाय । द्रढिष्ठाय । वर्षिष्ठाय । द्राघीयसे । प्रणवाय । फणिने । सम्प्रदायकराय । स्वामिने । सुरेशाय । माधवाय । मधवे । निर्निमेषाय । विधये नमः । ७२०

ओं वेधसे नमः । बलवते । जीवनाय । बलिने । स्मर्त्रे । श्रोत्रे । विकर्त्रे । ध्यात्रे । नेत्रे । समाय । असमाय । होत्रे । पोत्रे । महावक्त्रे । रन्त्रे । मन्त्रे । खलान्तकाय । दात्रे । ग्राहयित्रे । मात्रे नमः । ७४०

ओं नियन्त्रे नमः । अनन्तवैभवाय । गोप्त्रे । गोपयित्रे । हन्त्रे । धर्मजागरित्रे । धवाय । कर्त्रे । क्षेत्रकराय । क्षेत्रप्रदाय । क्षेत्रज्ञाय ।

आत्मविदे । क्षेत्रिणे । क्षेत्रहराय । क्षेत्रप्रियाय । क्षेमकराय । मरुते । भक्तिप्रदाय । मुक्तिदायिने । शक्तिदाय नमः ।। ७६०

ओं युक्तिदायकाय नमः । शक्तियुजे । मौक्तिकस्रग्विणे । सूक्तये । आम्नायसूक्तिगाय । धनञ्जयाय । धनाध्यक्षाय । धनिकाय । धनदाधिपाय । महाधनाय । महामानिने । दुर्योधनविमानिताय । रत्नाकराय । रत्नरोचिषे । रत्नगर्भाश्रयाय । शुचये । रत्नसानुनिधये । मौलिरत्नभासे । रत्नकङ्कणाय । अन्तर्लक्ष्याय नमः । ७८०

ओं अन्तरभ्यासिने नमः । अन्तर्ध्येयाय । जितासनाय । अन्तरङ्गाय । दयावते । अन्तर्मायाय । महार्णवाय । सरसाय । सिद्धरसिकाय । सिद्धये । साध्याय । सदागतये । आयुःप्रदाय । महायुष्मते । अर्चिष्मते । ओषधीपतये । अष्टश्रिये । अष्टभागाय । अष्टककुब्व्याप्तयशसे । व्रतिने नमः । ८००

ओं अष्टापदाय नमः । सुवर्णाभाय । अष्टमूर्तये । त्रिमूर्तिमते । अस्वप्नाय । स्वप्नगाय । स्वप्नाय । सुस्वप्नफलदायकाय । दुःस्वप्नध्वंसकाय । ध्वस्तदुर्निमित्ताय । शिवङ्कराय । सुवर्णवर्णाय । सम्भाव्याय । वर्णिताय । वर्णसम्मुखाय । सुवर्णमुखरीतीरशिवध्यातपदाम्बुजाय । दाक्षायणीवचस्तुष्टाय । दूर्वासोदृष्टिगोचराय । अम्बरीषव्रतप्रीताय । महाकृत्तिविभञ्जनाय नमः । ८२०

ओं महाभिचारकध्वंसिने । कालसर्पभयान्तकाय । सुदर्शनाय । कालमेघश्यामाय । श्रीमन्त्रभाविताय । हेमाम्बुजसरस्स्नायिने । श्रीमनोभाविताकृतये । श्रीप्रदत्ताम्बुजस्रग्विणे । श्रीकेलये । श्रीनिधये। भवाय । श्रीप्रदाय । वामनाय । लक्ष्मीनायकाय । चतुर्भुजाय । सन्तृप्ताय । तर्पिताय । तीर्थस्नातृसौख्यप्रदर्शकाय । अगस्त्यस्तुतिसंहृष्टाय । दर्शिताव्यक्तभावनाय नमः ।। ८४०

ओं कपिलार्चिषे नमः । कपिलव्रते । सुस्नाताघविपाटनाय । वृषाकपये । कपिस्वामिमनोन्तःस्थितविग्रहाय । वह्निप्रियाय । अर्थसंभाव्याय । जनलोकविधायकाय । वह्निप्रभाय । वह्नितेजसे । शुभाभीष्टप्रदाय । यमिने । वारुणक्षेत्रनिलयाय । वरुणाय । वारणार्चिताय । वायुस्थानकृतावासाय । वायुगाय । वायुसंभृताय । यमान्तकाय । अभिजननाय नमः ॥ ८६०

ओं यमलोकनिवारणाय नमः । यमिनामग्रगण्याय । संयमिने । यमभाविताय । इन्द्रोद्यानसमीपस्थाय । इन्द्रदृग्विषयाय । प्रभवे । यक्षराट्सरसीवासाय । अक्षय्यनिधिकोशकृते । स्वामितीर्थकृतावासाय । स्वामिध्येयाय । अधोक्षजाय । वराहाद्यष्टतीर्थाभिसेवि(षेचि)-तांघ्रिसरोरुहाय । पाण्डुतीर्थाभिषिक्ताङ्गाय । युधिष्ठिरवरप्रदाय । भीमान्तःकरणारूढाय । श्वेतवाहनसख्यवते । नकुलाभयदाय । माद्रीसहदेवाभिवन्दिताय । कृष्णाशपथसन्धात्रे नमः । ८८०

ओं कुन्तीस्तुतिरताय नमः । दमिने । नारदादिमुनिस्तुत्याय । नित्यकर्मपरायणाय । दर्शिताव्यक्तरूपाय । वीणानादप्रमोदिताय । षट्कोटितीर्थचर्यावते । देवतीर्थकृताश्रमाय । बिल्वामलजलस्नायिने । सरस्वत्यंबुसेविताय । तुम्बुरूदकसंस्पर्शजनचित्ततमोऽपहाय । मत्स्यवामनकूर्मादितीर्थराजाय । पुराणभृते । चक्रध्येयपदाम्भोजाय । शङ्खपूजितपादुकाय । रामतीर्थविहारिणे । बलभद्रप्रतिष्ठिताय । जामदग्न्यसरस्तीर्थजलसेचनतर्पिताय । पापापहारिकीलालसुस्नाताघ-विनाशनाय । नभोगङ्गाभिषिक्ताय नमः । ९००

ओं नागतीर्थाभिषेकवते । कुमारधारातीर्थस्थाय । वटुवेषाय । सुमेखलाय । वृद्धस्य सुकुमारत्वप्रदाय । सौन्दर्यवते । सुखिने । प्रियंवदाय । महाकुक्षये । इक्ष्वाकुकुलनन्दनाय । नीलगोक्षीरधाराभुवे । वराहाचलनाय-

काय। भरद्वाजप्रतिष्ठावते। बृहस्पतिविभाविताय। अञ्जनाकृतपूजावते । आञ्जनेयकरार्चिताय। अञ्जनाद्रिनिवासाय। मुञ्जकेशाय। पुरन्दराय । किन्नरद्वयसंबन्धिबन्धमोक्षप्रदायकाय नमः । ९२०

ओं वैखानसमखारम्भाय नमः । वृषज्ञेयाय । वृषाचलाय । वृषकायप्रभेत्त्रे । क्रीडनाचारसम्भ्रमाय । सौवर्चलेयविन्यस्तराज्याय । नारायणप्रियाय । दुर्मेधोभञ्जकाय । प्राज्ञाय । ब्रह्मोत्सवमहोत्सुकाय । भद्रासुरशिरश्छेत्त्रे । भद्रक्षेत्रिणे । सुभद्रवते । मृगयाऽक्षीणसन्नाहाय । शङ्खराजन्यतुष्टिदाय। स्थाणुस्थाय। वैनतेयाङ्गभाविनाय। अशरीरवते। भोगीन्द्रभोगसंस्थानाय। ब्रह्मादिगणसेविताय नमः । ९४०

ओं सहस्रार्कच्छटाभास्वद्विमानान्तस्स्थिताय नमः। गुणिने । विष्वक्सेनकृतस्तोत्राय । सनन्दनवरीवृताय । जाह्नव्यादिनदीसेव्याय । सुरेशाद्यभिवन्दिताय । सुराङ्गनानृत्यपराय । गन्धर्वोद्गायनप्रियाय । राकेन्दुसङ्काशनखाय । कोमलाङ्घ्रिसरोरुहाय । कच्छपप्रपदाय । कुन्दगुल्फकाय । स्वच्छकूर्पराय । मेदुरस्वर्णवस्त्राढ्यकटिदेशस्थ-मेखलाय । प्रोल्लसच्छुरिकाभास्वत्कटिदेशाय। शुभङ्कराय । अनन्तपद्म-जस्थाननाभये। मौक्तिकमालिकाय। मन्दारचाम्पेयमालिने। रत्नाभरण-सम्भृताय नमः ।। ९६०

ओं लम्बयज्ञोपवीतिने नमः । चन्द्रश्रीखण्डलेपवते । वरदाय । अभयदाय । चक्रिणे । शङ्खिने । कौस्तुभदीप्तिमते । श्रीवत्साङ्कित-वक्षस्काय । लक्ष्मीसंश्रितहृत्तटाय। नीलोत्पलनिभाकाराय। शोणाम्भो-जसमाननाय । कोटिमन्मथलावण्याय । चन्द्रिकास्मितपूरिताय । सुधास्वच्छोर्ध्वपुण्ड्राय । कस्तूरीतिलकाञ्चिताय । पुण्डरीकेक्षणाय । स्वच्छाय । मौलिशोभाविराजिताय । पद्मस्थाय । पद्मनाभाय नमः ।। ९८०

ओं सोममण्डलगाय । बुधाय । वह्निमण्डलगाय । सूर्याय । सूर्यमण्डलसंस्थिताय । श्रीपतये । भूमिजानये । विमलाद्यभिसंवृताय । जगत्कुटुंबजनित्रे । रक्षकाय । कामितप्रदाय । अवस्थात्रययन्त्रे । विश्वतेजस्स्वरूपवते । ज्ञप्तये । ज्ञेयाय । ज्ञानगम्याय । ज्ञानातीताय । सुरातिगाय । ब्रह्माण्डान्तर्बहिर्व्याप्ताय नमः । वेङ्कटाद्रिगदाधराय नमः ॥ १०००

## श्री वेङ्कटेशाष्टोत्तरशतनामस्तोत्रम्

श्रीवेङ्कटेशः श्रीवासो लक्ष्मीपतिरनामयः ।
अमृताशो जगद्वन्द्यो गोविन्दः शाश्वतः प्रभुः ॥ १

शेषाद्रिनिलयो देवः केशवो मधुसूदनः ।
अमृतो माधवः कृष्णः श्रीहरिर्ज्ञानपञ्जरः ॥ २

श्रीवत्सवक्षाः सर्वेशो गोपालः पुरुषोत्तमः ।
गोपीश्वरः परंज्योतिर्वैकुण्ठपतिरव्ययः ॥ ३

सुधातनुर्यादवेन्द्रो नित्ययौवनरूपवान् ।
चतुर्वेदात्मको विष्णुरच्युतः पद्मिनीप्रियः ॥ ४

धरापतिः सुरपतिर्निर्मलो देवपूजितः ।
चतुर्भुजश्चक्रधरस्त्रिधामा त्रिगुणाश्रयः ॥ ५

निर्विकल्पो निष्कलङ्को निरातङ्को निरञ्जनः ।
निराभासो नित्यतृप्तो निर्गुणो निरुपद्रवः ॥ ६

गदाधरः शार्ङ्गपाणिर्नन्दकी शङ्खधारकः ।
अनेकमूर्तिरव्यक्तः कटिहस्तो वरप्रदः ॥ ७

अनेकात्मा दीनबन्धुरार्तलोकाभयप्रदः ।
आकाशराजवरदो योगिहृत्पद्ममन्दिरः ॥ ८

दामोदरो जगत्पालः पापघ्नो भक्तवत्सलः ।
त्रिविक्रमः शिंशुमारो जटामुकुटशोभितः ॥ ९

शङ्खमध्योल्लसन्मञ्जुकिङ्किण्याढ्यकरण्डकः ।
नीलमेघश्यामतनुर्बिल्वपत्रार्चनप्रियः ॥ १०

जगद्व्यापी जगत्कर्ता जगत्साक्षी जगत्पतिः ।
चिन्तितार्थप्रदो जिष्णुर्दाशार्हो दशरूपवान् ॥ ११

देवकीनन्दनः शौरिर्हयग्रीवो जनार्दनः ।
कन्याश्रवणतारेज्यः पीताम्बरधरोऽनघः ॥ १२

वनमाली पद्मनाभो मृगयासक्तमानसः ।
अश्वारूढः खड्गधारी धनार्जनसमुत्सुकः ॥ १३

घनसारलसन्मध्यकस्तूरीतिलकोज्ज्वलः ।
सच्चिदानन्दरूपश्च जगन्मङ्गलदायकः ॥ १४

यज्ञरूपो यज्ञभोक्ता चिन्मयः परमेश्वरः ।
परमार्थप्रदःशान्तः श्रीमान् दोर्दण्डविक्रमः ॥ १५

परात्परः परंब्रह्म श्रीविभुर्जगदीश्वरः ।
एवं श्रीवेङ्कटेशस्य नाम्नामष्टोत्तरं शतम् ॥ १६

पठतां शृण्वतां भक्त्या सर्वाभीष्टप्रदं शुभम् ।
त्रिसन्ध्यं यःपठेन्नित्यं सर्वान् कामानवाप्नुयात् ॥ १७

## श्रीवेङ्कटेशाष्टोत्तरशतनामावलिः

ओं श्रीवेङ्कटेशाय नमः। श्रीवासाय। लक्ष्मीपतये। अनामयाय। अमृताशाय। जगद्वन्द्याय। गोविन्दाय। शाश्वताय। प्रभवे। शेषाद्रिनिलयाय। देवाय। केशवाय। मधुसूदनाय। अमृताय। माधवाय। कृष्णाय। श्रीहरये। ज्ञानपञ्जराय। श्रीवत्सवक्षसे। सर्वेशाय नमः॥ २०

ओं गोपालाय नमः। पुरुषोत्तमाय। गोपीश्वराय। परस्मै ज्योतिषे। वैकुण्ठपतये। अव्ययाय। सुधातनवे। यादवेन्द्राय। नित्ययौवनरूपवते। चतुर्वेदात्मकाय। विष्णवे। अच्युताय। पद्मिनीप्रियाय। धरापतये। सुरपतये। निर्मलाय। देवपूजिताय। चतुर्भुजाय। चक्रधराय। त्रिधाम्ने नमः॥ ४०

ओं त्रिगुणाश्रयाय नमः। निर्विकल्पाय। निष्कलङ्काय। निरातङ्काय। निरञ्जनाय। निराभासाय। नित्यतृप्ताय। निर्गुणाय। निरुपद्रवाय। गदाधराय। शार्ङ्गपाणये। नन्दकिने। शङ्खधारकाय। अनेकमूर्तये। अव्यक्ताय। कटिहस्ताय। वरप्रदाय। अनेकात्मने। दीनबन्धवे। आर्तलोकाभयप्रदाय नमः॥ ६०

ओं आकाशराजवरदाय नमः। योगिहृत्पद्ममन्दिराय। दामोदराय। जगत्पालाय। पापघ्नाय। भक्तवत्सलाय। त्रिविक्रमाय। शिंशुमाराय। जटामुकुटशोभिताय। शङ्खमध्योल्लसन्मञ्जुकिङ्किण्याढ्यकरण्डकाय। नीलमेघश्यामतनवे। बिल्वपत्रार्चनप्रियाय। जगद्व्यापिने। जगत्कर्त्रे। जगत्साक्षिणे। जगत्पतये। चिन्तितार्थप्रदाय। जिष्णवे। दाशार्हाय। दशरूपवते नमः॥ ८०

ओं देवकीनन्दनाय नमः। शौरये। हयग्रीवाय। जनार्दनाय। कन्याश्रवणतारेज्याय। पीताम्बधराय। अनघाय। वनमालिने।

पद्मनाभाय । मृगयासक्तमानसाय । अश्वारूढाय । खड्गधारिणे । धनार्जनसमुत्सुकाय । घनसारलसन्मध्यकस्तूरीतिलकोज्ज्वलाय । सच्चिदानन्दरूपाय । जगन्मङ्गलदायकाय । यज्ञरूपाय । यज्ञभोक्त्रे चिन्मयाय । परमेश्वराय नमः ॥ १००

ओं परमार्थप्रदाय नमः । शान्ताय । श्रीमते । दोर्दण्डविक्रमाय । परात्पराय । परस्मैब्रह्मणे । श्रीविभवे । जगदीश्वराय नमः ॥ १०८

## वेङ्कटेशाष्टोत्तरशतनामस्तोत्रम्

सिद्धा ऊचुः ।

भगवन्वेङ्कटेशस्य नाम्नामष्टोत्तरं शतम् ।
अनुब्रूहि दयासिन्धो क्षिप्रसिद्धिप्रदं नृणाम् ॥ १

नारद उवाच ।

सावधानेन मनसा शृण्वन्तु तदिदं शुभम् ।
जप्तं वैखानसैः पूर्वं सर्वसौभाग्यवर्धनम् ॥ २

ओङ्कारपरमार्थश्च नरनारायणात्मकः ।
मोक्षलक्ष्मीप्राणकान्तो वेङ्कटाचलनायकः ॥ ३

करुणापूर्णहृदयः टेङ्कारजपसौख्यदः ।
शास्त्रप्रमाणगम्यश्च यमाद्यष्टाङ्गगोचरः ॥ ४

भक्तलोकैकवरदो वरेण्यो भयनाशनः ।
यजमानस्वरूपश्च हस्तन्यस्तसुदर्शनः ॥ ५

रमावतारमङ्गेशो णाकारजपसुप्रियः ।
यज्ञेशो गतिदाता च जगतीवल्लभो वरः ॥ ६

रक्षःसन्दोहसंहर्ता वर्चस्वी रघुपुङ्गवः ।
दानधर्मपरो याजी घनश्यामलविग्रहः ॥ ७

हरादिसर्वदेवेड्यो रामो यदुकुलाग्रणीः ।
श्रीनिवासो महात्मा च तेजस्वी तत्वसन्निधिः ॥ ८

त्वमर्थलक्ष्यरूपश्च रूपवान् पावनो यशः ।
सर्वेशः कमलाकान्तो लक्ष्मीसंलापसंमुखः ॥ ९

चतुर्मुखप्रतिष्ठाता राजराजवरप्रदः ।
चतुर्वेदशिरोरत्नं रमणो नित्यवैभवः ॥ १०

दासवर्गपरित्राता नारदादिमुनिस्तुतः ।
यादवाचलवासी च खिद्यद्भक्तार्तिभञ्जनः ॥ ११

लक्ष्मीप्रसादको विष्णुः देवेशो रम्यविग्रहः ।
माधवो लोकनाथश्च लालिताखिलसेवकः ॥ १२

यक्षगन्धर्ववरदः कुमारो मातृकार्चितः ।
रटद्बालकपोषी च शेषशैलकृतस्थलः ॥ १३

षाड्गुण्यपरिपूर्णश्च द्वैतदोषनिवारणः ।
तिर्यग्जन्त्वर्चितांघ्रिश्च नेत्रानन्दकरोत्सवः ॥ १४

द्वादशोत्तमलीलश्च दरिद्रजनरक्षकः ।
शत्रुकृत्यादिभीतिघ्नो भुजङ्गशयनप्रियः ॥ १५

जाग्रद्रहस्यावासश्च यःशिष्टपरिपालकः ।
वरेण्यः पूर्णबोधश्च जन्मसंसारभेषजम् ॥ १६

कार्तिकेयवपुर्धारी यतिशेखरभावितः ।
नरकादिभयध्वंसी रथोत्सवकलाधरः ॥ १७

लोकार्चामुख्यमूर्तिश्च केशवाद्यवतारवान् ।
शास्त्रश्रुतानन्तलीलो यमशिक्षानिबर्हणः ॥ १८

मानसंरक्षणपर इरिणाङ्कुरधान्यदः ।
नेत्रहीनाक्षिदायी च मतिहीनमतिप्रदः ॥ १९

हिरण्यदानग्राही च मोहजालनिकृन्तनः ।
दधिलाजाक्षतार्च्यश्च यातुधानविनाशनः ॥ २०

यजुर्वेदशिखागम्यः वेङ्कटो दक्षिणास्थितः ।
सारपुष्करिणीतीरो रात्रौ देवगणार्चितः ॥ २१

यत्नवत्फलसन्धाता श्रीजपाद्धनवृद्धिकृत् ।
क्लीङ्कारजापिकाम्यार्थप्रदानसदयान्तरः ॥ २२

सौःसर्वासिद्धिसन्धाता नमस्कर्तुरभीष्टदः ।
मोहिताखिललोकश्च नानारूपव्यवस्थितः ॥ २३

राजीवलोचनो यज्ञवराहो णगवेङ्कटः ।
तेजोराशीक्षणः स्वामी हार्दाविद्यानिवारणः ॥ २४

इति श्रीवेङ्कटेशस्य नाम्नामष्टोत्तरं शतम् ।
प्रातः प्रातः समुत्थाय यःपठेद्भक्तिमान्नरः ।
सर्वेष्टार्थानवाप्नोति वेङ्कटेशप्रसादतः ॥ २५

-सनत्कुमारसंहितातः

## श्री वेङ्कटेश्वराष्टोत्तरशतनामावलिः

ओंकारपरमार्थाय नमः । नरनारायणात्मकाय । मोक्षलक्ष्मी प्राणकान्ताय। वेंकटाचलनायकाय। करुणापूर्णहृदयाय। टेङ्कारजपसौख्य- दाय । शास्त्रप्रमाणगम्याय। यमाद्यष्टाङ्गगोचराय। भक्तलोकैकवरदाय। वरेण्याय । भयनाशनाय । यजमानस्वरूपाय । हस्तन्यस्तसुदर्शनाय । रमावतारमंगेशाय । णाकारजपसुप्रियाय । यज्ञेशाय । गतिदात्रे । जगतीवल्भाय। वराय। रक्षस्सन्दोहसंहर्त्रे नमः ।। २०

ओं वर्चस्विने नमः । रघुपुङ्गवाय । दानधर्मपराय । याजिने । घनश्यामलविग्रहाय । हरादिसर्वदेवेड्याय । रामाय । यदुकुलाग्रण्ये । श्रीनिवासाय। महात्मने। तेजस्विने। तत्वसन्निधये। त्वमर्थलक्ष्यरूपाय । रूपवते। पावनाय। यशसे। सर्वेशाय। कमलाकान्ताय। लक्ष्मीसल्लापसं- मुखाय। चतुर्मुखप्रतिष्ठात्रे नमः ।। ४०

ओं राजराजवरप्रदाय नमः । चतुर्वेदशिरोरत्नाय । रमणाय । नित्यवैभवाय । दासवर्गपरित्रात्रे । नारदादिमुनिस्तुताय । यादवाचल- वासिने। खिद्यद्भक्तार्तिभञ्जनाय। लक्ष्मीप्रसादकाय। विष्णवे । देवेशाय । रम्यविग्रहाय । माधवाय । लोकनाथाय । लालिताखिल-सेवकाय । यक्षगन्धर्ववरदाय । कुमाराय । मातृकार्चिताय । रटद्बाल-कपोषिणे । शेषशैलकृतस्थलाय नमः ।। ६०

ओं षाड्गुण्यपरिपूर्णाय नमः । द्वैतदोषनिवारणाय। तिर्यग्जन्त्व- र्चितांघ्रये। नेत्रानन्दकरोत्सवाय। द्वादशोत्तमलीलाय। दरिद्रजनरक्षकाय । शत्रुकृत्यादिभीतिघ्नाय। भुजङ्गशयनप्रियाय। जाग्रद्रहस्यावासाय। यस्मै । शिष्टपरिपालकाय । वरेण्याय । पूर्णबोधाय । जन्मसंसारभेषजाय । कार्तिकेयवपुर्धारिणे । यतिशेखरभाविताय । नरकादिभयध्वंसिने । रथोत्सवकलाधराय। लोकार्चामुख्यमूर्तये। केशवाद्यवतारवते नमः ।। ८०

ओं शास्त्रश्रुतानन्तलीलाय नमः । यमशिक्षानिबर्हणाय । मानसं-रक्षणपराय । यिरिणांकुरधान्यदाय । नेत्रहीनाक्षिदायिने । मतिहीनमति-प्रदाय । हिरण्यदानग्राहिणे । मोहजालनिकृन्तनाय । दधिलाजाक्षता-च्यर्याय । यातुधानविनाशनाय । यजुर्वेदशिखागम्याय । वेङ्कटाय । दक्षिणास्थिताय । सारपुष्करिणीतीराय । रात्रौ देवगणार्चिताय । यत्नवत्फलसन्धात्रे । श्रींजपाद्धनवृद्धिकृते । क्लींकारजापिकाम्यार्थप्रदान-सदयान्तराय । सौःसर्वसिद्धिसन्धात्रे । नमस्कर्तुरभीष्टदाय नमः ॥ १००

ओं मोहिताखिललोकाय नमः । नानारूपव्यवस्थिताय । राजीवलोचनाय । यज्ञवराहाय । ण(न)गवेङ्कटाय । तेजोराशीक्षणाय । स्वामिने । हार्दाविद्यानिवारणाय नमः ॥ १०८ श्रीवेङ्कटेश्वराय नमः ॥

ओं नमो वेंकटेशाय भवभयहरणाय गजवरवरदायाघहराय श्रीमते तत्त्वरूपाय सकलचराचरनिदानायाखिलविदे रमालोलाय कुमारशेषाद्-वैतिने द्वादशभुजाय शिवपूजकाय नरलोकेशाय मायिने महिमोदयाय वेदसाराय श्रीं क्लीं सौः नमो नारायण ते स्वाहा । (इति मन्त्राक्षरघटिता-द्याक्षराणि नामानि ।)

## श्रीसुदर्शनसहस्रनामस्तोत्रम्

कैलासशिखरे रम्ये मुक्तामणिक्यमण्टपे।
रत्नसिंहासनासीनं प्रमथैः परिवारितम्॥ १

भर्तारं सर्वधर्मज्ञं पार्वती परमेश्वरम्।
बद्धाञ्जलिपुटा भूत्वा पप्रच्छ विनयान्विता॥ २

यत्त्वयोक्तं जगन्नाथ ! सुभृशं क्षेममिच्छताम्।
सौदर्शनमृते शास्त्रं नास्ति चान्यदिति प्रभो !॥ ३

तत्र काचिद्विवक्षाऽस्ति तमर्थं प्रति मे प्रभो !।
एवमुक्तस्त्वहिर्बुध्न्यः पार्वतीं प्रत्युवाच ताम्॥ ४

संशयो यदि ते तत्र तं ब्रूहि त्वं वरानने।
इत्येवमुक्ता गिरिजा गिरिशेन महात्मना॥ ५

पुनर्होवाच सर्वज्ञं ज्ञानमुद्राधरं पतिम्।
लोके सौदर्शनं मन्त्रं यन्त्रं तत्तत्प्रयोगवत्॥ ६

सर्वं विज्ञातुमप्यत्र यथावत्समनुष्ठितुम्।
अतिवेलमशक्तानां तन्मार्गं भृशमिच्छताम्॥ ७

को मार्गः का गतिस्तेषां कार्यसिद्धिः कथं भवेत्।
एतन्मे ब्रूहि लोकेश त्वदन्यः को वदेदमुम्॥ ८

अहिर्बुध्न्यः-

अहं ते कथयिष्यामि सर्वसिद्धिकरं शुभम्।
अनायासेन यज्जप्त्वा नरः सिद्धिमवाप्नुयात्॥ ९

तच्च सौदर्शनं गुह्यं दिव्यं नामसहस्रकम् ।
नियमात्पठतां नृणां चिन्तितार्थप्रदायकम् ॥ १०

तस्य नामसहस्रस्य सोऽहमेवर्षिरीरितः ।
छन्दोऽनुष्टुप् देवता तु परमात्मा सुदर्शनः ॥ ११

स्रां बीजं ह्रीं तु शक्तिः स्यात् श्रीं कीलकमुदाहृतम् ।
समस्ताभीष्टसिद्ध्यर्थे विनियोग उदाहृतः ॥ १२

शंखं चक्रं च चापादि ध्यानमस्य समीरितम् ।
शंखं चक्रं च चापं परशुमसुमिषुं शूलपाशाङ्कुशाग्निं
बिभ्राणं वज्रखेटौ हलमुसलगदाकुन्तमत्युग्रदंष्ट्रम् ।
ज्वालाकेशं त्रिणेत्रं ज्वलदनलनिभं हारकेयूरभूषं
ध्यायेत् (वन्दे) षट्कोणसंस्थं सकलरिपुजनप्राणसंहारचक्रम् ॥ १३

श्रीचक्रः श्रीकरः श्रीशः श्रीविष्णुः श्रीविभावनः ।
श्रीमदान्ध्यहरश्श्रीमान् श्रीवत्सकृतलक्षणः ॥ १

श्रीनिधिः श्रीवरस्स्रग्वी श्रीलक्ष्मीकरपूजितः ।
श्रीरतः श्रीविभुस्सिन्धुकन्यापतिरधोक्षजः ॥ २

अच्युतश्चाम्बुजग्रीवः सहस्रारस्सनातनः ।
समर्चितो वेदमूर्तिः समतीतसुराग्रजः ॥ ३ ॥

षट्कोणमध्यगो वीरः सर्वगोऽष्टभुजः प्रभुः ।
चण्डवेगो भीमरवः शिपिविष्टार्चितो हरिः ॥ ४

शाश्वतस्सकलश्श्यामः श्यामलश्शकटार्दनः ।
दैत्यारिश्शारदःस्कन्दः शकटाक्षश्शिरीषकः ॥ ५

शरभारिर्भक्तवश्यः शशांको वामनोऽव्ययः ।
वरूथिवारिजः कञ्जलोचनो वसुधाधिपः ॥ ६

वरेण्यो वाहनोऽनन्तः चक्रपाणिर्गदाग्रजः ।
गभीरो गोलवाधीशो गदापाणिस्सुलोचनः ॥ ७

सहस्राक्षश्चतुर्बाहुः शङ्खचक्रगदाधरः ।
भीषणो भीतिदो भद्रः भीमोऽभीष्टफलप्रदः ॥ ८

भीमार्चितो भीमसेनो भानुवंशप्रकाशकः ।
प्रह्लादवरदः फाललोचनो लोकपूजितः ॥ ९

उत्तरामानदो मानी मानवाभीष्टसिद्धिदः ।
भक्तपालः पापहारी फलदो दहनध्वजः ॥ १०

अरीशः कनको धाता कामपालः पुरातनः ।
अक्रूरः क्रूरजनकः क्रूरदंष्ट्रः कुलाधिपः ॥ ११

क्रूरकर्मा क्रूररूपी क्रूरहारी कुशेशयः ।
मन्दरो मानिनीकान्तः मधुहा माधवप्रियः ॥ १२

सुप्रतप्तस्वर्णरूपी बाणासुरभुजान्तकृत् ।
धराधरो दानवारिः दनुजेन्द्रारिपूजितः ॥ १३

भाग्यप्रदो महासत्वो विश्वात्मा विगतज्वरः ।
सुराचार्यार्चितो वश्यो वासुदेवो वसुप्रदः ॥ १४

वसुन्धरो वायुवेगो वराहो वरुणालयः ।
प्रणतार्तिहरश्श्रेष्ठः शरण्यः पापनाशनः ॥ १५

पावको वारणाद्रीशो वैकुण्ठो वीतकल्मषः ।
वज्रदंष्ट्रो वज्रनखो वायुरूपी निराश्रयः ॥ १६

निरीहो निःस्पृहो नित्यो नीतिज्ञो नीतिभावनः ।
नीरूपो नारदनुतो नकुलाचलवासकृत् ।। १७

नित्यानन्दो बृहद्भानुः बृहतीशः पुरातनः ।
निधीनामधिपोऽनन्तः नरकार्णवतारकः ।। १८

अगाधोऽविरलोऽमर्त्यः ज्वालाकेशः खगार्चितः ।
तरुणस्तनुकृद्रक्तः परमश्चित्तसंभवः ।। १९

चिन्त्यस्सत्यनिधिस्साग्रः चिदानन्दः शिवप्रियः ।
शिंशुमारश्शतमखः शातकुंभनिभप्रभः ।। २०

भोक्ताऽरुणेशो बलवान् बालग्रहनिवारकः ।
सर्वारिष्टप्रशमनः महाभयनिवारकः ।। २१

बन्धुस्सुबन्धुस्सुप्रीतः सन्तुष्टस्सुरसन्नुतः ।
बीजकोश्यो भगो भानुः अमितार्चिरपां पतिः ।। २२

सुयज्ञो ज्योतिषश्शान्तो विरूपाक्षस्सुरेश्वरः ।
वह्निप्राकारसंवीतो रत्नगर्भः प्रभाकरः ।।२३

सुशीलस्सुभगस्स्वक्षः सुमुखस्सुखदस्सुखी ।
महासुरशिरश्छेत्ता पाकशासनवन्दितः ।। २४

शतमूर्तिस्सहस्रारो हिरण्यज्योतिरव्ययः ।
मण्डली मण्डलाकारः चन्द्रसूर्याग्निलोचनः ।। २५

प्रभञ्जनस्तीक्ष्णधारः प्रशान्तश्शारदप्रियः ।
भक्षप्रियो बलिहरो लावण्यो लक्षणप्रियः ।।२६

विमलो दुर्लभस्सौम्यः सुलभो भीमविक्रमः ।
जितमन्युर्जितारातिः महाक्षो भृगुपूजितः ।। २७

तत्त्वरूपस्तत्त्ववेदी सर्वतत्त्वप्रतिष्ठितः ।
भावज्ञो बन्धुजनकः दीनबन्धुः पुराणवित् ॥ २८

शस्त्रेशो निर्मदो नेता नरो नानासुरप्रियः ।
नाभिचक्रो नतामित्रो नदीशकरपूजितः ॥ २९

दमनः कालिकः कर्मी कान्तः कालार्दनः कविः ।
कमनीयाकृतिः कालः कमलासनसेवितः ॥ ३०

कृपालुः कपिलः कामी कामितार्थप्रदायकः ।
धर्मसेतुर्धर्मपालः धर्मी धर्ममयः परः ॥ ३१

धाताऽऽनन्दमयो दिव्यो ब्रह्मरूपी प्रकाशकृत् ।
सर्वयज्ञमयो यज्ञो यज्ञभुग्यज्ञभावनः ॥ ३२

ज्वालाजिह्वश्शिखामौलिः सुरकार्यप्रवर्तकः ।
कलाधारस्सुरारिघ्नः कोपहा कालरूपभृत् ॥ ३३

वह्निध्वजो वह्निसखो वंजुलद्रुममूलगः ।
दक्षहा दानकारी च नरो नारायणप्रियः ॥ ३४

दैत्यदण्डधरो दान्तः शुभ्राङ्गश्शुभदायकः ।
लोहिताक्षो महारौद्रः मायारूपधरः खगः ॥ ३५

उन्नतो भानुजस्साङ्गो महाचक्रः पराक्रमी ।
अग्नीशोऽग्निमयस्त्वग्निलोचनोऽग्निसमप्रभः ॥ ३६

अग्निवानग्निरसनः युद्धसेवी रविप्रियः ।
आश्रिताघौघविध्वंसी नित्यानन्दप्रदायकः ॥ ३७

असुरघ्नो महाबाहुः भीमकर्मा शुभप्रदः ।
शशाङ्कप्रणवाधारः समस्ताशीविषापहः ॥ ३८

अर्को वितर्को विमलो बिलगो बादरायणः ।
बधिरघ्नश्चक्रवालः षट्कोणान्तर्गतश्शिखी ।। ३९

दृढधन्वा षोडशाक्षो दीर्घबाहुर्दरीमुखः ।
प्रसन्नो वामजनको निम्नो नीतिकरश्शुचिः ।। ४०

नरभेदी सिंहरूपी पुराधीशः पुरन्दरः ।
रविस्तुतो यूथपालो यूथपारिस्सतां गतिः ।। ४१

हृषीकेशो द्वित्रिमूर्तिः द्विरष्टायुधभृद्वरः ।
दिवाकरो निशानाथः दिलीपार्चितविग्रहः ।। ४२

धन्वन्तरिःश्यामलारिः भक्तशोकविनाशकः ।
रिपुप्राणहरो जेता शूरश्चातुर्यविग्रहः ।। ४३

विधाता सच्चिदानन्दः सर्वदुष्टनिवारकः ।
उल्को महोल्को रक्तोल्कः सहस्रोल्कश्शतार्चिषः ।। ४४

बुद्धो बौद्धहरो बौद्धजनमोहो बुधाश्रयः ।
पूर्णबोधः पूर्णरूपः पूर्णकामो महाद्युतिः ।। ४५

पूर्णमन्त्रः पूर्णगात्रः पूर्णः षाड्गुण्यविग्रहः ।
पूर्णनेमिः पूर्णनाभिः पूर्णाशी पूर्णमानसः ।। ४६

पूर्णसारः पूर्णशक्तिः रङ्गसेवी रणप्रियः ।
पूरिताशोऽरिष्टतातिः पूर्णार्थः पूर्णभूषणः ।। ४७

पद्मगर्भः पारिजातः परामित्रःशराकृतिः ।
भूभृद्वपुः पुण्यमूर्तिः भूभृतां पतिराशुगः ।। ४८

भाग्योदयो भक्तवश्यो गिरिजावल्लभप्रियः ।
गविष्ठो गजमानी च गमनागमनप्रियः ।। ४९

ब्रह्मचारी बन्धुमानी सुप्रतीकस्त्रिविक्रमः ।
शंकराभीष्टदो भव्यः साचिव्यस्सव्यलक्षणः ॥ ५०

महाहंसस्सुखकरो नाभागतनयार्चितः ।
कोटिसूर्यप्रभो दीप्तिः विद्युत्कोटिसमप्रभः ॥ ५१

वज्रकल्पो वज्रसारो वज्रनिर्घातनिःस्वनः ।
गिरीशमानदो मान्यो नारायणकरालयः ॥ ५२

अनिरुद्धः परामर्षी उपेन्द्रः पूर्णविग्रहः ।
आयुधेशश्शतारिघ्नः शमनश्शतसैनिकः ॥ ५३

सर्वासुरवधोद्युक्तः सूर्यदुर्मानभेदकः ।
राहुविश्लोषकारी च काशीनगरदाहकः ॥ ५४

पीयूषांशुः परंज्योतिः संपूर्णः क्रतुभुक्प्रियः ।
मान्धातृवरदश्शुद्धः हरसेव्यश्शचीष्टदः ॥ ५५

सहिष्णुः फलभुग्वीरः लोकभृल्लोकनायकः ।
दुर्वासमुनिदर्पघ्नो जयदो विजयप्रियः ॥ ५६

सुराधीशोऽसुराराातिः गोविन्दकरभूषणः ।
रथरूपी रथाधीशः कालचक्रः कृपानिधिः ॥ ५७

चक्ररूपधरो विष्णुः स्थूलस्सूक्ष्मश्शिखिप्रभः ।
शरणागतसंत्राता वेतालारिर्महाबलः ॥ ५८

ज्ञानदो वाक्पतिर्मानी महावेगो महामणिः ।
विद्युत्केशो विहारेशः पद्मयोनिश्चतुर्भुजः ॥ ५९

कामात्मा कामदः कामी कालनेमिशिरोहरः ।
शुभ्रश्शुचिश्शुनासीरः शुक्रमित्रश्शुभाननः ॥ ६०

वृषकायो वृषारातिः वृषभेन्द्रस्सुपूजितः ।
विश्वंभरो वीतिहोत्रो वीर्यो विश्वजनप्रियः ।। ६१

विश्वकृद्विश्वपो विश्वहर्ता साहसकर्मकृत् ।
बाणबाहुहरो ज्योतिः परात्मा शोकनाशनः ।। ६२

विमलाधिपतिः पुण्यो ज्ञाता ज्ञेयः प्रकाशकः ।
म्लेच्छप्रहारी दुष्टघ्नः सूर्यमण्डलमध्यगः ।। ६३

दिगंबरो वृषाद्रीशः विविधायुधरूपकः ।
सत्ववान्सत्यवागीश सत्यधर्मपरायणः ।। ६४

रुद्रप्रीतिकरो रुद्रवरदो रुग्विभेदकः ।
नारायणो नक्रभेदी गजेन्द्रपरिमोक्षकः ।। ६५

धर्मप्रियः षडाधारो वेदात्मा गुणसागरः ।
गदामित्रः पृथुभुजः रसातलविभेदकः ।। ६६

तमोवैरी महातेजाः महाराजो महातपाः ।
समस्तारिहरश्शान्तः क्रूरो योगेश्वरेश्वरः ।। ६७

स्थविरस्स्वर्णवर्णाङ्गः शत्रुसैन्यविनाशकृत् ।
प्रज्ञो विश्वतनुत्राता श्रुतिस्मृतिमयः कृती ।। ६८

व्यक्ताव्यक्तस्वरूपोंसः कालचक्रः कलानिधिः ।
महाद्युतिरमेयात्मा वज्रानेमिः प्रभानिधिः ।। ६९

महास्फुलिङ्गधारार्चिः महायुद्धकृदच्युतः ।
कृतज्ञस्सहनो वाग्मी ज्वालामालाविभूषकः ।। ७०

चतुर्मुखनुतश्श्रीमान् भ्राजिष्णुर्भक्तवत्सलः ।
चातुर्यगमनश्चक्री चतुर्वर्गप्रदायकः ।। ७१

विचित्राल्याभरणः तीक्ष्णधारस्सुरार्चितः ।
युगकृद्युगपालश्च युगसन्धिर्युगान्तकृत् ।। ७२

सुतीक्ष्णारगणो गम्यो बलिध्वंसी त्रिलोकपः ।
त्रिणेत्रस्त्रिजगद्वन्द्यः तृणीकृतमहासुरः ।। ७३

त्रिकालज्ञस्त्रिलोकज्ञः त्रिनाभिस्त्रिजगत्प्रभुः ।
सर्वमन्त्रमयो मन्त्रः सर्वशत्रुनिबर्हणः ।। ७४

सर्वगस्सर्ववित्सौम्यः सर्वलोकहितंकरः ।
आदिमूलस्सद्गुणाढ्यो वरेण्यस्त्रिगुणात्मकः ।। ७५

ध्यानगम्यः कल्मषघ्नः कलिगर्वप्रभेदकः ।
कमनीयतनुत्राणः कुण्डली मण्डिताननः ।। ७६

सुकुण्ठीकृतचण्डेशः सुसंत्रस्तषडाननः ।
विषादीकृतविघ्नेशः विगतानन्दनन्दिकः ।। ७७

मथितप्रमथव्यूहः प्रणतप्रमथाधिपः ।
प्राणभिक्षाप्रदोऽनन्तो लोकसाक्षी महास्वनः ।। ७८

मेधावी शाश्वतोऽक्रूरः क्रूरकर्माऽपराजितः ।
अरी धृष्टोऽप्रमेयात्मा सुन्दरश्शत्रुतापनः ।। ७९

योगयोगीश्वराधीशो भक्ताभीष्टप्रपूरकः ।
सर्वकामप्रदोऽचिन्त्यः शुभाङ्गः कुलवर्धनः ।। ८०

निर्विकारोऽनन्तरूपो नरनारायणप्रियः ।
मन्त्रयन्त्रस्वरूपात्मा परमन्त्रप्रभेदकः ।। ८१

भूतवेतालविध्वंसी चण्डकूश्माण्डखण्डनः ।
शकलीकृतमारीचो भैरवग्रहभेदकः ।। ८२

चूर्णीकृतमहाभूतः कबलीकृतदुर्ग्रहः ।
सुदुर्ग्रहो जंभभेदी सूचीमुखनिषूदनः ॥ ८३

वृकोदरबलोद्धर्ता पुरन्दरबलानुगः ।
अप्रमेयबलस्स्वामी भक्तप्रीतिविवर्धनः ॥ ८४

महाभूतेश्वरश्शूरो नित्यश्शारदविग्रहः ।
धर्माध्यक्षो विधर्मघ्नः सुधर्मस्थापकश्शिवः ॥ ८५

विधूमज्वलनो भानुः भानुमान् भास्वतां पतिः ।
जगन्मोहनपाटीरः सर्वोपद्रवशोधकः ॥ ८६

कुलिशावरणो ज्वालामृतस्सौभाग्यवर्धनः ।
ग्रहप्रध्वंसकस्स्वात्मरक्षको धारणात्मकः ॥ ८७

सन्तापनो वज्रसारः सुमेधामृतसागरः ।
सन्तानपञ्जरो बाणताटङ्को वज्रमालिकः ॥ ८८

मेखलाग्निशिखो वज्रपञ्जरस्ससुरांकुशः ।
सर्वरोगप्रशमनो गान्धर्वविशिखाकृतिः ॥ ८९

प्रमोहमण्डलो भूतग्रहशृङ्खलकर्मकृत् ।
कलावृतो महाशङ्कुदारणश्शल्यचन्द्रिकः ॥ ९०

चेतनोत्तारकश्शल्यक्षुद्रोन्मूलनतत्परः ।
बन्धनावरणश्शल्यकृन्तनो वज्रकीलकः ॥ ९१

प्रतीकबन्धनो ज्वालामण्डलश्शास्त्रदारकः ।
इन्द्राक्षिमालिकः कृत्यादण्डश्चित्तप्रभेदकः ॥ ९२

ग्रहवागुरिकस्सर्वबन्धनो वज्रभेदकः ।
लघुसन्तानसंकल्पो बद्धग्रहविमोचनः ॥ ९३

मौलिकाञ्जनसन्धाता विपक्षमतभेदकः ।
दिग्बन्धनकरस्सूचीमुखाग्निश्चित्तबन्धकः ॥ ९४

चोराग्निमण्डलाकारः परकंकालमर्दनः ।
तान्त्रिकश्शत्रुवंशघ्नो नानानिगलमोचकः ॥ ९५

समस्तलोकसारङ्गः सुमहाविषदूषणः ।
सुमहामेरुकोदण्डः सर्ववश्यकरेश्वरः ॥ ९६

निखिलाकर्षणपटुः सर्वसम्मोहकर्मकृत् ।
संस्तम्भनकरस्सर्वभूतोच्चाटनतत्परः ॥ ९७

यक्षरक्षोगणध्वंसी महाकृत्याप्रदाहकः ।
अहितामयकारी च द्विषन्मारणकारकः ॥ ९८

एकायनगतामित्रविद्वेषणपरायणः ।
सर्वार्थसिद्धिदो दाता विधाता विश्वपालकः ॥ ९९

विरूपाक्षो महावक्षाः वरिष्ठो माधवप्रियः ।
अमित्रकर्शनश्शान्तः प्रशान्तः प्रणतार्तिहा ॥ १००

रमणीयो रणोत्साहो रक्ताक्षो रणपण्डितः ।
रणान्तकृद्रथाकारो रथांगो रविपूजितः ॥ १०१

वीरहा विविधाकारः वरुणाराधितो वशी ।
सर्वशत्रुवधाकांक्षी शक्तिमान्भक्तमानदः ॥ १०२

सर्वलोकधरः पुण्यः पुरुषः पुरुषोत्तमः ।
पुराणः पुण्डरीकाक्षः परमर्मप्रभेदकः ॥ १०३

वीरासनगतो वर्मी सर्वाधारो निरंकुशः ।
जगद्रक्षो जगन्मूर्तिः जगदानन्दवर्धनः ॥ १०४

शारदश्शकटारातिः शंकरश्शकटाकृतिः ।
विरक्तो रक्तवर्णाढ्यो रामसायकरूपभृत् ।। १०५

महावराहदंष्ट्रात्मा नृसिंहनखरात्मकः ।
समदृङ्मोक्षदो वन्द्यः विहारी वीतकल्मषः ।। १०६

गम्भीरो गर्भगो गोप्ता गभस्ती गुह्यको गुरुः ।
श्रीधरश्श्रीरतश्श्रान्तः शत्रुघ्नश्शत्रुगोचरः ।। १०७

पुराणो विततो वीरः पवित्रश्चरणाह्वयः ।
महावीरो महावीर्यः महाबलपराक्रमः ।। १०८

सुविग्रहो विग्रहघ्नः सुमानी मानदायकः ।
मायी मायापहो मन्त्री मान्यो मानविवर्धनः ।। १०९

शत्रुसंहारकश्शूरः शुक्रारिश्शङ्करार्चितः ।
सर्वाधारः परंज्योतिः प्राणः प्राणभृदच्युतः ।। ११०

चन्द्रधामाऽप्रतिद्वंद्वः परमात्मा सुदुर्गमः ।
विशुद्धात्मा महातेजाः पुण्यश्लोकः पुराणवित् ।। १११

समस्तजगदाधारो विजेता विक्रमः क्रम ।
आदिदेवो ध्रुवोऽदृश्यः सात्विकः प्रीतिवर्धनः ।। ११२

सर्वलोकाश्रयस्सेव्यः सर्वात्मा वंशवर्धनः ।
दुराधर्षः प्रकाशात्मा सर्वदृक् सर्ववित्समः ।। ११३

सद्गतिस्सत्वसंपन्नः नित्यस्सङ्कल्पकल्पकः ।
वर्णी वाचस्पतिर्वाग्मी महाशक्तिः कलानिधिः ।। ११४

अन्तरिक्षगतिः कल्यः कलिकालुष्यमोचनः ।
45 सत्यधर्मः प्रसन्नात्मा प्रकृष्टो व्योमवाहनः ।। ११५

शितधारश्शिखी रौद्रो भद्रो रुद्रसुपूजितः ।
दरीमुखारिर्जंभघ्नो वीरहा वासवप्रियः ॥ ११६

दुस्तरस्सुदुरारोहो दुर्ज्ञेयो दुष्टनिग्रहः ।
भूतावासो भूतहन्ता भूतेशो भूतभावनः ॥ ११७

भावज्ञो भवरोगघ्नो मनोवेगी महाभुजः ।
सर्वदेवमयः कान्तः स्मृतिमान्सर्वपावनः ॥ ११८

नीतिमान् सर्वजित्सौम्यो महर्षिरपराजितः ।
रुद्रांबरीषवरदो जितमायः पुरातनः ॥ ११९

अध्यात्मनिलयो भोक्ता संपूर्णस्सर्वकामदः ।
सत्योऽक्षरो गभीरात्मा विश्वभर्ता मरीचिमान् ॥ १२०

निरञ्जनो जितप्रांशुः अग्निगर्भोऽग्निगोचरः ।
सर्वजित्संभवो विष्णुः पूज्यो मन्त्रविदग्रियः ॥ १२१

शतावर्तः कलानाथः कालः कालमयो हरिः ।
अरूपो रूपसंपन्नो विश्वरूपो विरूपकृत् ॥ १२२

स्वाम्यात्मा समरश्लाघी सुव्रतो विजयान्वितः ।
चण्डघ्नश्चण्डकिरणः चतुरश्चारणप्रियः ॥ १२३

पुण्यकीर्तिः परामर्षी नृसिंहो नाभिमध्यगः ।
यज्ञात्मा यज्ञसङ्कल्पः यज्ञकेतुर्महेश्वरः ॥ १२४

जितारिर्यज्ञनिलयः शरण्यश्शकटाकृतिः ।
उत्तमोऽनुत्तमोऽनङ्गः सांगस्सर्वाङ्गशोभनः ॥ १२५

कालाग्निः कालनेमिघ्नः कामी कारुण्यसागरः ।
रमानन्दकरो रामः रजनीशान्तरस्थितः ॥ १२६

संवर्तस्समरान्वेषी द्विषत्प्राणपरिग्रहः ।
महाभिमानी सन्धाता सर्वाधीशो महागुरुः ॥ १२७

सिद्धस्सर्वजगद्योनिः सिद्धार्थस्सर्वसिद्धिदः ।
चतुर्वेदमयश्शास्ता सर्वशास्त्रविशारदः ॥ १२८

तिरस्कृतार्कतेजस्कः भास्कराराधितश्शुभः ।
व्यापी विश्वंभरो व्यग्रः स्वयंज्योतिरनन्तकृत् ॥ १२९

जयशीलो जयाकाङ्क्षी जातवेदा जयप्रदः ।
कविः कल्याणदः काम्यो मोक्षदो मोहनाकृतिः ॥ १३०

कुंकुमारुणसर्वाङ्गः कमलाक्षः कवीश्वरः ।
सुविक्रमो निष्कलङ्को विष्वक्सेनो विहारकृत् ॥ १३१

कदम्बासुरविध्वंसी केतनग्रहदाहकः ।
जुगुप्सघ्नस्तीक्ष्णधारः वैकुण्ठभुजवासकृत् ॥ १३२

सारज्ञः करुणामूर्तिः वैष्णवो विष्णुभक्तिदः ।
सुकृतज्ञो महोदारः दुष्कृतघ्नस्सुविग्रहः ॥ १३३

सर्वाभीष्टप्रदोऽनन्तः नित्यानन्दगुणाकरः ।
चक्री कुन्तधरः खड्गी परश्वथधरोऽग्निभृत् ॥ १३४

धृतांकुशो दण्डधरः शक्तिहस्तस्सुशङ्खभृत् ।
धन्वी धृतमहापाशो हली मुसलभूषणः ॥ १३५

गदायुधधरो वज्री महाशूललसद्भुजः ।
समस्तायुधसंपूर्णः सुदर्शनमहाप्रभुः ॥ १३६

ओं सुदर्शनमहाप्रभव ओं नमः ।
इति सौदर्शनं दिव्यं गुह्यं नामसहस्रकम् ।
सर्वसिद्धिकरं सर्वयन्त्रमन्त्रात्मकं परम् ॥ १३७

एतन्नामसहस्रं तु नियमाद्यः पठेत्सुधीः ।
शृणोति वा श्रावयति तस्य सिद्धिः करस्थिता ॥ १३८

दैत्यानां देवशत्रूणां दुर्जयानां महौजसाम् ।
विनाशार्थमिदं देवि ! हरेरासादितं मया ॥ १३९

शत्रुसंहारकमिदं सर्वदा जयवर्धनम् ।
जलशैलमहारण्यदुर्गमेषु महापदि ॥ १४०

भयङ्करेषु चापत्सु संप्राप्तेषु महत्सु च ।
यस्सकृत्पठनं कुर्यात् तस्य नैव भवेद्भयम् ॥ १४१

ब्रह्मघ्नश्च पशुघ्नश्च मातापितृविनिन्दकः ।
देवानां दूषकश्चापि गुरुतल्पगतोऽपि वा ॥ १४२

जप्त्वा सकृदिमं स्तोत्रं मुच्यते सर्वकिल्बिषैः ।
तिष्ठन् गच्छन् स्वपन् भुञ्जन् जाग्रन्नपि हसन्नपि ॥ १४३

आधयो व्याधयस्सर्वे रोगा रोगाधिदेवताः ।
शीघ्रं नश्यन्ति ते सर्वे पठनादस्य वै नृणाम् ॥ १४४

बहुनाऽत्र किमुक्तेन जप्त्वेदं मन्त्रपुष्कलम् ।
यत्र मर्त्यश्चरेत्तत्र रक्षति श्रीसुदर्शनः ॥ १४५

—श्रीविहगेश्वरसंहितातः

॥ श्रीः ॥

श्रीविजयलक्ष्मीसमेत-श्रीसुदर्शनपरब्रह्मणे नमः

# श्रीसुदर्शनसहस्रनामावलिः

श्रीचक्राय नमः । श्रीकराय । श्रीशाय । श्रीविष्णवे । श्रीविभावनाय । श्रीमदान्ध्यहराय । श्रीमते । श्रीवत्सकृतलक्षणाय । श्रीनिधये । श्रीवराय । स्रग्विणे । श्रीलक्ष्मीकरपूजिताय । श्रीरताय । श्रीविभवे । सिन्धुकन्यापतये। अधोक्षजाय। अच्युताय। अम्बुजग्रीवाय। सहस्राराय । सनातनाय नमः।। २०

समर्चिताय नमः। वेदमूर्तये। समतीतसुराग्रजाय। षट्कोणमध्यगाय । वीराय। सर्वगाय। अष्टभुजाय। प्रभवे। चण्डवेगाय । भीमरवाय । शिपिविष्टार्चिताय। हरये। शाश्वताय। सकलाय।श्यामाय। श्यामलाय। शकटार्दनाय। दैत्यारये। शारदाय। स्कन्दाय नमः ।। ४०

शकटाक्षाय नमः । शिरीषकाय । शरभारये । भक्तवश्याय । शशाङ्काय । वामनाय। अव्ययाय। वरूथिवारिजाय। कंजलोचनाय। वसुधाधिपाय । वरेण्याय । वाहनाय । अनन्ताय । चक्रपाणये । गदाग्रजाय । गभीराय। गोलवाधीशाय। गदापाणये। सुलोचनाय। सहस्राक्षाय नमः ६०

चतुर्बाहवे नमः । शङ्खचक्रगदाधराय । भीषणाय । भीतिदाय । भद्राय । भीमाय। अभीष्टफलप्रदाय। भीमार्चिताय। भीमसेनाय। भानुवंशप्रकाशकाय। प्रह्लादवरदाय। फाललोचनाय। लोकपूजिताय। उत्तरामानदाय । मानिने । मानवाभीष्टसिद्धिदाय । भक्तपालाय । पापहारिणे । फलदाय। दहनध्वजाय नमः। ८०

अरीशाय नमः । कनकाय । धात्रे । कामपालाय । पुरातनाय । अक्रूराय। क्रूरजनकाय। क्रूरदंष्ट्राय। कुलाधिपाय। क्रूरकर्मणे। क्रूररूपिणे ।

क्रूरहारिणे । कुशेशयाय । मन्दराय । मानिनीकान्ताय । मधुघ्ने । माधवप्रियाय । सुप्रतप्तस्वर्णरूपिणे । बाणासुरभुजान्तकृते । धराधराय नमः ।। १००

दानवारये नमः । दनुजेन्द्रारिपूजिताय । भाग्यप्रदाय । महासत्वाय । विश्वात्मने । विगतज्वराय । सुराचार्यार्चिताय । वश्याय । वासुदेवाय । वसुप्रदाय । वसुन्धराय । वायुवेगाय । वराहाय । वरुणालयाय । प्रणतार्तिहराय । श्रेष्ठाय । शरण्याय । पापनाशनाय ।पावकाय । वारणाद्रीशाय ।। १२०

वैकुण्ठाय नमः । वीतकल्मषाय । वज्रदंष्ट्राय । वज्रनखाय । वायुरूपिणे । निराश्रयाय । निरीहाय ।निःस्पृहाय । नित्याय । नीतिज्ञाय । नीतिभावनाय । नीरूपाय । नारदनुताय । नकुलाचलवासकृते । नित्यानन्दाय । बृहद्भानवे । बृहतीशाय । पुरातनाय । निधीनामधिपाय । अनन्ताय नमः १४०

ओं नरकार्णवतारकाय नमः । अगाधाय । अविरलाय । अमर्त्याय । ज्वालाकेशाय । खगार्चिताय । तरुणाय । तनुकृते । रक्ताय । परमाय । चित्तसंभवाय । चिन्त्याय । सत्यनिधये । साग्राय । चिदानन्दाय । शिवप्रियाय । शिंशुमाराय । शतमखाय । शातकुम्भनिभप्रभाय । भोक्त्रे नमः ।। १६०

ओं अरुणेशाय नमः । बलवते । बालग्रहनिवारकाय । सर्वारिष्ट-प्रशमनाय । महाभयनिवारकाय । बन्धवे । सुबन्धवे । सुप्रीताय । सन्तुष्टाय । सुरसन्नुताय । बीजकोश्याय । भगाय । भानवे । अमितार्चिषे । अपांपतये । सुयज्ञाय । ज्योतिषाय । शान्ताय । विरूपाक्षाय । सुरेश्वराय नमः । १८०

ओं वह्निप्राकारसंवीताय नमः । रत्नगर्भाय । प्रभाकराय । सुशीलाय । सुभगाय । स्वक्षाय । सुमुखाय । सुखदाय । सुखिने ।

महासुरशिरश्छेत्रे । पाकशासनवन्दिताय । शतमूर्तये । सहस्राराय । हिरण्यज्योतिषे । अव्ययाय । मण्डलिने । मण्डलाकाराय । चन्द्रसूर्याग्निलोचनाय । प्रभञ्जनाय । तीक्ष्णधाराय नमः । २००

ओं प्रशान्ताय नमः । शारदप्रियाय । भक्षप्रियाय । बलिहराय । लावण्याय । लक्ष्णप्रियाय । विमलाय । दुर्लभाय । सौम्याय । सुलभाय । भीमविक्रमाय । जितमन्यवे । जितारातये । महाक्षाय । भृगुपूजिताय । तत्त्वरूपाय । तत्त्ववेदिने । सर्वतत्त्वप्रतिष्ठिताय । भावज्ञाय । बन्धुजनकाय नमः । २२०

दीनबन्धवे नमः । पुराणविदे । शस्त्रेशाय । निर्मदाय । नेत्रे । नराय । नानासुरप्रियाय । नाभिचक्राय । नतामित्राय । नदीशकरपूजिताय । दमनाय । कालिकाय । कर्मिणे । कान्ताय । कालार्दनाय । कवये । कमनीयाकृतये । कालाय । कमलासनसेविताय । कृपालवे नमः । २४०

ओं कपिलाय नमः । कामिने । कामितार्थप्रदायकाय । धर्मसेतवे । धर्मपालाय । धर्मिणे । धर्ममयाय । पराय । धात्रे । आनन्दमयाय । दिव्याय । ब्रह्मरूपिणे । प्रकाशकृते । सर्वयज्ञमयाय । यज्ञाय । यज्ञभुजे । यज्ञभावनाय । ज्वालाजिह्वाय । शिखामौलये । सुरकार्यप्रवर्तकाय नमः ॥ २६०

ओं कलाधाराय नमः । सुरारिघ्नाय । कोपघ्ने । कालरूपभृते । बह्निध्वजाय । वह्निसखाय । वंजुलद्रुममूलगाय । दक्षघ्ने । दानकारिणे । नराय । नारायणप्रियाय । दैत्यदण्डधराय । दान्ताय । शुभ्राङ्गाय । शुभदायकाय । लोहिताक्षाय । महारौद्राय । मायारूपधराय । खगाय । उन्नताय नमः २८०

ओं भानुजाय नमः । साङ्गाय । महाचक्राय । पराक्रमिणे । अग्नीशाय । अग्निमयाय । अग्निलोचनाय । अग्निसमप्रभाय । अग्निवते ।

अग्निरसनाय । युद्धसेविने । रविप्रियाय । आश्रिताघौघविध्वंसिने । नित्यानन्दप्रदायकाय। असुरघ्नाय। महाबाहवे। भीमकर्मणे। शुभप्रदाय । शशाङ्कप्रणवाधाराय। समस्ताशीविषापहाय नमः। ३००

ओं अर्काय नमः। वितर्काय। विमलाय। बिलगाय। बादरायणाय । बधिरघ्नाय। चक्रवालाय। षट्कोणान्तर्गताय। शिखिने । दृढधन्वने । षोडशाक्षाय। दीर्घबाहवे। दरीमुखाय। प्रसन्नाय। वाम-जनकाय । निम्नाय । नीतिकराय। शुचये। नरभेदिने। सिंहरूपिणे नमः । ३२०

ओं पुराधीशाय नमः। पुरन्दराय। रविस्तुताय। यूथपालाय। यूथपारये। सतां गतये। हृषीकेशाय। द्वित्रिमूर्तये। द्विरष्टायुधभृते। वराय । दिवाकराय। निशानाथाय। दिलीपार्चितविग्रहाय। धन्वन्तरये। श्यामलारये। भक्तशोकविनाशकाय। रिपुप्राणहराय। जेत्रे। शूराय। चातुर्यविग्रहाय नमः। ३४०

ओं विधात्रे नमः। सच्चिदानन्दाय। सर्वदुष्टनिवारकाय। उल्काय। महोल्काय। रक्तोल्काय। सहस्रोल्काय। शतार्चिषाय। बुद्धाय। बौद्धहराय । बौद्धजनमोहाय। बुधाश्रयाय। पूर्णबोधाय। पूर्णरूपाय। पूर्णकामाय। महाद्युतये। पूर्णमन्त्राय। पूर्णगात्राय। पूर्णाय। षाड्गुण्यविग्रहाय नमः। ३६०

ओं पूर्णनेमये नमः। पूर्णनाभये। पूर्णाशिने। पूर्णमानसाय। पूर्णसाराय । पूर्णशक्तये। रङ्गसेविने। रणप्रियाय। पूरिताशाय। अरिष्टतातये। पूर्णार्थाय । पूर्णभूषणाय। पद्मगर्भाय। पारिजाताय। परामित्राय। शराकृतये। भूभृद्वपुषे। पुण्यमूर्तये। भूभृतां पतये। आशुगाय नमः। ३८०

भाग्योदयाय नमः। भक्तवश्याय। गिरिजावल्लभप्रियाय। गविष्ठाय । गजमानिने। गमनागमनप्रियाय। ब्रह्मचारिणे। बन्धुमानिने ।

सुप्रतीकाय । त्रिविक्रमाय । शङ्कराभीष्टदाय । भव्याय । साचिव्याय । सव्यलक्षणाय । महाहंसाय । सुखकराय । नाभागतनयार्चिताय । कोटिसूर्यप्रभाय । दीप्तये । विद्युत्कोटिसमप्रभाय नमः ॥ ४००

वज्रकल्पाय नमः । वज्रसाराय । वज्रनिर्घातनिःस्वनाय । गिरीशमानदाय । मान्याय । नारायणकरालयाय । अनिरुद्धाय । परामर्षिणे । उपेन्द्राय । पूर्णविग्रहाय । आयुधेशाय । शतारिघ्नाय । शमनाय । शतसैनिकाय । सर्वासुरवधोद्युक्ताय । सूर्यदुर्मानभेदकाय । राहुविप्लोषकारिणे । काशीनगरदाहकाय । पीयूषांशवे । परस्मै ज्योतिषे नमः ॥ ४२०

ओं संपूर्णाय नमः । क्रतुभुक्प्रियाय । मान्धातृवरदाय । शुद्धाय । हरसेव्याय । शचीष्टदाय । सहिष्णवे । फलभुजे । वीराय । लोकभृते । लोकनायकाय । दुर्वासमुनिदर्पघ्नाय । जयदाय । विजयप्रियाय । सुराधीशाय । असुरारातये । गोविन्दकरभूषणाय । रथरूपिणे । रथाधीशाय । कालचक्राय नमः । ४४०

ओं कृपानिधये नमः । चक्ररूपधराय । विष्णवे । स्थूलाय । सूक्ष्माय । शिखिप्रभाय । शरणागतसन्त्रात्रे । वेतालारये । महाबलाय । ज्ञानदाय । वाक्पतये । मानिने । महावेगाय । महामणये । विद्युत्केशाय । विहारेशाय । पद्मयोनये । चतुर्भुजाय । कामात्मने । कामदाय नमः ४६०

ओं कामिने नमः । कालनेमिशिरोहराय । शुभ्राय । शुचये । शुनासीराय । शुक्रमित्राय । शुभाननाय । वृषकायाय । वृषारातये । वृषभेन्द्राय । सुपूजिताय । विश्वम्भराय । वीतिहोत्राय । वीर्याय । विश्वजनप्रियाय । विश्वकृते । विश्वपाय । विश्वहर्त्रे । साहसकर्मकृते । बाणबाहुहराय नमः । ४८०

ओं ज्योतिषे नमः। परात्मने। शोकनाशनाय। विमलाधिपतये। पुण्याय। ज्ञात्रे। ज्ञेयाय। प्रकाशकाय। म्लेच्छप्रहारिणे। दुष्टघ्नाय। सूर्यमण्डलमध्यगाय। दिगम्बराय। वृषाद्रीशाय। विविधायुधरूपकाय। सत्वव्रते। सत्यवागीशाय। सत्यधर्मपरायणाय। रुद्रप्रीतिकराय। रुद्रवरदाय। रुग्विभेदकाय नमः। ५००

ओं नारायणाय। नक्रभेदिने। गजेन्द्रपरिमोक्षकाय। धर्मप्रियाय। षडाधाराय। वेदात्मने। गुणसागराय। गदामित्राय। पृथुभुजाय। रसातलविभेदकाय। तमोवैरये। महातेजसे। महाराजाय। महातपसे। समस्तारिहराय। शान्ताय। क्रूराय। योगेश्वरेश्वराय। स्थविराय। स्वर्णवर्णाङ्गाय नमः। ५२०

ओं शत्रुसैन्यविनाशकृते नमः। प्राज्ञाय। विश्वतनुत्रात्रे। श्रुतिस्मृतिमयाय। कृतिने। व्यक्ताव्यक्तस्वरूपाय। अंसाय। कालचक्राय। कलानिधये। महाद्युतये। अमेयात्मने। वज्रनेमये। प्रभानिधये। महास्फुलिङ्गधारार्चिषे। महायुद्धकृते। अच्युताय। कृतज्ञाय। सहनाय। वाग्मिने। ज्वालामालाविभूषकाय नमः। ५४०

ओं चतुर्मुखनुताय नमः। श्रीमते। भ्राजिष्णवे। भक्तवत्सलाय। चातुर्यगमनाय। चक्रिणे। चतुर्वर्गप्रदायकाय। विचित्रमाल्याभरणाय। तीक्ष्णधाराय। सुरार्चिताय। युगकृते। युगपालाय। युगसन्धये। युगान्तकृते। सुतीक्ष्णारगणाय। गम्याय। बलिध्वंसिने। त्रिलोकपाय। त्रिणेत्राय। त्रिजगद्वन्द्याय नमः। ५६०

ओं तृणीकृतमहासुराय नमः। त्रिकालज्ञाय। त्रिलोकज्ञाय। त्रिनाभये। त्रिजगत्प्रभवे। सर्वमन्त्रमयाय। मन्त्राय। सर्वशत्रुनिबर्हणाय। सर्वगाय। सर्वविदे। सौम्याय। सर्वलोकहितङ्कराय। आदिमूलाय। सद्गुणाढ्याय। वरेण्याय। त्रिगुणात्मकाय। ध्यानगम्याय। कल्मषघ्नाय। कलिगर्वप्रभेदकाय। कमनीयतनुत्राणाय नमः। ५८०

ओं कुण्डलिने नमः । मण्डितानननाय । सुकुण्ठीकृतचण्डेशाय । सुसंत्रस्तषडानननाय । विषादीकृतविघ्नेशाय । विगतानन्दनन्दिकाय । मथितप्रमथव्यूहाय । प्रणतप्रमथाधिपाय । प्राणभिक्षाप्रदाय । अनन्ताय । लोकसाक्षिणे । महास्वनाय । मेधाविने । शाश्वताय । अक्रूराय । क्रूरकर्मणे । अपराजिताय । अरिणे । धृष्टाय । अप्रमेयात्मने नमः । ६००

ओं सुन्दराय नमः । शत्रुतापनाय । योगयोगीश्वराधीशाय । भक्ताभीष्टप्रपूरकाय । सर्वकामप्रदाय । अचिन्त्याय । शुभाङ्गाय । कुलवर्धनाय । निर्विकाराय । अनन्तरूपाय । नरनारायणप्रियाय । मन्त्रयन्त्रस्वरूपात्मने । परमन्त्रप्रभेदकाय । भूतवेतालविध्वंसिने । चण्डकूश्माण्डखण्डनाय । शकलीकृतमारीचाय । भैरवग्रहभेदकाय । चूर्णीकृतमहाभूताय । कबलीकृतदुर्ग्रहाय । सुदुर्ग्रहाय नमः । ६२०

ओं जम्भभेदिने नमः । सूचीमुखनिषूदनाय । वृकोदरबलोद्धर्त्रे । पुरन्दरबलानुगाय । अप्रमेयबलाय । स्वामिने । भक्तप्रीतिविवर्धनाय । महाभूतेश्वराय । शूराय । नित्याय । शारदविग्रहाय । धर्माध्यक्षाय । विधर्मघ्नाय । सुधर्मस्थापकाय । शिवाय । विधूमज्वलनाय । भानवे । भानुमते । भास्वतां पतये । जगन्मोहनपाटीराय नमः । ६४०

ओं सर्वोपद्रवशोधकाय नमः । कुलिशावरणाय । ज्वालामृताय । सौभाग्यवर्धनाय । ग्रहप्रध्वंसकाय । स्वात्मरक्षकाय । धारणात्मकाय । सन्तापनाय । वज्रसाराय । सुमेधामृतसागराय । सन्तानपञ्जराय । बाणताटङ्काय । वज्रमालिकाय । मेखलाग्निशिखाय । वज्रपञ्जराय । ससुरांकुशाय । सर्वरोगप्रशमनाय । गान्धर्वशिशिखाकृतये । प्रमोहमण्डलाय । भूतग्रहशृङ्खलकर्मकृते नमः । ६६०

ओं कलावृताय । महाशङ्कुदारणाय । शल्यचन्द्रिकाय । चेतनोत्तारकाय । शल्यक्षुद्रोन्मूलनतत्पराय । बन्धनावरणाय ।

शल्यकृन्तनाय । वज्रकीलकाय । प्रतीकबन्धनाय । ज्वालामण्डलाय । शस्त्रदारकाय । इन्द्राक्षिमालिकाय । कृत्यादण्डाय । चित्तप्रभेदकाय । ग्रहवागुरिकाय । सर्वबन्धनाय । वज्रभेदकाय । लघुसन्तानसंकल्पाय । बद्धग्रहविमोचनाय । मौलिकाञ्जनसन्धात्रे नमः । ६८०

ओं विपक्षमतभेदकाय नमः । दिग्बन्धनकराय । सूचीमुखाग्नये । चित्तबन्धकाय । चोराग्निमण्डलाकाराय । परकङ्कालमर्दनाय । तान्त्रिकाय । शत्रुवंशघ्नाय । नानानिगलमोचकाय । समस्तलोकसारङ्गाय । सुमहाविषदूषणाय । सुमहामेरुकोदण्डाय । सर्ववश्यकरेश्वराय । निखिलाकर्षणपटवे । सर्वसम्मोहकर्मकृते । संस्तम्भनकराय । सर्वभूतोच्चाटनतत्पराय । यक्षरक्षोगणध्वंसिने । महाकृत्याप्रदाहकाय । अहितामयकारिणे नमः । ७००

ओं द्विषन्मारणकारकाय नमः । एकायनगतामित्रविद्वेषणपरायणाय । सर्वार्थसिद्धिदाय । दात्रे । विधात्रे । विश्वपालकाय । विरूपाक्षाय । महावक्षसे । वरिष्ठाय । माधवप्रियाय । अमित्रकर्शनाय । शान्ताय । प्रशान्ताय । प्रणतार्तिघ्ने । रमणीयाय । रणोत्साहाय । रक्ताक्षाय । रणपण्डिताय । रणान्तकृते । रथाकाराय नमः । ७२०

ओं रथाङ्गाय नमः । रविपूजिताय । वीरघ्ने । विविधाकाराय । वरुणाराधिताय । वशिने । सर्वशत्रुवधाकांक्षिणे । शक्तिमते । भक्तमानदाय । सर्वलोकधराय । पुण्याय । पुरुषाय । पुरुषोत्तमाय । पुराणाय । पुण्डरीकाक्षाय । परमर्मप्रभेदकाय । वीरासनगताय । वर्मिणे । सर्वाधाराय । निरङ्कुशाय नमः । ७४०

ओं जगद्रक्षाय नमः । जगन्मूर्तये । जगदानन्दवर्धनाय । शारदाय । शकटारातये । शङ्कराय । शकटाकृतये । विरक्ताय । रक्तवर्णाढ्याय । रामसायकरूपभृते । महावराहदंष्ट्रात्मने । नृसिंहनखरात्मकाय ।

समदृङ्मोक्षदाय। वन्द्याय। विहारिणे। वीतकल्मषाय। गम्भीराय। गर्भगाय । गोप्त्रे। गभस्तिने नमः। ७६०

ओं गुह्यकाय नमः। गुरवे। श्रीधराय। श्रीरताय। श्रान्ताय। शत्रुघ्नाय । शत्रुगोचराय। पुराणाय। विततायं। वीराय। पवित्राय। चरणाह्वयाय। महावीराय। महावीर्याय। महाबलपराक्रमाय। सुविग्रहाय । विग्रहघ्नाय। सुमानिने। मानदायकाय। मायिने नमः। ७८०

ओं मायापहाय नमः। मन्त्रिणे। मान्याय। मानविवर्धनाय। शत्रुसंहारकाय। शूराय। शुक्रारये। शङ्करार्चिताय। सर्वाधाराय। परस्मै ज्योतिषे । प्राणाय। प्राणभृते। अच्युताय। चन्द्रधाम्ने। अप्रतिद्वन्द्वाय । परमात्मने। सुदुर्गमाय। विशुद्धात्मने। महातेजसे। पुण्यश्लोकाय नमः ॥ ८००

ओं पुराणविदे नमः। समस्तजगदाधाराय। विजेत्रे। विक्रमाय। क्रमाय । आदिदेवाय। ध्रुवाय। अदृश्याय। सात्विकाय। प्रीतिवर्धनाय। सर्वलोकाश्रयाय। सेव्याय। सर्वात्मने। वंशवर्धनाय। दुराधर्षाय। प्रकाशात्मने । सर्वदृशे। सर्वविदे। समाय। सद्गतये नमः। ८२०

ओं सत्वसंपन्नाय नमः। नित्याय। संकल्पकल्पकाय। वर्णिने। वाचस्पतये । वाग्मिने। महाशक्तये। कलानिधये। अन्तरिक्षगतये। कल्याय । कलिकालुष्यमोचनाय। सत्यधर्माय। प्रसन्नात्मने। प्रकृष्टाय। व्योमवाहनाय। शितधाराय। शिखिने। रौद्राय। भद्राय। रुद्रसुपूजिताय नमः। ८४०

ओं दरीमुखारये नमः। जम्भघ्नाय। वीरघ्ने। वासवप्रियाय। दुस्तराय । सुदुरारोहाय। दुर्ज्ञेयाय। दुष्टनिग्रहाय। भूतावासाय। भूतहन्त्रे । भूतेशाय । भूतभावनाय। भावज्ञाय। भवरोगघ्नाय। मनोवेगिने। महाभुजाय। सर्वदेवमयाय। कान्ताय। स्मृतिमते। सर्वपावनाय नमः। ८६०

ओं नीतिमते नमः। सर्वजिते। सौम्याय। महर्षये। अपराजिताय । रुद्राम्बरीषवरदाय । जितमायाय । पुरातनाय । अध्यात्मनिलयाय । भोक्त्रे । संपूर्णाय । सर्वकामदाय । सत्याय । अक्षराय । गभीरात्मने । विश्वभर्त्रे। मरीचिमते । निरञ्जनाय । जितप्रांशवे । अग्निगर्भाय नमः । ८८०

ओं अग्निगोचराय नमः। सर्वजिते। संभवाय। विष्णवे। पूज्याय। मन्त्रविदग्रियाय । शतावर्ताय । कलानाथाय । कालाय । कालमयाय । हरये । अरूपाय । रूपसंपन्नाय । विश्वरूपाय । विरूपकृते । स्वामिने । आत्मने। समरश्लाघिने। सुव्रताय। विजयान्विताय नमः। ९००

ओं चण्डघ्नाय नमः । चण्डकिरणाय । चतुराय । चारणप्रियाय । पुण्यकीर्तये । परामर्षिणे । नृसिंहाय । नाभिमध्यगाय । यज्ञात्मने । यज्ञसंकल्पाय । यज्ञकेतवे । महेश्वराय । जितारये । यज्ञनिलयाय । शरण्याय । शकटाकृतये । उत्तमाय । अनुत्तमाय । अनङ्गाय । साङ्गाय नमः । ९२०

ओं सर्वाङ्गशोभनाय नमः। कालाग्नये। कालनेमिघ्नाय। कामिने। कारुण्यसागराय । रमानन्दकराय । रामाय । रजनीशान्तरस्थिताय । संवर्ताय। समरान्वेषिणे। द्विषत्प्राणपरिग्रहाय। महाभिमानिने। सन्धात्रे । सर्वाधीशाय । महागुरवे । सिद्धाय । सर्वजगद्योनये । सिद्धार्थाय । सर्वसिद्धिदाय। चतुर्वेदमयाय नमः। ९४०

ओं शास्त्रे नमः । सर्वशास्त्रविशारदाय । तिरस्कृतार्कतेजस्काय । भास्करराधिताय । शुभाय । व्यापिने । विश्वंभराय । व्यग्राय । स्वयंज्योतिषे । अनन्तकृते । जयशीलाय । जयाकाङ्क्षिणे । जातवेदसे । जयप्रदाय। कवये। कल्याणदाय। काम्याय। मोक्षदाय। मोहनाकृतये। कुङ्कुमारुणसर्वाङ्गाय नमः । ९६०

ओं कमलाक्षाय नमः । कवीश्वराय । सुविक्रमाय । निष्कलङ्काय । विष्वक्सेनाय । विहारकृते । कदम्बासुरविध्वंसिने । केतनग्रहदाहकाय । जुगुप्सघ्नाय । तीक्ष्णधाराय । वैकुण्ठभुजवासकृते । सारज्ञाय । करुणामूर्तये । वैष्णवाय । विष्णुभक्तिदाय । सुकृतज्ञाय । महोदाराय । दुष्कृतघ्नाय । सुविग्रहाय । सर्वाभीष्टप्रदाय नम । ९८०

ओं अनन्ताय नमः । नित्यानन्दगुणाकराय । चक्रिणे । कुन्तधराय । खड्गिने । परश्वथधराय । अग्निभृते । धृताङ्कुशाय । दण्डधराय । शक्तिहस्ताय । सुशङ्खभृते । धन्विने । धृतमहापाशाय । हलिने । मुसलभूषणाय । गदायुधधराय । वज्रिणे । महाशूललसद्भुजाय । समस्तायुधसंपूर्णाय । सुदर्शनमहाप्रभवे नमः ॥ १०००

ओं सर्वाभीष्टफलप्रदाय श्रीविजयलक्ष्मी समेत श्री चक्रराजपरब्रह्मणे नमः ।

## सुदर्शनाष्टोत्तरशतनामस्तोत्रम्

सुदर्शनश्चक्रराजस्तेजोव्यूहो महाद्युतिः ।
सहस्रबाहुर्दीप्ताङ्गो ह्यरुणाक्षः प्रतापवान् ॥ १

अनेकादित्यसङ्काशः प्रोध्वर्ज्वालाभिरञ्जितः ।
सौदामिनीसहस्राभो मणिकुण्डलशोभितः ॥ २

पञ्चभूतमनो रूपः षट्कोणान्तर संस्थितः ।
हरान्तःकरणोद्भूत रोषभीषणविग्रहः ॥ ३

हरिपाणिलसत्पद्मविहारारमनोहरः ।
श्राकार रूपः सर्वज्ञः सर्वलोकार्चितप्रभुः ॥ ४

चतुर्दशसहस्रारश्चतुर्वेदमयोऽनलः ।
भक्तचान्द्रमसज्योतिर्भवरोग विनाशकः ॥ ५

रेफात्मको मकारात्मा रक्षोऽसृग्भूषिताङ्गकः ।
सर्वदैत्यग्रैवनाल विभेदन महागजः ॥ ६

भीमदंष्ट्रोज्ज्वलाकारो भीमकर्मा त्रिलोचनः ।
नीलवर्त्मा नित्यसुखो निर्मलश्रीर्निरञ्जनः ॥ ७

रक्तमाल्यांबरधरो रक्तचन्दन रूपितः ।
रजोगुणाकृतिः शूरो रक्षःकुलयमोपमः ॥ ८

नित्यक्षेमकरः प्राज्ञः पाषण्डजनखण्डनः ।
नारायणाज्ञानुवर्ती नैगमार्थप्रकाशकः ॥ ९

बलिनन्दन दोर्दण्ड खण्डनो विजयाकृतिः ।
मित्रभावी सर्वमयः तमोविध्वंसनोऽपि च ॥ १०

रजस्सत्वतमोद्वर्ती त्रिगुणात्मा त्रिलोकधृत् ।
हरिमायागुणोपेतः अव्ययोऽक्षिस्वरूपभाक् ॥ ११

परमात्मा परंज्योतिः पञ्चकृत्यपरायणः ।
ज्ञान शक्ति बलैश्वर्यवीर्यतेजःप्रभामयः ॥ १२

सदसत्परमः पूर्णो वाङ्मयो वरदोऽच्युतः ।
जीवो हरिः हंस रूपः पञ्चाशत्पीठरूपकः ॥ १३

मातृकामण्डलाध्यक्षो मधुध्वंसी मनोमयः ।
बुद्धिरूपश्चित्तसाक्षी सारो हंसाक्षरद्वयः ॥ १४

मन्त्रयन्त्रप्रभावश्च मन्त्रयन्त्रमयो विभुः ।
स्रष्टा क्रियास्पदः शुद्धो मन्ता भोक्ता त्रिविक्रमः ।। १५

निरायुधो ह्यसंरंभः सर्वायुध समन्वितः ।
ओंकाररूपः पूर्णात्मा आंकारात्साध्यभञ्जनः ।। १६

झंकारो वाक्प्रदो वाग्मी श्रींकारैश्वर्य वर्धनः ।
क्लींकारमोहनाकारो हुं फट्विक्षोभणाकृतिः ।। १७

इन्द्रार्चितमनोवेगो धरणीभारनाशकः ।
वीराराध्यो विश्वरूपो वैष्णवो विष्णुभक्तिदः ।। १८

सत्यव्रतः सत्यपरः सत्यधर्मानुषञ्जकः ।
नारायण कृपाव्यूहतेजश्चक्रः सुदर्शनः ।। १९

## सुदर्शनाष्टोत्तरशतनामावलिः

ओं सुदर्शनाय नमः । चक्रराजाय । तेजोव्यूहाय । महाद्युतये । सहस्रबाहवे । दीप्ताङ्गाय । अरुणाक्षाय । प्रतापवते । अनेकादित्य सङ्काशाय । प्रोर्ध्वज्वालाभिरञ्जिताय । सौदामिनी सहस्राभाय । मणिकुण्डल शोभिताय । पञ्चभूतमनोरूपाय । षट्कोणान्तरसंस्थिताय । हरान्तःकरणोद्भूतरोषभीषणविग्रहाय । हरिपाणिलसत्पद्मविहारार मनोहराय । श्राकाररूपाय । सर्वज्ञाय । सर्वलोकार्चितप्रभवे । चतुर्दशसहस्राराय नमः ।। २०

चतुर्वेदमयाय नमः । अनलाय । भक्तचान्द्रमसज्योतिषे । भवरोगविनाशकाय । रेफात्मकाय । मकारात्मने । रक्षोऽसृ ग्रूषिताङ्गकाय । सर्वदैत्य ग्रैवनाल विभेदनमहागजाय । भीमदंष्ट्राय । उज्ज्वलाकाराय । भीमकर्मणे । त्रिलोचनाय । नीलवर्त्मने । नित्यसुखाय । निर्मलश्रिये । निरञ्जनाय ।

रक्तमाल्यांबरधराय । रक्तचन्दनरूषिताय । रजोगुणाकृतये । शूराय नमः ।। ४०

रक्षःकुलयमोपमाय नमः । नित्यक्षेमकराय । प्राज्ञाय । पाषण्डजन-खण्डनाय । नारायणाज्ञानुवर्तिने । नैगमार्थप्रकाशकाय । बलिनन्दनदोर्दण्ड खण्डनाय । विजयाकृतये । मित्रभाविने । सर्वमयाय । तमोविध्वंसनाय । रजस्सत्वतमोद्वर्तिने । त्रिगुणात्मने । त्रिलोकधृते । हरिमायागुणोपेताय । अव्ययाय । अक्षिस्वरूपभाजे । परमात्मने । परस्मै ज्योतिषे । पञ्चकृत्यपरायणाय नमः ।। ६०

ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभामयाय नमः । सदसत्परमाय । पूर्णाय । वाङ्मयाय । वरदाय । अच्युताय । जीवाय । हरये । हंसरूपाय । पञ्चाशत्पीठरूपकाय । मातृकामण्डलाध्यक्षाय । मधुध्वंसिने । मनोमयाय । बुद्धिरूपाय । चित्तसाक्षिणे । साराय । हंसाक्षरद्वयाय । मन्त्रयन्त्रप्रभावाय । मन्त्रयन्त्रमयाय । विभवे नमः ।। ८०

स्रष्ट्रे नमः । क्रियास्पदाय । शुद्धाय । मन्त्रे । भोक्त्रे । त्रिविक्रमाय । निरायुधाय । असंरंभाय । सर्वायुधसमन्विताय । ओंकाररूपाय । पूर्णात्मने । आंकारात्साध्यभञ्जनाय । झंकाराय । वाक्प्रदाय । वाग्मिने । हुं फट् विक्षोभणाकृतये । इन्द्रार्चितमनोवेगाय । धरणीभारनाशकाय नमः ।। १००

वीराराध्याय नमः । विश्वरूपाय । वैष्णवाय । विष्णुभक्तिदाय । सत्यव्रताय । सत्यपराय । सत्यधर्मानुषञ्जकाय । नारायण कृपाव्यूह-तेजश्चक्राय सुदर्शनाय नमः ।। १०८

॥श्रीः॥

# श्रीवराहसहस्रनामस्तोत्रम्

(स्कन्दपुराणतः)

शङ्कर उवाच-

यः पूजयेत्परात्मानं श्रीमुष्णेशं महाप्रभुम्।
वराहस्य सहस्रेण नाम्नां पुष्पसहस्रकैः ॥ १ ॥

हतकण्टकसाम्राज्यं लभते नात्र संशयः।
पार्वत्युवाच-
किं तन्नामसहस्रं मे येन साम्राज्यमाप्नुयात्॥ २ ॥

ब्रूहि शङ्कर तत्प्रीत्या वराहस्य महात्मनः।
श्रुत्वा वराहमाहात्म्यं न तृप्तिर्जायते क्वचित्॥ ३ ॥

को नु तृप्येत तनुभृद्गुणसारविदां वर।
शङ्कर उवाच-
शृणु देवि प्रवक्ष्यामि पवित्रं मङ्गलं परम्॥ ४ ॥

धन्यं यशस्यमायुष्यं गोप्याद्गोप्यतरं महत्।
इदं पुरा न कस्यापि प्रोक्तं गोप्यं तवापि च ॥ ५ ॥

तथाऽपि च प्रवक्ष्यामि मदङ्गार्धशरीरिणि।
सदाशिव ऋषिस्तस्य वराहो देवता स्मृतः ॥ ६ ॥

छन्दोऽनुष्टुब् विश्वनेता कीलकं च शराग्रभृत्।
ह्रीं बीजं अस्त्रं क्लींकारः कवचं श्रीमिहोच्यते ॥ ७ ॥

विश्वात्मा परमो मन्त्रो मन्त्रराजमुदीरयेत्।
हुंकारं हृदये न्यस्य वराहायेति मूर्धनि ॥ ८ ॥

भूर्भुवःस्वः शिखायां च नेत्रयोर्भूपतिं न्यसेत्।
सर्वज्ञाय नमोऽस्त्रं च श्रीं ह्रीं क्लीं हुं च भूमपि॥ ९॥

हां हीं हूं हैं हौं ह इति स्वीयाङ्गुष्ठद्वयादिकः।
एवं स्वाङ्गकृतन्यासो मन्त्रमेतमुदीरयेत्॥ १०॥

नमः श्वेतवराहाय नमस्ते परमात्मने।
लक्ष्मीनाथाय नाथाय श्रीमुष्ण ब्रह्मणे नमः॥ ११॥

ओं श्रीवराहो भूवराहः परं ज्योतिः परात्परः।
परमः पुरुषः सिद्धो विभुर्व्योमचरो बली॥ १२॥

अद्वितीयः परं ब्रह्म सच्चिदानन्दविग्रहः।
निर्द्वन्द्वो निरहङ्कारो निर्मायो निश्चलोऽमलः॥ १३॥

विशिखो विश्वरूपश्च विश्वदृग्विश्वभावनः।
विश्वात्मा विश्वनेता च विमलो वीर्यवर्धनः॥ १४॥

विश्वकर्मा विनोदी च विश्वेशो विश्वमङ्गलः।
विश्वो वसुन्धरानाथो वसुरेता विरोधहृत्॥ १५॥

हिरण्यगर्भो हर्यश्वो दैत्यारिर्हरिसेवितः।
महातपा महादर्शो मनोज्ञो नैकसाधनः॥ १६॥

सर्वात्मा सर्वविख्यातः सर्वसाक्षी सतां पतिः।
सर्वगः सर्वभूतात्मा सर्वदोषविवर्जितः॥ १७॥

सर्वभूतहितोऽसङ्गः सत्यः सत्यव्यवस्थितः।
सत्यकर्मा सत्यपतिः सर्वसत्यप्रियो मतः॥ १८॥

आधिव्याधिभियो हर्ता मृगाङ्गो नियमप्रियः।
बलवीरस्तपः श्रेष्ठो गुणकर्ता गुणी बली॥ १९॥

अनन्तः प्रथमो मन्त्रः सर्वभावविदव्ययः ।
सहस्रनामा चानन्तोऽनन्तरूपो रमेश्वरः ॥ २० ॥

अगाधनिलयोऽपारो निराकारो निरायुधः ।
अमोघदृगमेयात्मा वेदवेद्यो विशां पतिः ॥ २१ ॥

विहृतिर्विभवो भव्यो भवहीनो भवान्तकः ।
भक्तप्रियः पवित्रांघ्रिः सुनासः पवनार्चितः ॥ २२ ॥

भजनीयगुणोऽदृश्यो भद्रो भद्रयशा हरिः ।
वेदान्तकृद्वेदवन्द्यो वेदाध्ययनतत्परः ॥ २३ ॥

वेदगोप्ता धर्मगोप्ता वेदमार्गप्रवर्तकः ।
वेदान्तवेद्यो वेदात्मा वेदातीतो जगत्प्रियः ॥ २४ ॥

जनार्दनो जनाध्यक्षो जगदीशो जनेश्वरः ।
सहस्रबाहुः सत्यात्मा हेमाङ्गो हेमभूषणः ॥ २५ ॥

हरिद(ता)श्वप्रियो नित्यो हरिः पूर्णो हलायुधः ।
अंबुजाक्षोऽम्बुजाधारो निर्जरश्च निरङ्कुशः ॥ २६ ॥

निष्ठुरो नित्यसन्तोषो नित्यानन्दपदप्रदः ।
निर्जरेशो निरालंबो निर्गुणोऽपि गुणान्वितः ॥ २७ ॥

महामायो महावीर्यो महातेजा मदोद्धतः ।
मनोऽभिमानी मायावी मानदो मानल(र)क्षणः ॥ २८ ॥

मन्दो मानी मनःकल्पो महाकल्पो महेश्वरः ।
मायापतिर्मानपतिर्मनसः पतिरीश्वरः ॥ २९ ॥

अक्षोभ्यो बाह्य आनन्दी अनिर्देश्योऽपराजितः ।
अजोऽनन्तोऽप्रमेयश्च सदानन्दो जनप्रियः ॥ ३० ॥

अनन्तगुणगंभीर उग्रकृत्परिवेष्टनः ।
जितेन्द्रियो जितक्रोधो जितामित्रो जयोऽजयः ॥ ३१ ॥

सर्वारिष्टार्तिहा सर्वहृदन्तरनिवासकः ।
अन्तरात्मा परात्मा च सर्वात्मा सर्वकारकः ॥ ३२ ॥

गुरुः कविः किटिः कान्तः कंजाक्षः खगवाहनः ।
सुशर्मा वरदः शार्ङ्गी सुदासाभीष्टदः प्रभुः ॥ ३३ ॥

झिल्लिकातनयःप्रेषी झिल्लिकामुक्तिदायकः ।
गुणजित्कथितः कालः क्रोडः कोलः श्रमापहः ॥ ३४ ॥

किटिः कृपापरः स्वामी सर्वदृक्सर्वगोचरः ।
योगाचार्यो मतो वस्तु ब्रह्मण्यो वेदसत्तमः ॥ ३५ ॥

महालंबोष्ठकश्चैव महादेवो मनोरमः ।
ऊर्ध्वबाहुरिभस्थूलः श्येनः सेनापतिः खनिः ॥ ३६ ॥

दीर्घायुः शङ्करः केशी सुतीर्थो मेघनिःस्वनः ।
अहोरात्रः सूक्तवाकः सुहृन्मान्यः सुवर्चलः ॥ ३७ ॥

सारभृत्सर्वसारश्च सर्वग्र(ग्रा)हः सदागतिः ।
सूर्यश्चन्द्रः कुजो ज्ञश्च देवमन्त्री भृगुः शनिः ॥ ३८ ॥

राहुः केतुर्ग्रहपतिर्यज्ञभृद्यज्ञसाधनः ।
सहस्रपात्सहस्राक्षः सोमकान्तः सुधाकरः ॥ ३९ ॥

यज्ञो यज्ञपतिर्याजी यज्ञांगो यज्ञवाहनः ।
यज्ञान्तकृद्यज्ञगुह्यो यज्ञकृद्यज्ञसाधकः ॥ ४० ॥

इडागर्भः स्रवत्कर्णो यज्ञकर्मफलप्रदः ।
गोपतिः श्रीपतिर्घोणस्त्रिकालज्ञः शुचिश्रवाः ॥ ४१ ॥

शिवः शिवतरः शूरः शिवप्रेष्ठः शिवार्चितः ।
शुद्धसत्वः सुरार्तिघ्नः क्षेत्रज्ञोऽक्षर आदिकृत् ॥ ४२ ॥

शंखी चक्री गदी खड्गी पद्मी चण्डपराक्रमः ।
चण्डः कोलाहलः शार्ङ्गी स्वयंभूरग्र्यभुग्विभुः ॥ ४३ ॥

सदाचारः सदारंभो दुराचारनिवर्तकः ।
ज्ञानी ज्ञानप्रियोऽवज्ञो ज्ञानदोऽज्ञानदो यमी ॥ ४४ ॥

लयोदकविहारी च सामगानप्रियो गतिः ।
यज्ञमूर्तिर्ब्रह्मचारी यज्वा यज्ञप्रियो हरिः ॥ ४५ ॥

सूत्रकृच्छ्लोकसूत्रश्च चतुर्मूर्तिश्चतुर्भुजः ।
त्रयीमूर्तिस्त्रिलोकेशस्त्रिधामा कौस्तुभोज्ज्वलः ॥ ४६ ॥

श्रीवत्सलाञ्छनः श्रीमाञ्श्रीधरो भूधरोऽर्भकः ।
वरुणो वारुणो वृक्षो वृषभो वर्धनो वरः ॥ ४७ ॥

युगादिकृद्युगावर्तः पक्षो मास ऋतुर्युगः ।
वत्सरो वत्सलो वेदः शिपिविष्टः सनातनः ॥ ४८ ॥

इन्द्रत्राता भयत्राता क्षुद्रकृत्क्षुद्रनाशनः ।
महाहनुर्महाघोरो महादीप्तिर्महाव्रतः ॥ ४९ ॥

महापादो महाकालो महाकायो महाबलः ।
गंभीरघोषो गंभीरो गभीरो घुर्घुरस्वनः ॥ ५० ॥

ओंकारगर्भो न्यग्रोधो वषट्कारो हुताशनः ।
भूयान्बहुमतो भूमा विश्वकर्मा विशांपतिः ॥ ५१ ॥

व्यवसायोऽघमर्षश्च विदितोऽभ्युत्थितो महः ।
बलभिद्बलवान्दण्डी वक्रदंष्ट्रो वशो वशी ॥ ५२ ॥

सिद्धः सिद्धिप्रदः साध्यः सिद्धसंकल्प ऊर्जवान्।
धृतारिरसहायश्च सुमुखो बडवामुखः ॥ ५३ ॥

वसुर्वसुमनाः सामशरीरो वसुधाप्रदः ।
पीतांबरी वासुदेवो वामनो ज्ञानपंजरः ॥ ५४ ॥

नित्यतृप्तो निराधारो निःसङ्गो निर्जितामरः ।
नित्यमुक्तो नित्यवन्द्यो मुक्तवन्द्यो मुरान्तकः ॥ ५५ ॥

बन्धको मोचको रुद्रो युद्धसेनाविमर्दनः ।
प्रसारणो निषेधात्मा भिक्षुर्भिक्षुप्रियो ऋजुः ॥ ५६ ॥

महाहंसो भिक्षुरूपी महाकन्दो महाशनः ।
मनोजवः कालकालः कालमृत्युः सभाजितः ॥ ५७ ॥

प्रसन्नो निर्विभावश्च भूविदारी दुरासदः ।
वसनो वासवो विश्ववासवो वासवप्रियः ॥ ५८ ॥

सिद्धयोगी सिद्धकामः सिद्धिकामः शुभार्थवित्।
अजेयो विजयीन्द्रश्च विशेषज्ञो विभावसुः ॥ ५९ ॥

ईक्षामात्रजगत्स्रष्टा भ्रूभङ्गनियताखिलः ।
महाध्वगो दिगीशेशो मुनिमान्यो मुनीश्वरः ॥ ६० ॥

महाकायो वज्रकायो वरदो वायुवाहनः ।
वदान्यो वज्रभेदी च मधुहृत्कलिदोषहा ॥ ६१ ॥

वागीश्वरो वाजसनो वानस्पत्यो मनोरमः ।
सुब्रह्मण्यो ब्रह्मधनो ब्रह्मण्यो ब्रह्मवर्धनः ॥ ६२ ॥

विष्टंभी विश्वहस्तश्च विश्वाहो विश्वतोमुखः ।
अतुलो वसुवेगोऽर्कः सम्राट् साम्राज्यदायकः ॥ ६३ ॥

शक्तिप्रियः शक्तिरूपो मारशक्तिविभंजनः ।
स्वतन्त्रः सर्वतन्त्रज्ञो मीमांसितगुणाकरः ॥ ६४ ॥

अनिर्देश्यवपुः श्रीशो नित्यश्रीर्नित्यमङ्गलः ।
नित्योत्सवो निजानन्दो नित्यभेदी निराश्रयः ॥ ६५ ॥

अन्तश्चरो भवाधीशो ब्रह्मयोगी कलाप्रियः ।
गोब्राह्मणहिताचारो जगद्धितमहाव्रतः ॥ ६६ ॥

दुर्ध्येयश्च सदाध्येयो दुर्वासादिविबोधनः ।
दुरापो दुर्धियां गोप्यो दूराद्दूरः समीपगः ॥ ६७ ॥

वृषाकपिः कपिः कार्यः कारणः कारणक्रमः ।
ज्योतिषां मथनज्योतिः ज्योतिश्चक्रप्रवर्तकः ॥ ६८ ॥

प्रथमो मध्यमस्तारः सुतीक्ष्णोदर्ककार्यवान् ।
सुरूपश्च सदावेत्ता सुमुखः सुजनप्रियः ॥ ६९ ॥

महाव्याकरणाचार्यः शिक्षाकल्पप्रवर्तकः ।
स्वच्छश्छन्दोमयः स्वेच्छास्वाहितार्थविनाशनः ॥ ७० ॥

साहसी सर्वहन्ता च संमतोऽनिन्दितोऽसकृत् ।
कामरूपः कामपालः सुतीर्थ्योऽथ क्षपाकरः ॥ ७१ ॥

ज्वाली विशालश्च परो वेदकृज्जनवर्धनः ।
वेद्यो वैद्यो महावेदी वीरहा विषमो महः ॥ ७२ ॥

ईतिभानुर्ग्रहश्चैव प्रग्रहो निग्रहोऽग्निहा ।
उत्सर्गः सन्निषेधश्च सुप्रतापः प्रतापधृत् ॥ ७३ ॥

सर्वायुधधरः शालः सुरूपः सप्रमोदनः ।
चतुष्किष्कुः सप्तपादः सिंहस्कन्धस्त्रिमेखलः ॥ ७४ ॥

सुधापानरतोऽरिघ्नः सुरमेड्यः सुलोचनः ।
तत्वविक्तत्वगोप्ता च परतत्वं प्रजागरः ॥ ७५ ॥

ईशान ईश्वरोऽध्यक्षो महामेरुरमोघदृक् ।
भेदप्रभेदवादी च स्वाद्वैतपरिनिष्ठितः ॥ ७६ ॥

भागहारी वंशकरो निमित्तस्थो निमित्तकृत् ।
नियन्ता नियमो यन्ता नन्दको नन्दिवर्धनः ॥ ७७ ॥

षड्विंशको महाविष्णु र्ब्रह्मज्ञो ब्रह्मतत्परः ।
वेदकृन्नाम चानन्तनामा शब्दातिगः कृपः ॥ ७८ ॥

दंभो दंभकरो दंभवंशो वंशकरो वरः ।
अजनिर्जनिकर्ता च सुराध्यक्षो युगान्तकः ॥ ७९ ॥

दर्भरोमा बुधाध्यक्षो मानुकूलो मदोद्धतः ।
शन्तनुः शङ्करः सूक्ष्मः प्रत्ययश्चण्डशासनः ॥ ८० ॥

वृत्तनासो महाग्रीवः कंबुग्रीवो महानृणः ।
वेदव्यासो देवभूतिरन्तरात्मा हृदालयः ॥ ८१ ॥

महाभागो महास्पर्शो महामात्रो महामनाः ।
महोदरो महोष्ठश्च महाजिह्वो महामुखः ॥ ८२ ॥

पुष्करस्तुंबुरुःखेटी स्थावरः स्थितिमत्तरः ।
श्वासायुधः समर्थश्च वेदार्थः सुसमाहितः ॥ ८३ ॥

वेदशीर्षः प्रकाशात्मा प्रमोदः सामगायनः ।
अन्तर्भाव्यो भावितात्मा महीदासो दिवस्पतिः ॥ ८४ ॥

महासुदर्शनो विद्वानुपहारप्रियोऽच्युतः ।
अनलो द्विशफो गुप्तः शोभनो निरवग्रहः ॥ ८५ ॥

भाषाकरो महाभर्गः सर्वदेशविभागकृत्।
कालकण्ठो महाकेशो लोमशः कालपूजितः ॥ ८६ ॥

आसेवनोऽवसानात्मा बुद्ध्यात्मा रक्तलोचनः ।
नारङ्गो नरकोद्धर्ता क्षेत्रपालो दुरिष्टहा ॥ ८७ ॥

हुंकारगर्भो दिग्वासाः ब्रह्मेन्द्राधिपतिर्बलः ।
वर्चस्वी ब्रह्मवदनः क्षत्रबाहुर्विदूरगः ॥ ८८ ॥

चतुर्थपाच्चतुष्पाच्च चतुर्वेदप्रवर्तकः ।
चातुर्होत्रकृदव्यक्तः सर्ववर्णविभागकृत्॥ ८९ ॥

महापतिर्गृहपतिर्विद्याधीशो विशांपतिः ।
अक्षरोऽधोक्षजोऽधूर्तो रक्षिता राक्षसान्तकृत्॥ ९० ॥

रजःसत्वतमोहन्ता कूटस्थः प्रकृतेः परः ।
तीर्थकृत्तीर्थवासी च तीर्थरूपो ह्यपां पतिः ॥ ९१ ॥

पुण्यबीजः पुराणर्षिः पवित्रः परमोत्सवः ।
शुद्धिकृच्छुद्धिदः शुद्धः शुद्धसत्वनिरूपकः ॥ ९२ ॥

सुप्रसन्नः शुभार्होऽथ शुभदित्सुः शुभप्रियः ।
यज्ञभागभुजां मुख्यो यक्षगानप्रियो बली ॥ ९३ ॥

समोऽथ मोदो मोदात्मा मोददो मोक्षदस्मृतिः ।
परायणः प्रसादश्च लोकबन्धुर्बृहस्पतिः ॥ ९४ ॥

लीलावतारो जननविहीनो जन्मनाशनः ।
महाभीमो महागर्तो महेष्वासो महोदयः ॥ ९५ ॥

अर्जुनो भासुरः प्रख्यो विदोषो विष्टरश्रवाः ।
सहस्रपात्सभाग्यश्च पुण्यपाको दुरव्ययः ॥ ९६ ॥

कृत्यहीनो महावाग्मी महापापविनिग्रहः ।
तेजोऽपहारी बलवान् सर्वदाऽरिविदूषकः ॥ ९७ ॥

कविः कण्ठगतिः कोष्ठो मणिमुक्ताजलाप्लुतः ।
अप्रमेयगतिः कृष्णो हंसश्चैव शुचिप्रियः ॥ ९८ ॥

विजयीन्द्रः सुरेन्द्रश्च वागिन्द्रो वाक्पतिः प्रभुः ।
तिरश्चीनगतिः शुक्लः सारग्रीवो धराधरः ॥ ९९ ॥

प्रभातः सर्वतोभद्रो महाजन्तुर्महौषधिः ।
प्राणेशो वर्धकस्तीव्रप्रवेशः पर्वतोपमः ॥ १०० ॥

सुधासिक्तः सदस्यस्थो राजराट् दण्डकान्तकः ।
ऊर्ध्वकेशोऽजमीढश्च पिप्पलादो बहुश्रवाः ॥ १०१ ॥

गन्धर्वोऽभ्युदितः केशी वीरपेशो विशारदः ।
हिरण्यवासाः स्तब्धाक्षो ब्रह्मलालितशैशवः ॥ १०२ ॥

पद्मगर्भो जंबुमाली सूर्यमण्डलमध्यगः ।
चन्द्रमण्डलमध्यस्थः करभागग्निसंश्रयः ॥ १०३ ॥

अजीगर्तः शाकलाग्र्यः सन्धानः सिंहविक्रमः ।
प्रभावात्मा जगत्कालः कालकालो बृहद्रथः ॥ १०४ ॥

साराङ्गो यतमान्यश्च सत्कृतिः शुचिमण्डलः ।
कुमारजिद्वनेचारी सप्तकन्यामनोरमः ॥ १०५ ॥

धूमकेतुर्महाकेतुः पक्षिकेतुः प्रजापतिः ।
ऊर्ध्वरेता बलोपायो भूतावर्तः सजङ्गमः ॥ १०६ ॥

रविर्वायुर्विधाता च सिद्धान्तो निश्चलोऽचलः ।
आस्थानकृदमेयात्माऽनुकूलश्चाधिको भुवः ॥ १०७ ॥

ह्रस्वः पितामहोऽनर्थः कालवीर्यो वृकोदरः ।
सहिष्णुः सहदेवश्च सर्वजिच्छत्रुतापनः ॥ १०८ ॥

पाञ्चरात्रपरो हंसी पञ्चभूतप्रवर्तकः ।
भूरिश्रवाः शिखण्डी च सुयज्ञः सत्यघोषणः ॥ १०९ ॥

प्रगाढः प्रवणो हारी प्रमाणं प्रणवो निधिः ।
महोपनिषदो वाक् च वेदनीडः किरीटधृत् ॥ ११० ॥

भवरोगभिषग्भावो भावसाध्यो भवातिगः ।
षड् धर्मवर्जितः केशी कार्यवित्कर्मगोचरः ॥ १११ ॥

यमविध्वंसनः पाशी यमिवर्गनिषेवितः ।
मतङ्गो मेचको मेध्यो मेधावी सर्वमेलकः ॥ ११२ ॥

मनोज्ञदृष्टिर्मारारिनिग्रहः कमलाकरः ।
नमद्गणेशो गोपीडः सन्तानः सन्ततिप्रदः ॥ ११३ ॥

बहुप्रदो बलाध्यक्षो भिन्नमर्यादभेदनः ।
अनिर्मुक्तश्चारुदेष्णः सत्याषाढः सुराधिपः ॥ ११४ ॥

आवेदनीयोऽवेद्यश्च तारणस्तरुणोऽरुणः ।
सर्वलक्षणलक्षण्यः सर्वलोकविलक्षणः ॥ ११५ ॥

सर्वदक्षः सुधाधीशः शरण्यः शान्तविग्रहः ।
रोहिणीशो वराहश्च व्यक्ताव्यक्तस्वरूपधृत् ॥ ११६ ॥

स्वर्गद्वारः सुखद्वारो मोक्षद्वारस्त्रिविष्टपः ।
अद्वितीयः केवलश्च कैवल्यपतिरर्हणः ॥ ११७ ॥

तालपक्षस्तालकरो यन्त्री तन्त्रविभेदनः ।
षड्रसः कुसुमास्त्रश्च सत्यमूलफलोदयः ॥ ११८ ॥

कला काष्ठा मुहूर्तश्च मणिबिम्बो जगद्घृणिः ।
अभयो रुद्रगीतश्च गुणजिद्गुणभेदनः ॥ ११९ ॥

देवासुरविनिर्माता देवासुरनियामकः ।
प्रारंभश्च विरामश्च साम्राज्याधिपतिः प्रभुः ॥ १२० ॥

पण्डितो गहनारंभो जीवनो जीवनप्रदः ।
रक्तदेवो देवमूलो वेदमूलो मनःप्रियः ॥ १२१ ॥

विरोचनः सुधाजातः स्वर्गाध्यक्षो महाकपिः ।
विराड्रूपः प्रजारूपः सर्वदेवशिखामणिः ॥ १२२ ॥

भगवान् सुमुखः स्वर्गो मंजुकेशः सुतुन्दिलः ।
वनमाली गन्धमाली मुक्तामाल्यचलोपमः ॥ १२३ ॥

मुक्तोऽसृप्यः सुहृद्भ्राता पिता माता परा गतिः ।
सत्वध्वनिः सदाबन्धुर्ब्रह्मरुद्राधिदैवतम् ॥ १२४ ॥

समात्मा सर्वदः सांख्यः सन्मार्गध्येयसत्पदः ।
ससङ्कल्पो विकल्पश्च कर्ता स्वादी तपोधनः ॥ १२५ ॥

विरजा विरजानाथः स्वच्छशृङ्गो दुरिष्टहा ।
घोणो बन्धुर्महाचेष्टः पुराणः पुष्करेक्षणः ॥ १२६ ॥

अहिर्बुध्न्यो मुनिर्विष्णुर्धर्मयूपस्तमोहरः ।
अग्राह्यः शाश्वतः कृष्णः प्रवरः पक्षिवाहनः ॥ १२७ ॥

कपिलः खपथिस्थश्च प्रद्युम्नोऽमितभोजनः ।
सङ्कर्षणो महावायुस्त्रिकालज्ञस्त्रिविक्रमः ॥ १२८

पूर्णप्रज्ञः सुधीर्हृष्टः प्रबुद्धः शमनः सदः ।
ब्रह्माण्डकोटिनिर्माता माधवो मधुसूदनः ॥ १२९ ॥

शश्वदेकप्रकारश्च कोटिब्रह्माण्डनायकः ।
शश्वद्भक्तपराधीनः शश्वदानन्ददायकः ॥ १३० ॥

सदानन्दः सदाभासः सदा सर्वफलप्रदः ।
ऋतुमानृतुपर्णश्च विश्वनेता विभूत्तमः ॥ १३१ ॥

रुक्माङ्गदप्रियोऽव्यङ्गो महालिङ्गो महाकपिः ।
संस्थानस्थानदः स्रष्टा जाह्नवीवाहधृक्प्रभुः ॥ १३२ ॥

माण्डुकेष्टप्रदाता च महाधन्वन्तरिः क्षितिः ।
सभापतिः सिद्धमूलश्चरकादिर्महापथः ॥ १३३ ॥

आसन्नमृत्युहन्ता च विश्वास्यः प्राणनायकः ।
बुधो बुधेज्यो धर्मेज्यो वैकुण्ठपतिरिष्टदः ॥ १३४ ॥

फलश्रुतिः-

इति श्वेतवराहस्य प्रोक्तं हे गिरिकन्यके ।
समस्तभाग्यदं पुण्यं भूपतित्वप्रदायकम् ॥ १३५ ॥

महापातककोटिघ्नं राजसूयफलप्रदम् ।
य इदं प्रातरुत्थाय दिव्यं नामसहस्रकम् ॥ १३६ ॥

पठते नियतो भूत्वा महापापैः प्रमुच्यते ।
सहस्रनामभिर्दिव्यैः प्रत्यहं तुलसीदलैः ॥ १३७ ॥

पूजयेद्यो वराहं तु श्रद्धया निष्ठयाऽन्वितः ।
एवं सहस्रनामभिः पुष्पैर्वाऽथ सुगन्धिभिः ॥ १३८ ॥

अभिजातकुले जातो राजा भवति निश्चितम् ।
एवं नामसहस्रेण वराहस्य महात्मनः ॥ १३९ ॥

न दारिद्र्यमवाप्नोति न याति नरकं ध्रुवम् ।
त्रिकालमेककालं वा पठन् नामसहस्रकम् ।। १४० ।।

मासमेकं जपेन्मर्त्यो भविष्यति जितेन्द्रियः ।
महतीं श्रियमायुष्यं विद्यां चैवाधिगच्छति ।। १४१ ।।

यो वा श्वेतवराहस्य दिव्यैर्नामसहस्रकैः ।
प्रवर्तयेन्नित्यपूजां दत्वा निर्वाहमुत्तमम् ।। १४२ ।।

भवेज्जन्मसहस्रैस्तु साम्राज्याधिपतिर्ध्रुवम् ।
रात्रौ श्वेतवराहस्य सन्निधौ य इदं पठेत् ।। १४३ ।।

क्षयापस्मारकुष्ठाद्यैर्महारोगैस्तथाऽपरैः ।
मासादेव विनिर्मुक्तः स जीवेच्छरदां शतम् ।। १४४ ।।

सर्वेषु पुण्यकालेषु पठन्नामसहस्रकम् ।
सर्वपापविनिर्मुक्तो लभते शाश्वतं पदम् ।। १४५ ।।

सहस्रनामपठनाद्वराहस्य महात्मनः ।
न ग्रहोपद्रवं याति याति शत्रुक्षयं तथा ।। १४६ ।।

राजा च दासतां याति सर्वे यान्ति च मित्रताम् ।
श्रियश्च स्थिरतां यान्ति यान्ति सर्वेऽपि सौहृदम् ।। १४७ ।।

राजदस्युग्रहादिभ्यो व्याध्याधिभ्यश्च किञ्चन ।
न भयं जायते क्वापि वृद्धिस्तस्य दिने दिने ।। १४८ ।।

विप्रस्तु विद्यामाप्नोति क्षत्रियो विजयी भवेत् ।
वार्धुष्यविभवं याति वैश्यः शूद्रः सुखं व्रजेत् ।। १४९ ।।

सकामः काममाप्नोति निष्कामो मोक्षमाप्नुयात् ।
महाराक्षसवेताल भूतप्रेत पिशाचकाः ।। १५० ।।

रोगाः सर्पविषाद्याश्च नश्यन्त्यस्य प्रभावतः ।
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नामङ्गलमवाप्नोति सोऽमुत्रेह च मानवः ।। १५१ ।।

नमः श्वेतवराहाय नमस्ते परमात्मने ।
लक्ष्मीनाथाय नाथाय श्रीमुष्णब्रह्मणे नमः ।। १५२ ।।

यःपठेच्छृणुयान्नित्यं इमं मन्त्रं नगात्मजे ।
स पापपाशनिर्मुक्तः प्रयाति परमां गतिम् ।। १५३ ।।

।।श्रीः।।

# श्रीवराहसहस्रनामावलिः

ओं श्रीवराहाय नमः । भूवराहाय । परस्मै ज्योतिषे । परात्पराय । परमाय पुरुषाय । सिद्धाय । विभवे । व्योमचराय । बलिने । अद्वितीषाय । परस्मै ब्रह्मणे । सच्चिदानन्दविग्रहाय । निर्द्वन्द्वाय । निरहंकाराय । निर्मायाय । निश्चलाय । अमलाय । विशिखाय । विश्वरूपाय । विश्वदृशे नमः ।२०

ओं विश्वभावनाय नमः । विश्वात्मने । विश्वनेत्रे । विमलाय । वीर्यवर्धनाय । विश्वकर्मणे । विनोदिने । विश्वेशाय । विश्वमङ्गलाय । विश्वाय । वसुन्धरानाथाय । वसुरेतसे । विरोधहृते । हिरण्यगर्भाय । हर्यश्वाय । दैत्यारये । हरसेविताय । महातपसे । महादर्शाय । मनोज्ञाय नमः ।४०

ओं नैकसाधनाय नमः । सर्वात्मने । सर्वविख्याताय । सर्वसाक्षिणे । सतां पतये । सर्वगाय । सर्वभूतात्मने । सर्वदोषविवर्जिताय । सर्वभूतहिताय । असङ्गाय । सत्याय । सत्यव्यवस्थिताय । सत्यकर्मणे । सत्यपतये । सर्वसत्यप्रियाय । मताय । आधिव्याधिभियो हन्त्रे । मृगाङ्गाय । नियमप्रियाय । बलवीराय नमः । ६०

7

ओं तपःश्रेष्ठाय नमः । गुणकर्त्रे । गुणाय । बलिने । अनन्ताय । प्रथमाय । मन्त्राय । सर्वभावविदे । अव्ययाय । सहस्रनाम्ने । अनन्ताय । अनन्तरूपाय । रमेश्वराय । अगाधनिलयाय । अपाराय । निराकाराय । निरायुधाय । अमोघदृशे । अमेयात्मने । वेदवेद्याय नमः । ८०

ओं विशांपतये नमः । विहृतये । विभवाय । भव्याय । भवहीनाय । भवान्तकाय । भक्तिप्रियाय । पवित्रांघ्रये । सुनासाय । पवनार्चिताय । भजनीयगुणाय । अदृश्याय । भद्राय । भद्रयशसे । हरये । वेदान्तकृते । वेदवन्द्याय । वेदाध्ययनतत्पराय । वेदगोप्त्रे । धर्मगोप्त्रे नमः । १००

ओं वेदमार्गप्रवर्तकाय नमः । वेदान्तवेद्याय । वेदात्मने । वेदातीताय । जगत्प्रियाय । जनार्दनाय । जनाध्यक्षाय । जगदीशाय । जनेश्वराय । सहस्रबाहवे । सत्यात्मने । हेमाङ्गाय । हेमभूषणाय । हरिद(ता)श्वप्रियाय । नित्याय । हरये । पूर्णाय । हलायुधाय । अम्बुजाक्षाय । अंबुजाधाराय नमः । १२०

ओं निर्जराय नमः । निरङ्कुशाय । निष्ठुराय । नित्यसन्तोषाय । नित्यानन्द पदप्रदाय । निर्जरेशाय ।निरालंबाय । निर्गुणाय । गुणान्विताय । महामायाय । महावीर्याय । महातेजसे । मदोद्धताय । मनोऽभिमानिने । मायाविने । मानदाय । मानल(र)क्षणाय । मन्दाय । मानिने । मनःकल्पाय नमः । १४०

ओं महाकल्पाय नमः । महेश्वराय । मायापतये । मानपतये मनसःपतये । ईश्वराय । अक्षोभ्याय । बाह्याय । आनन्दिने । अनिर्देश्याय । अपराजिताय । अजाय । अनन्ताय । अप्रमेयाय । सदानन्दाय । जनप्रियाय । अनन्तगुण गंभीराय । उग्रकृते । परिवेष्टनाय । जितेन्द्रियाय नमः ।१६०

ओं जितक्रोधाय नमः । जितामित्राय । जयाय । अजयाय । सर्वारिष्टार्तिघ्ने । सर्वहृदन्तरनिवासकाय । अन्तरात्मने । परात्मने । सर्वात्मने । सर्वकारकाय । गुरवे । कवये । किटये । कान्ताय । कञ्जाक्षाय

खगवाहनाय । सुशर्मणे । वरदाय । शार्ङ्गिं । सुदासाभीष्टदाय नमः ।
१८०

ओं प्रभवे नमः । झिल्लिकातनयाय । प्रेषिणे । झिल्लिकामुक्तिदायकाय । गुणजिते । कथिताय । कालाय । क्रोडाय । कोलाय । श्रमापहाय । किटये । कृपापराय । स्वामिने । सर्वदृशे । सर्वगोचराय । योगाचार्याय । मताय । वस्तुने । ब्रह्मण्याय । वेदसत्तमाय नमः । २००

ओं महालंबोष्ठकाय नमः । महादेवाय । मनोरमाय । ऊर्ध्वबाहवे । इभस्थूलाय । श्येनाय । सेनापतये । खनये । दीर्घायुषे । शङ्कराय । केशिने । सुतीर्थाय । मेघनिःस्वनाय । अहोरात्राय । सूक्तवाकाय । सुहृन्मान्याय । सुवर्चलाय । सारभृते । सर्वसाराय । सर्वग्र(ग्रा)हाय नमः । २२०

ओं सदागतये नमः । सूर्याय । चन्द्राय । कुजाय । ज्ञाय । देवमन्त्रिणे । भृगवे । शनये । राहवे । केतवे । ग्रहपतये । यज्ञभृते । यज्ञसाधनाय । सहस्रपदे । सहस्राक्षाय । सोमकान्ताय । सुधाकराय । यज्ञाय । यज्ञपतये । याजिने नमः । २४०

ओं यज्ञाङ्गाय नमः । यज्ञवाहनाय । यज्ञान्तकृते । यज्ञगुह्याय । यज्ञकृते । यज्ञसाधकाय । इडागर्भाय । स्रवत्कर्णाय । यज्ञकर्मफलप्रदाय । गोपतये । श्रीपतये । घोणाय । त्रिकालज्ञाय । शुचिश्रवसे । शिवाय । शिवतराय । शूराय । शिवप्रेष्ठाय । शिवार्चिताय । शुद्धसत्वाय नमः ।२६०

ओं सुरार्तिघ्नाय नमः । क्षेत्रज्ञाय । अक्षराय । आदिकृते । शंखिने । चक्रिणे । गदिने । खड्गिने । पद्मिने । चण्डपराक्रमाय । चण्डाय । कोलाहलाय । शार्ङ्गिणे । स्वयंभुवे । अग्र्यभुजे । विभवे । सदाचाराय । सदारंभाय । दुराचारनिवर्तकाय । ज्ञानिने नमः । २८०

ओं ज्ञानप्रियाय नमः । अवज्ञाय । ज्ञानदाय । अज्ञानदाय । यमिने । लयोदकविहारिणे । सामगानप्रियाय । गतये । यज्ञमूर्तये । ब्रह्मचारिणे ।

यज्वने । यज्ञप्रियाय । हरये । सूत्रकृते । लोलसूत्राय । चतुर्मूर्तये । चतुर्भुजाय । त्रयीमूर्तये । त्रिलोकेशाय । त्रिधाम्ने नमः । ३००

ओं कौस्तुभोज्ज्वलाय नमः । श्रीवत्सलाञ्छनाय । श्रीमते । श्रीधराय । भूधराय । अर्भकाय । वरुणाय । वारुणाय । वृक्षाय । वृषभाय । वर्धनाय । वराय । युगादिकृते । युगावर्ताय । पक्षाय । मासाय । ऋतवे । युगाय । वत्सराय । वत्सलाय नमः । ३२०

ओं वेदाय नमः । शिपिविष्टाय । सनातनाय । इन्द्रत्रात्रे । भयत्रात्रे । क्षुद्रकृते । क्षुद्रनाशनाय । महाहनवे । महाघोराय । महादीप्तये । महाव्रताय । महापादाय । महाकालाय । महाकायाय । महाबलाय । गंभीरघोषाय । गंभीराय । गभीराय । घुर्घुरस्वनाय । ओंकारगर्भाय नमः । ३४०

ओं न्यग्रोधाय नमः । वषट्काराय । हुताशनाय । भूयसे । बहुमताय । भूम्ने । विश्वकर्मणे । विशांपतये । व्यवसायाय । अघमर्षाय । विदिताय । अभ्युत्थिताये । महसे । बलभिदे । बलवते । दण्डिने । वक्रदंष्ट्राय । वशाय । वशिने । सिद्धाय नमः । ३६०

ओं सिद्धिप्रदाय नमः । साध्याय । सिद्धसंकल्पाय । ऊर्जवते । धृतारये । असहायाय । सुमुखाय । बडबामुखाय । वसवे । वसुमनसे । सामशरीराय । वसुधाप्रदाय । पीतांबराय । वासुदेवाय । वामनाय । ज्ञानपञ्जराय । नित्यतृप्ताय । निराधाराय । निस्सङ्गाय । निर्जितामराय नमः ।३८०

ओं नित्यमुक्ताय नमः । नित्यवन्द्याय । मुक्तवन्द्याय । मुरान्तकाय । बन्धकाय । मोचकाय । रुद्राय । युद्धसेनाविमर्दनाय । प्रसारणाय । निषेधात्मने । भिक्षवे । भिक्षुप्रियाय । ऋजवे । महाहंसाय । भिक्षुरूपिणे । महाकन्दाय । महाशनाय । मनोजवाय । कालकालाय । कालमृत्यवे नमः । ४००

ओं सभाजिताय नमः । प्रसन्नाय । निर्विभावाय । भूविदारिणे । दुरासदाय । वसनाय । वासवाय । विश्ववासवाय । वासवप्रियाय । सिद्धयोगिने । सिद्धकामाय । सिद्धिकामाय । शुभार्थविदे । अजेयाय । विजयिने । इन्द्राय । विशेषज्ञाय । विभावसवे । ईक्षामात्रजगत्स्रष्ट्रे । भूभङ्गनियताखिलाय नमः । ४२०

ओं महाध्वगाय नमः । दिगीशेशाय । मुनिमान्याय । मुनीश्वराय । महाकायाय । वज्रकायाय । वरदाय । वायुवाहनाय । वदान्याय । वज्रभेदिने । मधुहृते । कलिदोषघ्ने । वागीश्वराय । वाजसनाय । वानस्पत्याय । मनोरमाय । सुब्रह्मण्याय । ब्रह्मधनाय । ब्रह्मण्याय । ब्रह्मवर्धनाय नमः । ४४०

ओं विष्टंभिने नमः । विश्वहस्ताय । विश्वाहाय । विश्वतोमुखाय । अतुलाय । वसुवेगाय । अर्काय । सम्राजे । साम्राज्यदायकाय । शक्तिप्रियाय । शक्तिरूपाय । मारशक्तिविभञ्जनाय । स्वतन्त्राय । सर्वतन्त्रज्ञाय । मीमांसितगुणाकराय । अनिर्देश्यवपुषे । श्रीशाय । नित्यश्रिये । नित्यमङ्गलाय । नित्योत्सवाय नमः । ४६०

ओं निजानन्दाय नमः । नित्यभेदिने । निराश्रयाय । अन्तश्चराय । भवाधीशाय । ब्रह्मयोगिने । कलाप्रियाय । गोब्राह्मणहिताचाराय । जगद्धितमहाव्रताय । दुर्ध्येयाय । सदाध्येयाय । दुर्वासादिविबोधनाय । दुर्धियां दुरापाय । गोप्याय । दूरादूराय । समीपगाय । वृषाकपये । कपये । कार्याय । करणाय नमः । ४८०

ओं कारणक्रमाय नमः । ज्योतिषां मथनज्योतिषे । ज्योतिश्चक्रप्रवर्तकाय । प्रथमाय । मध्यमाय । ताराय । सुतीक्ष्णोदर्ककार्यवते । सुरूपाय । सदावेत्त्रे । सुमुखाय । सुजनप्रियाय । महाव्याकरणाचार्याय । शिक्षाकल्पप्रवर्तकाय । स्वच्छाय । छन्दोमयाय ।

स्वेच्छास्वाहितार्थविनाशनाय । साहसिने । सर्वहन्त्रे । संमताय । असकृत्अनिन्दिताय नमः । ५००

ओं कामरूपाय नमः । कामपालाय । सुतीर्थ्याय । क्षपाकराय । ज्वालिने । विशालाय । पराय । वेदकृज्जनवर्धनाय । वेद्याय । वैद्याय । महावेदिने । वीरघ्ने । विषमाय । महाय । ईतिभानवे । ग्रहाय । प्रग्रहाय । निग्रहाय । अग्निघ्ने । उत्सर्गाय नमः । ५२०

ओं सन्निषेधाय नमः । सुप्रतापाय । प्रतापधृते । सर्वायुधधराय । शालाय । सुरूपाय । सप्रमोदनाय । चतुष्किष्कवे । सप्तपादाय । सिंहस्कन्धाय । त्रिमेखलाय । सुधापानरताय । अरिघ्नाय । सुरमेड्याय । सुलोचनाय । तत्त्वविदे । तत्त्वगोप्त्रे । परतत्वाय । प्रजागराय । ईशानाय नमः ।५४०

ओं ईश्वराय नमः । अध्यक्षाय । महामेरवे । अमोघदर्शे । भेदप्रभेदवादिने । स्वाद्वैतपरिनिष्ठिताय । भागहारिणे । वंशकराय । निमित्तस्थाय । निमित्तकृते । नियन्त्रे । नियमाय । यन्त्रे । नन्दकाय । नन्दिवर्धनाय । षड्विंशकाय । महाविष्णवे । ब्रह्मज्ञाय । ब्रह्मतत्पराय । वेदकृते नमः । ५६०

ओं नाम्ने नमः । अनन्तनाम्ने । शब्दातिगाय । कृपाय । दंभाय । दंभकराय । दंभवंशाय । वंशकराय । वराय । अजनये । जनिकर्त्रे । सुराध्यक्षाय । युगान्तकाय । दर्भरोम्णे । बुधाध्यक्षाय । मानुकूलाय । मदोद्धताय । शन्तनवे । शङ्कराय । सूक्ष्माय नमः । ५८०

ओं प्रत्ययाय नमः । चण्डशासनाय । वृत्तनासाय । महाग्रीवाय । कंबुग्रीवाय । महानृणाय । वेदव्यासाय । देवभूतये । अन्तरात्मने । हृदालयाय । महाभागाय । महास्पर्शाय । महामात्राय । महामनसे । महोदराय । महोष्ठाय । महाजिह्वाय । महामुखाय । पुष्कराय । तुंबुरवे नमः । ६००

ओं खेटिने नमः । स्थावराय । स्थितिमत्तराय । श्वासायुधाय । समर्थाय । वेदार्थाय । सुसमाहिताय । वेदशीर्षाय । प्रकाशात्मने । प्रमोदाय । सामगायनाय । अन्तर्भाव्याय । भावितात्मने । महीदासाय । दिवस्पतये । महासुदर्शनाय । विदुषे । उपहारप्रियाय । अच्युताय । अनलाय नमः । ६२०

ओं द्विशफाय नमः । गुप्ताय । शोभनाय । निरवग्रहाय । भाषाकराय । महाभर्गाय । सर्वदेशविभागकृते । कालकण्ठाय । महाकेशाय । लोमशाय । कालपूजिताय । आसेवनाय । अवसानात्मने । बुद्ध्यात्मने । रक्तलोचनाय । नारङ्गाय । नरकोद्धर्त्रे । क्षेत्रपालाय । दुरिष्टघ्ने । हुंकारगर्भाय नमः ।६४०

ओं दिग्वाससे नमः । ब्रह्मेन्द्राधिपतये । बलाय । वर्चस्विने । ब्रह्मवदनाय । क्षत्रबाहवे । विदूरगाय । चतुर्थपदे । चतुष्पदे । चतुर्वेदप्रवर्तकाय । चातुर्होत्रकृते । अव्यक्ताय । सर्ववर्णविभागकृते । महापतये । गृहपतये । विद्याधीशाय । विशांपतये । अक्षराय । अधोक्षजाय । अधूर्ताय नमः । ६६०

ओं रक्षित्रे नमः । राक्षसान्तकृते । रजस्सत्वतमोहन्त्रे । कूटस्थाय । प्रकृतेःपराय । तीर्थकृते । तीर्थवासिने । तीर्थरूपाय । अपांपतये । पुण्यबीजाय । पुराणर्षये । पवित्राय । परमोत्सवाय । शुद्धिकृते । शुद्धिदाय । शुद्धाय । शुद्धसत्वनिरूपकाय । सुप्रसन्नाय । शुभार्हाय । शुभदित्सवे नमः । ६८०

ओं शुभप्रियाय नमः । यज्ञभागभुजां मुख्याय । यक्षगानप्रियाय । बलिने । समाय । मोदाय । मोदात्मने । मोददाय । मोक्षदस्मृतये । परायणाय । प्रसादाय । लोकबन्धवे । बृहस्पतये । लीलावताराय । जननविहीनाय । जन्मनाशनाय । महाभीमाय । महागर्ताय । महेष्वासाय । महोदयाय नमः ।। ७००

ओं अर्जुनाय नमः। भासुराय। प्रख्याय। विदोषाय। विष्टरश्रवसे। सहस्रपदे। सभाग्याय। पुण्यपाकाय। दुरन्वयाय। कृत्यहीनाय। महावाग्मिने। महापापविनिग्रहाय। तेजोऽपहारिणे। बलवते। सर्वदाऽरिविदूषकाय। कवये। कण्ठगतये। कोष्ठाय। मणिमुक्ताजलाप्लुताय। अप्रमेयगतये नमः। ७२०

ओं कृष्णाय नमः। हंसाय। शुचिप्रियाय। विजयिने। इन्द्राय। सुरेन्द्राय। वागिन्द्राय। वाक्पतये। प्रभवे। तिरश्चीनगतये। शुक्लाय। सारग्रीवाय। धराधराय। प्रभाताय। सर्वतोभद्राय। महाजन्तवे। महौषधये। प्राणेशाय। वर्धकाय। तीव्रप्रवेशाय नमः। ७४०

ओं पर्वतोपमाय नमः। सुधासिक्ताय। सदस्यस्थाय। राजराजे। दण्डकान्तकाय। ऊर्ध्वकेशाय। अजमीढाय। पिप्पलादाय। बहुश्रवसे। गन्धर्वाय। अभ्युदिताय। केशिने। वीरपेशाय। विशारदाय। हिरण्यवाससे। स्तब्धाक्षाय। ब्रह्मलालितशैशवाय। पद्मगर्भाय। जंबुमलिने। सूर्यमण्डलमध्यगाय नमः। ७६०

ओं चन्द्रमण्डलमध्यस्थाय नमः। करभाजे। अग्निसंश्रयाय। अजीगर्ताय। शाकलाग्र्याय। सन्धानाय। सिंहविक्रमाय। प्रभावात्मने। जगत्कालाय। कालकालाय। बृहद्रथाय। साराङ्गाय। यतमान्याय। सत्कृतये। शुचिमण्डलाय। कुमारजिते। वनेचारिणे। सप्तकन्या-मनोरमाय। धूमकेतवे। महाकेतवे नमः। ७८०

ओं पक्षिकेतवे नमः। प्रजापतये। ऊर्ध्वरेतसे। बलोपायाय। भूतावर्ताय। सजङ्गमाय। रवये। वायवे। विधात्रे। सिद्धान्ताय। निश्चलाय। अचलाय। आस्थानकृते। अमेयात्मने। अनुकूलाय। भुवोऽधिकाय। ह्रस्वाय। पितामहाय। अनर्थाय। कालवीर्याय नमः। ८००

ओं वृकोदराय नमः । सहिष्णवे । सहदेवाय । सर्वजिते । शत्रुतापनाय । पाञ्चरात्रपराय। हंसिने। पञ्चभूतप्रवर्तकाय। भूरिश्रवसे। शिखण्डिने। सुयज्ञाय। सत्यघोषणाय। प्रगाढाय। प्रवणाय। हारिणे। प्रमाणाय। प्रणवाय। निधये। महोपनिषदो वाचे। वेदनीडाय नमः। ८२०

ओं किरीटधृते नमः । भवरोगभिषजे । भावाय । भावसाध्याय । भवातिगाय । षड्धर्मवर्जिताय । केशिने । कार्यविदे । कर्मगोचराय । यमविध्वंसनाय। पाशिने। यमिवर्गनिषेविताय। मतङ्गाय। मेचकाय। मेध्याय । मेधाविने । सर्वमेलकाय । मनोज्ञदृष्टये । मारारिनिग्रहाय । कमलाकराय नमः। ८४०

ओं नमद्गणेशाय नमः । गोपीडाय । सन्तानाय । सन्ततिप्रदाय । बहुप्रदाय । बलाध्यक्षाय । भिन्नमर्यादभेदनाय । अनिर्मुक्ताय । चारुदेष्णाय । सत्याषाढाय। सुराधिपाय। आवेदनीयाय। अवेद्याय। तारणाय । तरुणाय । अरुणाय । सर्वलक्षणलक्षण्याय । सर्वलोकविलक्षणाय । सर्वदक्षाय। सुधाधीशाय नमः। ८६०

ओं शरण्याय नमः। शान्तविग्रहाय। रोहिणीशाय। वराहाय। व्यक्ताव्यक्तस्वरूपधृते । स्वर्गद्वाराय । सुखद्वाराय । मोक्षद्वाराय । त्रिविष्टपाय । अद्वितीयाय । केवलाय । कैवल्यपतये । अर्हणाय । तालपक्षाय । तालकराय । यन्त्रिणे । तन्त्रविभेदनाय । षड्रसाय । कुसुमास्त्राय। सत्यमूलफलोदयाय नमः। ८८०

ओं कलायै नमः। काष्ठायै। मुहूर्ताय। मणिबिम्बाय। जगद्घृणये। अभयाय । रुद्रगीताय । गुणजिते । गुणभेदनाय । देवासुरविनिर्मात्रे । देवासुरनियामकाय। प्रारंभाय। विरामाय। साम्राज्याधिपतये। प्रभवे। पण्डिताय। गहनारंभाय। जीवनाय। जीवनप्रदाय। रक्तदेवाय नमः। ९००

ओं देवमूलाय नमः । वेदमूलाय । मनःप्रियाय । विराचनाय । सुधाजाताय । स्वर्गाध्यक्षाय । महाकपये । विराड्रूपाय । प्रजारूपाय । सर्वदेव शिखामणये । भगवते । सुमुखाय । स्वर्गाय । मंजुकेशाय । सुतुन्दिलाय । वनमालिने । गन्धमालिने । मुक्तामालिने । अचलोपमाय । मुक्ताय नमः । ९२०

ओं असृप्याय नमः । सुहृदे । भ्रात्रे । पित्रे । मात्रे । परायै गतये । सत्वध्वनये । सदाबन्धवे । ब्रह्मरुद्राधिदैवताय । समात्मने । सर्वदाय । सांख्याय । सन्मार्गध्येयसत्पदाय । ससङ्कल्पाय । विकल्पाय । कर्त्रे । स्वादिने । तपोधनाय । विरजसे । विरजानाथाय नमः । ९४०

ओं स्वच्छशृङ्गाय नमः । दुरिष्टघ्ने । घोणाय । बन्धवे । महाचेष्टाय । पुराणाय । पुष्करेक्षणाय । अहये बुध्न्याय । मुनये । विष्णवे । धर्मयूपाय । तमोहराय । अग्राह्याय । शाश्वताय । कृष्णाय । प्रवराय । पक्षिवाहनाय । कपिलाय । खपथिस्थाय । प्रद्युम्नाय नमः । ९६०

ओं अमितभोजनाय नमः । संकर्षणाय । महावायवे । त्रिकालज्ञाय । त्रिविक्रमाय । पूर्णप्रज्ञाय । सुधिये । हृष्टाय । प्रबुद्धाय । शमनाय । सदसे । ब्रह्माण्डकोटिनिर्मात्रे । माधवाय । मधुसूदनाय । शश्वदेकप्रकाराय । कोटिब्रह्माण्डनायकाय । शश्वद्भक्तपराधीनाय । शश्वदानन्ददायकाय । सदानन्दाय । सदाभासाय नमः । ९८०

ओं सदा सर्वफलप्रदाय नमः । ऋतुमते । ऋतुपर्णाय । विश्वनेत्रे । विभूत्तमाय । रुक्मांगदप्रियाय । अव्यङ्गाय । महालिङ्गाय । महाकपये । संस्थानस्थानदाय । स्रष्ट्रे । जाह्नवीवाहधृशे । प्रभवे । माण्डुकेष्टप्रदात्रे । महाधन्वन्तरये । क्षितये । सभापतये । सिद्धमूलाय । चरकादये । महापथाय नमः ।१०००

ओं आसन्नमृत्युहन्त्रे नमः । विश्वास्याय । प्राणनायकाय । बुधाय । बुधेज्याय । धर्मेज्याय । वैकुण्ठपतये । इष्टदाय नमः । १००८

॥श्रीः॥

# श्रीवराहाष्टोत्तरशतनामस्तोत्रम्

(श्रीमुष्णमाहात्म्यतः)

शङ्करः-

नारायण मम ब्रूहि येन तुष्टो जगत्पतिः ।
तूर्णमेव प्रसन्नात्मा मुक्तिं यच्छति पापहा ॥ १ ॥

सदा चञ्चलचित्तानां मानवानां कलौ युगे ।
जपे च देवपूजायां मनो नैकत्र तिष्ठति ॥ २ ॥

तादृशा अपि वै मर्त्या येन यान्ति परां गतिम् ।
अन्येषां कर्मणां पूर्तिर्येन स्यात् फलितेन च ॥ ३ ॥

तादृक् स्तोत्रं मम ब्रूहि महापातकनाशनम् ।
एकैकं च वराहस्य नाम वेदाधिकं किल ॥ ४ ॥

तादृशानि च नामानि वराहस्य महात्मनः ।
सन्ति चेत् ब्रूहि विश्वात्मन् श्रोतुं कौतूहलं हि मे ॥ ५ ॥

श्रीनारायणः-

शृणु शङ्कर वक्ष्यामि वराहस्तोत्रमुत्तमम् ।
दुष्टग्रहकुठारोऽयं महापापदवानलः ॥ ६ ॥

महाभयगिरीन्द्राणां कुलिशं मुक्तिदं शुभम् ।
कामधुक् कामिनामेतद्भक्तानां कल्पपादपः ॥ ७ ॥

वक्ष्यामि परमं स्तोत्रं यत् सुगोप्यं दुरात्मनाम् ।
नारायण ऋषिश्चात्र श्रीवराहश्च देवता ॥ ८ ॥

छन्दोऽनुष्टुप्च हुं बीजं ह्रीं शक्तिः क्लीं च कीलकम् ।
वराहप्रीतिमुद्दिश्य विनियोगस्तु निर्वृतौ ॥ ९ ॥

न्यसेद्धृदयं द्रेकारं वराहाय च मूर्धनि ।
नमो भगवते पश्चात् शिखायां विन्यसेत् बुधः ॥ १० ॥
ज्ञानात्मने च नेत्राभ्यां कवचाय बलात्मने ।
भूर्भुवःसुव इत्यस्त्राय फटित्यन्तं न्यसेत् बुधः ॥ ११ ॥
यज्ञाय यज्ञरूपाय यज्ञाङ्गाय महात्मने ।
नमो यज्ञभुजे यज्ञकृते यज्ञेश्वराय च ॥ १२ ॥
यज्ञस्य फलदात्रे च यज्ञगुह्याय यज्वने ।
एभिर्नामपदैर्दिव्यैरंगुलिन्यासमाचरेत् ॥ १३ ॥
अन्नदात्रे नम इति करपृष्ठं च मार्जयेत् ।
नमः श्वेतवराहाय स्वाहान्तेन महामतिः ॥ १४ ॥
व्यापकन्यासकृत् पश्चात् ध्यायेद्देवमधोक्षजम् ।

ध्यानम् -

ओं श्वेतं सुदर्शनदराङ्कितबाहुयुग्मं
दंष्ट्राकराळवदनं धरया समेतम् ।
ब्रह्मादिभिः सुरगणैः परिसेव्यमानं
ध्यायेद्वराहवपुषं निगमैकवेद्यम् ॥ १५ ॥

श्रीवराहो महीनाथः पूर्णानन्दो जगत्पतिः ।
निर्गुणो निष्कळोऽनन्तो दण्डकान्तकृदव्ययः ॥ १६ ॥
हिरण्याक्षान्तकृद्देवः पूर्णषाड्गुण्यविग्रहः ।
लयोदधिविहारी च सर्वप्राणिहिते रतः ॥ १७ ॥
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
वेदान्तवेद्यो वेदी च वेदगर्भः सनातनः ॥ १८ ॥
सहस्राक्षः पुण्यगन्धः कल्पकृत् क्षितिभृद्धरिः ।
पद्मनाभः सुराध्यक्षो हेमाङ्गो दक्षिणामुखः ॥ १९ ॥

महाकोलो महाबाहुः सर्वदेवनमस्कृतः ।
हृषीकेशः प्रसन्नात्मा सर्वभक्तभयापहः ॥ २० ॥

यज्ञभृद्यज्ञकृत् साक्षी यज्ञाङ्गो यज्ञवाहनः ।
हव्यभुग्हव्यदेवश्च सदाव्यक्तः कृपाकरः ॥ २१ ॥

देवभूमिगुरुः कान्तो धर्मगुह्यो वृषाकपिः ।
स्रुवत्तुण्डो वक्रदंष्ट्रो नीलकेशो महाबलः ॥ २२ ॥

पूतात्मा वेदनेता च वेदहर्तृशिरोहरः ।
वेदादिकृद्वेदगुह्यः सर्ववेदप्रवर्तकः ॥ २३ ॥

गभीराक्षस्त्रिधर्मा च गम्भीरात्मा महेश्वरः ।
आनन्दवनगो दिव्यो ब्रह्मनासासमुद्भवः ॥ २४ ॥

विन्धुतीरनिवासी च क्षेमकृत् सात्त्वतां पतिः ।
इन्द्रत्राता जगत्त्राता महेन्द्रोद्दण्डगर्वहा ॥ २५

भक्तवश्यो सदोद्युक्तो निजानन्दो रमापतिः ।
स्तुतिप्रियः शुभाङ्गश्च पुण्यश्रवणकीर्तनः ॥ २६ ॥

सत्यकृत् सत्यसङ्कल्पः सत्यवाक् सत्यविक्रमः ।
सत्येन गूढः सत्यात्मा कालातीतो गुणाधिकः ॥ २७ ॥

परं ज्योतिः परं धाम परमः पुरुषः परः ।
कल्याणकृत् कविः कर्ता कर्मसाक्षी जितेन्द्रियः ॥ २८ ॥

कर्मकृत् कर्मकाण्डस्य संप्रदायप्रवर्तकः ।
सर्वान्तकः सर्वगश्च सर्वार्थः सर्वभक्षकः ॥ २९ ॥

सर्वलोकपतिः श्रीमान् श्रीमुष्णेशः शुभेक्षणः ।
सर्वदेवप्रियः साक्षीत्येतन्नामाष्टकं शतम् ॥ ३० ॥

सर्ववेदाधिकं पुण्यं वराहस्य महात्मनः ।
सततं प्रातरुत्थाय सम्यगाचम्य वारिणा ॥ ३१ ॥

जितासनो जितक्रोधः पश्चान्मन्त्रमुदीरयेत् ।
ब्राह्मणो ब्रह्मविद्यां च क्षत्रियो राज्यमाप्नुयात् ॥ ३२ ॥

वैश्यो धनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात् ।
सद्यो रोगाद्विमुच्येत शतवारं पठेद्यदि ॥ ३३ ॥

सकामो लभते कामान् निष्कामो मोक्षमाप्नुयात् ।
बालरोगग्रहाद्याश्च नश्यन्त्येव न संशयः ॥ ३४ ॥

राजद्वारे महाघोरे संग्रामे शत्रुसङ्कटे ।
स्तोत्रमेतन्महापुण्यं पठेत् सद्यो भयापहम् ॥ ३५ ॥

इत्येतद्धारयेद्यस्तु करे मूर्ध्नि हृदन्तरे ।
तन्नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ३६ ॥

राजप्रसादजनकं सर्वलोकवशङ्करम् ।
आभिचरिककृत्यान्तं महाभयनिवारणम् ॥ ३७ ॥

शतवारं पठेद्यस्तु मुच्यते व्याधिबन्धनात् ।
यः पठेत् त्रिषु कालेषु स्तोत्रमेतज्जितेन्द्रियः ॥ ३८ ॥

वैकुण्ठवासमाप्नोति दशपूर्वैर्दशापरैः ।
अश्वत्थमूलेऽर्कवारे स्थित्वा स्तोत्रं पठेद्यदि ॥ ३९ ॥

अपस्मारविनाशः स्यात् क्षयरोगश्च नश्यति ।
मध्याह्ने तु गुरोर्वारे जलमध्ये शतं जपेत् ॥ ४० ॥

कुष्टव्याधिविनाशः स्यात् ज्ञानं चैवाधिगच्छति ।
प्रातः प्रातः पठेद्यस्तु स्तोत्रमेतच्छुभावहम् ॥ ४१ ॥

अन्त्यकाले स्मृतिर्विष्णोर्भवेत् तस्य महात्मनः ।

अष्टोत्तरशतैर्दिव्यैर्नामभिः किटिरूपिणः ॥ ४२ ॥

तुळसीमर्पयेद्यस्तु स मुक्तो नास्ति संशयः ।
पूजाकाले वराहस्य नाम्नामष्टोत्तरं शतम् ॥ ४३ ॥

जप्त्वाऽथ जापयित्वा वा साम्राज्यमधिगच्छति ।
निष्कामो मोक्षमाप्नोति नात्र कार्या विचारणा ॥ ४४ ॥

अष्टोत्तरसहस्रं तु यः पठेन्नियतेन्द्रियः ।
पायसेन तथा हुत्वा वन्ध्या पुत्रवती भवेत् ॥ ४५ ॥

नमः श्वेतवराहाय भूधराय महात्मने ।
निरञ्जनाय सत्याय सात्त्वतां पतये नमः ॥ ४६ ॥

इति मन्त्रं पठेन्नित्यमन्ते मोक्षमवाप्नुयात् ॥ ४७ ॥

इति श्रीवराहपुराणे श्रीमुष्णमाहात्म्ये नवमोऽध्यायः ।

श्रीनीलवराहपरब्रह्मणे नमः ।

## श्रीवराहाष्टोत्तरशतनामावलिः

(श्रीवराहपुराणतः)

श्रीवराहाय नमः । महीनाथाय । पूर्णानन्दाय । जगत्पतये । निर्गुणाय । निष्कलाय । अनन्ताय । दण्डकान्तकृते । अव्ययाय । हिरण्याक्षान्तकृते । देवाय । पूर्णषाड्गुण्यविग्रहाय । लयोदधिविहारिणे । सर्वप्राणिहिते रताय । अनन्तरूपाय । अनन्तश्रिये । जितमन्यवे । भयापहाय । वेदान्तवेद्याय । वेदिने नमः ॥ २०

वेदगर्भाय नमः । सनातनाय । सहस्राक्षाय । पुण्यगन्धाय । कल्पकृते । क्षितिभृते । हरये । पद्मनाभाय । सुराध्यक्षाय । हेमाङ्गाय । दक्षिणामुखाय । महाकोलाय । महाबाहवे । सर्वदेवनमस्कृताय ।

हृषीकेशाय । प्रसन्नात्मने । सर्वभक्तभयापहाय । यज्ञभृते । यज्ञकृते । साक्षिणे नमः ।। ४०

यज्ञाङ्गाय नमः । यज्ञवाहनाय । हव्यभुजे । हव्यदेवाय । सदा व्यक्ताय । कृपाकराय । देवभूमिगुरवे । कान्ताय । धर्मगुह्याय । वृषाकपये । स्रुवतुण्डाय । वक्रदंष्ट्राय । नीलकेशाय । महाबलाय । पूतात्मने । वेदनेत्रे । वेदहर्तृशिरोहराय । वेदादिकृते । वेदगुह्याय । सर्ववेदप्रवर्तकाय नमः ।। ६०

गभीराक्षाय नमः । त्रिधर्मणे । गंभीरात्मने । महेश्वराय । आनन्दवनगाय । दिव्याय । ब्रह्मनासासमुद्भवाय । सिन्धुतीरनिषेविणे । क्षेमकृते । सात्वतां पतये । इन्द्रत्रात्रे । जगत्त्रात्रे । महेन्द्रोद्दण्डगर्वघ्ने । भक्तवश्याय । सदोद्युक्ताय । निजानन्दाय । रमापतये । स्तुतिप्रियाय । शुभाङ्गाय । पुण्यश्रवणकीर्तनाय नमः ।। ८०

सत्यकृते नमः । सत्यसङ्कल्पाय । सत्यवाचे । सत्यविक्रमाय । सत्येन गूढाय । सत्यात्मने । कालातीताय । गुणाधिकाय । परस्मै ज्योतिषे । परस्मै धाम्ने । परमाय पुरुषाय । पराय । कल्याणकृते । कवये । कर्त्रे । कर्मसाक्षिणे । जितेन्द्रियाय । कर्मकृते । कर्मकाण्डस्य संप्रदायप्रवर्तकाय । सर्वान्तकाय नमः । १००

सर्वगाय नमः । सर्वार्थाय । सर्वभक्षकाय । सर्वलोकपतये । श्रीमते श्रीमुष्णेशाय । शुभेक्षणाय । सर्वदेवप्रियाय । साक्षिणे नमः । १०८

*——*——*

नमस्तस्मै वराहाय हेलयोद्धरते महीम् ।
खुरमध्यगतो यस्य मेरुः खुरखुरायते ।।

# श्रीहरिहरपुत्रसहस्रनामस्तोत्रम्

न्यासः – अस्य श्रीहरिहरपुत्रसहस्रनामस्तोत्रमहामन्त्रस्य, अर्धनारीश्वर ऋषिः। अनुष्टुप् छन्दः, श्रीहरिहरपुत्रो देवता। ह्रां बीजं, ह्रीं शक्तिः, ह्रूं कीलकं, श्रीहरिहरपुत्र प्रसाद सिद्ध्यर्थे सहस्रनामजपे विनियोगः। ह्रां अंगुष्ठाभ्यां नमः। ह्रीं तर्जनीभ्यां नमः। ह्रूं मध्यमाभ्यां नमः। ह्रैं अनामिकाभ्यां नमः। ह्रौं कनिष्ठिकाभ्यां नमः। ह्रः करतलकरपृष्ठाभ्यां नमः। ह्रां हृदयाय नमः। ह्रीं शिरसे स्वाहा। ह्रूं शिखायै वषट्। ह्रैं कवचाय हुं। ह्रौं नेत्रत्रयाय वौषट्। ह्रः अस्त्राय फट्। भूर्भुवःसुवरों इति दिग्बन्धः ॥
ध्यानम्

आश्यामकोमलविशालतनुं विचित्र–
वासो वसानं अरुणोत्पलदामहस्तं।
उत्तुङ्गरत्नमकुटं कुटिलाग्रकेशं
शास्तारं इष्टवरदं शरणं प्रपद्ये॥

पञ्चोपचाराः - लं पृथिव्यात्मने गन्धं समर्पयामि। हं आकाशात्मने पुष्पाणि समर्पयामि। यं वाय्वात्मने धूपमाघ्रापयामि। रं अग्न्यात्मने दीपं दर्शयामि। वं अमृतात्मने अमृतं महानैवेद्यं निवेदयामि। सं सर्वात्मने सर्वोपचारपूजां समर्पयामि।

मूलं – ओं घ्रूं नमः पराय गोप्त्रे नमः॥

शिवपुत्रो महातेजा शिवकार्यधुरन्धरः।
शिवप्रदः शिवज्ञानी शैवधर्मसुरक्षितः॥ १॥

शङ्खधारी सुराध्यक्षः चंद्रमौलिः सुरोत्तमः।
कामेशः कामतेजस्वी कामादिफलसंयुतः॥ २॥

कल्याणः कोमलाङ्गश्च कल्याणफलदायकः ।
करुणाब्धिः कर्मदक्षः करुणारससागरः ॥ ३ ॥

जगत्प्रियो जगद्रक्षो जगदानन्ददायकः ।
जयादिशक्तिसंसेव्यो जनाह्लादो जिगीषुकः ॥ ४ ॥

जितेन्द्रियो जितक्रोधो जितदेवारिसङ्घकः ।
जैमिन्यादिमुनिसेव्यो जरामरणनाशकः ॥ ५ ॥

जनार्दनसुतो ज्येष्ठो ज्येष्ठादिगणसेवितः ।
जन्महीनो जितामोहो जनकेनाभिपूजितः ॥ ६ ॥

परमेष्ठी पशुपतिः पङ्कजासनपूजितः ।
पुरहंता पुरत्राता परमैश्वर्यदायकः ॥ ७ ॥

पवनादिसुरैस्सेव्यः पञ्चब्रह्मपरायणः ।
पार्वतीतनयो ब्रह्मा परानन्दः परात्परः ॥ ८ ॥

ब्रह्मिष्ठो ज्ञाननिरतः गुणागुणनिरूपकः ।
गुणाध्यक्षो गुणनिधिः गोपालेनाभिपूजितः ॥ ९ ॥

गोरक्षको गोधनश्च गजारूढो गजप्रियः ।
गजग्रीवो गजस्कन्धो गभस्तिर्गोपतिः प्रभुः ॥ १० ॥

ग्रामपालो गजाध्यक्षो दिग्गजेनाभिपूजितः ।
गणाध्यक्षो गणपतिः गवांपतिरहःपतिः ॥ ११ ॥

जटाधरो जलनिभो जैमिन्यैरभिपूजितः ।
जलन्धरनिहन्ता च शोणाक्षः शोणवाससः ॥ १२ ॥

सुराधिपःशोकहन्ता शोभाक्षस्सूर्यतेजसः ।
सुरार्चितस्सुरैर्वन्द्यः शोणाङ्गः शल्मलीपतिः ॥ १३ ॥

सज्योतिः शरवीरघ्नः शरच्चन्द्रनिभाननः ।
सनकादिमुनिध्येयः सर्वज्ञानप्रदो विभुः ॥ १४ ॥

हलायुधो हंसनिभो हाहाहूहूमुखस्तुतः ।
हरिर्हरप्रियो हंसो हर्यक्षासनतत्परः ॥ १५ ॥

पावनः पावकनिभो भक्तपापविनाशनः ।
भसिताङ्गो भयत्राता भानुमान् भयनाशनः ॥ १६ ॥

त्रिपुण्ड्रधारी त्रिनयनः त्रिपुण्ड्राङ्कितमस्तकः ।
त्रिपुरघ्नो देववरो देवारिकुलसंहृतः ॥ १७ ॥

देवसेनाधिपस्तेजः तेजोराशिर्दशाननः ।
दारुणो दोषहन्ता च दोर्दण्डो दण्डनायकः ॥ १८ ॥

धनुष्पाणिर्धराध्यक्षो धनिको धर्मवत्सलः ।
धर्मज्ञो धर्मनिरतो धनुश्शास्त्रपरायणः ॥ १९ ॥

स्थूलकर्णः स्थूलतनुः स्थूलाक्षः स्थूलबाहुकः ।
तनूत्तमस्तनुत्राणः तारकस्तेजसांपतिः ॥ २० ॥

योगीश्वरो योगनिधिः योगीनो योगसंस्थितः ।
मन्दारवाटिको मत्तो मलयाचलवासभूः ॥ २१ ॥

मन्दारकुसुमप्रख्यो मन्दमारुतसेवितः ।
महाभासो महावक्षा मनोहरमदार्चितः ॥ २२ ॥

महोन्नतो महाकायो महानेत्रो महाहनुः ।
मरुत्पूज्यो मानधनो मोहनो मोक्षदायकः ॥ २३

मित्रो मेधा महौजस्वी महावर्षप्रदायकः ।
भाषको भाष्यशास्त्रज्ञो भानुमान् भानुतेजसः ॥ २४ ॥

भवानीपुत्रको भिषग् भवतारणकारणः ।
नीलाम्बरो नीलनिभो नीलग्रीवो निरञ्जनः ॥ २५ ॥

नेत्रत्रयो निषादज्ञो नानारत्नोपशोभितः ।
रत्नप्रभो रमापुत्रो रमया परितोषितः ॥ २६ ॥

राजसेव्यो राजधनो रणदोर्दण्डमण्डितः ।
रमणो रेणुकासेव्यो रजनीचरदारणः ॥ २७ ॥

ईशान इभराट्सेव्य ईषणात्रयनाशनः ।
इडावासो हेमनिभो हैमप्राकारशोभितः ॥ २८ ॥

हरिहरात्मजो हंसो हयग्रीवो हयप्रियः ।
हाटकस्फटिकप्रख्यो हंसारूढेन सेवितः ॥ २९ ॥

वनवासो वनाध्यक्षो वामदेवो वराननः ।
वैवस्वतपतिर्विष्णुः विराड्रूपो विशालवान् ॥ ३० ॥

वेणुनादो वरग्रीवो वराभयकरान्वितः ।
वर्चस्वी विपुलग्रीवो विपुलाक्षो विनोदवान् ॥ ३१ ॥

वैणववनवासश्च वामदेवेन सेवितः ।
वेत्रहस्तो वेदनिधिः वंशदेवो वराङ्गकः ॥ ३२ ॥

ह्रीकारो ह्रींमना हृष्टो हिरण्यो हेमसंभवः ।
हुताशो हुतनिष्पन्नो हुंकारकृतिःसुप्रभुः ॥ ३३ ॥

हव्यवाहो हव्यकरश्चाट्टहासोऽपराहतः ।
अणुरूपो रूपकरश्चाजरोऽतनुरूपकः ॥ ३४ ॥

हंसमंत्रश्च हुतभुग् हेमाम्बरःसुलक्षणः ।
नीपप्रियो नीलवासाः निधिपालो निरातपः ॥ ३५ ॥

क्रोडहस्तस्तपस्त्राता तपोरक्षस्तपाह्वयः ।
मूर्धाभिषिक्तो मानधनो मन्त्ररूपो मृडो मनुः ॥ ३६ ॥

मेधावी मेधसो मुष्णुः मकरो मकरालयः ।
मार्तण्डो मञ्जुकेशश्च मासपालो महौषधिः ॥ ३७ ॥

श्रोत्रियः शोभमानश्च सविता सर्वदेशिकः ।
चन्द्रहासः शमः शक्तः शशिभासः समाधिकः ॥ ३८ ॥

सुदन्तः सुकपोलश्च षड्वर्णः संपदोऽधिपः ।
गरलः कालकण्ठश्च गोनेता गोमुखप्रभुः ॥ ३९ ॥

कौशिकः कालदेवश्च क्रोशकः क्रौञ्चभेदकः ।
क्रियाकरः कृपालुश्च करवीरकरेरुहः ॥ ४० ॥

कन्दर्पदर्पहारी च कामदाता कपालकः ।
कैलासवासो वरदो विरोचनो विभावसुः ॥ ४१ ॥

बभ्रुवाहो बलाध्यक्षःफणामणिविभूषणः ।
सुन्दरः सुमुखः स्वच्छः सभासच्च सभाकरः ॥ ४२ ॥

शरानिवृत्तः शक्रासः शरणागतपालकः ।
तीक्ष्णदंष्ट्रो दीर्घजिह्वः पिङ्गलाक्षः पिशाचहा ॥ ४३ ॥

अभेद्यश्चाङ्गदाढ्यश्च भोजपालोऽथ भूपतिः ।
गृध्रनासोऽविषह्यश्च दिग्देहो दैन्यदाहकः ॥ ४४ ॥

बडवापूरितमुखो व्यापको विषमोचकः ।
हसन्तः समरक्रुद्धः पुङ्गवः पङ्कजासनः ॥ ४५ ॥

विश्वदर्पो निश्चिताज्ञो नागाभरणभूषितः ।
भरतो भैरवाकारो भरणो वामनक्रियः ॥ ४६ ॥

सिंहास्यः सिंहरूपश्च सेनापतिः सकारकः ।
सनातनः सिद्धरुचिः सिद्धधर्मपरायणः ॥ ४७ ॥

आदित्यरूप आपदूघ्नः अमृतांभोधिवासभूः ।
युवराजो योगिवर्य उषस्तेजा उडुप्रभः ॥ ४८ ॥

देवादिदेवो दैवज्ञः ताम्रोष्ठस्ताम्रलोचनः ।
पिङ्गलाक्षः पिञ्छचूडः फणामणिविभूषितः ॥ ४९

भुजङ्गभूषणो भोगो भोगानन्दकरोऽभयः ।
पञ्चहस्तेन संपूज्यः पञ्चबाणेन सेवितः ॥ ५० ॥

भवः शर्वो भानुमयः प्राजापत्यस्वरूपकः ।
स्वच्छन्दः छन्दःशास्त्रज्ञो दान्तो देवमनुप्रभुः ॥ ५१ ॥

दशभुक्च दलाध्यक्षो दानवानां विनाशनः ।
सहस्राक्षः शतनिष्पन्नः शतानन्दः समागमः ॥ ५२ ॥

गरुडाद्रिवासो गंभीरो गन्धग्राहो गणेश्वरः ।
गण्डकावासो गोमेधो गोकुलैः परिवारितः ॥ ५३ ॥

परिवेषः पदज्ञानी प्रियङ्गुद्रुमवासकः ।
गुहावासो गुरुवरो वन्दनीयो वदान्यकः ॥ ५४ ॥

वृत्ताकारो वेणुपाणिः वीणादण्डधरो हरः ।
हैमिल्यो होतृसुभगो हौत्रज्ञश्चौजसां पतिः ॥ ५५ ॥

पवमानः प्रजातन्तुप्रदो दण्डविनाशनः ।
निमील्यो निमिषार्धज्ञो निमिषाकारकारणः ॥ ५६ ॥

लिगुडाभो लिडाकारो लक्ष्मीवन्द्यो वरप्रभुः ।
इडाज्ञः पिङ्गलावासः सुषुम्नामध्यसंभवः ॥ ५७ ॥

भिक्षाटनो भीमवर्चा वरकीर्तिः सभेश्वरः ।
वाचातीतो वरनिधिः परिवेत्ता प्रमाणकः ॥ ५८ ॥

अप्रमेयोऽनिरुद्धश्च अनन्तादित्यवर्चसः ।
वेषप्रियो विषग्राहो वरदानकरोत्तमः ॥ ५९ ॥

विपिनो वेदसारश्च वेदान्तैः परितोषितः ।
वक्रागमो वक्रवाचो बलदाता विमानवान् ॥ ६० ॥

वज्रकान्तो वंशवरो वटुरक्षाविशारदः ।
वप्रक्रीडो विप्रपूज्यो वेलाराशिश्चलालकः ॥ ६१ ॥

क्रोडास्यः क्रोडनेत्रश्च कोलाहलः कपालभृत् ।
खञ्जरीटो मञ्जुवासाः क्रियमाणः क्रियाप्रदः ॥ ६२ ॥

क्रीडानाथः कीलहस्तः क्रोशमानः कुलान्तकः ।
खनंको होतृभागश्च खवासः खचरः खगः ॥ ६३ ॥

गणको गुणर्निदुष्टो गुणत्यागः कुशाधिपः ।
पाटलः पत्रधारी च पालाशः पुत्रवर्धनः ॥ ६४ ॥

पितृसच्चरितः पेष्टुः पापभस्मा पुनःशुचिः ।
फालनेत्रः फुल्लकेशः फुल्लकल्हारभूषितः ॥ ६५ ॥

फणिसेव्यः पट्टभद्रः पटुर्वाग्मी वयोऽधिकः ।
चोरनाट्यश्चोरवेषः चोरघ्नश्चौर्यवर्धनः ॥ ६६ ॥

चञ्चलाक्षश्चामरको मरीचिर्मन्दगामिकः ।
मृडाभो मेषवाहश्च मैथिल्यो मोचको मनः ॥ ६७ ॥

मनुरूपो मन्त्रदेवो मन्त्रराशिर्महादृढः ।
स्थूपिञ्जो धनदाता च देववन्द्यश्च तारणः ॥ ६८ ॥

यज्ञप्रियो यमाध्यक्ष इभक्रीड इभेक्षणः ।
दधिप्रियो दुराधर्षो दारुपालो दनूजहा ॥ ६९ ॥

दामोदरो दामधरो दक्षिणामूर्तिरूपकः ।
शचीपूज्यः शङ्खकर्णः चंद्रचूडो मनुप्रियः ॥ ७० ॥

गुडरूपो गुडाकेशः कुलधर्मपरायणः ।
कालकण्ठो गाढगात्रो गोत्ररूपः कुलेश्वरः ॥ ७१ ॥

आनन्दभैरवाराध्यो हयमेधफलप्रदः ।
दध्यन्नासक्तहृदयो गुडान्नप्रीतमानसः ॥ ७२ ॥

घृतान्नासक्तहृदयो गौराङ्गो गर्वभञ्जकः ।
गणेशपूज्यो गगनो (गहनो) गणानां पतिर्गर्जितः ॥ ७३ ॥

छद्महीनः शशिरदः शत्रूणां पतिरङ्गिराः ।
चराचरमयः शान्तः शरभेशः शतातपः ॥ ७४ ॥

वीराराध्यो वक्रगमो वेदाङ्गो वेदसञ्चरः ।
पर्वतारोहणः पूषा परमेशः प्रजापतिः ॥ ७५ ॥

भावज्ञो भवरोगघ्नो भवसागरतारणः ।
चिदग्निदेहश्चिद्रूपः चिदानन्दश्चिदाकृतिः ॥ ७६ ॥

नाट्यप्रियो नरपतिः नरनारायणार्चितः ।
निषादराजो नीहारो नेष्टा निष्ठुरभाषणः ॥ ७७ ॥

निम्नप्रियो नीलनेत्रो नीलाङ्गो नीलकेशकः ।
सिंहाक्षः सर्वविघ्नेशः सामवेदपरायणः ॥ ७८ ॥

सनकादिमुनिध्येयः शर्वरीशः षडाननः ।
सुरूपः सुलभः स्वर्गः शचीनाथेन पूजितः ॥ ७९ ॥

काकिनः कामदहनो दग्धपापो धराधिपः ।
दामग्रन्थी शतस्त्रीशः तन्त्रीपालश्च तारकः ॥ ८० ॥

ताम्राक्षस्तीक्ष्णदंष्ट्रश्च तिलभोज्यः तिलोदरः ।
माण्डुकर्णो मृडाधीशो मेरुवर्णो महोदरः ॥ ८१ ॥

मार्ताण्डभैरवाराध्यो मणिरूपो मरुद्वहः ।
माषप्रियो मधुपानो मृणालो मोहिनीपतिः ॥ ८२ ॥

महाकामेशनयनो माधवो मदगर्वितः ।
मूलाधारांबुजावासो मूलविद्यास्वरूपकः ॥ ८३ ॥

स्वाधिष्ठानमयः स्वस्थः स्वस्तिवाक्यः स्रुवायुधः ।
मणिपूराब्जनिलयो महाभैरवपूजितः ॥ ८४ ॥

अनाहताब्जरसिको ह्रींकाररसपेशलः ।
भ्रूमध्यवासो भ्रूकान्तो भरद्वाजेन पूजितः ॥ ८५ ॥

सहस्रारांबुजावासः सविता सामवाचकः ।
मुकुन्दश्च गुणातीतो गुणपूज्यो गुणाश्रयः ॥ ८६ ॥

धन्यश्च धनभृद्दाहो धनदानकरांबुजः ।
महाशयो महातीतो मायाहीनो मदर्चितः ॥ ८७ ॥

माठरो मोक्षफलदो मद्वैरिकुलनाशनः ।
पिङ्गलः पिञ्छचूडश्च पिशिताशपवित्रकः ॥ ८८ ॥

पायसान्नप्रियः पर्वपक्षमासविभाजकः ।
वज्रभूषो वज्रकायो विरिञ्चो वरवक्षसः ॥ ८९ ॥

विज्ञानकलिकाबृन्दो विश्वरूपप्रदर्शकः ।
डंभघ्नो दमघोषघ्नो दासपालः तपौजसः ॥ ९० ॥

द्रोणकुंभाभिषिक्तश्च द्रोहिनाशस्तपातुरः ।
महाधीरेन्द्रवरदो महासंसारनाशनः ॥ ९१ ॥

लाकिनीहाकिनीलब्धो लवणांभोधितारणः ।
काकिनः कालपाशघ्नः कर्मबन्धविमोचकः ॥ ९२ ॥

मोचको मोहनिर्भिन्नो भगाराध्यो बृहत्तनुः ।
अक्षयोऽक्रूरवरदो वक्रागमविनाशनः ॥ ९३ ॥

डाकिनः सूर्यतेजस्वी सर्वभूषश्च सद्गुरुः ।
स्वतन्त्रः सर्वतन्त्रेशो दक्षिणामूर्तिरूपकः ॥ ९४ ॥

चित्सदानन्दकलिकः प्रेमरूपः प्रियङ्करः ।
मिथ्याजगदधिष्ठानो मुक्तिदो मुक्तिरूपकः ॥ ९५ ॥

मुमुक्षुः कर्मफलदो मार्गदक्षोऽथ कार्मणः ।
महाबुद्धो महाशुद्धः शुकवर्णः शुकप्रियः ॥ ९६ ॥

सोमप्रियः सुरप्रीतः पर्वाराधनतत्परः ।
अजपो जनहंसश्च हलपाणिप्रपूजितः ॥ ९७ ॥

अर्चितो वर्चसो वाग्मी वीरवेषो विधुप्रियः ।
लास्यप्रियो लयकरो लाभालाभविवर्जितः ॥ ९८ ॥

पञ्चाननः पञ्चगुरुः पञ्चयज्ञफलप्रदः ।
पशुहस्तः पावकेशः पर्जन्यसमगर्जितः ॥ ९९ ॥

पापारिः परमोदारः प्रजेशः पङ्कनाशनः ।
नष्टकर्मा नष्टवैर इष्टसिद्धिप्रदायकः ॥ १०० ॥

नागाधीशो नष्टपापः इष्टनामविधायकः ।
सामरस्योऽप्रमेयश्च पाषण्डी पर्वतप्रियः ॥ १०१ ॥

पञ्चकृत्यः परोपेतः पञ्चपञ्चातिशायिकः ।
पद्माक्षः पद्मवदनः पावकाभः प्रियंकरः ॥ १०२ ॥

कार्तस्वराङ्गो गौराङ्गो गौरीपुत्रो गणेश्वरः ।
आश्लिष्टः श्लिष्टवपुषः शीतांशुः शुभदीधितिः ॥ १०३ ॥

दक्षध्वंसो दक्षकरो वरः कात्यायनीसुतः ।
सुमुखो मार्गणो गर्भो गर्वभङ्गः कुशासनः ॥ १०४ ॥

कुलपालपतिः श्रेष्ठः पवमानः प्रजाधिपः ।
दर्शप्रियो दर्विकरो दीर्घकायो दिवाकरः ॥ १०५ ॥

भेरीनादप्रियो बृन्दो बृहत्सेनः सुपालकः ।
सुब्रह्मा ब्रह्मरसिको रसज्ञो रजताद्रिभाः ॥ १०६ ॥

तिमिरघ्नो मिहिराभो महानीलसमप्रभः ।
श्रीचन्दनविलिप्ताङ्गः श्रीपुत्रः श्रीतरुप्रियः ॥ १०७ ॥

लाक्षावर्णो लसत्कर्णो रजनीध्वंसिसन्निभः ।
बिन्दुप्रियोऽम्बिकापुत्रो बैन्दवो बलनायकः ॥ १०८ ॥

आपन्नतारकस्तप्तः तप्तकृच्छ्रफलप्रदः ।
मरुद्वृधो महाखर्वः चिरावासः शिखिप्रियः ॥ १०९ ॥

आयुष्माननघो दूत आयुर्वेदपरायणः ।
हंसश्च परमो हंसश्चावधूताश्रमप्रियः ॥ ११० ॥

आशुवेगोऽश्वहृदयो हयमेध फलप्रदः ।
सुमुखो दुर्मुखो विघ्नोऽविघ्नो विघ्नविनाशनः ॥ १११ ॥

आर्यो नाथोऽर्यमाभासः फल्गुनः पार्वतीप्रियः ।
अरातिघ्नो घनग्रीवो ग्रीष्मसूर्यसमप्रभः ॥ ११२ ॥

किरीटी कल्पशास्त्रज्ञः कल्पानलविधायकः ।
ज्ञानविज्ञानफलदो विरिञ्चारिविनाशनः ॥ ११३ ॥

वीरमार्ताण्डवरदो वीरबाहुश्च पूर्वजः ।
वीरसिंहासनो विज्ञो वीरकार्योऽस्त्रदानवः ॥ ११४ ॥

नरवीरसुहृद्भ्राता नागरत्नविभूषितः ।
वाचस्पतिः पुरारातिः संवर्तः समरेश्वरः ॥ ११५ ॥

उरुवाग्म्यप्युमापुत्रः उडुलोकसुरक्षकः ।
शृङ्गाररससंपूर्णः सिन्दूरतिलकाङ्कितः ॥ ११६ ॥

कुङ्कुमाङ्कितसर्वाङ्गः कालिकेयविनाशनः ।
मत्तनागप्रियो नीतो नागगन्धर्वपूजितः ॥ ११७ ॥

सुस्वप्नबोधको बोधो गौरी (ळी) दुस्स्वप्ननाशनः ।
चिन्ताराशिपरिध्वंसी चिन्तामणिविभूषितः ॥ ११८ ॥

चराचरजगत्स्रष्टा चलत्कुण्डलकर्णयुग् ।
मुकुरास्यो मूलनिधिः निधिद्वयनिषेवितः ॥ ११९ ॥

नीराजनप्रीतमना नीरनेत्रो नयप्रदः ।
केदारेशः किरातश्च कालात्मा कल्पविग्रहः ॥ १२० ॥

कल्पान्तभैरवाराध्यः काकपत्रशरायुधः ।
कलाकाष्ठास्वरूपश्च ऋतुवर्षादिमासवान् ॥ १२१ ॥

दिनेशमण्डलावासो वासवेन प्रपूजितः ।
बहुलस्तम्बकर्मज्ञः पञ्चाशद्वर्णरूपकः ॥ १२२ ॥

चिन्ताहीनः चिदाक्रान्तः चारुपालो बलायुधः ।
बन्धूककुसुमप्रख्यः परगर्वविभञ्जनः ॥ १२३ ॥

विद्वत्तमो विराधघ्नः सच्चित्रश्चित्रकर्मकः ।
सङ्गीतलोलुपमनाः स्निग्धगंभीरगर्जितः ॥ १२४ ॥

तुङ्गवक्त्रः स्तवरसश्चाभ्राभो भ्रमरेक्षणः ।
लीलाकमलहस्ताब्जो बालकुन्दविभूषितः ॥ १२५ ॥

लोध्रप्रसवशुद्धाभः शिरीषकुसुमप्रियः ।
त्रासत्राणकरस्तत्वं तत्ववाक्यार्थबोधकः ॥ १२६ ॥

वर्षीयांश्च विधातव्यो वेदान्तप्रतिपादकः ।
मूलभूतो मूलतत्वो मूलकारणविग्रहः ॥ १२७ ॥

आदिनाथोऽक्षयफलपाणिर्जन्मपराजितः ।
गानप्रियो गानलोलो महेशो विज्ञमानसः ॥ १२८ ॥

गिरिजास्तन्यरसिको गिरिराजवरस्तुतः ।
पीयूषकुम्भहस्ताब्जः पाशत्यागश्चिरन्तनः ॥ १२९ ॥

सुधालालसवक्त्राब्जः सुरद्रुमफलेप्सितः ।
रत्नहाटकभूषाङ्गो रावणादिप्रपूजितः ॥ १३० ॥

कनत्कालेशसुप्रीतः क्रौञ्चगर्वविनाशनः ।
अशेषजनसम्मोहः आयुर्विद्याफलप्रदः ॥ १३१ ॥

अवबद्धदुकूलाङ्गो हारालंकृतकन्धरः ।
केतकीकुसुमप्रीतः कलभैः परिवारितः ॥ १३२ ॥

केकाप्रियः कार्तिकेयः सारङ्गनिनदप्रियः ।
चातकालापसन्तुष्टः चमरीमृगसेवितः ॥ १३३ ॥

आम्रकूटाद्रिसञ्चारः आम्नायफलदायकः ।
अक्षसूत्रधृतपाणिः अक्षिरोगविनाशनः ॥ १३४ ॥

मुकुन्दपूज्यो मोहाङ्गो मुनिमानसतोषितः ।
तैलाभिषिक्तसुशिराः तर्जनीमुद्रदर्शनः ॥ १३५ ॥

लटातकामनःप्रीतः तमोगुणविनाशनः ।
अनामयो ह्यनादर्शो अर्जुनाभो हुतप्रियः ॥ १३६ ॥

षाड्गुण्यपरिसंपूर्णः सप्ताश्वादिग्रहैः स्तुतः ।
वीतशोकः प्रसादज्ञः सप्तप्राणवरप्रदः ॥ १३७ ॥

सप्तार्चिश्च त्रिनयनः त्रिवेणीफलदायकः ।
कृष्णवर्मा वेदमुखो दारुमण्डलमध्यगः ॥ १३८ ॥

वीरनूपुरपादाब्जो वीरकङ्कणपाणिमान् ।
विश्वमूर्तिः शुद्धमुखः शुद्धभस्मानुलेपनः ॥ १३९ ॥

शुंभध्वंसिनीसंपूज्यो रक्तकुंभकुलान्तकः ।
निषादादिस्वरप्रीतो नमस्कारफलप्रदः ॥ १४०

भक्तारिपश्चतादायी सज्जीकृतशरायुधः ।
अभयंकरमंत्रज्ञः कुब्जिकामंत्रविग्रहः ॥ १४१ ॥

धूम्रास्त्र उग्रतेजस्वी दशकण्ठविनाशनः ।
आशुगायुधहस्ताब्जो गदायुधकरांबुजः ॥ १४२ ॥

पाशायुधसुपाणिश्च कपालायुधसद्भुजः ।
सहस्रमूर्धवदनः सहस्रद्वयलोचनः ॥ १४३ ॥

नानाहेतिधर(धनुष्)पाणिः नानास्थिभूषणप्रियः ।
आश्यामकोमलतनुः आरक्तापाङ्गलोचनः ॥ १४४ ॥

द्वादशाहक्रतुप्रीतः पौण्डरीकफलप्रदः ।
आप्तोर्यामक्रतुमयः चयनादिफलप्रदः ॥ १४५ ॥

पशुबन्धफलदाता वाजपेयात्मदैवतम्।
आब्रह्मकीटजननावनात्मा चंपकप्रियः ॥ १४६ ॥

पशुपाशविभागज्ञः पतिज्ञानप्रदायकः ।
कल्पेश्वरः कल्पवर्यो जातवेदाः प्रभाकरः ॥ १४७ ॥

कुंभीश्वरः कुंभपाणिः कुंकुमाक्त ललाटकः ।
शिलीध्रपत्रसंकाशः सिंहवक्त्रप्रमर्दनः ॥ १४८ ॥

कोकिलध्वनिताकर्णी कालनाशनतत्परः ।
नैयायिकमतघ्नश्च बौद्धसङ्घविनाशनः ॥ १४९ ॥

हेमाब्जधृतपाणिश्च होमसंतुष्टमानसः ।
पितृयज्ञस्य फलदः पितेव जनरक्षकः ॥ १५० ॥

पदातिकर्मनिरतः पृषदाज्यप्रदायकः ।
महासुरवधोद्युक्तः स्वास्त्रप्रत्यस्त्रवर्षकः ॥ १५१ ॥

महावर्षतिरोधानो नागाधृतकरांबुजः ।
नमः स्वाहा वषट् श्रौषट् पल्लवप्रतिपादकः ॥ १५२ ॥

मिहिरसदृशग्रीवो मिहिरसदृशस्तवः ।
तंत्रीवादनहस्ताग्रः संगीतप्रियमानसः ॥ १५३ ॥

चिदंशमुकुरावासो मणिकूटाद्रिसंचरः ।
लीलासंचारतनुको लिङ्गशास्त्रप्रवर्तकः ॥ १५४ ॥

राकेन्दुद्युतिसंपन्नो यागकर्मफलप्रदः ।
मैनाकगिरिसञ्चारो मधुवंशविनाशनः ।
तालखण्डपुरावासः तमालनिभतेजसः ॥ १५५

*____*____*

॥ श्रीः ॥

# श्रीहरिहरपुत्रसहस्रनामावलिः

ओं शिवपुत्राय नमः । महातेजसे । शिवकार्यधुरन्धराय । शिवप्रदाय । शिवज्ञानिने । शैवधर्म सुरक्षिताय । शंखधारिणे । सुराध्यक्षाय । चन्द्रमौलये । सुरोत्तमाय । कामेशाय । कामतेजस्विने । कामादिफलसंयुताय । कल्याणाय । कोमलांगाय । कल्याणफलदायकाय । करुणाब्धये । कर्मदक्षाय । करुणारससागराय । जगत्प्रियाय नमः ॥ २०

ओं जगद्रक्षाय नमः । जगदानन्ददायकाय । जयादिशक्ति-संसेव्याय । जनाह्लादाय । जिगीषुकाय । जितेन्द्रियाय । जितक्रोधाय । जितदेवारिसंघकाय । जैमिन्यादिमुनिसेव्याय । जरामरण नाशकाय । जनार्दनसुताय । ज्येष्ठाय । ज्येष्ठादिगणसेविताय । जन्महीनाय । जितामोहाय । जनकेनाभिपूजिताय । परमेष्ठिने । पशुपतये । पङ्कजासन पूजिताय । पुरहन्त्रे नमः ॥ ४०

ओं पुरत्रात्रे नमः । परमैश्वर्यदायकाय । पवनादिसुरैः सेव्याय । पञ्चब्रह्म परायणाय । पार्वतीतनयाय । ब्रह्मणे । परानन्दाय । परात्पराय । ब्रह्मिष्ठाय । ज्ञाननिरताय । गुणागुणनिरूपकाय । गुणाध्यक्षाय । गुणनिधये । गोपालेनाभिपूजिताय । गोरक्षकाय । गोधनाय । गजारूढाय । गजप्रियाय । गजग्रीवाय । गजस्कन्धाय नमः ॥ ६०

ओं गभस्तये नमः । गोपतये । प्रभवे । ग्रामपालाय । गजाध्यक्षाय । दिग्गजेनाभिपूजिताय । गणाध्यक्षाय । गणपतये । गवांपतये । अहःपतये । जटाधराय । जलनिभाय । जैमिन्यैरभिपूजिताय । जलन्धरनिहन्त्रे । शोणाक्षाय । शोणवाससाय । सुराधिपाय । शोकहन्त्रे । शोभाक्षाय । सूर्यतेजसाय नमः ॥८०

ओं सुरार्चिताय नमः । सुरैर्वन्द्याय । शोणांगाय । शल्मलीपतये । सज्योतिषे । शरवीरघ्नाय । शरच्चन्द्रनिभाननाय । सनकादिमुनिध्येयाय । सर्वज्ञानप्रदाय । विभवे । हलायुधाय । हंसनिभाय । हाहा हूहू मुखस्तुताय । हरये । हरप्रियाय । हंसाय । हर्यक्षासन तत्पराय । पावनाय । पावकनिभाय । भक्तपापविनाशनाय नमः ॥ १००

ओं भसितांगाय नमः । भयत्रात्रे । भानुमते । भयनाशनाय । त्रिपुण्ड्रधारिणे । त्रिनयनाय । त्रिपुण्ड्राङ्कितमस्तकाय । त्रिपुरघ्नाय । देववराय । देवारिकुलसंहृताय । देवसेनाधिपाय । तेजसे । तेजोराशये । दशाननाय । दारुणाय । दोषहन्त्रे । दोर्दण्डाय । दण्डनायकाय । धनुष्पाणये । धराध्यक्षाय नमः ॥ १२०

ओं धनिकाय नमः । धर्मवत्सलाय । धर्मज्ञाय । धर्मनिरताय । धनुःशास्त्रपरायणाय । स्थूलकर्णाय । स्थूलतनवे । स्थूलाक्षाय । स्थूलबाहुकाय । तनूत्तमाय । तनुत्राणाय । तारकाय । तेजसांपतये । योगीश्वराय । योगनिधये । योगीनाय । योगसंस्थिताय । मन्दारवाटिकाय । मत्ताय । मलयाचलवासभुवे नमः ॥ १४०

ओं मन्दारकुसुमप्रख्याय नमः । मन्दमारुतसेविताय । महाभासाय । महावक्षसे । मनोहरमदार्चिताय । महोन्नताय । महाकायाय । महानेत्राय । महाहनवे । मरुत्पूज्याय । मानधनाय । मोहनाय । मोक्षदायकाय । मित्राय । मेधायै । महौजस्विने । महावर्षप्रदायकाय । भाषकाय । भाष्य शास्त्रज्ञाय । भानुमते नमः ॥ १६०

ओं भानुतेजसाय नमः । भवानीपुत्रकाय । भिषजे । भवतारण कारणाय । नीलाम्बराय । नीलनिभाय । नीलग्रीवाय । निरञ्जनाय । नेत्रत्रयाय । निषादज्ञाय । नानारत्नोपशोभिताय । रत्नप्रभाय । रमापुत्राय । रमया परितोषिताय । राजसेव्याय । राजधनाय । रणदोर्दण्डमण्डिताय । रमणाय । रेणुका सेव्याय । रजनीचरदारणाय नमः ॥ १८०

ओं ईशानाय नमः । इभराट्सेव्याय । ईषणात्रयनाशनाय । इडावासाय । हेमनिभाय । हैमप्राकारशोभिताय । हरिहरात्मजाय । हंसाय । हयग्रीवाय । हयप्रियाय । हाटकस्फटिकप्रख्याय । हंसारूढेन सेविताय । वनवासाय । वनाध्यक्षाय । वामदेवाय । वराननाय । वैवस्वत पतये । विष्णवे । विराड्रूपाय । विशालवते नमः ॥ २००

ओं वेणुनादाय नमः । वरग्रीवाय । वराभयकरान्विताय । वर्चस्विने । विपुलग्रीवाय । विपुलाक्षाय । विनोदवते । वैणववनवासाय । वामदेवेन सेविताय । वेत्रहस्ताय । वेदनिधये । वंशदेवाय । वरांगकाय । ह्रींकाराय । ह्रींमनसे । हृष्टाय । हिरण्याय । हेमसंभवाय । हुताशाय । हुतनिष्पन्नाय नमः ॥ २२०

ओं हुंकारकृतये । सुप्रभवे । हव्यवाहाय । हव्यकराय । अट्टहासाय । अपराहताय । अणुरूपाय । रूपकराय । अजराय । अतनुरूपकाय । हंसमन्त्राय । हुतभुजे । हेमांबराय । सुलक्षणाय । नीपप्रियाय । नीलवाससे । निधिपालाय । निरातपाय । क्रोडहस्ताय । तपस्त्रात्रे नमः ॥ २४०

ओं तपोरक्षाय नमः। तपाह्वयाय । मूर्धाभिषिक्ताय । मानधनाय । मन्त्ररूपाय । मृडाय । मनवे । मेधाविने । मेधसाय । मुष्णवे । मकराय । मकरालयाय । मार्ताण्डाय । मञ्जुकेशाय । मासपालाय । महौषधये । श्रोत्रियाय । शोभमानाय । सवित्रे । सर्वदेशिकाय नमः ॥ २६०

ओं चन्द्रहासाय नमः। शमाय । शक्ताय । शशिभासाय । समाधिकाय । सुदन्ताय । सुकपोलाय । षड्वर्णाय । संपदोऽधिपाय । गरलाय । कालकण्ठाय । गोनेत्रे । गोमुखप्रभवे । कौशिकाय । कालदेवाय । क्रोशकाय । क्रौञ्चभेदकाय । क्रियाकराय । कृपालवे । करवीरकरेरुहाय नमः ॥ २८०

ओं कन्दर्पदर्पहारिणे नमः । कामदात्रे । कपालकाय । कैलासवासाय । वरदाय । विरोचनाय । विभावसवे । बभ्रुवाहाय । बलाध्यक्षाय । फणामणि विभूषणाय । सुन्दराय । सुमुखाय । स्वच्छाय । सभासदे । सभाकराय । शरानिवृत्ताय । शंकाक्षाय । शरणागतपालकाय । तीक्ष्ण दंष्ट्राय । दीर्घजिह्वाय नमः ।। ३००

ओं पिंगलाक्षाय नमः । पिशाचघ्ने । अभेद्याय । अंगदाढ्याय । भोजपालाय । भूपतये । गृध्रनासाय । अविषह्याय । दिग्देहाय । दैन्यदाहकाय । बडबापूरितमुखाय । व्यापकाय । विषमोचकाय । हसन्ताय । समरक्रुद्धाय । पुंगवाय । पंकजासनाय । विश्वदर्पाय । निश्चिताज्ञाय । नागाभरणभूषिताय नमः ।।३२०

ओं भरताय नमः । भैरवाकाराय । भरणाय । वामनक्रियाय । सिंहास्याय । सिंहरूपाय । सेनापतये । सकारकाय । सनातनाय । सिद्धरुचये । सिद्धधर्मपरायणाय । आदित्यरूपाय । आपद्घ्नाय । अमृतांभोधिवासभुवे । युवराजाय । योगिवर्याय । उषस्तेजसे । उडुप्रभाय । देवादिदेवाय । दैवज्ञाय नमः ।। ३४०

ओं ताम्रोष्ठाय नमः । ताम्रलोचनाय । पिंगलाक्षाय । पिंछचूडाय । फणामणिविभूषिताय । भुजंगभूषणाय । भोगाय । भोगानन्दकराय ।अभयाय । पञ्चहस्तेन संपूज्याय । पञ्चबाणेन सेविताय । भवाय । शर्वाय । भानुमयाय । प्राजापत्यस्वरूपकाय । स्वच्छन्दाय । छन्दःशास्त्रज्ञाय । दान्ताय । देवमनुप्रभवे । दशभुजे नमः ।। ३६०

ओं दलाध्यक्षाय नमः । दानवानां विनाशनाय । सहस्राक्षाय । शतनिष्पन्नाय । शतानन्दाय । समागमाय । गरुडाद्रिवासाय । गंभीराय । गन्धग्राहाय । गणेश्वराय । गण्डकावासाय । गोमेधाय । गोकुलैःपरिवारिताय । परिवेषाय । पदज्ञानिने । प्रियङ्गुद्रुमवासकाय । गुहावासाय । गुरुवराय । वन्दनीयाय । वदान्यकाय नमः ।। ३८०

ओं वृत्ताकाराय नमः । वेणुपाणये । वीणादण्डधराय हराय । हैमिल्याय । होतृसुभगाय । हौत्रज्ञाय । ओजसां पतये । पवमानाय । प्रजातन्तुप्रदाय । दण्डविनाशनाय । निमील्याय । निमिषार्धज्ञाय । निमिषाकारकारणाय । लिगुडाभाय । लिडाकाराय । लक्ष्मीवन्द्याय । वरप्रभवे । इडाज्ञाय । पिंगलावासाय । सुषुम्नामध्यसंभवाय नमः ॥ ४००

ओं भिक्षाटनाय नमः । भीमवर्चसे । वरकीर्तये । सभेश्वराय । वाचातीताय । वरनिधये । परिवेत्रे । प्रमाणकाय । अप्रमेयाय । अनिरुद्धाय । अनन्तादित्यवर्चसाय । वेषप्रियाय । विषग्राहाय । वरदानकरोत्तमाय । विपिनाय । वेदसाराय । वेदान्तैः परितोषिताय । वक्रागमाय । वक्रवाचाय । बलदात्रे नमः ॥ ४२०

ओं विमानवते नमः । वज्रकान्ताय । वंशवराय । वटुरक्षाविशारदाय । वप्रकीडाय । विप्रपूज्याय । वेलाराशये । चलालकाय । क्रोडास्याय । क्रोडनेत्राय । कोलाहलाय । कपालभृते । खञ्जरीटाय । मञ्जुवाससे । क्रियमाणाय । क्रियाप्रदाय । क्रीडानाथाय । कीलहस्ताय । क्रोशमानाय । कुलान्तकाय नमः ॥ ४४०

ओं खनकाय नमः । होतृभागाय । खवासाय । खचराय । खगाय । गणकाय । गुणनिर्दुष्टाय । गुणत्यागाय । कुशाधिपाय । पाटलाय । पत्रधारिणे । पालाशाय । पुत्रवर्धनाय । पितृसञ्चरिताय । पेष्टवे । पापभस्मने । पुनःशुचये । फालनेत्राय । फुल्लकेशाय । फुल्लकल्हारभूषिताय नमः ॥ ४६०

ओं फणिसेव्याय नमः । पट्टभद्राय । पटवे । वाग्मिने । वयोऽधिकाय । चोरनाट्याय । चोरवेषाय । चोरघ्नाय । चौर्यवर्धनाय । चञ्चलाक्षाय । चामरकाय । मरीचये । मन्दगामिकाय । मृडाभाय । मेषवाहाय । मैथिल्याय । मोचकाय । मनसे । मनुरूपाय । मन्त्रदेवाय नमः ॥ ४८०

ओं मन्त्रराशये नमः । महादृढाय । स्थूपिङ्गाय । धनदात्रे । देववन्द्याय । तारणाय । यज्ञप्रियाय । यमाध्यक्षाय । इभक्रीडाय । इभेक्षणाय । दधिप्रियाय । दुराधर्षाय । दारुपालाय । दनूजघ्ने । दामोदराय । दामधराय । दक्षिणामूर्तिरूपकाय । शचीपूज्याय । शंखकर्णाय । चन्द्रचूडाय नमः ।। ५००

ओं मनुप्रियाय नमः । गुडरूपाय । गुडाकेशाय । कुलधर्मपरायणाय । कालकण्ठाय । गाढगात्राय । गोत्ररूपाय । कुलेश्वराय । आनन्दभैरवाराध्याय । हयमेधफलप्रदाय । दध्यन्नासक्तहृदयाय । गुडान्नप्रीतमानसाय । घृतान्नासक्तहृदयाय । गौरांगाय । गर्वभञ्जकाय । गणेशपूज्याय । गगनाय । गणानां पतये । गर्जिताय । छद्महीनाय नमः ।। ५२०

ओं शशिरदाय नमः । शत्रूणां पतये । अंगिरसे । चराचरमयाय । शान्ताय । शरभेशाय । शतातपाय । वीराराध्याय । वक्रगमाय । वेदांगाय । वेदसञ्चराय । पर्वतारोहणाय । पूष्णे । परमेशाय । प्रजापतये । भावज्ञाय । भवरोगघ्नाय । भवसागरतारणाय । चिदग्निदेहाय । चिद्रूपाय नमः ।। ५४०

ओं चिदानन्दाय नमः । चिदाकृतये । नाट्यप्रियाय । नरपतये । नरनारायणार्चिताय । निषादराजाय । नीहाराय । नेष्ट्रे । निष्ठुरभाषणाय । निम्नप्रियाय । नीलनेत्राय । नीलांगाय । नीलकेशकाय । सिंहाक्षाय । सर्वविघ्नेशाय । सामवेदपरायणाय । सनकादिमुनिध्येयाय । शर्वरीशाय । षडाननाय । सुरूपाय नमः ।। ५६०

ओं सुलभाय नमः । स्वर्गाय । शचीनाथेन पूजिताय । काकिनाय । कामदहनाय । दग्धपापाय । धराधिपाय । दामग्रन्थिने । शतस्त्रीशाय । तन्त्रीपालाय । तारकाय । ताम्राक्षाय । तीक्ष्णदंष्ट्राय । तिलभोज्याय । तिलोदराय । माण्डुकर्णाय । मृडाधीशाय । मेरुवर्णाय । महोदराय । मार्ताण्ड भैरवाराध्याय नमः ।। ५८०

ओं मणिरूपाय नमः । मरुद्वहाय । माषप्रियाय । मधुपानाय । मृणालाय । मोहिनीपतये । महाकामेशनयनाय । माधवाय । मदगर्विताय । मूलाधारांबुजावासाय । मूलविद्यास्वरूपकाय । स्वाधिष्ठानमयाय । स्वस्थाय । स्वस्तिवाक्याय । स्रुवायुधाय । मणिपूराब्जनिलयाय । महाभैरवपूजिताय । अनाहताब्जरसिकाय । ह्रींकाररसपेशलाय । भ्रूमध्यवासाय नमः ॥ ६००

ओं भ्रूकान्ताय नमः । भरद्वाजेन पूजिताय । सहस्रारांबुजावासाय । सवित्रे । सामवाचकाय । मुकुन्दाय । गुणातीताय । गुणपूज्याय । गुणाश्रयाय । धन्याय । धनभृते । दाहाय । धनदानकरांबुजाय । महाशयाय । महातीताय । मायाहीनाय । मदर्चिताय । माठराय । मोक्षफलदाय । मद्वैरिकुलनाशनाय नमः ॥ ६२०

ओं पिंगलाय नमः । पिञ्छचूडाय । पिशिताशपवित्रकाय । पायसान्नप्रियाय । पर्वपक्षमासविभाजकाय । वज्रभूषाय । वज्रकायाय । विरिञ्चाय । वरवक्षसाय । विज्ञानकलिकाबृन्दाय । विश्वरूपप्रदर्शकाय । डंभघ्नाय । दमघोषघ्नाय । दासपालाय । तपौजसाय । द्रोणकुंभाभिषिक्ताय । द्रोहिनाशाय । तपातुराय । महाधीरेन्द्रवरदाय । महासंसारनाशनाय नमः ॥ ६४०

ओं लाकिनीहाकिनीलब्धाय नमः । लवणांभोधितारणाय । काकिनाय । कालपाशघ्नाय । कर्मबन्धविमोचकाय । मोचकाय । मोहनिर्भिन्नाय । भगाराध्याय । बृहत्तनवे । अक्षयाय । अक्रूरवरदाय । वक्रागमविनाशनाय । डाकिनाय । सूर्यतेजस्विने । सर्वभूषाय । सद्गुरवे । स्वतन्त्राय । सर्वतन्त्रेशाय । दक्षिणामूर्तिरूपकाय । चित्सदानन्दकलिकाय नमः ॥ ६६०

ओं प्रेमरूपाय नमः । प्रियंकराय । मिथ्याजगदधिष्ठानाय । मुक्तिदाय । मुक्तिरूपकाय । मुमुक्षवे । कर्मफलदाय । मार्गदक्षाय ।

कार्मणाय । महाबुद्धाय । महाशुद्धाय । शुकवर्णाय । शुकप्रियाय । सोमप्रियाय । सुरप्रीताय । पर्वाराधनतत्पराय । अजपाय । जनहंसाय । हलपाणिप्रपूजिताय । अर्चिताय नमः ॥ ६८०

ओं वर्चसाय नमः । वाग्मिने । वीरवेषाय । विधुप्रियाय । लास्यप्रियाय । लयकराय । लाभालाभविवर्जिताय । पञ्चाननाय । पञ्चगुरवे । पञ्चयज्ञफलप्रदाय । परशु(शूं)हस्ताय । पावकेशाय । पर्जन्यसमगर्जिताय । पापारये । परमोदाराय । प्रजेशाय । पंकनाशनाय । नष्टकर्मणे । नष्टवैराय । इष्टसिद्धिप्रदायकाय नमः ॥ ७००

ओं नागाधीशाय नमः । नष्टपापाय । इष्टनामविधायकाय । सामरस्याय । अप्रमेयाय । पाषण्डिने । पर्वतप्रियाय । पञ्चकृत्याय । परोपेताय । पञ्चपञ्चातिशायिकाय । पद्माक्षाय । पद्मवदनाय । पावकाभाय । प्रियंकराय । कार्तस्वरांगाय । गौरांगाय । गौरीपुत्राय । गणेश्वराय । आश्लिष्टाय । श्लिष्टवपुषे(षाय) नमः ॥ ७२०

ओं शीतांशवे नमः । शुभदीधितये । दक्षध्वंसाय । दक्षकराय । वराय । कात्यायनीसुताय । सुमुखाय । मार्गणाय । गर्भाय । गर्वभंगाय । कुशासनाय । कुलपालपतये । श्रेष्ठाय । पवमानाय । प्रजाधिपाय । दर्शप्रियाय । दर्विकराय । दीर्घकायाय । दिवाकराय । भेरीनादप्रियाय नमः ॥ ७४०

ओं बृन्दाय नमः । बृहत्सेनाय । सुपालकाय । सुब्रह्मणे । ब्रह्मरसिकाय । रसज्ञाय । रजताद्रिभासे । तिमिरघ्नाय । मिहिराभाय । महानीलसमप्रभाय । श्रीचन्दनविलिप्तांगाय । श्रीपुत्राय । श्रीतरुप्रियाय । लाक्षावर्णाय । लसत्कर्णाय । रजनीध्वंसिसन्निभाय । बिन्दुप्रियाय । अंबिकापुत्राय । बैन्दवाय । बलनायकाय नमः ॥ ७६०

ओं आपन्नतारकाय नमः । तप्ताय । तप्तकृच्छ्रफलप्रदाय । मरुद्वृधाय । महाखर्वाय । चिरावासाय । शिखिप्रियाय । आयुष्मते ।

अनघाय। दूताय। आयुर्वेदपरायणाय। हंसाय। परमहंसाय। अवधूताश्रम-प्रियाय । आशुवेगाय। अश्वहृदयाय। हयमेधफलप्रदाय । सुमुखाय । दुर्मुखाय। विघ्नाय नमः ॥ ७८०

ओं अविघ्नाय नमः । विघ्नविनाशनाय । आर्याय । नाथाय । अर्यमाभासाय। फल्गुनाय। पार्वतीप्रियाय। अरातिघ्नाय । घनग्रीवाय। ग्रीष्मसूर्यसमप्रभाय। किरीटिने। कल्पशास्त्रज्ञाय। कल्पानलविधायकाय । ज्ञानविज्ञानफलदाय । विरिञ्चारिविनाशनाय । वीरमार्ताण्डवरदाय । वीरबाहवे। पूर्वजाय। वीरसिंहासनाय। विज्ञाय नमः ॥ ८००

ओं वीरकार्याय नमः। अस्त्रदानवाय। नरवीरसुहृद्भ्रात्रे। नागरत्न-विभूषिताय । वाचस्पतये । पुरारातये । संवर्ताय । समरेश्वराय । उरुवाग्मिने । उमापुत्राय । उडुलोकसुरक्षकाय । शृंगाररससंपूर्णाय । सिंदूरतिलकांकिताय । कुंकुमांकितसर्वांगाय । कालिकेयविनाशनाय । मत्तनागप्रियाय । नीताय । नागगन्धर्वपूजिताय । सुस्वप्नबोधकाय । बोधाय नमः ॥ ८२०

ओं गौरीदुःस्वप्ननाशनाय नमः। चिंताराशिपरिध्वंसिने। चिन्ता-मणिविभूषिताय। चराचरजगत्स्रष्ट्रे। चलत्कुण्डलकर्णयुजे। मुकुरास्याय । मूलनिधये । निधिद्वयनिषेविताय । नीराजनप्रीतमनसे । नीरनेत्राय । नयप्रदाय । केदारेशाय । किराताय । कालात्मने । कल्प-विग्रहाय । कल्पान्तभैरवाराध्याय। काकपत्रशरायुधाय । कलाकाष्ठा-स्वरूपाय। ऋतुवर्षादिमासवते। दिनेशमण्डलावासाय नमः ॥ ८४०

ओं वासवेन प्रपूजिताय नमः। बहुलस्तंबकर्मज्ञाय। पञ्चाशद्वर्ण-रूपकाय । चिन्ताहीनाय। चिदाक्रान्ताय। चारुपालाय। बलायुधाय। बन्धूककुसुमप्रख्याय। परगर्वविभञ्जनाय। विद्वत्तमाय। विराधघ्नाय। सच्चित्राय। चित्रकर्मकाय। संगीतलोलुपमनसे। स्निग्धगंभीरगर्जिताय। तुंगवक्त्राय। स्तवरसाय। अभ्राभाय। भ्रमरेक्षणाय । लीलाकमल-हस्ताब्जाय नमः ॥ ८६०

ओं बालकुन्दविभूषिताय नमः । लोध्रप्रसवशुद्धाभाय । शिरीष-कुसुमप्रियाय । त्रासत्राणकराय । तत्वाय । तत्ववाक्यार्थबोधकाय । वर्षीयसे । विधातव्याय । वेदान्तप्रतिपादकाय । मूलभूताय । मूलतत्वाय । मूलकारणविग्रहाय । आदिनाथाय । अक्षयफलपाणये । जन्मपराजिताय । गानप्रियाय । गानलोलाय । महेशाय । विज्ञमानसाय । गिरिजास्तन्य-रसिकाय नमः ॥ ८८०

ओं गिरिराजवरस्तुताय नमः । पीयूषकुंभहस्ताब्जाय । पाशत्या-गाय । चिरन्तनाय । सुधालालसवक्त्राब्जाय । सुरद्रुमफलेप्सिताय । रत्नहाटकभूषांगाय । रावणादिप्रपूजिताय । कनत्कालेशसुप्रीताय । क्रौञ्चगर्वविनाशनाय । अशेषजनसंमोहाय । आयुर्विद्याफलप्रदाय । अवबद्धदुकूलांगाय । हारालंकृतकन्धराय । केतकीकुसुमप्रीताय । कलभैःपरिवारिताय । केकाप्रियाय । कार्तिकेयाय । सारंगनिनदप्रियाय । चातकालापसन्तुष्टाय नमः ॥ ९००

ओं चमरीमृगसेविताय नमः । आम्रकूटाद्रिसञ्चाराय । आम्नायफल-दायकाय । अक्षसूत्रधृतपाणये । अक्षिरोगविनाशनाय । मुकुन्दपूज्याय । मोहांगाय । मुनिमानसतोषिताय । तैलाभिषिक्तसुशिरसे । तर्जनीमुद्र-दर्शनाय । तटातकामनःप्रीताय । तमोगुणविनाशनाय । अनामयाय । अनादर्शाय । अर्जुनाभाय । हुतप्रियाय । षाड्गुण्यपरिसंपूर्णाय । सप्ताश्वादिग्रहैःस्तुताय । वीतशोकाय । प्रसादज्ञाय नमः ॥ ९२०

ओं सप्तप्राणवरप्रदाय नमः । सप्तार्चिषे । त्रिनयनाय । त्रिवेणीफलदायकाय । कृष्णवर्मणे । वेदमुखाय । दारुमण्डलमध्यगाय । वीरनूपुरपादाब्जाय । वीरकंकणपाणिमते । विश्वमूर्तये । शुद्धमुखाय । शुद्धभस्मानुलेपनाय । शुंभध्वंसिनीसंपूज्याय । रक्तकुंभकुलान्तकाय । निषादादिस्वरप्रीताय । नमस्कारफलप्रदाय । भक्तारिपञ्चतादायिने । सज्जीकृतशरायुधाय । अभयंकरमन्त्रज्ञाय । कुब्जिकामन्त्रविग्रहाय नमः ॥ ९४०

ओं धूम्राक्षाय नमः । उग्रतेजस्विने । दशकण्ठविनाशनाय । आशुगायुधहस्ताब्जाय । गदायुधकरांबुजाय । पाशायुधसुपाणये । कपालायुधसद्भुजाय । सहस्रमूर्धवदनाय । सहस्रद्वयलोचनाय । नानाहेतिधरपाणये । नानास्थिभूषणप्रियाय । आश्यामकोमलतनवे । आरक्तापांगलोचनाय । द्वादशाहक्रतुप्रीताय । पौण्डरीकफलप्रदाय । आप्तोर्यामक्रतुमयाय । चयनादिफलप्रदाय । पशुबन्धफलदात्रे । वाजपेयात्मदैवताय । आब्रह्मकीटजननावनात्मने । चंपकप्रियाय नमः ॥ ९६०

ओं पशुपाशविभागज्ञाय नमः । पतिज्ञानप्रदायकाय । कल्पेश्वराय । कल्पवर्याय । जातवेदसे । प्रभाकराय । कुंभीश्वराय । कुम्भपाणये । कुंकुमाक्तललाटकाय । शिलीध्रपत्रसंकाशाय । सिंहवक्त्रप्रमर्दनाय । कोकिलध्वनिताकर्णिने । कालनाशनतत्पराय । नैयायिकमतघ्नाय । बौद्धसंघविनाशनाय । हेमाब्जधृतपाणये । होमसन्तुष्टमानसाय । पितृयज्ञस्य फलदाय । पितेव जनरक्षकाय । पदातिकर्मनिरताय नमः ॥ ९८०

ओं पृषदाज्यप्रदायकाय नमः । महासुरवधोद्युक्ताय । स्वास्त्रप्रत्यस्त्र-वर्षकाय । महावर्षतिरोधानाय । नागाधृतकरांबुजाय । नमःस्वाहावषट्-श्रौषट्पल्लवप्रतिपादकाय । मिहिरसदृशग्रीवाय । मिहिरसदृशास्तवाय । तन्त्रीवादनहस्ताग्राय । संगीतप्रियमानसाय । चिदंशमुकुरावासाय । मणिकूटाद्रिसञ्चराय । लीलासञ्चारतनुकाय । लिंगशास्त्रप्रवर्तकाय । राकेन्दुद्युतिसंपन्नाय । यागकर्मफलप्रदाय । मैनाकगिरिसञ्चाराय । मधुवंशविनाशनाय । तालखण्डपुरावासाय । तमालनिभतेजसे नमः ॥ १००० ओं श्रीपूर्णापुष्कलाम्बा समेत श्री हरिहरपुत्र स्वामिने नमः । ॥ श्रीः ॥

# महाशास्तृत्रिशतनामावलिः

ध्यानं-

पूर्णापुष्कलयोः पतिं शिवसुतं दण्डासिशूलाब्जयुक्
चक्रेष्वासशराभयेष्टकुलिशान् हस्तैर्वहं सादरम्।
नानारत्नविचित्रितासनगतं कल्याणसिद्धिप्रदं
वीरादिप्रमुखैः सुसेवितपदं शास्तारमीड्यं भजे।

(''ओं ह्रीं हरिहरपुत्राय पुत्रलाभाय मदगजवाहनाय महाशास्त्रे नमः इति मन्त्रवर्णाद्याक्षरघटिता।'')

ओं। औषधीशानचूडाङ्क हरिमोहिनिसंभवाय नमः। ओतप्रोताखिलजगते। ओजस्विने। ओदनप्रियाय। ओमादिवर्णाय। ओकस्थाय। ओजोमण्डलनायकाय। औदार्यवते। औपनिषदमन्त्रविश्रुतवैभवाय नमः ॥ ९

ह्रीं। ह्रीं वर्णमूलाय नमः। ह्रींकाराय। ह्रीमते। ह्रेषाहतासुराय। हृत्पद्मनिलयाय। ह्लादिने। हृद्याय। हृष्टाय। हृदि स्थिताय नमः ॥ १८

ह। हरिपुत्राय नमः। हरिप्रीताय। हरित्पतिसमर्चिताय। हरिणाङ्कमुखाय। हारिणे। हालाहलहराय। हरये। हर्यक्षवाहनारूढाय। हयमेधसमर्चिताय नमः ॥ २७

रि। रिरंसवे नमः। रिक्तसंपूज्याय। रीतिमते। रीतिवर्धनाय। रिपुहर्त्रे। रिटीशानाय। रींकृतिस्तब्धकुञ्जराय। रिंखद्धण्टामणिगणाय। रीङ्कारमनुदैवताय नमः ॥ ३६

ह। हरपुत्राय नमः। हराराध्याय। हरिणाङ्कशिखामणये। हयारूढाय। हरिहरसूनवे। हरिमुखार्चिताय। हय्यङ्गवीनहृदयाय। हरप्रेमसुताय। हविषे नमः ॥ ४५

र। रक्षकाय नमः। रक्षितजगते। रक्षोनाथविनाशकृते। रञ्जकाय । रजनीचारिणे । रणन्मञ्जीरभूषणाय । रतिनाथसमाकाराय । रतिमन्मथपूजिताय। रासक्रीडादिसन्तुष्टपूर्णापुष्कलकन्यकाय नमः ।। ५४

पु । पुण्डरीकाक्षसंभूताय नमः । पुण्डरीकाजिनासनाय । पुरुहूतेडितपदाय । पुष्पदन्तसमर्चिताय । पुष्कलाभूषिततनवे । पुरन्दरसुतार्चिताय । पुरसंहारजनकपार्श्वस्थाय । पुण्यवर्धनाय । पुण्डरीकेभहर्यक्षतुरगाधिपवाहनाय नमः ।। ६३

त्रा । त्रात्रे नमः । त्रयीनुताय । त्रस्ताभयकृते । त्रिगुणाधिकाय । त्रयस्त्रिंशत्कोटिदेवसेविताय । त्राणतत्पराय । त्रिविक्रमसमाकाराय । त्रिणेत्राय । त्रिविधाकृतये नमः ।। ७२

य । यन्त्रे नमः । यन्त्रितदिग्दन्तिगिरिपन्नगमण्डलाय । यतीश्वराय । यज्ञवाटमध्यस्थाय । यजनप्रियाय । यजमानाय । यमिश्रेष्ठाय । यजुर्वेदप्रकीर्तिताय । यायजूकार्चितसभामध्यनाट्यविशारदाय नमः ।। ८१

पु । पुरन्दरार्चिताय नमः । पुण्याय । पुरुषार्थप्रदायकाय । पुरुवंश्यनृपाभीष्टप्रदात्रे । पूर्णाहुतिप्रियाय । पुष्पाभिरामाय । पूषेन्दुवह्निमण्डलभासुराय । पुरत्रयमहाक्रीडाय । पुष्कलावर्तमण्डलाय नमः ।। ९०

त्र । त्रियंबकस्य तनयाय नमः । त्रिंशद्बाहवे । त्रिसूत्रभृते । त्रिकोणस्थाय । त्रयीवेद्याय । तत्र तत्र स्थले स्थिताय । तृणावर्तासुरहराय । त्रिकालज्ञाय । तृतीयकाय नमः ।। ९९

ला । लाङ्गूलोपनिषद्गीताय नमः ।लावण्यजितमन्मथाय । लवणासुरसंहर्त्रे । लक्ष्मणाग्रेसरार्चिताय । लक्ष्मीप्रदाय । लघुश्यामाय । लम्बिकायोगमार्गकृते । लतानिभतनुच्छायाय । लोभहीन जनाश्रिताय नमः ।। १०८

भा । भानुकोटिप्रतीकाशाय । भाषमाणाय । भयापहाय । भीमसेनाय । भीमसखाय । भुक्तिमुक्तिपुलप्रदाय । भुसुण्डमुनिसंवेद्याय ।

भूषावते । भूतिभूषिताय नमः ॥ ११७

य । यातनारहिताय नमः । यज्वने । यक्षराजे । यमुनाश्रिताय । यन्त्रमन्त्रार्चनप्रीताय । यताक्षाय । यमशासनाय । यामिनीचरवीरादिगणसेव्याय । यमोन्नताय नमः ॥ १२६

श । शांकराय नमः । शंकरानन्दाय । शंखचक्रगदाधराय । शंखध्मानकराय । शास्त्रे । शकटैकरथोज्ज्वलाय । शर्वाणीतनयाय । शल्यनिग्रहाय । शकुनीडिताय नमः ॥ १३५

त्रु । त्रुटचादिकाल विज्ञात्रे नमः । त्रोटकादिमपूजिताय । त्रोटकादिमवृत्तज्ञाय । त्रिवर्णाय । त्रिजगत्प्रभवे । त्रिवर्गदात्रे । त्रिशतनामार्चनसुखप्रदाय । त्रिकाण्डिकाय । त्रिकूटाद्रिमध्यशृंग निकेतनाय नमः ॥ १४४

ना । नराय नमः । नरार्चिताय । नारीयुगळाय । नरवाहनाय । नरनारायणप्रीताय । नतकल्याणदायकाय । नन्दिने । नन्दीशविनुताय । नारदादिमुनीडिताय नमः ॥ १५३

शा । शक्राय नमः । शक्तिधराय । शाक्ताय । शरजन्मसहोदराय । शशांकवर्णाय । शतधाकृतामित्राय । शरासभृते । शिवानन्दकराय । शैवसिद्धान्तमुदितान्तराय नमः ॥ १६२

य । यथातथाकृतविधये नमः । यज्ञसूत्रधराय । यूने । यत्नादुत्सारितकिटये । यथाविधि समर्चिताय । योगिनीगण संवीताय । यक्षिण्युक्तजगत्कथाय । यन्त्रारूढ महामायाय । याकिन्यादि समन्विताय नमः ॥ १७१

म । मन्त्रिणे नमः । मन्त्रविदां श्रेष्ठाय । मणिवाचे । मणिभूषणाय । महनीयाय । मराळस्थाय । मणिमण्डप संस्थिताय । महाकल्पतरोर्मूलवासिने । मार्ताण्डभैरवाय नमः ॥ १८०

द । दण्डिने नमः । दण्डयित्रे । दण्डधराय । दैत्यान्तकात्मजाय । देवदेवाय । देवराजाय । दिव्यंससन्नटाधिपाय । दिवासमतनुच्छायाय ।

दिव्यगन्धांग लेपनाय नमः ।। (१८९)

ग । गजास्यसोदराय नमः । गौरीगंगासूनवे । गुणिने । गुरवे । गुरुकृपाय । गौरवर्णाय । गोकर्णस्थानवासकृते । गोदावरीतीरसंस्थाय गोपिकानन्दवर्धनाय नमः ।। १९८

ज । जगच्छास्त्रे नमः । जगन्नाथाय । जनकादिसुपूजिताय । जनाश्रिताय । जितक्रोधाय । ज्वरामय विनाशकाय । जम्भारि वन्दितपदाय । जगत्साक्षिणे । जपानिभाय नमः ।। २०७

वा । वातघ्नाय नमः । वामनयनाय । वामनाय । वाञ्छितार्थदाय । वाराणसीपतये । वाञ्छाकल्पाय । विन्ध्यविमर्दनाय । विन्ध्यारि मुनिसंसेव्याय । वीणावादन तत्पराय नमः ।। २१६

ह । हयग्रीवनुताय नमः । हन्त्रे । हयानन्दाय । हितप्रदाय । हुताशनधराय । होत्रे । हुंकारध्वस्तकंबलाय । हाटकश्रीसभानाथाय । हरगौरीप्रियोक्तिमुदे नमः ।। २२५

ना । नागराय नमः । नागराध्यक्षाय । नभोरूपाय । निरंजनाय । निर्विकाराय । निराहाराय । निर्वाणसुखदायकाय । नित्यानित्य विशेषज्ञाय । निर्मानुष्य वनाश्रयाय नमः ।। २३४

य । याम्याय नमः । यजनभूस्थायिने । यक्षराक्षसभेदनाय । योग्याय । योगपतये । युक्ताय । यामिनीचरघातुकाय । यामिनी-दस्युसंहर्त्रे । यमशासन शासनाय नमः ।। २४३

म । मनोन्मनस्थान संस्थाय नमः । मातामह हिमाचलाय । मारीरोग हराय । मन्युहीनाय । मान्धातृ पूजिताय । मणिशूल गदेभेन्द्रनराश्वांकित-गोपुराय । मनोवेगातिगमनाय । महादेवाय । महेश्वराय नमः ।। २५२

हा हालास्य नायकाय नमः । हालाहलसेनापतीडिताय । हलिने । हलायुधनुताय । हरिद्राकुंकुमांकिताय । हनूमते । हनूमत्पूज्याय । हेमाद्रीश सुतापतये । हिमाचलगुहावसियोगिबृन्दसमावृताय नमः ।। २६१

शा । शारदाय नमः । शारदानाथाय । शरच्चन्द्रनिभाननाय । शरानेकनिषङ्गाढ्याय । शरणागतवत्सलाय । शास्त्रज्ञाय । शाकरारूढाय । शयानाय । शिवताण्डवाय नमः ॥ २७०

त्रे । त्रापुषालय सन्त्राण पाण्डुपुत्र सुसंस्तुताय नमः । त्रातपाण्ड्य सुताराध्याय । तार्तीयीकाय । तमोहराय । ताम्रचूडध्वजप्रीतिजनकाय । तक्रपानमुदे । त्रिपदाक्रान्तभूताण्डाय । त्रिविधाय । त्रिदिनोत्सवाय नमः ॥ २७९

न । नमोजयस्वस्तिवाक्यप्रकीर्णध्वनिमन्दिराय नमः । नानारूपधराय । नानावेष वंचित पूर्वजाय । नामार्चन प्राणदात्रे । नरकासुर शिक्षकाय । नामसङ्कीर्तन प्रीताय । नारायण समुद्भवाय । नन्दगोप यशोदात्रे । निखिलागमसंस्तुताय ॥ २८८

म । मधुमुदे नमः । मधुरावासिने । महाविपिनमध्यगाय । महारुद्राक्ष कवचाय । महाभूतिसितप्रभाय । मन्त्रीकृतमहारायाय । महाभूतगणावृताय । महामुनीन्द्रनिचयाय । महाकारुण्यवारिधये । मनःसंस्मरणत्रात्रे नमः । महाशास्त्रे । महाप्रभवे नमः ॥ ३००

*___*___*

॥ श्रीः ॥

## श्रीमहाशास्तृ-अष्टोत्तरशतनामावलिः

ओं अस्य श्रीहरिहरपुत्राष्टोत्तरशतनामार्चनमहामन्त्रस्य, ब्रह्मा ऋषिः गायत्री छन्दः, श्रीहरिहरात्मजो महाशास्ता देवता । अं बीजं, ऐं शक्तिः, श्रीं कीलकं, श्रीहरिहरात्मज महाशास्तुः प्रसाद सिद्ध्यर्थे जपे विनियोगः । ओं अं रेवन्ताय अंगुष्ठाभ्यां नमः । हृदयाय नमः । ओं अं ऐं महाशास्त्रे तर्जनीभ्यां नमः । शिरसे स्वाहा । ओं श्रीं गोप्त्रे मध्यमाभ्यां नमः । शिखायै वषट् । ओं रुं प्रभवे अनामिकाभ्यां नमः । कवचाय हुं ।

ओं ह्रीं दीप्त्रे कनिष्ठिकाभ्यां नमः । नेत्रत्रयाय वौषट् । ओं भ्रं प्रशास्त्रे करतलकरपृष्ठाभ्यां नमः । अस्त्राय फट् । ओं ह्रीं जलक्रीणि हुं फट् (ओं भूर्भुवस्सुवः) इति दिग्बन्धः । ध्यानम् —

विप्रारोपितधेनुघातकलुषच्छेदाय पूर्वं महान्
सोमारण्यजयन्तिमध्यमगतो ग्रामे मुनिर्गौतमः ।
चक्रे यज्ञवरं कृपाजलनिधिस्तत्राविरासीत् प्रभुः
तस्मै श्रीगुरुमूर्तये नम इदं यो विष्णुशंभ्वो सुतः ॥ पञ्चपूजा ।

ओं रैवताचल शृङ्गाग्रमध्यस्थाय नमो नमः ।
रत्नादिसोमसंयुक्तशेखराय नमो नमः ।
चन्द्रसूर्यशिखावाहत्रिणेत्राय नमो नमः ।
पाशांकुशगदाशूलाभरणाय नमो नमः ।
मदघूर्णितपूर्णाम्बामानसाय नमो नमः ।
पुष्कलाहृदयाम्भोजनिवासाय नमो नमः ।
श्वेतमातङ्गनीलाश्ववाहनाय नमो नमः ।
रक्तमालाधरस्कन्धप्रदेशाय नमो नमः ।
वैकुण्ठनाथशंभ्वोश्च सुसुताय नमो नमः ।
त्रिकालं वर्त्तमानानां भाषणाय नमो नमः ॥ १०
महासुरदशकरच्छेदनाय नमो नमः ।
देवराजसुवाक्तुष्टमानसाय नमो नमः ।
अभयंकर मन्त्रार्थस्वरूपाय नमो नमः ।
जयशब्दमुनिस्तोत्रश्रोत्रियाय नमो नमः ।
सूर्यकोटिप्रतीकाशसुदेहाय नमो नमः ।
दण्डनाराचविलसत्कराब्जाय नमो नमः ।
मन्दाकिनीनदीतीरनिवासाय नमो नमः ।

मतङ्गोद्यानसञ्चार वैभवाय नमो नमः ।
सदा सद्भक्तिसंधातृचरणाय नमो नमः ।
कृशानुकोणमध्यस्थकृपाङ्गाय नमो नमः ॥ २० ॥
पार्वतीहृदयानन्दभरिताय नमो नमः ।
शाण्डिल्यमुनिसंस्तुत्यश्यामळाय नमो नमः ।
विश्वावसु-सदासेव्यविभवाय नमो नमः ।
पञ्चाक्षरीमहामन्त्रपारगाय नमो नमः ।
प्रभा सत्याभिसंपूज्यपदाब्जाय नमो नमः ।
खड्ग खेटोरगांभोजसुभुजाय नमो नमः ।
मदत्रयद्रवगजारोहणाय नमो नमः ।
चिन्तामणिमहापीठमध्यगाय नमो नमः ।
शिखिपिञ्छजटाबद्धजघनाय नमो नमः ।
पीताम्बराबद्धकटिप्रदेशाय नमो नमः । ३०
विप्राराधन सन्तुष्ट विश्रान्ताय नमो नमः ।
व्योमाग्नि-माया मूर्धेन्दु सुबीजाय नमो नमः ।
पुरा कुम्भोद्भवमुनि घोषिताय नमो नमः ।
वर्गारिषट्कुलामूलविनाशाय नमो नमः ।
धर्मार्थकाममोक्षश्रीफलदाय नमो नमः ।
भक्तिप्रदानन्दगुरुपादुकाय नमो नमः ।
मुक्तिप्रदातृपरमदेशिकाय नमो नमः ।
परमेष्ठिस्वरूपेण पालकाय नमो नमः ।
परापरेण पद्मादिदायकाय नमो नमः ।
मनुलोकैस्सदावन्द्य मंगलाय नमो नमः । ४०
कृते प्रत्यक्षरं लक्षात् कीर्तिदाय नमो नमः ।

त्रेतायां द्व्यष्टलक्षेण सिद्धिदाय नमो नमः ।
द्वापरे चाष्टलक्षेण वरदाय नमो नमः ।
कलौ लक्षचतुष्केन प्रसन्नाय नमो नमः ।
सहस्र संख्याजापेन संतुष्टाय नमो नमः ।
यदुद्दिश्य जपस्सद्यस्तत्प्रदात्रे नमो नमः ।
शौनकस्तोत्रसंप्रीतसुगुणाय नमो नमः ।
शरणागतभक्तानां सुमित्राय नमो नमः ।
पाण्योर्गजध्वजं घण्टां बिभ्रते ते नमो नमः ।
आजानुद्वयसंदीर्घबाहुकाय नमो नमः । ५०
रक्तचन्दन लिप्ताङ्गशोभनाय नमो नमः ।
कमलासुर जीवापहरणाय नमो नमः ।
शुद्धचित्त सुभक्तानां रक्षकाय नमो नमः ।
मार्यादिदुष्टरोगाणां नाशकाय नमो नमः ।
दुष्टमानुषगर्वापहरणाय नमो नमः ।
नीलमेघनिभाकारसुदेहाय नमो नमः ।
पिपीलिकादि ब्रह्माण्ड वश्यदाय नमो नमः ।
भूतनाथसदासेव्यपदाब्जाय नमो नमः ।
महाकाळादिसंपूज्यवरिष्ठाय नमो नमः ।
व्याघ्रशार्दूल पञ्चास्य वश्यदाय नमो नमः । ६०
मधुरानृप सम्मोहसुवेषाय नमो नमः ।
पाण्ड्यभूपसभारत्नपङ्कजाय नमो नमः ।
राघवप्रीतशबरीस्वाश्रमाय नमो नमः ।
पम्पानदीसमीपस्थसदनाय नमो नमः ।
पन्तळाधिपवन्द्यश्रीपदाब्जाय नमो नमः ।

भूतभेताळकूश्माण्डोच्चाटनाय नमो नमः ।
भूपाग्रे वनशार्दूलाकर्षणाय नमो नमः ।
पाण्ड्येशवंशतिलकस्वरूपाय नमो नमः ।
पत्रवाणीजरारोगध्वंसनाय नमो नमः ।
वाण्यै चोदितशार्दूल शिशुदाय नमो नमः । ७०
केरळेषु सदा केळिविग्रहाय नमो नमः ।
आश्रिताखिलवंशादिवृद्धिदाय नमो नमः ।
छागास्यराक्षसीपाणिखण्डनाय नमो नमः ।
सदाज्वलद्घृणीन्यस्तशरणाय नमो नमः ।
दीप्त्यादिशक्तिनवकैस्सेविताय नमो नमः ।
प्रभूतनाम पञ्चास्यपीठस्थाय नमो नमः ।
प्रमथाकर्षसामर्थ्यदायकाय नमो नमः ।
षट्पञ्चाशत् देशपतिवश्यदाय नमो नमः ।
दुर्मुखीनामदैत्यशिरश्च्छेदाय नमो नमः ।
टादिभान्तदळैः क्लृप्तपद्मस्थाय नमो नमः । ८०
शरच्चन्द्रप्रतीकाशवक्त्राब्जाय नमो नमः ।
वश्याद्यष्टक्रियाकर्मफलदाय नमो नमः ।
वनवासादिसुप्रीतवरिष्ठाय नमो नमः ।
पुरा शचीभयभ्रान्तिप्रणाशाय नमो नमः ।
सुरेन्द्रप्रार्थिताभीष्टफलदाय नमो नमः ।
शम्भोर्जटासमुत्पन्नसेविताय नमो नमः ।
विप्रपूज्यसभामध्यनर्त्तकाय नमो नमः ।
जपापुष्पप्रभावोध्वार्धरोष्ठाय नमो नमः ।

साधुसज्जनसन्मार्गरक्षकाय नमो नमः ।
मध्वाज्यकुलवत्स्वादुवचनाय नमो नमः । ९०
रक्तसैकतशैलाघक्षेत्रस्थाय नमो नमः ।
केतकीवनमध्यस्थकुमाराय नमो नमः ।
गोहत्तिपापशमनच्चतुराय नमो नमः ।
स्वपूजनात् पापमुक्तगौतमाय नमो नमः ।
उदीच्याचलवारीशग्रामरक्षाय ते नमः ।
गौतमीसलिलस्नानसन्तुष्टाय नमो नमः ।
सोमारण्यजयन्ताख्यक्षेत्रमध्याय ते नमः ।
गौतमाख्यमुनिश्रेष्ठयागप्राच्यार्य ते नमः ।
कृत्तिकर्क्षोद्भवग्रामप्रवेशाय नमो नमः ।
कृत्तिकर्क्षोद्भवग्रामक्लेशनाशाय ते नमः । १००
कृत्तिकर्क्षोद्भवग्रामपालनाय नमो नमः ।
सदाध्यायिभरद्वाज पूजिताय नमो नमः ।
कश्यपादिमुनीन्द्राणां तपोदेशाय ते नमः ।
जन्ममृत्युजरातप्तजनशान्तिकृते नमः ।
भक्तजनमनःक्लेशमर्दनाय नमो नमः ।
आयुर्यशः श्रियं प्रज्ञां पुत्रान् देहि नमो नमः ।
रेवन्तजृम्भिन् एह्येहि प्रसादं कुरु मे नमः ।
ब्रह्मविष्णुशिवात्मैक्यस्वरूपाय नमो नमः १०८

*—*—*

# श्री महाशास्तृ - अष्टोत्तरशतनामावलिः

अस्य श्री महाशास्तृमहामन्त्रस्य, अर्धनारीश्वर ऋषिः, देवी गायत्री छन्दः, श्री महाशास्ता देवता। ह्रां बीजम्। ह्रीं शक्तिः। ह्रूं कीलकम्। श्री महाशास्तृप्रसादसिद्ध्यर्थे जपे विनियोगः। ह्रां अङ्गुष्ठाभ्यां नमः। ह्रीं तर्जनीभ्यां नमः। ह्रूं मध्यमाभ्यां नमः। ह्रैं अनामिकाभ्यां नमः। ह्रौं कनिष्ठिकाभ्यां नमः। ह्रः करतलकरपृष्ठाभ्यां नमः। ह्रां हृदयाय नमः। ह्रीं शिरसे स्वाहा। ह्रूं शिखायै वषट्। ह्रैं कवचाय हुं। ह्रौं नेत्रत्रयाय वौषट्। ह्रः अस्त्राय फट्। भूर्भुवः सुवरोमिति दिग्बन्धः।

ध्यानम्

कल्हारोज्ज्वलनीलकुन्तलभरं कालाम्बुदश्यामलं
कर्पूराकलिताभिरामवपुषं कान्तेन्दुबिंबाननम्।
श्रीदण्डाङ्कुशपाशशूलविलसत्पाणिं मदान्त-
द्विपारूढं शत्रुविमर्दनं हृदि महाशास्तारं आद्यं भजे॥

पञ्चोपचाराः।

मूलं—ओं ह्रीं हरिहरपुत्राय पुत्रलाभाय शत्रुनाशाय मदगजवाहनाय महाशास्त्रे नमः।

ओं महाशास्त्रे नमः। महादेवाय। महादेवसुताय। अव्ययाय। लोककर्त्रे। लोकभर्त्रे। लोकहर्त्रे। परात्पराय। त्रिलोकरक्षकाय। धन्विने। तपस्विने। भूतसैनिकाय। मन्त्रवेदिने। महावेदिने। मारुताय। जगदीश्वराय। लोकाध्यक्षाय। अग्रण्ये। श्रीमते। अप्रमेयपराक्रमाय नमः॥ २०

ओं सिंहारूढाय नमः। गजारूढाय। हयारूढाय। महेश्वराय। नानाशस्त्रधराय। अनर्घाय। नानाविद्याविशारदाय। नानारूपधराय। वीराय। नानाप्राणिनिषेवकाय। भूतेशाय। भूतिदाय। भृत्याय।

भुजङ्गाभरणोत्तमाय। इक्षुधन्विने। पुष्पबाणाय। महारूपाय।महाप्रभवे। मायादेवीसुताय। मान्याय नमः ॥ ४०

ओं महानीताय नमः। महागुणाय। महाशैवाय। महारुद्राय। वैष्णवाय। विष्णुपूजकाय। विघ्नेशाय। वीरभद्रेशाय। भैरवाय। षण्मुखध्रुवाय। मेरुशृङ्गसमासीनाय। मुनिसङ्घनिषेविताय। देवाय। भद्राय। जगन्नाथाय। गणनाथाय। गणेश्वराय। महायोगिने। महामायिने। महाज्ञानिने नमः ॥ ६०

ओं महास्थिराय नमः। देवशास्त्रे। भूतशास्त्रे। भीममहासपराक्रमाय। नागहाराय। नागकेशाय। व्योमकेशाय। सनातनाय। सुगुणाय। निर्गुणाय। नित्याय। नित्यतृप्ताय। निराश्रयाय। लोकाश्रयाय। गणाधीशाय। चतुःषष्टिकलामयाय। ऋग्यजुःसामाथर्वरूपिणे। मल्लकासुरभञ्जनाय। त्रिमूर्तये। दैत्यमथनाय नमः ॥ ८०

ओं प्रकृतये नमः। पुरुषोत्तमाय। कालज्ञानिने। महाज्ञानिने। कामदाय। कमलेक्षणाय। कल्पवृक्षाय। महावृक्षाय। विद्यावृक्षाय। विभूतिदाय। संसारतापविच्छेत्रे। पशुलोकभयङ्कराय। रोगहन्त्रे। प्राणधात्रे। परगर्वविभञ्जनाय। सर्वशास्त्रार्थतत्वज्ञाय। नीतिमते। पापभञ्जनाय। पुष्कलापूर्णा संयुक्ताय। परमात्मने नमः। १००

ओं सतां गतये नमः। अनन्तादित्यसंकाशाय। सुब्रह्मण्यानुजाय। बलिने। भक्तानुकंपिने। देवेशाय। भगवते। भक्तवत्सलाय नमः। १०८

ओं श्री पूर्णापुष्कलाम्बासमेत श्री हरिहरपुत्रस्वामिने नमः।

## हरिहरपुत्राष्टोत्तरशतनामावलिः

द्विहस्तं पद्मसंस्थं च शुक्लयज्ञोपवीतिनम्।
पूर्णया पुष्कलादेव्या युक्तं शास्तारमाश्रये ॥

ओं शास्त्रे नमः। हरिहरोद्भूताय। हरिहरपुत्राय। उन्मत्तगजवाहनाय । पुत्रलाभकराय । मदनोद्भवाय । शास्त्रार्थाय । चैतन्याय । चेतउद्भवाय । उत्तराय । रूपपञ्चकाय। स्थानपञ्चकाय। घृणये । वीराय। समुद्रवर्णाय। कालाय। परिग्रहाय। अमृताय। ब्रह्मरूपणे । विष्णु रूपिणे नमः।
२०

रुद्ररूपिणे नमः । वीररुद्राय । प्रभवे । स्त्रीरूपिणे । खड्गधारिणे । मातङ्गिने । मोहनाय । महामतये । कामितदाय । दिदृक्षवे । गरलाशनाय । जातस्थाय । महाकोटये । मेधाविने । द्विनेत्राय । द्विभुजाय । भूषिताय । श्यामलाय । यक्षाय । नागयज्ञोपवीतधृते नमः । ४०

रक्तांबरधराय नमः । कुण्डलोज्ज्वलाय । सद्योजाताय । सर्वसिद्धिकराय । पाणिदेवाय । पीतरक्ताय । सम्यङ्नुताय । सर्वाभरणसंयुक्ताय । शक्तिपार्श्वाय । विद्वेषाय । मदनाय । आर्याय । कन्यासुताय । मानिने । विकृताय । अमृताय । विक्रमाय । वीराय । दाक्षिणात्याय । हस्तीशाय नमः । ६०

चक्रेशाय नमः। दण्डधारणाय। मथनेशाय। मङ्गलदाय। पल्लवेशाय । अस्त्रेशाय। कुञ्चिताय। व्यापकाय। भूतपालाय। बृहत्कुक्षये । नीलांगाय। कविभूषिताय । धृतबाणाय । चापधराय । शक्त्यानन्दित- मूर्तिमते । भूलोकाय। यौवनाय। भीमाय। तुङ्गभङ्गाय। कुन्तलाय नमः । ८०

सारस्वताय नमः । योगपट्टाय । बद्धपद्मासनाय । साम्ने । ईश्वराय । छागावृताय । श्वानावृताय । कुक्कुटावृताय । मेषावृताय । पीतरक्ताय । उत्पलाभाय । धर्मिणे । पद्मालयाय । क्षीबाय । भोगिने । योगिने । करालभूतास्त्राय। भूतलीलाधारिणे। भेतालसंवृताय। आवृतप्रमथाय नमः ।
१००

जटामकुटधारिणे नमः । रुण्डमालाधराय । भूताय । भूताण्डाय । हुङ्कारभूताय। कालरात्राय। चामुण्डाय। पूर्णापुष्कलावल्लभाय नमः।
१०८

श्री रामाय नमः

# श्री रामकर्णामृतम्

प्रथमाश्वासः

श्रीरामं त्रिजगद्गुरुं सुरवरं सीतामनोनायकं
श्यामाङ्गं शशिकोटिमञ्जुवदनं वक्षोल्लसत्कौस्तुभम्।
सौम्यं सत्वगुणोत्तमं सुसरयूतीरे वसन्तं प्रभुं
त्रातारं सकलार्थसिद्धिसहितं वन्दे रघूणां पतिम्॥ १

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुवरान्वयरत्नदीपम्।
आजानुबाहुमरविंददलायताक्षं
रामं निशाचरविनाशकरं नमामि॥ २

श्रीरामं बलवैरिनीलचिकुरं स्मेराननं श्यामलं
कर्णान्तायतलोचनं सुरवरं कारुण्यपाथोनिधिम्।
शोणांभोरुहपादपल्लवयुगं क्षोणीतनूजायुतं
राजत्कुण्डलगण्डभागयुगलं रामं सदाऽहं भजे॥ ३

श्रीरामं जगदेकवीरममलं सीतामनोरञ्जनं
कौसल्यावरनन्दनं रघुपतिं काकुत्स्थवंशोद्भवम्।
लोकानामभिराममङ्गलधनव्यापारपारायणं
वंदेऽहं जनघोरपापनिकरध्वंसं विभुं राघवम्॥ ४

श्रीरामं जगदीश्वरं जनकजाजानिं जनानन्दनं
जन्तूनां जनकं जनार्तिहरणं लोकेश्वरं शाश्वतम्।
जाबालादिमुनीश्वरैः परिवृतं जाज्वल्यमानं सदा
जंघालं जमदग्निसूनुहरणं जातानुकम्पं भजे॥ ५

श्रीरामो रघुनायको रघुवरो राजीवनेत्रांचितो
राजेन्द्रो रघुपुङ्गवो रघुकुलोत्तंसो रघूणां पतिः।
रामो राक्षसनाशनोऽमितबलो राकेन्दुपूर्णाननो
राजत्किंकिणिकंकणांकितकरो रामस्सदा पातु नः ।। ६

श्रीरामचन्द्र करुणाकर राघवेन्द्र
राजेन्द्रचन्द्र रघुवंशसमुद्रचन्द्र।
सुग्रीवनेत्रयुगलोत्पलपूर्णचन्द्र
सीतामनःकुमुदचन्द्र नमो नमस्ते ।। ७

श्रीरामं करुणाकरं गुणनिधिं सीतापतिं शाश्वतं
पारावारगभीरमब्जनयनं प्रावृड्(भ्राजद्)घनश्यामलम्।
वीरश्रेष्ठमनामयं विजयिनं विश्वप्रकाशात्मकं
घोरारिप्रकराधिकप्रहरणं कोदण्डरामं भजे ।। ८

श्रीरामचन्द्रेति सलक्ष्मणेति नीलोत्पलश्यामलकोमलेति।
आक्रोशतामस्त्वधुनैव जिह्वा सीतापते राघव राघवेति ।। ९

श्रीरामचन्द्रे रमतां मनो मे रमांगवामे विपदां विरामे।
जितारिरामे प्रणतारिरामे गुणाभिरामे भुवनैकरामे ।। १०

श्रीरामचन्द्र रघुपुङ्गव राजवर्य
राजेन्द्रराज सुरनायक राघवेश।
राजाधिराज रघुनन्दन रामभद्र
दासोऽस्म्यहं च भवतः शरणागतोऽस्मि ।। ११

श्रीरामं सरसीरुहाक्षममलं दूर्वाङ्कुरश्यामलं
विद्युत्कोटिनिभप्रभांबरधरं वीरासनाधिष्ठितम्।

वामाङ्कोपरि संस्थितां जनकजामालिङ्ग्य तां बाहुना
तत्वं चापरपाणिना मुनिगणानाज्ञापयन्तं भजे ॥ १२
श्रीरामः सकलेश्वरो मम पिता माता च सीता मम
भ्राताऽजश्च सखा प्रभञ्जनसुतः पत्नी विरक्तिः प्रिया।
विश्वामित्रविभीषणाप्रभृतयो मित्राणि बोधः सुतो
भक्तिः श्रीहरिसंगता रतिसुखं वैकुण्ठमस्मत्पदम्॥ १३
श्रीरामामलपुण्डरीकनयन श्रीराम सीतापते
गोविन्दाच्युत नंदनन्दन मुकुन्दानन्द दामोदर।
विष्णो राघव वासुदेव नृहरे देवौघचूडामणे
संसारार्णवकर्णधारक हरे कृष्णाय तुभ्यं नमः ॥ १४
रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणाकरं गुणनिधिं विप्रप्रियं धार्मिकम्।
राजत्कुण्डलमण्डिताननरुचिं रात्रिंचरध्वंसिनं
शंपाकोटिसमानकान्तिविलसन्मायामृगघ्नं भजे ॥ १५
रामं रत्नकिरीटकुण्डलधरं केयूरहारान्वितं
सीतालंकृत वामभागममलं सिंहासनस्थं प्रभुम्।
सुग्रीवादिसमस्तवानरनुतं संसेव्यमानं सदा
विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं भजे ॥ १६
रामः सीतासमेतो निवसतु हृदये सानुजं राममीडे
रामेण क्षीणपापस्त्रिविधमपि कृतं कर्म रामाय दद्याम्।
रामादन्यं न जाने नहि किमपि महारामनाम्नः समानं
रामे पश्यामि विश्वं भुवनमनुदिनं पाहि मा वीरराम ॥ १७

रामं राजशिखामणिं रघुपतिं देवारिदर्पापहं
लोकानां हितकारिणं गुणनिधिं कारुण्यपुण्योदयम्।
मुक्ताविद्रुमरत्नशोभिततनुं सौन्दर्यहस्ताम्बुजं
कौसल्यातनयं भजामि सततं श्रीजानकीनायकम्॥ १८

रामं वीरासनस्थं हृदयगतकरोदञ्चितज्ञानमुद्रं
जानुन्यासक्तहस्तं क्षितिवरतनयाभूषितं वामभागे।
षट्कोणे व्याहरन्तं पवनसुतयुतं मानसे मानयन्तं
सुग्रीवे सेव्यमाने दृढशरधनुषा दक्षिणे लक्ष्मणेन॥ १९

रामं सौमित्रिमित्रं रघुपतिममलं रामचन्द्रं रमेशं
रम्यं श्रीराघवेशं शुभललितमुखं शुद्धसत्वं सुवीरम्।
सीतासौन्दर्यपात्रं सुरमुनिविनुतं नीलमिन्दीवराभं
वंदे वंदारुपालं रजनिचरहरं रम्यकोदण्डरामम्॥ २०

रामं चन्दनशीतलं क्षितिसुतामोहाकरं श्रीकरं
वैदेहीनयनारविंदमिहिरं संपूर्णचन्द्राननम्।
राजानं करुणासमेतनयनं सीतामनःस्यन्दनं
सीतादर्पणचारुगण्डललितं वंदे सदा राघवम्॥ २१

रामं श्यामाभिरामं रविशशिनयनं कोटिसूर्यप्रकाशं
दिव्यं दिव्यास्त्रपाणिं शरमुखशरधिं चारुकोदण्डहस्तम्।
कालं कालाग्निरुद्रं रिपुकुलदहनं विघ्नविच्छेद दक्षं
भीमं भीमाट्टहासं सकलभयहरं रामचन्द्रं भजेऽहम्॥ २२

रामचन्द्रचरितं कथामृतं लक्ष्मणाग्रजगुणानुकीर्तनम्।
राघवेश तव पादसेवनं संभवन्तु मम जन्मजन्मनि॥ २३

रामो मत्कुलदैवतं सकरुणं रामं भजे सादरं
रामेणाखिलघोरपापरहितो रामाय तस्मै नमः।
रामान्नास्ति जगत्त्रयैकसुलभो रामस्य दासोऽस्म्यहं
रामे प्रीतिरतीव मे कुलगुरो श्रीराम रक्षस्व माम्॥ २४

श्रीरामचन्द्र तव कीर्तिसुरद्रुमस्य
तारागणस्सुमनसः फलमिन्दुबिम्बम्।
मूलं महाफणिपदं गगनं च मध्यं
सर्वा दिशो भुवनमण्डलमालवालम्॥ २५

वैदेहीं मुदिताभिजातपुलकां गाढं समालिङ्गयन्
वामेन स्तनचूचुकं पुलकितं वामं करेण स्पृशन्।
तत्वं दक्षिणपाणिना कलितया चिन्मुद्रया बोधयन्
रामो मारुतिसेवितः स्मरतु मां साम्राज्यसिंहासने॥ २६

वामाङ्कस्थितजानकीं परिल(र)सत्कोदण्डदण्डं करे
चक्रं चोर्ध्वकरेण बाहुयुगले शङ्खं शरं दक्षिणे।
बिभ्राणं जलजातपत्रनयनं भद्राद्रिमूर्ध्नि स्थितं
केयूरादिविभूषितं रघुपतिं रामं भजे श्यामलम्॥ २७

वामे भूमिसुता पुरस्तु हनुमान्पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेष्वपि।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम्॥ २८

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम्।

अग्रे वाचयति प्रभंजनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ।। २९
वैदेहीं परिरभ्य जातपुलकां लज्जावतीं सुस्मितां
काञ्चीनूपुरहारकंकणलसत्कर्णावतंसोज्ज्वलाम् ।
कस्तूरीघनसारचर्चित कुचां चन्द्राननां श्यामलं
कन्दर्पाधिकसुन्दरं रघुपतिं श्रीरामचन्द्रं भजे ।। ३०
वैदेहीरमणं विभीषणविभुं विष्णुस्वरूपं हरिं
विश्वोत्पत्तिविपत्तिपोषणकरं विद्याधरैरर्चितम् ।
वैरिध्वंसकरं विरिञ्चिजनकं विश्वात्मकं व्यापकं
व्यासांगीरसनारदादिविनुतं वन्दामहे राघवम् ।। ३१
मैथिल्या नगरे विवाहसमये कल्याणवेद्यंतरे
सामन्ते विमलेंदुरत्नखचिते पीठे वसन्तौ शुभे ।
शृण्वन्तौ निगमार्थवेदिविदुषामाशीर्गिरो राजितौ
पायास्तां सुवधूवरौ रघुपती श्रीजानकीराघवौ ।। ३२
असितकमलभासा भासयन्तं त्रिलोकं
दशरथकुलदीपं दैवतांभोजभानुम् ।
दिनकरकुलबालं दिव्यकोदण्डपाणिं
कनकखचितरत्नालङ्कृतं राममीडे ।। ३३
सुस्निग्धं नीलकेशं स्फुटमधुरमुखं सुन्दरभ्रूललाटं
दीर्घाक्षं चारुनासापुटममलमणिश्रेणिकादन्तपंक्तिम् ।
विम्बोष्ठं कम्बुकण्ठं कठिनतरमहोरस्कमाजानुबाहुं
मुष्टिग्राह्यावलग्नं पृथुजघनमुदारोरु जंघांघ्रिमीडे ।। ३४

वंदामहे महेशानचण्डकोदण्डखण्डनम्।
जानकीहृदयानन्दचन्दनं रघुनन्दनम्॥ ३५

जानाति राम तव नामरुचिं महेशो
जानाति गौतमसती चरणप्रभावम्।
जानाति दोर्बलपराक्रममीशचापो
जानात्यमोघपटुबाणगतिं पयोधिः॥ ३६

दिव्यस्यन्दनमध्यगं रणरणच्चापान्वितं भीषणं
कालाग्निप्रतिमानबाणकलितं घोरास्त्रतूणीद्वयम्।
सुग्रीवाङ्गदरावणानुजमरुत्पुत्रादिसंसेवितं
रामं राक्षसवीरकोटिहरणं रक्ताम्बुजाक्षं भजे॥ ३७

ब्रह्माद्यामरसिद्धजन्मभवनं यन्नाभिपङ्केरुहं
श्रीनिर्वाणनिकेतनं यदुदरं लोकैकशय्यागृहम्।
यद्वक्षः कमलाविलासभवनं यन्नाम मन्त्रं सतां
वासागारमखण्डमण्डलनिधिः पायात्स वो राघवः॥ ३८

शृङ्गारं क्षितिनन्दिनीविहरणे वीरं धनुर्भञ्जने
कारुण्यं बलिभञ्जनेऽद्भुतरसं सिन्धौ गिरिस्थापने।
हास्यं शूर्पणखामुखे भयवहे बीभत्समन्यामुखे
रौद्रं रावणमर्दने मुनिजने शान्तं वपुः पातु नः॥ ३९

माता रामो मत्पिता रामचन्द्रो
भ्राता रामो मत्सखा राघवेशः।
सर्वस्वं मे रामचन्द्रो दयालुः
नान्यं दैवं नैव जाने न जाने॥ ४०

मूले कल्पद्रुमस्याखिलमणिविलसद्रत्न सिंहासनस्थं
कोदण्डद्वन्द्व बाणैर्ललितकरयुगेनार्पितं लक्ष्मणेन।
वामाङ्कन्यस्तसीतं भरतधृतमहामौक्तिकच्छत्रकान्तिं
शत्रुघ्नं चामराभ्यां विलसितमनिशं रामचन्द्रं भजेऽहम्॥ ४१
वामे कोदण्डदण्डं निजकरकमले दक्षिणे बाणमेकं
पश्चाद्भागे च नित्यं दधदभिमतं साचितूणीरभारम्।
वामे ऽवामे लसद्भ्यां सह मिलिततनुं जानकीलक्ष्मणाभ्यां
रामं श्यामं भजेऽहं प्रणतजनमनःखेदविच्छेददक्षम्॥ ४२
अम्भोधरश्यामलमम्बुजाक्षं धनुर्धरं वीरजटाकलापम्।
पार्श्वद्वये लक्ष्मणमैथिलीभ्यां निषेव्यमाणं प्रणमामि रामम्॥ ४३
कोदण्डदीक्षागुरुमप्रमेयं सलक्ष्मणं दाशरथिं दयालुम्।
आजानबाहुं जगदेकवीरं अनाथनाथं रघुनाथमीडे॥ ४४
कर्पूराङ्गविलेपनं रघुवरं राजीवनेत्रं प्रभुं
कस्तूरीनिकराकृतिं खरधृतिप्रध्वंसिनं श्रीहरिम्।
कन्दर्पायुतकोटिसुन्दरतनुं कामारिसेव्यं गुरुं
कान्ताकामदमप्रमेयममलं सीतासमेतं भजे॥ ४५
नीलाब्द(ब्ज)बृन्दसदृशं परिपूर्णदेहं
दिक्पालकादिसुरसेवितपादपद्मम्।
पीताम्बरं कनककुण्डलशोभिताङ्गं
सीतापतिं रघुपतिं सततं भजामि॥ ४६
भर्गब्रह्मसुरेन्द्रमुख्यदिविजप्राञ्चत्किरीटाग्रसं–
सर्गानेकमणिप्रभाकरसहस्राभं पदाम्भोरुहे।

दुर्गासंततसंस्तुतांघ्रिकमलं दुर्वारकोदण्डिनं
गङ्गासंस्फुटमौलिमानसहरं कल्याणरामं भजे ॥ ४७

अग्रे प्रांजलिमांजनेयमनिशं वीरं च तारासुतं
पाश्र्वे पंक्तिमुखानुजं परिसरे सुग्रीवमग्रासने ।
पश्चाल्लक्ष्मणमन्तिके जनकजां मध्ये स्थितं राघवं
चिन्तातूलिकया लिखन्ति सुधियश्चित्तेषु पीताम्बरम् ॥ ४८

क्षीराम्भोनिधिमध्यवर्तिनि सिते द्वीपे सुवर्णाचले
रत्नोल्लासितकल्पभूरुहतले जाम्बूनदे मण्डपे ।
तेजोभ्राजितवेदिके सुरुचिरे माणिक्यसिंहासने
हेमाम्भोरुहकर्णिकोपरितले वीरासनस्थं भजे ॥ ४९

दोर्दण्डैककमण्डलीकृत महाकोदण्डचण्डाशुगैः
निर्घातै रविकोटितुल्यनिशितैर्ब्रह्मादिमुख्यस्तुतैः ।
सुग्रीवादिसमस्तवानरवरानाज्ञापयन्तं गिरा
तत्त्वं ताडय ताडयेत्यनुपदं श्रीरामचन्द्रं भजे ॥ ५०

भूकम्पं जनयन्नभो विदलयन्नंभोनिधिं क्षोभयन्
दैतेयांश्च विमर्दयन् गिरिवरान् भिन्दन् दिशः पूरयन् ।
वैदेहीमपि मोदयन् सकलगीर्वाणान् शिरः कम्पयन्
कल्याणो रघुरामबाणविलसत्कोदण्डचण्डध्वनिः ॥ ५१

विमलकमलनेत्रं विस्फुरन्नीलगात्रं
तपनकुलपवित्रं दानवध्वान्तमित्रम् ।
भुवनशुभचरित्रं भूमिपुत्रीकलत्रं
दशरथवरपुत्रं नौमि रामाख्यमित्रम् ॥ ५२

जननी जानकी साक्षाज्जनको रघुनन्दनः ।
लक्ष्मणो मित्रमस्माकं को विचारः कुतो भयम् ॥
(जनको रामचन्द्रो मे जननी जनकात्मजा ।
हनुमत्प्रमुखास्सर्वे हरयो मम बान्धवाः ॥) ५३
जगति विशदमन्त्रं जानकीप्राणमन्त्रं
विबुधविनुतमन्त्रं विश्वविख्यातमन्त्रम् ।
दशरथसुतमन्त्रं दैत्यसंहारमन्त्रं
रघुपतिनिजमन्त्रं रामरामेति मन्त्रम् ॥ ५४
सीताया दक्षिणे पार्श्वे लक्ष्मणस्य च पार्श्वतः ।
तन्मध्ये राघवं वन्दे धनुर्बाणधरं हरिम् ॥ ५५
चन्द्रोपमं मलयचन्दनचर्चिताङ्गं
मन्दारपुष्पभरपूजित पादपद्मम् ।
ब्रह्मेन्द्रवन्द्यमनिशं मुनिवृन्दसेव्यं
वन्देऽरविन्दनयनं रघुरामचन्द्रम् ॥ ५६
ब्रह्मामृतानन्दफलप्रदायिनं वेदान्तविज्ञानसुगन्धपुष्पितम् ।
सीताशुभाङ्गाञ्चितबाहुशाखिनम् श्रीरामकल्पद्रुममाश्रयामः ॥ ५७
कनकनिकषभासा सीतयालिङ्गिताङ्गो
नवकुवलयधामश्यामवर्णोऽभिरामः ।
अभिनवयुतविद्युन्नन्दितो मेघषण्डः
शमयतु मम तापं सर्वदा रामचन्द्रः ॥ ५८
अलं शास्त्राभ्यासैरलमसकृदाम्नायपठनैः
अलं तीर्थस्नानैरलमखिलयागव्रतजपैः ।

अलं योगाभ्यासैरलमपि महापातकधिया
  यदस्माकं रामस्मरणमहिमा सा विजयते ॥ ५९
सीतामनोमानसराजहंस संसारसंतापहर क्षमालो।
श्रीराम दैत्यान्तक शान्तरूप श्रीतारकब्रह्म नमो नमस्ते ॥ ६०
कदा वा साकेते विमलसरयूतीरपुलिने
  समासीनः श्रीमद्रघुपतिपदाब्जे हृदि भजन्।
अये राम स्वामिन् जनकतनयावल्लभ विभो
  प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ६१
कदा वा साकेते तरुणतुलसीकाननवने
  निविष्टं तं पश्यन् सुरुचिर विशालोर्ध्वतिलकम्।
अये सीतानाथ स्मृतिजनपते दानवजयिन्
  प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ६२
कदा वा साकेते मणिखचितसिंहासनतले
  समासीनं रामं जनकतनयालिङ्गिततनुम्।
अये सीताराम त्रुटितहरधन्विन् रघुपते
  प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ६३
मार्गे मार्गे शाखिनां रत्नवेदी वेद्यां वेद्यां किन्नरीवृन्दगीतम्।
गीते गीते मंजुलालापगोष्ठी गोष्ठ्यां गोष्ठ्यां त्वत्कथा रामचन्द्र ॥ ६४
वृक्षे वृक्षे वीक्षिताः पक्षिसङ्घाः सङ्घे सङ्घे मंजुलामोदवाक्यम्।
वाक्ये वाक्ये मंजुलालापगोष्ठी गोष्ठ्यां गोष्ठ्यां त्वत्कथा रामचन्द्र ॥ ६५
श्वेतपुष्पकमारुह्य सीतया सह राघव।
सुग्रीवादिभवद्भक्तैर्मनोमध्ये रमस्व मे ॥ ६६

दोर्भिः खड्गत्रिशूलं डमरुमसिधनुश्चारुबाणं कुठारं
शङ्खं चक्रं च खेटं हलमुसलगदाभिण्डिपालं च पाशम्।
विद्युद्वल्ली च मुष्टिं त्वभयवरकरं बिभ्रतं शुभ्र वर्णं
वन्दे रामं त्रिनेत्रं सकलरिपुकुलं मर्दयन्तं प्रतापैः ॥ ६७
दुरिततिमिरचन्द्रो दुष्टकञ्जातचन्द्रः
सुरकुवलयचन्द्रः सूर्यवंशाब्धिचन्द्रः ।
स्वजननिवहचन्द्रः शत्रुराजीवचन्द्रः
प्रणतकुमुदचन्द्रः पातु मां रामचन्द्रः ॥ ६८
कल्याणदं कौशिकयज्ञपालं कलानिधिं काञ्चनशैलधीरम्।
कंजातनेत्रं करुणासमुद्रं काकुत्स्थरामं कलयाम चित्ते ॥ ६९
वाल्मीकिस्मृतिमन्दरेण मथितस्सीतारमासम्भवः
सुग्रीवामरभूरुहोऽङ्गदगजः सौमित्रिचन्द्रोदयः ।
वातोत्पन्नमणिर्विभीषणसुधः पौलस्त्यहालाहलः
श्रीरामायणदुग्धवार्धिरमलो भूयात्सुखश्रेयसे ॥ ७०
रघुनन्दन एव दैवतं नो रघुवंशोद्भव एव दैवतं नः ।
भरताग्रज एव दैवतं नो भगवान् राघव एव दैवतं नः ॥ ७१
उत्फुल्लामल कोमलोत्पलदल श्यामाय रामामन-
श्चन्द्राय प्रशमाय निर्मलगुणारामाय रामात्मने ।
ध्यानारूढमुनीन्द्र-मानस-सरोहंसाय संसारवि-
ध्वंसायाद्भुततेजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ७२
राजीवायतलोचनं रघुवरं नीलोत्पलश्यामलं
मन्दाराञ्चितमण्डपे सुललिते सौवर्णके पुष्पके ।

आस्थाने नवरत्नराजिखचिते सिंहासने संस्थितं
सीतालक्ष्मणलोकपालसहितं वंदे मुनीन्द्रास्पदम् ।। ७३

वल्लीप्रवालनवपल्लवपादपद्मं
कंजेक्षणं जलजनीलसरोरुहाभम् ।
सीमन्तिनीनयनमोहनमूलमन्त्रं
रामं नमामि मुनिमानसराजहंसम् ।। ७४

अलं विवादेन न मानुषोऽयं रामात्मना राक्षसमर्दनाय ।
भुजङ्गशय्यां परिमुच्य साक्षान्नारायणो भूतलमाजगाम ।। ७५

लोकत्राणानुकारी दशवदनशिरःपंक्तिविच्छेदकारी
लंकालंकारहारी भृगुतनयमनस्सर्वगर्वापहारी ।
सीतासीमन्तकारी मणिमयमुकुटो दिव्यकोदण्डधारी
श्रीरामः पापहारी शमयतु दुरितं भूमिभारापहारी ।। ७६

ब्रह्मादि-योगिमुनि-पूजितसिद्धमंत्रं
दारिद्र्यदुःख-भवरोग-विनाशमन्त्रम् ।
संसार-सागर-समुत्तरणैकमंन्त्रम्
वंदे महाभयहरं रघुराममन्त्रम् ।। ७७

शत्रुच्छेदैकमन्त्रं सरसमुपनिषद्वाक्यसंपूज्यमन्त्रं
संसारोत्तारमन्त्रं समुचितसमये सङ्गनिर्वाणमन्त्रम् ।
सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसंत्राणमन्त्रं
जिह्वा श्रीराममन्त्रं जपतु जपतु मे जन्मसाफल्य मन्त्रम् ।। ७८

आकर्णमारूढधनुर्गुणाढ्यं ब्रह्मास्त्रमुण्डीकृतराक्षसेन्द्रम् ।
रथाधिरूढं रणरङ्गधीरं रामं भजे रक्तसरोरुहाक्षम् ।। ७९

एतौ तौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ
वैदेहीकुचकुम्भकुंकुमरजःपंकारुणालंकृतौ।
विश्वत्राणनिदान साधुसरसप्रारम्भयूपौ भुजौ
देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि नः ।। ८०
वामाङ्कोपरि संस्थितावनिसुतामामुक्तभूषोज्ज्वलां
पश्यन्तं परिपूर्णचन्द्रवदनं भ्राजत्किरीटोज्ज्वलम्।
आसीनं नवरत्नराजिखचिते सिंहासने राघवं
सुग्रीवाङ्गदलक्ष्मणानिलसुतैरासेव्यमानं भजे ।। ८१
जानक्याः कमलामलांजलिपुटे याः पद्मरागायिताः
न्यस्ता राघवमस्तके तु विलसत्कुन्दप्रसूनायिताः ।
स्रस्ताः श्यामलकायकान्तिकलिताः या इन्द्रनीलायिताः
मुक्तास्ताश्शुभदा भवन्तु भवतां श्रीरामवैवाहिकाः ।। ८२
नित्यं श्रीराममन्त्रं निरुपममधिकं नीतिसुज्ञानमन्त्रं
सत्यं श्रीराममन्त्रं सदमलहृदये सर्वदाऽऽरोग्यमन्त्रम्।
स्तुत्यं श्रीराममन्त्रं सुललितसुमनःसौख्यसौभाग्यमन्त्रं
पठ्यं श्रीराममन्त्रं पवनजवरदं पातु मां राममन्त्रम्।। ८३
व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं
दैत्योन्मूलकरौषधं भवभयप्रध्वंसनैकौषधम्।
भक्तानन्दकरौषधं त्रिभुवने सञ्जीवनैकौषधं
श्रेयःप्राप्तिकरौषधं पिब मनः श्रीरामनामौषधम्।। ८४
ध्यायेत्प्रातः सुरेशं रविकुलतिलकं रञ्जितानन्तलोकं
बालं बालारुणाक्षं भवमुखविनुतं भावगम्यं भवघ्नम्।

दीप्यन्तं स्वर्णक्लृप्तैर्मणिगणनिकरैर्भूषणैरुज्ज्वलाङ्गं
कौसल्यादेहजातं मम हृदयगतं राममीषत्स्मितास्यम् ॥ ८५
मध्याह्ने रामचन्द्रं मणिगणललितं मन्दहासावलोकं
मार्तण्डानेकभासं मरकतनिकराकारमानन्दमूर्तिम् ।
सीतावामाङ्कसंस्थं सरसिजनयनं पीतवासो वसानं
वन्देऽहं वासुदेवं वरशरधनुषं मानसे मे विभान्तम् ॥ ८६
ध्यायेद्रामं सुधांशुं नतसकलभवारण्यतापप्रहारं
श्यामं शान्तं सुरेन्द्रं सुरमुनिविनुतं कोटिसूर्यप्रकाशम् ।
सीतासौमित्रिसेव्यं सुरनरसुगमं दिव्यसिंहासनस्थं
सायाह्ने रामचन्द्रं स्मितरुचिरमुखं सर्वदा मे प्रसन्नम् ॥ ८७
केयूराङ्गदकङ्कणैर्मणिगणैर्वै रोचमानं सदा
राकापर्वणि चन्द्रकोटिसदृशं छत्रेण वै राजितम् ।
हेमस्तम्भसहस्रषोडशयुते मध्ये महामण्डपे
देवेशं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ८८
विहाय कोदण्डमिमं मुहूर्तं गृहाण पाणौ मणिचारुवेणुम् ।
मायूरबर्हं च निजोत्तमाङ्गे सीतापते राघव रामचन्द्र ॥ ८९
शुद्धान्ते मातृमध्ये दशरथपुरतः सञ्चरन्तं परं तं
काञ्चीदामानुविद्धं प्रतिमणिविलसत्किंकिणीनिक्वणाङ्गम् ।
फाले मुक्तालालामं पदयुगनिनदन्नूपरं चारुहासं
बालं रामं भजेऽहं प्रणतजनमनःखेदविच्छेददक्षम् ॥ ९०
सम्पूर्णचन्द्रवदनं सरसीरुहाक्षं माणिक्यकुण्डलधरं मुकुटाभिरामम् ।
चाम्पेयगौरवसनं शरचापहस्तं श्रीरामचन्द्रमनिशं मनसा स्मरामि ॥९०
इन्द्रनीलमणिसन्निभदेहं वन्द्यमानमसकृन्मुनिबृन्दैः ।
लम्बमानतुलसीवनमालं चिन्तयामि सततं रघुवीरम् ॥ ९२

रामचन्द्र दयासान्द्र रघुवीर नृपोत्तम।
लोचनाभ्यां कृपापूरपूर्णाभ्यां मां विलोकय।। ९३
रामेति वर्णद्वयमादरेण सदा स्मरन् मुक्तिमुपैति जन्तुः।
कलौ युगे कल्मषमानसानामन्यत्र धर्मे खलु नाधिकारः।। ९४
भक्तप्रियं भक्तसमाधिगम्यं चिन्ताहरं चिन्तित कामधेनुम्।
सूर्येन्दुकोटिद्युतिभास्वरं तं रामं भजे राघवरामचन्द्रम्।। ९५
सकलभुवनरत्नं सर्वशास्त्रार्थरत्नं
समरविजयरत्नं सच्चिदानन्दरत्नम्।
दशमुखहररत्नं दानवारातिरत्नं
रघुकुलनृपरत्नं पातु मां रामरत्नम्।। ९६
मातुः पार्श्वे चरन्तं मणिमयशयने मञ्जुभूषाञ्चिताङ्गं
मन्दं मन्दं पिबन्तं मुकुलितनयनं स्तन्यमन्यस्तनाग्रम्।
अङ्गुल्यग्रैः स्पृशन्तं सुखपरवशया सुस्मितालिङ्गिताङ्गं
गाढं गाढं जनन्या कलयतु हृदयं मामकं रामबालम्।। ९७
रामाभिरामं नयनाभिरामं वाचाभिरामं वदनाभिरामम्।
सर्वाभिरामं च सदाभिरामं वंदे सदा दाशरथिं च रामम्।। ९८
जय जय रघुराम श्रीमुखाम्भोजभानो
जय जय रघुवीर श्रीमदम्भोजनेत्र।
जय जय रघुनाथ श्रीकराभ्यार्चितांघ्रे
जय जय रघुवर्य श्रीश कारुण्यसिन्धो।। ९९
जय जय वरशङ्खश्रीगदाचक्रधारिन्
जय जय निजदासप्राप्यदुर्लभ्यकाम।

त्रिभुवनमय सर्वप्राणिभावज्ञ विष्णो
शरणमुपगतोऽहं सर्वदा त्वां शरण्यम्॥ १००

इक्ष्वाकुनन्दनं सुग्रीवपूजितं
त्रैलोक्यरक्षकं सत्यसन्धं सदा।
राघवं रघुपतिं राजीवलोचनं
रामचन्द्रं भजे राघवेन्द्रं भजे॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत् साक्षाद् रामायणात्मना॥ १०१

श्रीरामेत्येकदा वक्तुं मनो यस्य प्रवर्तते।
वैकुण्ठवासिनस्तस्य कुलमेकोत्तरं शतम्॥ १०२

राशब्दोच्चारमात्रेण मुखान्निर्यान्ति पातकाः।
पुनः प्रवेशभीत्या च मकारस्तु कपाटवत्॥ १०३

श्रीरामायणमादिकाव्यमृषिणा वाल्मीकिना निर्मितं
वेदान्तार्थविशारदैरनुदिनं स्तुत्यं सुरैरर्चितम्।
श्रोतॄणामघनाशनं सुरतरोस्तुल्यं तु मुक्तिप्रदं
ये शृण्वन्ति पठन्ति रामचरितं ते यान्ति विष्णोः पदम्॥ १०४

*द्वितीयाश्वासः*

श्रीरामं जनकक्षितीश्वरसुतावक्त्राम्बुजाहारिणं
श्रीमद्भानुकुलाब्धिकौस्तुभमणिं श्रीरत्नवक्षःस्थलम्।
श्रीकण्ठाद्यमरौघरत्न मुकुटालङ्कारपादाम्बुजं
श्रीवत्सोज्ज्वलमिन्द्रनीलसदृशं श्रीरामचन्द्रं भजे॥ १

श्रीरङ्गेशपदाब्जलग्नहृदयं श्रीशङ्खचक्रान्वितं
श्रीमन्निर्जरपादपस्फुटपदं श्रीसिंहपीठस्थितम्।

श्रीवैकुण्ठसहस्रमस्तकलसद्भोगासने शायिनं
    श्रीभूमीसुतया युतं श्रितनिधिं श्रीराममूर्तिं भजे ॥ २
आनन्दकन्दमरुणाधरमम्बुजाक्षं
    आपीतवस्त्रमतसीकुसुमोज्ज्वलाङ्गम्।
अक्षान्तवर्णमकलंकममेयमाद्यं
    सीतापतिं रघुपतिं शरणागतोऽस्मि ॥ ३
साकेते नवरत्नपंक्तिखचिते चित्रध्वजालङ्कृते
    वामे स्वर्णमये दलाष्टललिते पद्मे विमानोत्तमे।
आसीनं भरतादिसोदरजनैः शाखामृगैः किन्नरैः
    दिक्पालैर्मुनिपुङ्गवैर्नृपगणैः संसेव्यमानं भजे ॥ ४
कन्दर्पायुतकोटिकोटितुलितं कालाम्बुदश्यामलं
    कम्बुग्रीवमुदारकौस्तुभधरं कर्णावतंसोत्पलम्।
कस्तूरीतिलकोज्ज्वलं स्मितयुतं चिन्मुद्रयालङ्कृतं
    सीतालक्ष्मणवायुपुत्रसहितं सिंहासनस्थं भजे ॥ ५
वराभयं दिव्यरथाङ्गशङ्खं सकौस्तुभं वेष्टितपीतवस्त्रम्।
किरीटहाराङ्गद कुण्डलाङ्गं श्रीवत्सचिह्नं शिरसा नमामि ॥ ६
दिगम्बरं किङ्किणिमेखलोज्ज्वलं ललाटपर्यंत विलंबितालकम्।
कलद्वचस्कं कमनीयनूपुरं तं बालरामं शिरसा नमामि ॥ ७
मन्दारमूले मणिपीठसंस्थं सुधाप्लुतं दिव्यविराट्स्वरूपम्।
सबिन्दुनादांतकलांततुर्यं मूर्तिं भजेऽहं रघुवंशरत्नम् ॥ ८
अनर्घ्यमाणिक्यविराजमानश्रीपादुकालङ्कृतशोभनाभ्याम्।
अशेषवृन्दारकवंदिताभ्यां नमो नमो रामपदाम्बुजाभ्याम् ॥ ९
ध्वजाम्बुजच्छत्ररथाङ्गशङ्ख दंभोलिपाशाङ्कुशमत्स्यचिह्नम्।
ब्रह्मेन्द्रदेवादिकिरीटकोटिसंघर्षिपादाम्बुजयुग्ममीडे ॥ १०

ललाटदेशोज्ज्वलबालभूषणं सताण्डवं व्याघ्रनखाङ्ककन्धरम्।
दिगम्बरं शोभितबर्बरालकं श्रीबालरामं शिरसा नमामि ॥ ११
शताष्टदिव्यस्थलमूर्तिवन्दितं शतक्रतुब्रह्ममरुद्गणार्चितम्।
शशाङ्कवैश्वानरभानुमण्डलस्थितं भजेऽहं रघुवंशवर्धनम्॥ १२
कर्णान्तविश्रान्तधनुर्गुणाङ्कं कलंबलक्षीकृतराक्षसेश्वरम्।
वृद्धश्रवःस्यन्दनमध्यसंस्थं रूक्षेक्षणं राममहं नमामि ॥ १३
सुत्राम नीलोत्पल नीलमेघश्रीनिर्जिताङ्गं सुतया धरण्याः ।
युक्तं सुरेन्द्रावनमानसं तं रामं भजे राक्षसवंशनाशम्॥ १४
राकाचन्द्रनिभाननं रतिपतिद्वेषिप्रियं राक्षसा-
धीशग्रीवविभेदनस्फुटपटुप्रख्यातबाणोज्ज्वलम्।
रत्नालङ्कृत पादुकाश्वितपदाम्भोजं रमावल्लभं
रागद्वेषविहीनचित्तसुलभं रामं भजे तारकम्॥ १५
आलोलस्फुटरत्नकुण्डलधरं चाविस्मितालङ्कृतं
आधारादिकचक्रमण्डलगतं चानन्दकन्दाङ्कुरम्।
आविर्भूतकृपातरङ्गजलधिं चाक्षांतवर्णाश्रयं
आपन्नार्तिनिदाघमेघसमभं रामं भजे तारकम्॥ १६
साकेतांतरतारमण्डपमहामाणिक्यसिंहासने
तन्मध्येऽष्टदलाम्बुजे स्फुटतरे चित्कर्णिके संस्थितम्।
सौमित्र्यम्बुजमित्रसूनुभरतश्रीवायुपुत्रैर्वृतं
मुद्रालङ्कृतपाणिसारसमजं रामं भजे तारकम्॥ १७
विराजमानोज्ज्वलपीतवासं
विशालवक्षःस्थलकौस्तुभश्रियम्।
भजे किरीटाङ्गदरत्नकुण्डलं
नमस्तुलस्याऽमलमालयाऽङ्कितम्॥ १८

मूलादिषट्सरसिजान्त सहस्रपद्म
पत्रान्तरालनिलयं भवबन्धनाशम्।
नादान्तचन्द्रगलितामृतसिक्तरूपं
नादान्तनादमहिमास्पदराममीडे ॥ १९
वंदे वरप्रदमहावरदानगर्वलङ्काधिनाथकुलपर्वतनाशवज्रम्।
तं रावणानुजमरुत्सुतभानुसूनुदिक्पालसोदरगणैः परिसेव्यमानम् ॥२०
अज्ञानगाढतिमिरापहभानुमूर्तिं
आरक्तचारुनयनाम्बुजमादिबीजम्।
अम्भोधिमध्यवटपत्रशयानमादि-
मध्यान्तशून्यमखिलास्पदरामचन्द्रम् ॥ २१
सुधासमुद्रान्तविराजमानद्वीपे सिते चन्दनपारिजाते।
महासने पन्नगतल्पमध्ये निषण्णमीडे रघुवंशरत्नम् ॥ २२
स्मितानन्नं पद्मदलायतेक्षणं विनीलमाणिक्यजिताङ्गशोभितम्।
जटाकिरीटं शरचापलाञ्छनं नमाम्यहं भानुकुलाब्धिकौस्तुभम् ॥ २३
प्रसूनबाणांकितमिक्षुचापं चक्राब्जपाशाङ्कुशवंशनालम्।
धरं करैरष्टभिरर्कवर्णं श्रीकृष्णरूपं प्रणमामि रामम् ॥ २४
बाहूरुपादोदरवक्त्रलोचनं दीप्तप्रचण्डानलदुर्निरीक्ष्यं।
अशेषबृन्दारकनागगोचरं भजामि ते राघव विश्वरूपम् ॥ २५
सहस्रनेत्रानन पादबाहुमनन्तवीर्यं रविकोटि तुल्यम्।
स्रक्चन्दनालङ्कृतदिव्यदेहं भजाम्यहं ते हरिविश्वरूपम् ॥ २६
कदम्बकोदण्डगदाब्जसंयुतं दंष्ट्राकरालांक धनञ्जयाननम्।
पीतांशुकं स्वर्णकिरीटकुण्डलं भजामि ते राघव विश्वरूपम् ॥ २७

कोदण्डमिक्षुजनितस्मरपञ्चबाणं
शङ्खं रथावयवमङ्कुशपाशवेणुम् ।
हस्ताष्टके नवमणिद्युतिमुद्वहन्तं
प्रद्युम्नकृष्णमनिशं भज रामचन्द्रम् ॥ २८

सीतालोकनतत्परं मणिनिधिं व्याख्यानमुद्राश्रितं
वामे जानुनि लम्बहस्तमनिशं वीरासने संस्थितम् ।
मूले कल्पतरोरनादिमुनिभिः ब्रह्मादिभिः सेवितं
मुक्ताहारकिरीटकुण्डलधरं मूर्धाभिषिक्तं भजे ॥ २९

यद्रूपमानन्दकरं मुनीनां यद्बाणमाखण्डलशत्रुनाशनम् ।
यद्दैवतं सर्वजनान्तरस्थं तत्सर्वरूपं रघुनाथमीडे ॥ ३०

नादं नादविलीनचित्तपवनं नादान्ततत्त्वप्रियं
नामाकारविवर्जितं नवघनश्यामाङ्गनादप्रियम् ।
नादाम्भोजमरन्दमत्तविलसद्भृङ्गं नदान्तस्थितं
नादान्तध्रुवमण्डलाब्जरुचिरं रामं भजे तारकम् ॥ ३१

नानाभूतहृदब्जपद्मनिलयं नामोज्ज्वलाभूषणं
नामस्तोत्रपवित्रितत्रिभुवनं नारायणष्टाक्षरम् ।
नादान्तेन्दुगलत्सुधाप्लुततनुं नानात्मचिन्मात्रकं
नानाकोटियुगान्तभानुसदृशं रामं भजे तारकम् ॥ ३२

खश्यामं खगवाहनं खगरिपुं खाद्यादिभूतात्मकं
खातीतं खगमं खतत्परपदं खद्योतकोट्युज्ज्वलम् ।
खावाच्यं खगकेतनं खगमनं खर्वाटभृङ्गालयं
खारार्यं च खरन्ध्रपीठनिलयं रामं भजे तारकम् ॥ ३३

वेद्यं वेदगुरुं विरिञ्चिजनकं वेदान्तमूर्तिस्फुरद्
वेदं वेदकलापमूलमहिमाधारांतकन्दाङ्कुरम्।
वेदीशृङ्गसमान शेषशयनं वेदान्त वेदात्मिकं
वेदाराधितपादपङ्कजमहं रामं भजे तारकम्॥ ३४

मूलाधारधनंजयस्फुटपटुज्वालासमालिङ्गितं
मूर्धन्यान्तशशाङ्कमण्डलगतं क्षीराभिषेकप्रियम्।
मुक्ताशोभितमौलिभिर्मुनिवरैराराधितं भावये
प्रख्यातैस्त्रिगुणैर्जनाधिपगणैः शाखामृगैः सेवितम्॥ ३५

ताराकारविमानमध्यनिलयं तत्वत्रयाराधितं
तत्त्वाधीश्वरयोगनिर्गुणमहासिद्धैः समाराधितम्।
तत्सङ्गं तरुणेन्दुशेखरसखं तारात्रयांतर्गतं
तप्तस्वर्णकिरीटकुण्डलयुगं रामं भजे तारकम्॥ ३६

तारं तारकमण्डलोपरिलसज्ज्योतिःस्फुरत्तारका-
तीतं तत्त्वमसीतिवाक्यमहिमाधारं तडित्सन्निभम्।
तत्वज्ञानपवित्रित त्रिभुवनं तारासनान्तर्गतं
तारान्तध्रुवमण्डलाब्जरुचिरं रामं भजे तारकम्॥ ३७

कस्तूरीघनसारकुंकुमलसच्छ्रीचन्दनालङ्कृतं
कन्दर्पाधिकसुन्दरं घननिभं काकुत्स्थवंशध्वजम्।
कल्याणांबरवेष्टितं कमलया युक्तं कलावल्लभं
कल्याणाचलकार्मुकप्रियसखं कल्याणरामं भजे॥ ३८

मज्जीवं मदनुग्रहं मदधिपं मद्भावनं मत्सखं
मत्तातं मम सद्गुरुं मोहान्धविच्छेदनम्।

मत्पुण्यं मदनेकबान्धवजनं मज्जीवनं मन्निधिं
मत्सिद्धिं मम सर्वकर्मसुकृतं रामं भजे तारकम् ॥ ३९
नित्यं नीरजलोचनं निरुपमं नीवारशूकोपमं
निर्भेदानुभवं निरन्तरगुणं नीलाङ्गरागोज्ज्वलम् ।
निष्पापं निगमागमार्चितपदं नित्यात्मकं निर्मलं
निष्पुण्यं निखिलं निरञ्जनपदं रामं भजे तारकम् ॥ ४०
ध्याये त्वां हृदयाम्बुजे रघुपतिं विज्ञानदीपाङ्कुरं
हंसोहंसपरंपरादिमहिमाधारं जगन्मोहनम् ।
हस्ताम्भोजगदाब्जचक्रमतुलं पीताम्बरं कौस्तुभं
श्रीवत्सं पुरुषोत्तमं मणिनिभं रामं भजे तारकम् ॥ ४१
सत्यं ज्ञानमनन्तमच्युतमजं चाव्याकृतं तत्परं
कूटस्थादिसमस्तसाक्षिमनघं साक्षाद्विराट्तत्वदम् ।
वेद्यं विश्वमयस्वलीनभुवनस्वाराज्यसौख्यप्रदं
पूर्णं पूर्णतरं पुराणपुरुषं रामं भजे तारकम् ॥ ४२
रामं राक्षसवंशनाशनकरं राकेन्दुबिम्बाननं
रक्षोऽरिं रघुवंशवर्धनकरं रक्ताधरं राघवम् ।
राधाद्या(योगीन्द्रा)त्मनिवासिनं रविनिभं रम्यं रमानायकं
रन्ध्रान्तर्गतशेषशायिनमहं रामं भजे तारकम् ॥ ४३
ताराकारं निखिलनिलयं तत्त्वमस्यादिलक्ष्यं
शब्दावाच्यं त्रिगुणरहितं व्योममङ्गुष्ठमात्रम् ।
निर्वाणाख्यं सुगुणमगुणं व्योमरन्ध्रान्तरस्थं
सौषुम्नान्तः प्रणवसहितं रामचन्द्रं भजेऽहम् ॥ ४४

मुक्तेर्मूलं मुनिवरहृदानन्दकन्दं मुकुन्दं
कूटस्थाख्यं सकलवरदं सर्वचैतन्यरूपम्।
नादातीतं कमलनिलयं नादनादान्ततत्त्वं
नादातीतं प्रकृतिरहितं रामचन्द्रं भजेऽहम्॥ ४५

निजानन्दाकारं निगमतुरगाराधितपदं
परब्रह्मानन्दं परमपदयुगं पापहरणम्।
कृपापारावारं परमपुरुषं पद्मनिलयं
भजे रामं श्यामं प्रकृतिरहितं निर्गुणमहम्॥ ४६

श्रीमद्वैकुण्ठनाथं सुरमुनि मुकुटज्योतिषं स्वर्णपीठं
नीलाङ्गं चन्द्रवक्त्रं मणिमयमुकुटं बाणकोदण्डहस्तम्।
पद्माक्षं पापनाशं प्रणवमयमहारत्न सिंहासनस्थं
श्रीसीतावामभागं श्रितजनवरदं रामचन्द्रं भजेऽहम्॥ ४७

साकेते मणिमण्डपे सुरतरुप्रान्ते विमानान्तरे
पद्मे चाष्टदलोज्ज्वले नुतमहासौधे सुधापा(मा)न्विते।
सख्ये सूर्यजरावणानुजमरुत्पुत्रानुजैः सेवितं
मध्ये वासवनीलकोमलनिभं रामं भजे तारकम्॥ ४८

हृदयकुहरमध्ये द्योतितं मन्त्रसारं
निगमम(नि)यमगम्यं वेदशास्त्रैरचिन्त्यम्।
हरिहरविधिवन्द्यं हंसमंत्रान्तरस्थं
दशरथसुतमीडे दैवतं देवतानाम्॥ ४९

देवेन्द्रनीलनवमेघविनिर्जिताङ्गं
पूर्णेन्दुबिम्बवदनं शरचापहस्तम्।

सीतासमेतमनिशं शरणं शरण्यं

चेतो मदीयमभिवाञ्छति रामचन्द्रम् ॥ ५०

ओतप्रोतसमस्तवस्तुनिचयं चौङ्कारबीजाक्षरं

ओङ्कारप्रकृतिं षडक्षरहितं चौङ्कारकन्दाङ्कुरम् ।

ओङ्कारस्फुटभूर्भुवःसुव(प)रिधिं चौघत्रयाराधितं

ओङ्कारोज्ज्वलसिंहपीठनिलयं रामं भजे तारकम् ॥ ५१

साकेते धवले सुरद्रुमतले सौधे विमानान्तरे

आदिक्षान्तसमस्तवर्णकमले दिव्ये मृगेन्द्रासने ।

ओङ्कारोज्ज्वलकर्णिके सुरसरिन्मध्ये सदेवान्तरे

व्यस्तं व्यासमुनीश्वराद्यभिनुतं रामं भजे तारकम् ॥ ५२

कोदण्डदीक्षागुरुमादिमूलं

गुणाश्रयं चन्दन कुङ्कुमाङ्कम् ।

सलक्ष्मणं सर्वजनान्तरस्थं

परात्परं राममहं नमामि ॥ ५३

मूलाधारसरोरुहे हुतवहस्थाने त्रिकोणान्तरे

कन्दे कुण्डलिकासुषुप्तिपटलीवासान्तवर्णाश्रये ।

बालार्कप्रतिमं सु(व)राभयकरं पाशाङ्कुशालङ्कृतं

भूतत्वाश्रयमादिपूरुषमजं रामं भजे तारकम् ॥ ५४

स्वाधिष्ठान सरोरुहे प्रविलसद्वालान्तवर्णाश्रयं

ब्रह्मग्रन्थिमहोन्नते करतले श्रीकुण्डिकामालिकाम् ।

पीठे रत्ननिभं वराभयकरं वाणीयुतं बिभ्रतं

सर्वं सर्वगमिन्दिरासहचरं रामं भजे तारकम् ॥ ५५

डाफांत्याक्षरपङ्कजे दशदले माणिक्यसम्पूरिते
विष्णुग्रन्थिमये वराभयकरं चाशङ्खचक्रान्वितम्।
मार्तण्डद्युति मंजुनाभमतुलं पीताम्बरं कौस्तुभं
सर्वं सर्वगमिन्दिरासहचरं रामं भजे तारकम्॥ ५६

हृत्पद्मे विलयार्ककोटिसदृशं कण्ठान्तवर्णोज्वले
प्राणांतप्रणवान्तरे च विलसद्बोधार्ण पीठान्तरे।
सूर्ये हंसमये सदाशिवपदं कोदण्डदीक्षागुरुं
वासामोक्ष रमासमेतमनिशं रामं भजे तारकम्॥ ५७

साक्षात्षोडश दिव्यपत्रकमले जीवात्मसंस्थापिते
रुद्रग्रन्थिमये मनोन्मनिपथे जालन्ध्रपीठान्तरे।
शुभ्रज्योतिमयं शरीरसहितं संस्थं सुधाशीतलं
शब्दब्रह्मनिवासभूतवदनं रामं भजे तारकम्॥ ५८

भ्रू मध्ये निगमागमोज्वलपदे चन्द्रे त्रिमार्गान्तरे
निर्द्वन्द्वे निखिलार्थ तत्वविलसत्सूक्ष्मे सुषुम्नोन्मुखे।
आसीनं प्रलयार्कभासुरपदं ज्योतिःस्वरूपात्मकं
कर्णानाश्रितमोक्षलक्ष्मिसहितं रामं भजे तारकम्॥ ५९

शीर्षाम्भोरुहकर्णिके निरुपमे श्रीषोडशान्ते शशि-
प्रख्यातामृतवार्धि वीचिलहरीनिर्वाण पीठान्तरे।
शब्दब्रह्मपरं चराचरगुरुं तेजः परं शाश्वतं
सत्यासत्यमगोचरं हृदि सदा सीतासमेतं भजे॥ ५९

साकेते रविकोटिसन्निभमहाहर्म्ये सुसिंहासने
नानारत्नविनिर्मिते मुनिजनाकीर्णे सदानन्दने।

देवाधीश्वरपङ्कजे निवसितं वामाङ्कसीतोज्ज्वलं
देवेन्द्रोपलनीलकोमलनिभं रामं भजे तारकम् ॥ ६०
साकेते नगरे समस्तसुखदे हर्म्येन्दुकोटिद्युते
नक्षत्रग्रहपंक्तिलग्नशिखरे चान्तर्यपङ् केरुहे ।
वाल्मीकात्रिपराशरादिमुनिभिः संसेव्यमानं स्थितं
सीतालङ्कृतवामभागमनिशं रामं भजे तारकम् ॥ ६१
वंदे राममनादिपूरुषमजं वंदे रमानायकं
वंदे हारकिरीटकुण्डलधरं देवेन्द्र नीलद्युतिम् ।
वंदे चाप कदम्बकोज्ज्वलकरं वंदे जगन्मङ्गलं
वंदे पंक्तिरथात्मजं मम गुरुं वन्दे सदा राघवम् ॥ ६२
वंदे शौनकगौतमाद्यभिनुतं वन्दे घनश्यामलं
वंदे तारकपीठमध्यनिलयं वन्दे जगन्नायकम् ।
वंदे भक्तजनौघदेवविटपं वन्दे धनुर्वल्लभं
वंदे तत्त्वमसीति वाक्यजनकं वंदे सदा राघवम् ॥ ६३
वंदे सूर्यशशाङ्कलोचनयुगं वंदे जगत्पावनं
वंदे पत्रसहस्रपद्मनिलयं वंदे पुरारिप्रियम् ।
वंदे राक्षसवंशनाशनकरं वंदे सुधाशीतलं
वंदे देवकपीन्द्रकोटिविनुतं वंदे सदा राघवम् ॥ ६४
वंदे सागरगर्वभङ्गविशिखं वंदे जगज्जीवनं
वंदे कौशिकयागरक्षणकरं वंदे गुरूणां गुरुम् ।
वंदे बाणशरासनोज्ज्वलकरं वंदे जटावल्कलं
वंदे लक्ष्मणभूमिजान्वितकरं वंदे सदा राघवम् ॥ ६५

वंदे पाण्डुर पुण्डरीक नयनं पूर्णेन्दुबिम्बाननं
वंदे कम्बुगलं कराब्जयुगलं वंदे ललामोज्ज्वलम्।
वंदे पीतदुकूलमम्बुदनिभं वंदे जगन्मोहनं
वंदे कारणमानुषोज्ज्वलतनुं वंदे सदा राघवम्॥ ६६
वंदे नीलसरोजकोमलरुचिं वंदे जगद्वन्दितं
वंदे सूर्यकुलाब्धिकौस्तुभमणिं वंदे सुराराधितम्।
वंदे पातकपञ्चकप्रहरणं वंदे जगत्कारणं
वंदे विंशतिपञ्चतत्त्वरहितं वंदे सदा राघवम्॥ ६७
वंदे साधकवर्गकल्पकतरुं वंदे त्रिमूर्त्यात्मकं
वंदे नादलयान्तकस्थलगतं वंदे त्रिवर्णात्मकम्।
वंदे रागविहीनचित्तसुलभं वंदे सभानायकं
वंदे पूर्णदयामृतार्णवमहं वंदे सदा राघवम्॥ ६८
वंदे सात्त्विकतत्त्वमुद्रित तनुं वंदे सुधादायकं
वंदे चारुचतुर्भुजं मणिनिभं वंदे षडध्व(ब्ज)स्थितम्।
वंदे ब्रह्मपिपीलिकादिनिलयं वंदे विराड्विग्रहं
वंदे पन्नगतल्पशायिनमहं वंदे सदा राघवम्॥ ६९
अयोध्यपुरमण्डपे स्फुरितसिंहपीठे स्थितं
वसिष्ठमुनिगौतमैर्भृगुशुकादिसंसेवितम्।
दिनेशसुतरावणानुजसहोदराद्यावृतं
भजामि रघुनन्दनं प्रणवबीज सारात्मकम्॥ ७०
विलोलमणिमण्डलं विमलचन्द्रबिम्बाननं
विखण्डितदशाननं विततचापबाणोज्ज्वलम्।

विमोहितजगत्त्रयं विकचपद्मपत्रेक्षणं
विभीषणसुरक्षितं विजयराममीडे हरिम् ॥ ७१

चलत्कनक कुण्डलोल्लसितदिव्यगण्डस्थलं
चराचरजगन्मयं चरणपद्मगङ्गाश्रयम् ।
चतुर्विधफलप्रदं चरमपीठ मध्यस्थितं
चिदंशमखिलास्पदं दशरथात्मजं चिन्तये ॥ ७२

सनन्दनमुनिप्रियं सकलवर्णवेदात्मकं
समस्तनिगमागम स्फुरिततत्त्वसिंहासनम् ।
सहस्रनयनाब्जजाद्यमरवृन्दसंसेवितं
समष्टिपुरवल्लभं दशरथात्मजं चिन्तये ॥ ७३

अनर्घ्यमणिपूरकोल्लसितदिव्यतेजः परं
अनाहतसरोरुहस्फुरितहंसनादान्वितम् ।
अनन्तदलपङ्कजं स्फुटमृगाङ्कबिम्बामृता-
प्लुताङ्गमखिलास्पदं दशरथात्मजं चिन्तये ॥ ७४

जाग्रत्स्वप्नसुषुप्तिकाल विलसत्तत्वात्मचिन्मात्रकं
चैतन्यात्मकमादिपापरहितं भूम्यादि तन्मात्रकम् ।
शाम्भव्यादिसमस्तयोगकुलकं संख्यादितत्त्वात्परं
शब्दावाच्यमहं नमामि सततं व्युत्पत्तिनाशात्परम् ॥ ७५

ध्याये त्वां नवविद्रुमस्फुटतनुं बर्हालसन्मेचकं
नासारंजितमौक्तिकं परिलसत्पीताम्बरं कौस्तुभम् ।
वेणूकम्बुरथाङ्गपाशपरिघप्रासेक्षुचापाशुगं
श्रीरामं नवमन्मथाधिपमहं षट्कोणचक्रस्थितम् ॥ ७६

साकेते नगरे समस्तमहिमाधारे जगन्मोहनं
रत्नस्तम्भसहस्रमण्डपमहासिंहासने साम्बुजे।
विश्वामित्रवसिष्ठगौतमशुकव्यासादिभिर्मौनिभिः
ध्येयं लक्ष्मणलोकपाल सहितं सीतासमेतं भजे॥ ७७
एकान्ते कमले जले विकसिते चन्द्रीकृतस्थापिते
स्थाने तारकमंटपे तनुबिलव्याप्ते सुधामण्डपे।
अब्जार्कानिलमण्डलोपरि महाश्रीषोडशान्ते सदा
नादान्ते जनकात्मजान्वितमहं रामं भजे तारकम्॥ ७८
साकेते मणिमण्डपे सुरतरुप्रान्तेऽष्टवर्णोल्लसत्-
पत्रे तारककर्णिके प्रविलसत्कल्पप्रसूनाश्रिते।
पद्मे वेदचतुष्कमण्डलसिते नादान्त शय्यातले
तं सेवे ध्रुवमण्डलेन्दुविगलत्पीयूषधाराप्लु(मृ)तम्॥ ७९
ध्याये त्वां रविमण्डलेन्दुधवले पद्मे निषण्णं हरिं
स्वर्णाभं करशङ्खचक्रललितं पीताम्बरं कौस्तुभम्।
स्वर्णश्मश्रुनखालकं ललनया युक्तं किरीटाङ्गदं
हारालङ्कृतवक्षसं पदयुगं श्रीपादुकालङ्कृतम्॥ ८०
वसन्ताक्षराख्ये चतुःपत्रपद्मे त्रिकोणान्तकण्ठे धरातत्त्वयुक्ते।
वराभीतिपाशाङ्कुशं विद्रुमाभं गजाश्वे निषण्णं भजे रामचन्द्रम्॥८१
वलान्ताक्षराभ्यां च षट्पत्रपद्मे लसत्तोयतत्त्वे वराभीतिहस्ते।
महाकुण्डिकां चाक्षमालां वहन्तं चतुर्वक्त्ररूपं भजे रामचन्द्रम्॥ ८२
डफान्ताक्षराभ्यां मणिव्रातपूरे रथाङ्गाब्जहस्तं महेन्द्रोपलाङ्गम्।
लसद्वह्नितत्वं निषण्णं गदाङ्कं महाविष्णुरूपं भजे रामचन्द्रम्॥ ८३

कठान्ताक्षराख्ये जगत्प्राणतत्वे वराभीतिहस्तं त्रिशूलं दधानम्।
उमानाथमब्जारिखण्डोज्ज्वलाङ्कं स्मरारिस्वरूपं भजे रामचन्द्रम्॥८४
विशुद्धाख्यपद्मे नभस्तत्वरम्ये अरूपं निरूपं समस्तेषुवासम्।
विशिष्टं मनोगम्यमेकं त्वनादिं भजे जीवजीवात्मरामं च रामम्॥८५
द्विपत्राब्जमध्ये मनस्तत्वगम्ये जगत्कारणं ज्योतिरानन्दरूपम्।
लसद्भावविष्णुं मनोभावदीपं परात्मस्वरूपं भजे रामचन्द्रम्॥ ८६
सदानन्ददेवे सहस्रारपद्मे गलच्चन्द्रपीयूषधारावृतान्ते।
स्थितं राममूर्तिं निषेवे निषेवेऽन्यदैवं न सेवे न सेवे न सेवे॥ ८७
सुधाब्जासितद्वीपमध्ये विमाने सुपर्वाणिवृक्षोज्ज्वले शेषतल्पे।
निषण्णं रमाङ्कं निषेवे निषेवेऽन्यदैवं न सेवे न सेवे न सेवे॥ ८८
चिदंशं सदानन्दमानंदकन्दं सुषम्नाख्यरन्ध्रान्तरालं च हंसम्।
सचक्रं सशङ्खं सपीताम्बराङ्कं परं चान्यदैवं न जाने न जाने॥ ८९
सुपर्वाणि वृक्षोज्ज्वलस्वर्णपीठे वनौकादिभिर्मौनिभिः सेव्यमानम्।
स्थितं पुष्पवृष्ट्यावृतं राममूर्तिं सदा भूमिजायुक्तमीडे हृदन्ते॥ ९०
करेदिव्यचक्रं परेचारुशङ्खं गलेतारहारं ललाटेललामम्।
भुजङ्गे निषण्णं परानन्दरूपं सदा भूमिजायुक्तमीडे हृदन्ते॥ ९१
चतुर्वेदकूटोल्लसत्कारणाख्ये स्फुरद्दिव्यवैमानिके भोगितल्पे।
परंधाममूर्तिं निषण्णं निषेवेऽन्यदैवं न सेवे न सेवे न सेवे॥ ९२
लसद्दिव्यशेषाचले योगपीठे सदानन्दवैमानिके मासहायम्।
मुनीनां हृदानन्दमोङ्कारगम्यं सदा भूमिजायुक्तमीडे हृदन्ते॥ ९३
मनःस्थं मनोऽन्तःस्थमाद्यन्तरूपं महाचिन्तवर्जं च मध्यस्थमीशम्।
मनोबुद्ध्यहंकारचित्तादिसाक्षिं परस्वप्रकाशं भजे रामचन्द्रम्॥ ९४

परानन्दवस्तु स्वरूपादि साक्षिं परब्रह्म गम्यं परं ज्योतिमूर्तिम्।
पराशक्तिमित्राप्रियाराधिताङ्घ्रिं परंधामरूपं भजे रामचन्द्रम्॥ ९५

परं पवित्रं परवासुदेवं परात्परं तं परमेश्वराख्यम्।
गुणत्रयाराधित मूलकन्दमादित्यवर्णं तमसः परस्तात्॥ ९६

साकेते गुरुगन्धधूपनिविडे माणिक्यदीपान्विते
कस्तूरीघनसारकुङ्कुमरसप्राचुर्यसारोज्ज्वले।
नानापुष्पवितान पंक्तिरुचिरे सौवर्णसिंहासने
वासं मन्मथमन्मथं मणिनिभं रामं भजे तारकम्॥ ९७

भङ्गोत्तुङ्गमयामृताब्धि लहरीमध्ये विराड्विग्रहे
द्वीपे निर्जरपादपैः परिवृते कर्पूरदीपोज्ज्वले।
ओङ्कारान्तरमन्दिरे मणिमये शेषान्तराशायिनं
लक्ष्मीयुक्तमसारचित्सुखपदं रामं भजे तारकम्॥ ९८

वैकुण्ठे नगरे सुरद्रुमतले स्वानन्दवप्रान्तरे
नानारत्न विनिर्मितास्फुटपटुप्राकारसंवेष्टिते।
सौधेंदूपलशेषतल्पललिते नीलोत्पलाच्छादिते
पर्यङ्के शयिनं रमादिसहितं रामं भजे तारकम्॥ ९९

वैकुण्ठे पुटभेदने मणिमयप्रान्तेन्दुसिंहासने
अक्षान्तान्तसरोरुहे शशिगलत्पीयूषवार्यन्तरे।
चन्द्रार्कानलभानुमण्डलयुते शेषाहितल्पान्तरे
वासं वासवनीलकोमलनिभं रामं भजे तारकम्॥ १००

क्षीराब्धौ शशिशङ्खमौक्तिकलसद्वीपे सुधर्मान्तरे
बिन्दौ सार्धकलान्विते परिलसन्नागान्तरे संस्थितम्।
कोटीराङ्गदहारकुण्डलमणिग्रैवेयहारोज्ज्वलं
श्रीवत्साञ्चितमिन्द्रनीलसदृशं रामं भजे तारकम्॥ १०१

साकेतेऽनलचन्द्रभानु विलसच्चक्रबिन्दुस्थितं
बालार्कद्युतिभासुरंकरतले पाशाङ्कुशौ बिभ्रतम्।
बाणं चापयुतं विशालनयनं स्मेराननाम्भोरुहं
स्त्रीपुंरूपधरं विलाससदनं रामं भजे तारकम्॥ १०२

अर्धं रक्तवदर्धनीलरुचिरं अर्धेन्दु चूडार्चितं
अर्धं रत्नकिरीटकुण्डलधरं ताटङ्कमर्धं धनुः।
शङ्खं चक्रगदाब्ज संयुतकरं ध्येयं सदा वैष्णवं
पाशं चाङ्कुशबाणसन्धृतकरं रामं भजे तारकम्॥ १०३

सहस्रपत्राम्बुजकर्णिकान्तः ज्योतिःप्रकाशं परमादिमूलम्।
तेजोमयं जन्मजराविहीनं श्रीराघवं नित्यमहन्नमामि॥ १०४

सकलभुवनरत्नं सच्चिदानन्दरत्नं सकलहृदयरत्नं सूर्य विम्बान्तरत्नम्।
विमलसुकृतरत्नं वेदवेदान्तरत्नं पुरहरजपरत्नं पातु मां रामरत्नम्॥ १०५

इक्ष्वाकुवंशार्णवजातरत्नं सीताङ्गनायौवनभाग्यरत्नम्।
वैकुण्ठरत्नं जनभाग्यरत्नं श्रीरामरत्नं शिरसा नमामि॥ १०६

निगमशिशिररत्नं निर्मलानन्दरत्नं निरुपमगुणरत्नं नादनादान्तरत्नम्।
दशरथकुलरत्नं द्वादशान्तस्थरत्नं पशुपतिजपरत्नं पातु मां रामरत्नम्॥ १०७

शतमखनुतरत्नं षोडशान्तस्थरत्नं मुनिजनजपरत्नं मुख्यवैकुंठरत्नम्।
निरुपमगुणरत्नं नीरजान्तस्थरत्नं परमपदविरत्नं पातु मां रामरत्नम्॥ १०८

सकलसुकृतरत्नं सत्यवाक्यार्थरत्नं शमदमगुणरत्नं शाश्वतानन्दरत्नम्।
प्रणयनिलयरत्नं प्रस्फुटज्योतिरत्नं परमपदविरत्नं पातु मां रामरत्नम्।।

निखिलनिलयमन्त्रं नित्यतत्वाख्यमन्त्रं
भवकुलहरमन्त्रं भूमिजाप्राणमन्त्रम्।
पवनजनुतमन्त्रं पार्वतीमोक्षमन्त्रं
पशुपति निजमन्त्रं पातु मां राममन्त्रम्।। १९०

प्रणवनिलयमन्त्रं प्राणनिर्याणमन्त्रं
प्रकृतिपुरुषमन्त्रं ब्रह्मरुद्रेन्द्रमन्त्रम्।
प्रकटदुरितरागद्वेषनिर्नाशिमन्त्रं
रघुपतिनिजमन्त्रं राम रामेति मन्त्रम्।। १११

दशरथसुतमन्त्रं दैत्यसंहारमन्त्रं
विविधविनुतमन्त्रं विश्वविख्यातमन्त्रम्।
मुनिगणनुतमन्त्रं मुक्तमार्गैकमन्त्रं
रघुपति निज मन्त्रं राम रामेति मन्त्रम्।। ११२

संसारसागर भयापह विश्वमन्त्रं
साक्षान्मुमुक्षुजनसेवितसिद्धमन्त्रम्
सारङ्गहस्त मुखहस्त निवास मन्त्रं
कैवल्यमन्त्रमनिशं भज राममन्त्रम्।। ११३

जयतु जयतु मन्त्रं जन्म साफल्यमन्त्रं
जननभरणभेदक्लेशविच्छेदमन्त्रम्।
सकलनिगममन्त्रं सर्वशास्त्रैकमन्त्रं
रघुपतिनिजमन्त्रं राम रामेति मन्त्रम्।। ११४

अज्ञानसम्भव भवाम्बुधिबाडवाग्निं
अव्यक्त तत्त्वनिकरप्रणवाधिरूढम्।
सीतासमेतमनुजेन हृदन्तराले
प्राणप्रयाण समये मम सन्निधत्ताम्।। ११५

तृतीयाश्वासः

श्रीरामं शिवचापभङ्गनिपुणं सीताङ्गनावल्लभं
सुत्रामार्चितपादपद्मयुगलं सूर्येन्दुनेत्रोज्ज्वलम्।
कर्पूराङ्गविलेपनं घनरुचिं कारुण्यपाथोनिधिं
वन्दे कल्पतरुप्रवेशितलसत्सिंहासनाधिष्ठितम्॥ १

श्रीरामं शितिकन्धरस्य धनुषः संभेदनात् प्रापितां
सीतां काञ्चनसन्निभां परिणतामाकल्प रत्नोज्ज्वलाम्।
वामाङ्कोपरि लज्जया नतमुखीमालोक्य दिव्यासने
श्रीमद्भानुशशाङ्ककोटिनिवहःपायात्स वो राघवः॥ २

श्रीरामं भुवनैकसुन्दरतनुं धाराधरश्यामलं
राजीवायतलोचनं रघुवरं राकेन्दुबिम्बाननम्।
कोदण्डादिनिजायुधाश्रितभुजैर्भान्तं विदेहात्मजा-
धीशं भक्तजनावनं रघुवरं श्रीरामचन्द्रं भजे॥ ३

आरामं वैभवानामभिनवसुपथं हारकेयूरकान्तं
हासोल्लासाभिरामं मणिमयमुकुटं मङ्गलानां निवासम्।
मन्दारामसीमान्तरमणिभवनाधिष्ठितं शिष्ट सेव्यं
सल्लापानन्द सिन्धु प्रणवमभिनिशं रामचन्द्रं भजेऽहम्॥ ४

रामं राजशिखामणिं रघुवरं राकेन्दुबिम्बाननं
राजीवायतलोचनं रणहतानेकासुरं राघवम्।
सीताचारुपयोधराञ्चितलसत्काश्मीरगन्धार्चितं
राजत्कुण्डलमण्डितं शुभकरं रामाभिरामं भजे॥ ५

रामं कोमलनीलमेघविलसद्गात्रं पयोजाननं
काकुत्स्थं दशकण्ठबाहुविदलत्कोदण्डबाणान्वितम्।

पापघ्नं विशदायताक्षियुगलं सौमित्रिसंसेवितं
भक्तानां परमौषधं मुनिवरैः संस्तूयमानं भजे ॥ ६

रामं श्यामलमेघकोमलरुचिं राकेन्दुबिम्बाननं
रक्षोघ्नं रविजार्चितं रघुवरं रत्नोज्ज्वलत्कुण्डलम् ।
राजीवाक्षममानुषं रणबलोदग्रं रमानुग्रहं
राजेन्द्रं रमणीयरूपमसकृद्ध्याये जगन्मोहनम् ॥ ७

रामं रम्यगुणं रमापतिसमं राकाशशाङ्काननं
राजन्यं रमणीयरूपममलं रामाभिरामं हरिम् ।
राजाराधितपादपद्ममनिशं राजन्यविभ्राजितं
राकेन्दुप्रतिमं धराकुचयुगे विन्यस्तहस्तं भजे ॥ ८

रामं कौशिकगौतमप्रियकरं सीतापतिं सानुजं
रक्षोघ्नं वनवासिनं गुणनिधिं विघ्नघ्नमासार्कजम् ।
सेतोर्बन्धनधीरवानरबलं धिकुम्भकर्णेन्द्रजित्–
पङ्क्तिग्रीवमवद्विभीषणमजं श्रीरामचन्द्रं भजे ॥ ९

रामं कोमलनीलनीरदनीभं नीलालकालङ्कृतं
कट्यां शोभित किंकिणीझणझणध्वानैरुपेतं शिशुम् ।
कण्ठालंबितरक्षुनिर्मलनखं कञ्जाक्षमब्जच्छविं
भास्वन्तं मकुटाङ्गदादिविविधाकल्पं सदाऽहं भजे ॥ १०

रामं सीतासमेतं विमल रविशताभासमानं रसार्द्रं
श्यामं देदीप्यमानस्मितरुचिरमुखं कुण्डलोद्भासिगण्डम् ।
श्रीवत्सं श्रीनिवासं सुरतरुविलसद्वररत्नसिंहासनस्थं
दिव्याकल्पोज्ज्वलाङ्गं दिविजपतिनुतं सन्ततं तं भजेहम् ॥ ११

जलनिधि कृतसेतुं देवतानन्दहेतुं
दशमुखमुखरक्षोदारवैधव्यहेतुम् ।
मुनिजननिवहानां मुक्तिसौख्यादिहेतुं
रघुवरकुलकेतुं कीर्तये धर्महेतुम् ।। १२

सकलगुणनिधानं योगिभिःस्तूयमानं
भजतु सुरविमानं रक्षितेन्द्रादिमानम् ।
महितवृषभयानं सीतया शोभमानं
स्मरतु हृदयभानु ब्रह्म रामाभिरामम् ।। १३

वरगुणमणिसिन्धुर्मैथिलीप्राणबन्धुः
कनकशिखरिधैर्यो भूतमोभानुसूर्यः ।
दशरथनृपरत्नो देवताग्रैकगण्यो
भजितभुवनभद्रो पातु मां रामभद्रः ।। १४

त्रिदशकुमुदचन्द्रो दानवाम्भोजचन्द्रो
दुरिततिमिरचन्द्रो योगिनां ज्ञानचन्द्रः ।
प्रणतनयनचन्द्रो मैथिलीनेत्रचन्द्रो
दशमुखरिपुचन्द्रः पातु मां रामचन्द्रः ।। १५

स्वयुवतिकुलचन्द्रं बन्धुदुग्धाब्धिचन्द्रं
सुजनकुमुदचन्द्रं वैरिवक्त्राब्जचन्द्रम् ।
विकसितमुखचन्द्रं व्याप्तसत्कीर्तिचन्द्रं
सकलभुवनचन्द्रं सन्ततं रामचन्द्रम् ।। १६

भेतालं दशकण्ठकण्ठकदलीकन्दर्पदर्पापहं
श्रीकण्ठाकृतिमाप्लुवन्तममलं घोरासुरप्राणहम् ।
बाणं प्रत्युपसंहरन्तमतुलं बाणासनोद्यत्करं
वंदेऽरातिभयावहं मुनिनुतं रामं घनश्यामलम् ।। १७

आकर्णान्तगुणोल्लसच्छरमजं कल्पान्तकालोपम्
नेत्रान्तारुणतां वहन्तमनिशं प्रह्लाददं नाकिनाम्।
पौलस्त्यासुरदृष्टिचञ्चलकरं शस्त्रास्त्रसंधायिनं
बाणानेकविचित्रहस्तकुशलं श्रीवीररामं भजे॥ १८

स हि माता स हि तातः स हि मम तनयः स एव सोदर्यः।
(न हि माता न हि तातो न हि मम तनयः नचैव सोदर्यः।)
इति मम कुटिले मृत्यौ रघुपतिरयमेव बन्धुरासन्नः॥ १९
देवेन्द्रेण समर्पिते ध्वजयुते तत्स्यन्दने संस्थितं
सोत्कण्ठं सुरवैरिवीर्यविभवं ज्ञात्वा भुजास्फालनम्।
कृत्वा सूतयुतो दशाननहरं तूणीरसंस्थं शरं
हृत्वा ज्यानिनदात्करोति भयदं श्रीवीररामं भजे॥ २०

रुचिरमणिकिरीटं सुन्दरभ्रूललाटं
कनकरुचिरचेलं काशसद्योगखेलम्।
विमलजलदनीलं कुण्डलोद्भासिकर्णं
रघुकुलजनिरत्नं सन्ततं चिन्तयामि॥ २१

श्रीवत्साङ्कमुदारकौस्तुभलसत्पीताम्बरालङ्कृतं
नानारत्न विराजमानमुकुटं नीलाम्बुदश्यामलम्।
कस्तूरीघनसारचर्चिततनुं मन्दारमालाधरं
कन्दर्पायुतसुन्दरं रघुपतिं सीतासमेतं भजे॥ २२

यन्नामैव सहस्रनामसदृशं यन्ना म वेदैः समम्
यन्नामाङ्कितवाक्यमासुरबलस्त्रीगर्भविच्छेदकम्।
यन्नाम श्वपचार्यभेदरहितं मुक्तेः सदा दायकं
यन्नाम्ना रघुरामनाम रमणं श्रीरामनामामृतम्॥ २३

रामं राक्षसमर्दनं रघुवरं दैतेयविध्वंसिनं
सुग्रीवेप्सितराज्यदं सुरपतिं दैत्यांतकं शार्ङ्गिणम्।
भक्तानामभयप्रदं भयहरं पापौघविध्वंसिनं
सामीरिस्तुतपादपद्मयुगलं सीतासमेतं भजे ॥ २४

रामं रक्तसरोरुहाक्षममलं लङ्काधिनाथान्तकं
कौसल्यानयनोत्सुकं रघुवरं नागेन्द्रतल्पस्थितम्।
वैदेहीकुचकुम्भकुङ्कुमरजोऽलङ्कारकारं हरिं
मायामानुषविग्रहं रघुपतिं सीतासमेतं भजे ॥ २५

रामं हेमतटित्प्रभांशुकधरं वीरासने संस्थितं
बालं नीलमणिप्रभं मधुरिपुं दैत्येन्द्रगर्वापहम्।
विश्वामित्रवसिष्ठवानरवरैः संसेव्यमानं सदा
नित्यं भास्करचन्द्रकोटिसदृशं सीतासमेतं भजे ॥ २६

शत्रुघ्नो व्यजनाङ्कितोऽपि भरतः पार्श्वद्वये पश्चिमे
छत्रं चामर संयुतं कलितवान् संसेवते लक्ष्मणः।
मूले कल्पतरोर्विमानविलसन्माणिक्यसिंहासने
पद्मास्यं मुनिसेवितं रघुपतिं सीतासमेतं भजे ॥ २७

वामाङ्कोपरि तप्तकाञ्चननिभं सीतासमालोकितं
हस्ताभ्यां धृतछत्रचामरधृता सौमित्रिणा सेवितम्।
नित्यं पूजितपादपद्मयुगलं देवैःसुरेन्द्रादिभिः
सेव्यं मानुषराक्षसैःकपिवरैः श्रीरामचन्द्रं भजे ॥ २८

कस्तूरीतिलकं कपीन्द्रहरणं कारुण्यवारांनिधिं
क्षीराम्भोधिसुतामुखाब्जमधुपं कल्याणरामं विधिम्।
कौसल्यानयनोत्सुकं कपिवरत्राणं महापौरुषं
कामारिप्रियमर्ककोटिसदृशं सीतासमेतं भजे ॥ २९

विद्युत् कोटिदिवाकरद्युतिनिभं श्रीकौस्तुभालङ्कृतं
योगीन्द्रैः सनकादिभिः परिवृतं कैलासनाथप्रियम्।
मुक्तारत्नकिरीटकुण्डलधरं ग्रैवेयहारान्वितं
वैदेहीकुचसन्निवासमनिशं सीतासमेतं भजे॥ ३०

मेघश्यामलमम्बुजातनयनं विस्तीर्णवक्षःस्थलं
बाहुद्वन्द्वविराजितं सुवदनं शोणाङ्घ्रिपङ्केरुहम्।
नानारत्नविचित्र भूषणयुतं कोदण्डबाणाङ्कितं
त्रैलोक्यप्रतिमानसुन्दरतनुं सीतासमेतं भजे॥ ३१

विद्युत्कोटिसहस्रभानुसदृशं सिंहासने संस्थितं
मूले कल्पतरोर्महामणिमये भान्तं परेशं विभुम्।
सुग्रीवाङ्गदजाम्बवादिहरिभिः संसेव्यमानं हरिं
शम्भुब्रह्मसुरारिभिः परिवृतं सीतासमेतं भजे॥ ३२

दिव्यारण्ययतीन्द्रनामनगरे मध्ये महामण्डपे
स्वर्णस्तम्भसहस्रषोडशयुते मन्दारमूलाश्रिते।
नानारत्नविचित्र निर्मलमहासिंहासने संस्थितं
सीतालक्ष्मणसेवितं रघुपतिं सीतासमेतं भजे॥ ३३

यत्पादाम्बुजसम्भवा त्रिपथगा भागीरथी मुक्तिदा
लोकानां हतकिल्बिषा भगवती मन्दाकिनी शाम्भवी।
लोके भाति सरस्वती सुरनदी पूर्णेन्दुकान्तिप्रभा
तं विष्णुं भरताग्रजं रघुवरं सीतासमेतं भजे॥ ३४

यत्पादाम्बुजरेणुना मुनिसती मुक्तिं गता यन्महा
पुण्यं पातकनाशने त्रिजगतां भाति स्मृता पाविनी।
स्मृत्वा राघवमप्रमेयममलं पूर्णेन्दुमन्दस्मितं
तं रामं सरसीरुहाक्षममलं सीतासमेतं भजे॥ ३५

वैदेहीकुचमण्डलाग्र विलसन्माणिक्यहस्ताम्बुजं
काञ्चीकङ्कणहारनूपुरलसत्केयूरहारान्वितम्।
दिव्यश्रीमणिकुण्डलोज्ज्वलमहाभूषासहस्रान्वितं
वीरं श्रीरघुवीरपुङ्गवं गुणनिधिं सीतासमेतं भजे॥ ३६

वैदेहीकुचमण्डलोपरिलसन् माणिक्यहारावली
मध्यस्थं नवनीतकोमलरुचिं नीलोत्पलश्यामलम्।
कन्दर्पायुतकोटिसुन्दरतनुं पूर्णेन्दु बिम्बाननं
कौसल्याकुलभूषणं रघुपतिं सीतासमेतं भजे॥ ३७

वैदेहीयुतवामभागमतुलं वन्दारुमन्दारकं
वन्दे प्रस्तुतकीर्तिवासिततरुच्छायानुकारिप्रभम्।
वैदेहीकुचकुङ्कुमाङ्कितमहोरस्कं महाभूषणं
वेदान्तैरुपगीयमानमसकृत्सीतासमेतं भजे॥ ३८

वैदेहीस्तनकुम्भसम्भ्रमपरीरम्भावृतं सिन्धुगं
राकाचन्द्रनिभाननं रघुवरं राजीवपत्रेक्षणम्।
प्रावृण्मेघनिभद्युतिं स्मितयुतं हारावलीभूषितं
श्रीरामं प्रणमामि भक्तजनताचिन्तामणिं सन्ततम्॥ ३९

वैदेहीरमणं हिरण्यतिलकं विश्वम्भरापालकं
वर्षिष्ठं विविधायुधेषु निपुणं विद्वज्जनश्रीकरम्।
विद्यावासगृहं वियच्चरनुतं विद्युत्प्रकाशाम्बरं
विप्रत्राणविधेयमादिपुरुषं श्रीरामचन्द्रं भजे॥ ४०

वैदेहीवशवर्तिनं रणजितं रत्नाकरागारिणं
पंक्तिग्रीवमदापहं पटुभुजं पद्मासकोटिप्रभम्।
विष्णुं जिष्णुमवार्यशौर्यनिलयं नीलाम्बुदश्यामलं
रत्नालङ्करणान्वितं रघुपतिं श्रीरामचन्द्रं भजे॥ ४१

देवानां हितकारिणं सुभुवने कृत्वाऽवतारं ध्रुवं
रामं कौशिकयज्ञविघ्नदनुजघ्नं ताटकासंहरम्।
नित्यं गौतमपत्निशापदलन श्रीपादरेणुं शुभं
शम्भोरुत्कटचापखण्डनमहासत्त्वं भजे राघवम्॥ ४२

राजीवनेत्र रघुपुङ्गव रामभद्र
राकेन्दुबिम्बसदृशानन नीलगात्र।
रामाभिराम रघुवंशसमुद्भव त्वं
श्रीरामचन्द्र मम देहि करावलम्बम्॥ ४३

मुकुररुचिरगण्डं पुण्डरीकाभतुण्डं
करिकरभुजदण्डं रौद्रतेजोऽग्निकुण्डम्।
नमितभुवनषण्डं भेदितोग्रारिमुण्डं
गुणनिकरकरण्डं नौमि रामप्रचण्डम्॥ ४४

कोदण्डकाण्डविनिवेशितबाहुदण्डं
आखण्डलाद्यमरवर्षित पुष्पवर्षम्।
आयोधनस्थितिरजःपरिधूसराङ्गं
अव्यूतिदं रघुवरेन्द्रमरिप्रभेदम्॥ ४५

सेव्यं श्रीराममन्त्रं श्रवणशुभकरं श्रेष्ठसुज्ञानमन्त्रं
स्तव्यं श्रीराममन्त्रं नरकदुरितदुर्वारनिर्घातमन्त्रम्।
भव्यं श्रीराममन्त्रं भजतु भजतु संसारनिस्तारमन्त्रं
दिव्यं श्रीराममन्त्रं दिवि भुवि विलसन्मोक्षरक्षैकमन्त्रम्॥ ४६

आजानुबाहुमरविन्ददृशं शुभाङ्गं
राजाधिराजमघराजितमःपतङ्गम्।
श्रीजानकीमुखसरोरुहमत्तभृङ्ग
श्रीमानितं हृदि भजामि कृपान्तरङ्गम्॥ ४७

एकेन बाणमपरेण करेण चापं
हर्षं वहन्तमसमानजटाशिरस्कम्।
सीतासहायमनुजेन सहाचरन्तं
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ ४८

आमीलयन्दशशिरोवदनाम्बुजातं
उन्मीलयन् जनकजानयनोत्पले च।
आनन्दयन्सकलजीव चकोरराशिं
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ ४९

रामं पुराणपुरुषं रमणीयवेषं
राजाधिराजमुकुटार्चितपादपीठम्।
सीतापतिं सुनयनं जगदेकवीरं
श्रीरामचन्द्रमनिशं कलयामि चित्ते ॥ ५०

सिंहासनस्थं सुरसेवितव्यं रत्नाङ्कितालङ्कृतपादपद्मम्।
सीतासमेतं शशिसूर्यनेत्रं रामं भजे राघवरामचन्द्रम् ॥ ५१

सुग्रीवमित्रं शुभनामरूपं लङ्काहरं राक्षसवंशनाशम्।
वेदाश्रयाङ्गं विपुलायताक्षं रामं भजे राघवरामचन्द्रम् ॥ ५२

अनन्तकीर्तिं वरदं प्रसन्नं पद्मासनं सेवकपारिजातम्।
राजाधिराजं रघुवीरकेतुं रामं भजे राघवरामचन्द्रम् ॥ ५३

पद्मासनस्थं सुरसेवितव्यं पद्मालयानन्दकटाक्षवीक्षम्।
गन्धर्वविद्याधर गीयमानं रामं भजे राघवरामचन्द्रम् ॥ ५४

अचिन्त्यमव्यक्तमनन्तरूपं अद्वैतमानन्दमनादिगम्यम्।
पुण्यस्वरूपं पुरुषोत्तमाख्यं रामं भजे राघवरामचन्द्रम् ॥ ५५

मन्दस्मितं कुण्डलगण्डभागं पीताम्बरं भूषणभूषिताङ्गम्।
नीलोत्पलाङ्गं भुवनैकमित्रं रामं भजे राघव रामचन्द्रम्॥ ५६

डिंडीरहासमणिकुण्डलचारुकर्ण
दोर्दण्ड शौर्यजितखण्डनशौर्यधीर।
कोदण्डकाण्ड परिमण्डितपार्थिवेन्द्र
वेतण्डयान जय राघव रामचन्द्र॥ ५७

लोकान् सप्त निनादयन् हरिहयाश्वं भ्रामयन्निन्धयन्
सप्ताख्ये भुवने प्रकंपमुदयन् सप्तार्णवान् घूर्णयन्।
उन्मूलानि रसातलानि जनयन् सप्तापि पृथ्वीधरान्
सुश्रीराघवबाहुदण्डविदलत्कोदण्डचण्डध्वनिः॥ ५८

ब्रह्माण्डं दलयन् वियद्विदलयन् भोगीशभोगस्थले
सन्त्रासं जनयन् समुद्रपटलीतोयं समुद्वेलयन्।
दिक्पालानतिक्षोभयन् कुलगिरीन् दीर्णत्वमापादयन्
नक्षत्राणि च पातयन् विलसते शौरेर्धनुज्यारवः॥ ५९

यश्चण्डगाम्भीर्य धनुर्वितेजोभूमण्डलीत्राण कृतावतारः।
आखण्डलाद्यैरमरैरुपास्यः कोदण्डपाणिः कुलदैवतं नः॥ ६०

वैदेह्या सह राजमानमनिशं सौवर्णसिंहासने
मन्दारद्रुमवाटिकान्तरमहा श्रीचन्द्रकान्तालये।
कैकेयीजनिमांजनेयसहितं सौमित्रिणा सेवितं
मेघश्याममुदारहासवदनं श्रीरामचन्द्रं भजे॥ ६१

वैदेह्या पुलकाङ्कुरार्चिततनुर्व्यालंबहस्ताम्बुजः
हस्तेमोदितरत्नकङ्कणरवः कल्पद्रुमाणां वने।
पादाभ्यां मणिपादुकाद्युतिकरं प्रेंखन्नखाभ्यां चरन्
इष्टालापसुधारसं दिशतु मे श्रीरामचन्द्रं भजे॥ ६२

वामाङ्कस्थितजानकीकुचयुगे विस्रस्तहस्ताम्बुजं
उज्जृम्भाननपङ्कजं परिलसद्विस्पष्टबिंबाधरम्।
सत्तारेण विशिष्ट कङ्कणरवे ओङ्कार शब्दाश्रये
भान्तं शारदचन्द्रहासमनिशं वंदे सदा राघवम्॥ ६३

वैदेहीसहितं सुलक्ष्मणयुतं कैकासुतं सानुगं
सुग्रीवं च विभीषणानिलसुतौ नीलं नलं साङ्गदम्।
विश्वामित्रवसिष्ठ गौतमभरद्वाजानुसंसेवितं
रामं मारुति सेवितं स्मर मनःसाम्राज्यसिंहासने॥ ६४

रामः प्राञ्जलिमग्रतोऽनिलसुतं सौभ्रात्रमादर्शयन्
छत्राचामरयुग्मभासितकरान् पश्चात्स्थले पार्श्वयोः।
वामाङ्के च निजान् विभीषणमुखान् सम्भावयन् बोधयन्
धीमुद्राकरतत्त्वरूपमवतात् साम्रा ज्यसिंहासने॥ ६५

पौगण्डे हित बालकैः परिवृतः पूर्णेन्दुकान्ताननः
प्रीत्या बद्धविचित्रहेमवसने संसक्तकाञ्चीगुणः।
आजानुप्रविलंबि बाहुयुगलः श्यामांबुभृद्विग्रहः
भ्रातृव्यानुचरश्चराचरगुरुः पायात्स वो राघवः॥ ६६

वैदेहीरमणीयवक्त्रवनजप्रद्योतखद्योतनं
केलीसद्मनि रत्नदीपकलिकाकान्ते वसन्तं हरिम्।
सौरभ्यप्रसवप्रयुक्तविलसच्छायान्तरे शायिनं
श्रीमन्तं रघुवंशदीपकमणिं श्रीरामचन्द्रं भजे॥ ६७

रामो बद्धपयोनिधिर्गुणनिधिर्गत्वाऽथ पारेऽम्बुधेः
लङ्कां प्राप्य सकुम्भकर्णदनुजं हत्वा रणे रावणम्।
तत्रास्थाप्य विभीषणं पुनरगात्सीतापतिः पुष्पकं
चारूढः पुनरागतः स भृतवान् धात्रीमजः पातु नः॥ ६८

रत्नोल्लसज्ज्वलित कुण्डलगण्डभागं
कस्तूरिकातिलक शोभितफालभागम्।
कर्णान्तदीर्घनयनं करुणाकटाक्षं
श्रीरामचन्द्र मुखमात्मनि सन्निधत्ताम्।। ६९

हेलाभग्नशशाङ्कशेखरधनुर्भूमण्डलाखण्डल
श्रेणीमौलि लसद्विनूत्नमणिभिर्दीप्तांघ्रिपङ्केरुहः ।
कल्याणं जनयत्यखण्डविभवः कल्याणलीलोत्सवे
मार्तण्डान्वयमण्डनश्च भवतादाविः सरामः सदा।। ७०

विद्युत्स्फुरन्मकरकुण्डलदीप्तचारु
गण्डस्थलं मणिकिरीटविराजमानम्।
पीताम्बरं जलदनीलमुदारकीर्तिं
श्रीरामचन्द्रमनिशं कलयामि चित्ते।। ७१

करतलधृतचापं कालमेघस्वरूपं सरसिजदलनेत्रं चारुहासं सुगात्रम्।
विचिनुत वनवासे विक्रमोदग्रवेषं प्रणमत रघुनाथं जानकीप्राणनाथम्।।

यः पृथ्वीभरवारणाय दिविजैः संप्रार्थितश्चिन्मयः
संजातः पृथ्वीतले रविकुले मायामनुष्योऽव्ययः ।
निश्चक्रं हतराक्षसं पुनरगाद् ब्रह्मत्वमद्य स्थिरां
कीर्तिं पापहरां विधाय जगतां तं जानकीशं भजे।। ७३

विश्वोद्भवस्थितिलयादिषु हेतुमेकं
मायाश्रयं विगतमायमचिन्त्यमूर्तिम्।
आनन्दसान्द्रममलं निजबोधरूपं
सीतापतिं विदिततत्त्वमहं नमामि।। ७४

श्रीरामं नवरत्न कुण्डलधरं श्रीरामरक्षामणिं
श्रीरामं च सहस्रभानुसदृशं श्रीरामचन्द्रोदयम्।

श्रीरामं श्रुतकीर्तिमाकरमहं श्रीराममुक्तिप्रदं
श्रीरामं रघुनन्दनं भयहरं श्रीरामचन्द्रं भजे ।। ७५

रामः पातु सदैव मामरिरभयाद्रामं सदा भावये
रामेणैव हृतं महत्तरतमो रामाय नित्यं नमः ।
रामान्नास्ति परं पदं सुललितौ रामस्य पादौ भजे
रामे प्रीतिरचञ्चलाऽस्तु मम हे श्रीराम मां पालय ।। ७६

राममिन्दीवरश्यामं राजीवायत लोचनम्
ज्याघोषनिर्जितारातिं जानकीरमणं भजे ।। ७७

हत्वा युद्धे दशास्यं त्रिभुवनविषमं वामहस्तेन चापं
भूमावष्टभ्य तिष्ठन्नितरकरधृतं भ्रामयन्बाणमेकम् ।
आरक्तोपान्तनेत्रो शरदलितवपुः कोटिसूर्यप्रकाशः
वीरश्रीबंधुरांगस्त्रिदशपतिनुतः पातु मां वीर रामः ।। ७८

युद्धे सन्नद्धशस्त्रं कपिवरभयदं कुम्भकर्णं सुरारिं
बाणैनेकेन सद्यः प्रकटितहुतभुग्विश्वरोषारुणाक्षम् ।
हत्वा कृत्वा प्रमोदं सुरकपिविततेर्मौनिवृन्दैकसेव्यं
वीरश्रीबंधुरांगस्त्रिदशपतिनुतः पातु मां वीररामः ।। ७९

दैतेयोदग्रसेव्यं पटुतरविशिखं भीषणं घोरनादं
देवेन्द्रस्तूयमानः स्फुटवरनिकरानन्धकादींश्च हत्वा ।
दिक्पालान् प्राप्य भोगान् मणिरुचिसुभगान् दिक्षु तान् दापयित्वा
वीरश्रीबन्धुरांगस्त्रिदशपतिनुतः पातु मां वीर रामः ।। ८०

कौसल्यावीरगर्भांबुधिघनविलसत्पूर्णचन्द्रः प्रतापः
मौनीन्द्रस्वान्त पद्मप्रविमलतरुणी धर्मनैपुण्यरूढः ।
मारीचं राक्षसेन्द्रं निजशरदहनायाहुतिं कल्पयित्वा
वीरश्रीबन्धुरांगस्त्रिदशपति नुतः पातु मां वीररामः ।। ८१

यो दण्डकारण्य निशाचरेन्द्रान् कोदण्डलीलाविषयीचकार।
वेतण्डशुण्डायतबाहुदण्डः कोदण्डपाणिः कुलदैवतं नः ॥ ८२

तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनांबरौ ॥ ८३

फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ।
रक्षःकुलनिहन्तारौ भ्रातरौ रामलक्ष्मणौ ॥ ८४

कल्याणानां निदानं कलिमलदहनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परम प्राप्तये प्रस्थितस्य।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानम्
बीजं धर्मद्रुमस्य प्रभवति भवतां भूतये रामनाम ॥ ८५

कौसल्यानयनेन्दुं दशरथमुखारविन्दमार्ताण्डम्।
सीतामानसहंसं रामं राजीवलचनं वन्दे ॥ ८६

दीर्घबाहुमरविन्दलोचनं दीनवत्सलमनाथरक्षणम्।
दीक्षितं सकललोकरक्षणे दैवतं दशरथात्मजं भजे ॥ ८७

सत्येन लोकाञ्जयति दीनान्दानेन राघवः।
गुरुं शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ ८८

भर्जनं भवबीजानामार्जनं सुखसम्पदाम्।
तर्जनं यमदूतानां रामरामेति गर्जनम् ॥ ८९

(सकृत्प्रणतरक्षी यः साक्षी यस्य विभीषणः।
सापराधाप्रतीकारः स श्रीरामो गतिर्मम ॥)
न जाने जानकीजाने राम त्वन्नामवैभवम्।
स वेत्ति भगवाञ्शम्भुः वाल्मीकिर्वेत्ति वा न वा ॥ ९०

कृत्याकृत्यविवेकहीनमनसां हत्यादिभिर्जीविनां
अत्यन्तं बहुतारकं तनुभृतामत्यन्त रम्भादिना।
सत्यानन्दमयं समस्त निगमस्तुत्यास्पदं संपदां
स्थानं श्रीरघुरामनाममलं नित्यं स्मरन्मुच्यते॥ ९१

साकेते स्वनिकेतने सुरतरोर्मूले लसद्वेदिके
हैमे रत्नमयं दधानमपरं हस्ताम्बुजं जानुनि।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं परिपूर्णचन्द्रवदनं भास्वत्किरीटं भजे॥ ९२

विद्युदवर्णोपमाङ्गीं विकचदलमुखीं विद्रुमाभाधरोष्ठीं
वेतण्डौद्धत्यकुम्भप्रतिकुचयुगलां वेदिमध्यावतंसाम्।
श्यामाभां फुल्लपद्मच्छदनिभनयनां चारुहासां सुनासां
सीतां श्रीरामदेवीं श्रितजनवरदां चिन्तयेऽनन्तमूर्तिम्॥ ९३

माणिक्यमञ्जीरपदारविन्दां रामार्कवत्फुल्लमुखारविन्दाम्।
भक्तप्रदातृत्वकरारविन्दां देवीं भजे राघववल्लभां ताम्॥ ९४

जयतु विजयकारी जानकीमोदधारी
तपनकुलविहारी दण्डकारण्यचारी।
दशवदनकुठारी दैत्यविच्छेदकारी
मणिमुकुटकधारी चण्डकोदण्डधारी॥ ९५

चेतःस्थितं चिन्तित चिन्तनीयं चिन्ताहरं चिन्तितपारिजातम्।
अचिन्तनीयं बहु चिन्तयेऽहं त्वामेव रामं भुवनाभिरामम्॥ ९६

साकेते शरदिन्दु कुन्दधवले सौधे महामण्डपे
पर्यस्तागरुधूपधूमपटले कर्पूरदीपोज्ज्वले।
सुग्रीवाङ्गद वायुपुत्र सहितं सौमित्रिणा सेवितं
लीलामानुषविग्रहं रघुपतिं रामं भजे श्यामलम्॥ ९७

रामः पिता राघव एव माता रामोऽथ बन्धुश्च सखा सखी वा ।
रामो गुरुर्मे परमं च दैवं रामं विना नान्यमहं स्मरामि ॥ ९८

या कृपा मुनिसंत्राणे या कृपा कपिनायके ।
या विभीषणरक्षायां सा राम मम दीयताम् ॥ ९९

दयानिधे राघवरामचन्द्र निरस्व पापानि ममाबलानि ।
त्वय्येव भक्तिं सुदृढां प्रयच्छ सैव प्रसूते ह्यखिलानभीष्टान् ॥ १००

अक्षीणबाणतूणीरः समारोपितकार्मुकः ।
दशग्रीवशिरोहर्ता श्रीरामः शरणं मम ॥ १०१

श्रीराम मे त्वं हि पिता च माता श्रीराम मे त्वं हि सुहृच्च बन्धुः ।
श्रीराम मे त्वं हि गुरुर्गरिष्ठः श्रीराम मे त्वं हि समस्तमेव ॥ १०२

पटुतरजलवाहध्वानमादाय चापं
पवनजवनवेगं बाणमाकृष्य तूणात् ।
अभयवचनदायी सानुजः सर्वतो मे
रणहरदनुजेन्द्रो रामचन्द्रः सहायः ॥ १०३

कौसल्यालसदालवालजनितः सीतालतालिङ्गितः
सिक्तः पंक्तिरथेन सोदरमहाशाखाभिरत्युन्नतः ।
रक्षस्तीक्ष्णनिदाघपाटनपटुश्छायाभिरानंदकृत्
यच्छन् वांछित सत्फलानि भवतु श्रीरामकल्पद्रुमः ॥ १०४

निगमशिशिर रत्नं नित्यमाशास्यरत्नं
जननुतनृपरत्नं जानकीरूपरत्नम् ।
भुवनवलयरत्नं भूभुजामेकरत्नं
रघुकुल वररत्नं पातु मां रामरत्नम् ॥ १०५

विशालनेत्रं परिपूर्णगात्रं सीताकलत्रं सुरवैरिजैत्रम् ।
कारुण्यपात्रं जगतः पवित्रं श्रीरामरत्नं प्रणतोऽस्मि नित्यम् ॥ १०६

श्रीरामचन्द्रः श्रितपारिजातः समस्तकल्याण गुणाभिरामः ।
सीतामुखाम्भोरुह चञ्चरीको निरन्तरं मङ्गलमातनोतु ॥ १०७

इन्दीवरदलश्यामः पुण्डरीक निभेक्षणः ।
धृतकोदण्डतूणीरो राम एव गतिर्मम ॥ १०८

इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यांतं रामं छत्रावृताननम् ॥ १०९

रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितुः
वाचा पञ्चवटीवने विहरतस्तामाहरद्रावणः ।
निद्रार्थं जननी कथामिति हरेर्हुंकारतः शृण्वता
सौमित्रे क्व धनुर्धनुरिति व्यग्रा गिरः पातु नः ॥ ११०

श्रीरामचन्द्रेति दयापरेति भक्तप्रियेति भवबन्धन मोचनेति ।
नाथेति नागशयनेति सदा स्तुवन्तं मां पाहि भीतमनिशं कृपणं कृतघ्नम्॥

रामचन्द्रचरितामृतपानं सोमपानशतकोटिसमानम् ।
सोमपानशतकोटिभिरेव जन्म नैति रघुनायक नाम्ना ॥ ११२

राम राम दयासिन्धो रामनाथ जगत्पते ।
त्वत्पाद कमलासक्तिर्भवेज्जन्मनि जन्मनि ॥ ११३

श्रीराघवं रामचन्द्रं रावणारिं रमापतिम् ।
राजीवलोचनं रामं तं वन्दे रघुनायकम् ॥ ११४

यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं
यन्नाभिपङ्कजभवः कमलासनः स्यात् ।

यन्नामसाररसिको भगवान् पुरारिः
तं रामचन्द्रमनिशं हृदि भावयामि ।। ११५

यस्यावतारचरितानि विरिञ्चलोके
गायन्ति नारदमुखा भवपद्मजाद्याः ।
आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा वागीश्वरी च तमहं शरणं प्रपद्ये ।।

रामचन्द्रचरणारविन्दयोः अन्तरङ्गचरभृङ्गलीलया ।
तत्र सन्ति च रसाश्चतुर्विधाः माकरन्दरस एव पङ्कजे ।। ११७

नानादिव्यास्त्रतेजः स्फुरदमितभुजः शत्रुसंहारधीरः
कौटिल्यद्योतमान भ्रुकुटियुतमुखं धारयन्नंबुदाभः ।
तूणीर घुस्तवेगोल्लसित शरवरं ताडयित्वा दशास्यं
वीरश्रीबन्धुराङ्गस्त्रिदशपतिनुतः पातु मां वीररामः ।। ११८

जातिभ्रष्टोऽपि पापी परधनपरदारेषु नित्योद्यतो यः
वास्तेयी ब्रह्महन्ता पितृवधनिरतो योगिवृन्दापकारी ।
ध्येयं कर्णामृतं यः पठति हि सततं रामचन्द्रस्य भक्तो
योगीन्द्रैरप्यलभ्यं पदमपि लभते सर्व देवैश्च सेव्यम् ।। ११९

## चतुर्थ आश्वासः

श्रीरामं जनकात्मजा कुचतटी श्रीगन्धपङ्कोल्लसद्
वक्षोवीथिमुदारमाश्रितमुनिं प्रादुर्भवत्कल्पकम् ।
ब्रह्मेशानमुखामरस्तुतमजं ब्रह्माण्डभाण्डाधिपं
वन्दे कोसलकन्यकासुतमहं वाराशिगर्वापहम् ।। १

साकेते मणिनिर्मिते प्रविलसत्सौधायुतानां शते
अन्तर्गेहमतीतभानुनिलये चञ्चत्पताकोज्ज्वले ।
हर्म्ये भर्मघणंघणाघनरवद् घण्टाशतैरावृते
दोलातल्प विहारिणं रघुपतिं सीतासमेतं भजे ।। २

साकेते सौधबद्ध ध्वजशतमहिते राजमार्गे विशाले
घण्टारावैरुपेते कनककुथयुते गन्धनागे वसन्तम्।
विद्याकल्पोज्ज्वलाङ्गं रथगजतुरगैरावृतं सुप्रसन्नं
रामं श्वेतातपत्रावृतमुखकमलं चिन्तयाम्यन्तरङ्गे ॥ ३

साकेते मणिकोटिभिः सुखचिते दिव्याम्बरालङ्कृते
हेमस्तंभ सहस्रकोटि घटिते तारापथात्युन्नते।
रम्यस्वर्णमये विचित्रभुवने दिव्यन्तरिक्षे मुदा
रामं स्मेरमुखाम्बुजं रघुपतिं सीतासमेतं भजे ॥ ४

साकेते मणितोरणाश्चितलसद्वीथीशतप्राङ्गणे
सानन्दं भरतादिभिः सहचरैरत्यन्तमोदान्वितैः।
क्रीडन्तं मणिकन्दुकैः करगतैरन्योन्यमत्युज्ज्वलैः
पौरस्त्री नयनोत्सवैः प्रतिदिनं पूज्यं भजे राघवम् ॥ ५

साकेते कनकाद्रि शृङ्गघटिते कल्पद्रुमैरावृते
वैडूर्यादिमणीन्द्रकान्तिघटिते देवेन्द्रनीलोज्ज्वले।
कुर्वन्तं मणिनायकं मणिगृहे माणिक्यपीठे भजे
पुत्रौ मन्मथसुन्दरौ कुशलवौ संसेव्यपादाविमौ ॥ ६

साकेते जननीकरार्पित लसत्कस्तूरीकासुन्दरे
फाले मौक्तिकजालकं शशिनिभं स्वर्णाङ्कितं वर्तुलम्।
चूडालम्बमनोज्ञहारकलितं बिभ्राणमत्युज्ज्वलं
रामं कोसलपुत्रिकावरसुतं सीतासमेतं भजे ॥ ७

साकेते सरयूजलेऽतिविमले प्रोत्फल्ल पद्माङ्किते
दिव्यश्री शतकोटि नृत्यरुचिरे स्वर्गापगासुन्दरे।
पश्यन्तीषु सुरांगनासु शपथं क्रीडन्तमुर्वीसुतां
बाहुभ्यां विमलोदकेन रुचिरं सीतासमेतं भजे ॥ ८

कदा सुरतरुस्थले कनकमण्डपे पुष्पके
वरासनमुपेयिवान् वसुदलारविन्दोज्ज्वले ।
करेण हृदयस्पृशा कलितमुद्रचिन्मुद्रिकः
मम स्फुटतु वासनामनिशमात्तवीरासनः ॥ ९

नदीरमणबन्धनं मतिमतामुदारं धनं
जगद्धितरन्धनं सकलकाम निष्पन्दनम् ।
विलिप्तहरिचन्दनं विनुतयातसंक्रन्दनं
भजामि रघुनन्दनं पवननन्दनस्यन्दनम् ॥ १०

रक्ताम्भोरुहलोचनं कुवलयश्यामं कपोले धनुः–
कोटिन्यस्तकराम्बुजं धृततनुत्राणं जटामण्डितम् ।
जेतारं खरदूषणत्रिशिरसामाबद्धगोधांगुलि
त्राणं मार्गणपूर्णतूणयुगलं कोदण्डरामं भजे ॥ ११

श्रीमत्कल्पद्रुमूले सकलमणिमये मण्टपे पुष्पकाख्ये
तन्मध्ये सूर्यबिम्बद्युति सरसिरुहे शोभमानेऽष्टपद्मे ।
पश्यन्निष्टां जनकतनयां वामभागोपसेव्यां
सौमित्रिं भानुपुत्रं पवनसुतयुतं पातु मां रामचन्द्रः ॥१२

विनीलजलदोपमं विमलचन्द्रबिम्बाननं
विनिद्रमणिकुण्डलं विकचपुण्डरीकेक्षणम् ।
बिभिन्न दनुजाधिपं विधृतबाणबाणासनं
विभीषणवरप्रदं विजयराममीडेऽनिशम् ॥ १३

राजद्राजीवनेत्रं रघुकुलतिलकं रञ्जिताशेषलोकं
वामाङ्कालोकिसीतं वरकरधनुषी कुण्डलोद्दीप्तगण्डम् ।
श्यामं शान्तं प्रसन्नं दरहसितमुखं वज्रसिंहासनस्थं
रामं राजत्किरीटं रविशत विशदं राजराजेशमीडे ॥ १४

भद्रां व्याख्यानमुद्रां करसरसिरुहे दक्षिणे धारयन्तं
सव्ये जानुन्युदारं करमपि च मुदा धारयन्तं स्फुरन्तम्।
पश्यन्तं वामभागे करधृत कमलां चित्रभूषाविशेषां
वैदेहीं काञ्चनाभां स्तनभरनमितां भावये रामचन्द्रम्॥ १५

विबुधविटपिमूले जानकीलक्ष्मणाभ्यां
सहितमनिलवेगं बाणमादाय चापम्।
बहुशरपटुतूणं रम्यपुष्पोपहारं
विबुधभरणचित्तं चिन्तये रामचन्द्रम्॥ १६

जानाति राम तव गतिं हनूमान् जानाति राम तव सख्यगतिं कपीशः।
जानाति राम तव युद्धगतिं दशास्यो जानाति राम धनदानुज एव सत्यम्॥

हे राम हे रमण हे जगदेकवीर हे नाथ हे रघुपते करुणालवाल।
हे जानकीरमण हे जगदेकबन्धो मां पाहि दीनमनिशं कृपणं कृतघ्नम्॥ १८

अयोध्यानाथ राजेन्द्र सीताकान्त जगत्पते।
श्रीराम पुण्डरीकाक्ष रामचन्द्र नमोऽस्तु ते॥ १९

दक्षिणे लक्ष्मणो धन्वी वामतो जानकी शुभा।
पुरतो मारुतिर्यस्य तंनमामि रघूत्तमम्॥ २०

रामं राक्षसमर्दनं रघुपतिं शक्रारिविध्वंसिनं
सुग्रीवेप्सित राज्यदं सुरपतेः पुत्रान्तकं शार्ङ्गिणम्।
भक्तानामभयप्रदं भयहरं पापौघविध्वंसिनं
सीतासेवितपादपद्मयुगलं रामं भजे श्यामलम्॥ २१

भवभयहरमेकं भानुकोटिप्रकाशं
करधृतशरचापं कालमेघावभासम्।
कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं
कमलविशदनेत्रं सानुजं राममीडे॥ २२

रामं श्यामपयोदनीलममलं राजीवनेत्रं सदाऽ
हल्याशापनिवारण प्रणयपादाम्भोजमुर्वीश्वरम्।
विद्युत्कोटिसहस्र दीधिति लसत्कोटीरमुक्तोज्ज्वलं
ध्याये तारकनाममीश्वरसखं दैतेयवंशापहम्॥ २३

दशरथसुतमीशं दण्डकारण्यवासं
शतमखमणिनीलं जानकीप्राणलोलम्।
सकलभुवनमोहं सन्नुतांभोददेहं
बहुलनुत समुद्रं भावये रामभद्रम्॥ २४

सर्यूतीरवने लतानिवसने सद्रत्नवेदीतटे
श्रीपर्यङ्कतले विदेहसुतया सार्धं परिक्रीडता।
कस्तूरीघनसार चन्दनमिलद्गन्धोल्लसत्पावनी
पायान्मूर्तिरनामयी रघुपतेर्भद्रात्मिका नोऽनिशम्॥ २५

वैदेहीप्रियवल्लभं विजयिनं वातात्मजाधीश्वरं
वाणीवारिधि वानरादि विनुतं वन्दारु मन्दारकम्।
विश्वामित्र वसिष्ठ वासवशिवा वागीश शश्वन्नुतं
देवेशं विनतात्मजाभिविनुतं वंदे सदा राघवम्॥ २६

विशालनेत्रं परिपूर्णगात्रं सीताकलत्रं सुरवैरिजैत्रम्।
जगत्पवित्रं परमात्मतन्त्रं श्रीरामचन्द्रं प्रणमामि चित्ते॥ २७

सौमित्रिमानार्णवपूर्णचन्द्र सीतालसल्लोचनपूर्णचन्द्र।
सुरारिवक्त्राम्बुधिपूर्णचन्द्र संरक्ष मां राघव रामचन्द्र॥ २८

यस्य किञ्चिदपि नो हरणीयं कर्म किञ्चिदपि नो चरणीयम्।
रामनाम च सदा स्मरणीयं लीलया भवजलं तरणीयम्॥ २९

रिङ्गमाणमभितो गृहांगणे भृङ्गनीलमलकावृताननम्।
मङ्गलप्रदममङ्गलापहं संगृहाण दशरथात्मजं हृदि॥ ३०

दनुजतिमिरभानुं तापसैश्चिन्त्यमानं शमितकलुषचारं सेवके दुष्टदूरम्।
दलितविषमसालं दण्डितारातिजालं प्रणम शिखरिशात्रुं
भव्यपाथोदगात्रम्॥

हे गोपालक हे दयाशरनिधे हे शम्भुचापाकृ(वृ)ते
हे दैत्यान्तक हे विभीषणदयापारीण हे भूपते।
हे वैदेहसुतामनोज्ञविहृते हे कोटिमाराकृते
हे नव्याम्बुजनेत्र पालय परं जानामि न त्वां विना॥ ३२

साकेते प्रणवाब्ज रत्नखचिते सिंहासने संस्थितं
विश्वामित्रवशिष्ठगालवमुखैराशीर्भिरामोदितम्।
पूज्यं पार्श्वगताब्ज चारुनयनं विद्युच्चलच्चामरं
वन्दे कोमल संस्मिताननमिलारक्षावतीर्णं हरिम्॥ ३३

नित्यं निर्जितपङ्कसम्भवमहोनेत्रश्रियं राघवं
रामं पर्वणि चन्द्रचारुवदनं दिक्पालकैः सेवितम्।
कर्पूरागरु चन्दनार्द्र हृदयं मन्दारमालाङ्कितं
विद्युत्पुञ्जनिभांबरावृततनुं रामं भजे श्यामलम्॥ ३४

श्रीरामं कुशिकात्मजस्य वचनेनाकृष्य बाणासनं
मारीचं च सुबाहुकं शरयुगेनैवाहवे लीलया।
कान्तं सुन्दरकाकपक्षरुचिरं सौमित्रिणा संस्तुतं
पश्यामः कमलामुखे सकरुणं कालाम्बुदश्यामलम्॥ ३५

आनन्दरूपं वरदं प्रसन्नं सिंहासने सेवितपारिजातम्।
नीलोत्पलाङ्गं भुवनैकमित्रं रामं भजे राघवरामचन्द्रम्॥ ३६

युद्धे वसन्तमृदुरद्भुत बाणवर्षे रामः प्रहारसमये रजनीचराणाम्।

रक्षानुकूल समयाय विभीषणाय, लङ्काधिपत्यमदिशद्रघुरामचन्द्रः ॥

वेदान्तनादं सुकृतैक दासं हताभिमानं त्रिदशप्रधाने ।
गजे(ते)न्द्रयानं विगतावसानं श्रीरामचन्द्रं सततं नमामि ॥ ३८

श्रीरामचन्द्रं धृतचापसायकं नीलोत्पलाभं नलिनायतेक्षणम् ।
सौमित्रिणा सेवितपादपङ्कजं सीतासमेतं शरणं भजेऽहम् ॥ ३९

श्रीरामचन्द्र करुणाकर दीनबन्धो सीतासमेत भरताग्रज राघवेश ।
पापार्तिभञ्जन भयातुरदीनबन्धो पापाम्बुधौ पतितमुद्धर मामनाथम् ॥४०

इदं शरीरं शतसन्धिजर्जरं पतत्यवश्यं परिणामदुर्लभम् ।
किमौषधं पृच्छसि मूढ दुर्मते निरामयं रामकथामृतं पिव ॥ ४१

दशमुखगजसिंहं दैत्यगर्वादरंहं
कदन भयदहस्तं तारक ब्रह्म शस्तम् ।
मणिखचितकिरीटं मंजुलालापनादं
दशरथकुलचन्द्रं रामचन्द्रं भजेऽहम् ॥ ४२

लङ्काविरामं रणरङ्गभीमं राजीवनेत्रं रघुवंशमित्रम् ।
कारुण्यमूर्तिं करुणाप्रपूर्तिं श्रीरामचन्द्रं शरणं प्रपद्ये ॥ ४३

श्रीरामचन्द्रमनिशं हृदिस्थितं श्रीराममिन्दुवदनं प्रविभासम् ।
भावयामि निगमान्ततनिवासं भारतीपतिनुतं भववन्द्यम् ॥ ४४

कौमारे रामचन्द्रः कमलमृदुपदा शोभयन् भूमिभागं
मातुश्चानन्दकारी मरकतनिकराकार इन्दीवराक्षः ।
उत्सङ्गे सन्निविष्टः पितुरमरवरैः स्तूयमानोपकारी
नानालङ्कारभूषः स्फुरतु मम सदा मायया राम ईशः ॥ ४५

सन्नद्धः कवची खड्गी चापबाणधरो युवा।
गच्छन्ममाग्रतो नित्यं रामः पातु सलक्ष्मणः ॥ ४६

सुग्रीवमित्रं परमं पवित्रं सीताकलत्रं नवहेमसूत्रम्।
कारुण्यपात्रं शतपत्रनेत्रं श्रीरामचन्द्रं शिरसा नमामि ॥ ४७

श्रीराघवेति रमणेति रघूद्वहेति रामेति रावणहरेति रमाधवेति।
साकेतनाथ सुमुखेति च सुव्रतेति वाणी सदा वदतु राम हरे हरेति ॥ ४८

जयतु जयतु रामो जानकीवल्लभोऽयं
जयतु जयतु रामश्चन्द्रचूडार्चितांघ्रिः।
जयतु जयतु वाणीनाथनाथः परात्मा
जयतु जयतु रामो नाथनाथः कृपालुः ॥ ४९

वरं न याचे रघुनाथ युष्मत्पादाब्जभक्तिः सततं ममास्तु।
इदं प्रियं नाथ वरं प्रयच्छ पुनः पुनस्त्वामिदमेव याचे ॥ ५०

अंभोधिरोषैररुणायमाने नाथस्य मृष्ट्वा नयने रघूणाम्।
मरुद्गणैस्तत्क्षणमानु शङ्के मन्दाकिनीमङ्गलसूत्रभङ्गः ॥ ५१

अम्भोधिस्मयबंधनेन जगदानन्देन भूपुत्रिका–
स्वान्तांभोभवबान्धवेन नतरक्षायत्तचित्तेन मे।
कर्णालम्बितकुण्डलेन दिविषात्त्राणोद्यमेनाश्रित–
श्रेयःकल्पलतेव मे मतिरियं रामेण संवर्धताम्॥ ५२

रामादौ जननं कुमारगमनं यज्ञप्रतीपालनं
शापादुद्धरणं धनुर्विदलनं सीतांगनोद्वाहनम्।
लङ्कायां दहनं समुद्रतरणं सौमित्रिसंमोहनं
रक्षः संहरणं स्वराज्यभवनं चैतद्धि रामायणम्॥ ५३

जन्मादौ क्रतुरक्षणं मुनिपतेः स्थाणोर्धनुर्दुर्भञ्जनं
वैदेहीग्रहणं पितुश्च वचनाद्धोराटवीगाहनम्।
कोदण्डग्रहणं खरादिमथनं मायामृगच्छेदनं
बद्धब्धि क्रमणं दशास्य निधनं चैतद्धि रामायणम्॥ ५४

पूर्वं रामतपोवनानुगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम्।
वालीनिग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावण कुम्भकर्णकदनं चैतद्धि रामायणम्॥ ५५

शान्तं शारद चन्द्रकोटि सदृशं चन्द्राभिरामाननं
चन्द्रार्काग्नि विकासकुण्डलधरं चन्द्रावतंसस्तुतम्।
वीणापुस्तक साक्षसूत्रविलसद्व्याख्यानमुद्राकरं
देवेशं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥ ५६

कृष्णं भीमधनुःकठोरनिनदं ब्रह्मादिसंवित्स्मयं
भास्वद्वाजिगतेनमार्गमनिशं शंभोः शिरःकम्पनम्।
दिग्दन्तिस्खलनं कुलाद्रिचलनं सप्तार्णवोन्मीलनं
वैदेहीमदनं मदान्धदमनं त्रैलोक्यसम्मोहनम्॥ ५७

कञ्जातपात्रयतलोचनाय कर्णावतंसोज्ज्वलकुण्डलाय।
कारुण्यपात्राय सुवंशजाय नमोस्तु रामाय सलक्ष्मणाय॥ ५८

विदुयुन्निभाम्भोदसुविग्रहाय विद्याधरैः संस्तुतसद्गुणाय।
वीरावताराय विराधहन्त्रे नमोस्तु रामाय सलक्ष्मणाय॥ ५९

संसक्तदिव्यायुधकार्मुकाय समुद्रगर्वापहरायुधाय।
सुग्रीवमित्राय सुरारिहन्त्रे नमोस्तु रामाय सलक्ष्मणाय॥ ६०

पीताम्बरालङ्कृतमध्यकाय पितामहेन्द्रामरवन्दिताय।
पित्रे स्वभक्तस्य जनस्य मात्रे नमोस्तु रामाय सलक्ष्मणाय॥ ६१

नमो नमस्तेऽखिलपूजिताय नमो नमश्चेन्दुनिभाननाय।
नमो नमस्ते रघुवंशजाय नमोस्तु रामाय सलक्ष्मणाय॥ ६२

इमानि पञ्चरत्नानि त्रिसन्ध्यं यः पठेन्नरः।
सर्वपापविनिर्मुक्तः स याति परमां गतिम्॥ ६३

श्रीरामः कल्पवृक्षो मे विरामः सकलापदः।
अभिरामस्त्रिलोकानां रामः क्षेमं करोतु नः॥ ६४

हृदय सदयचित्तं चित्तनाथं गुणानां
उदधिमुदितनिम्नं निम्नगालङ्कृतांघ्रिम्।
जनकपतितनुजास्वान्तकान्तोत्पलस्य
स्फुरणकरणचन्द्रं रामचन्द्रं भजेऽहम्॥ ६५

वदतु वदतु वाणी राम रामेति नित्यं जपतु जपतु नित्यं रामपादारविन्दम्।
वदतु वदतु देहः चिन्तयेद्रामचन्द्रं न भवतु मम पापं जन्मजन्मान्तरेषु॥

चापबाणधरः सीताकामदः कान्तिमान्नरः।
सीतालक्ष्मणसंयुक्तः पातु मां राघवेश्वरः॥ ६७

प्रातःस्मरामि रघुनाथमुखारविन्दं
मन्दस्मितं मधुराभाषि विशालफालम्।
कर्णावलम्बिचलकुण्डलगण्डभागं
कर्णान्तदीर्घनयनं नयनाभिरामम्॥ ६८

प्रातर्भजामि रघुनाथपदारविन्दं
रक्षोगणाय भयदं वरदं निजेभ्यः।
यद्राजसन्सदि विभिद्य महेशचापं
सीताकरग्रहणमङ्गलमाप सद्यः॥ ६९

प्रातर्नमामि रघुनाथपदारविन्दं पद्माङ्कुशादिशुभरेखशुभावहं मे।
योगिन्द्रमानसमधुव्रतसेव्यमानं शापापहं सपदि गौतमधर्मपत्न्याः ।।७०

प्रातर्वदामि वचसा रघुनाथनाम वागूदोषहारि सकलं कलुषं निहत्य।
यत्पार्वती स्वपतिना सह भोक्तुकामा प्रीत्या सहस्रहरिनामसमं जजाप।।

प्रातःश्रये श्रुतिनुतां रघुनाथमूर्तिं
नीलाम्बुदोत्पलसितेतररत्ननीलाम्।
आमुक्तमौक्तिकविशेष विभूषणाढ्यां
ध्येयां समस्तमुनिभिर्निजभृत्यमुख्यैः ।। ७२

यः श्लोकपञ्चकमिदं नियतः पठेत नित्यं प्रभातसमये पुरुषःप्रबुद्धः ।
श्रीरामकिङ्करजनेषु स एव मुख्यो भूत्वा प्रयाति हरिलोकमनन्यलभ्यम्।। ७

किं मन्त्रैर्बहुभिश्च दुष्करफलैरायासदैस्तद्विदां
किंचिल्लोपविधानमात्रविफलैः संसारदुःखावहैः ।
एकः सन्नपि सर्वमन्त्रफलदो दोषोज्झितः सर्वदा
श्रीरामः शरणं ममेति परमो मन्त्रोऽयमष्टाक्षरः ।। ७४

रामभद्राश्रयः साक्षाद्रामचन्द्रो न संशयः ।
तत्र कोदण्डतूणीरावत्र दण्डकमण्डलू।। ७५

रघुनाथ पदारविन्दयोस्ते भ्रमरीभूतमदान्धकारसूर्यः ।
अपराधशतालयं कलौ मामवगृह्णाति हि मङ्गलैः कटाक्षैः ।। ७६

रामनाम तव नाम जपन्तः पामरा अपि तरन्ति भवाब्धिम्।
अङ्गसङ्गिभवदङ्गुलिमुद्रः किं विचित्रमतरत्कपिरब्धिम्।। ७७

श्रीरामनामामृत मन्त्रबीजं संजीवनं चेन्मनसिप्रतिष्ठम्।
हालाहलं वां प्रलयानलं वा मृत्योर्मुखं वा वितथीकरोति।। ७८

हा कृष्णाच्युत हा कृपालय हरे हा पाण्डवानां सखे
कासि कासि सुयोधनावरगतां हा रक्ष मां द्रौपदीम्।
इत्युक्तौ क्षयवस्त्ररक्षणतनुर्योऽरक्षदाशु क्षणे
नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ७९

इन्दीवरदलश्याममिन्दुकोटि निभाननम्।
कन्दर्पकोटिलावण्यं वन्देऽहं रघुनन्दनम् ॥ ८०

किं योगशास्त्रैः किमशेषविद्यया किं यागगङ्गादिविशेषतीर्थैः।
किं ब्रह्मचर्याश्रमसञ्चरेण भक्ति र्नचेत्ते रघुवंशकीर्त्याम् ॥ ८१

हे राम भद्राश्रय हे कृपालो हे भक्तलोकैकशरण्यमूर्ते।
पुनीहि मां त्वच्चरणारविन्दं जगत्पवित्रं शरणं ममास्तु ॥ ८२

हे राम भद्राश्रय योगिचन्द्र प्रसन्नमूर्तौ परिदृश्यमाने।
तापत्रयं नाशमुपैति पुंसां ममान्धकारं विनिहन्तु नद्यः ॥ ८३

नीलाभ्रबृन्द निखिलेश जगन्निवास
राजीवनेत्र रमणीय गुणाभिराम।
श्रीराम दैत्यकुलमर्दन रामचन्द्र
त्वत्पादपद्ममनिशं कलयामि चित्ते ॥ ८४

कुवलयदलनीलः पीतवासाः स्मितास्यो
विविधरुचिरभूषाभूषितो दिव्यमूर्तिः।
दशरथकुलनाथो जानकीप्राणनाथो
निवसतु मम चित्ते सर्वदा रामचन्द्रः ॥ ८५

सजलजलदनीलं सन्मुनिस्तुत्यलीलं
सुगमनिगममूलं यातुधानान्तकालम्।
दशरथनृपबालं सत्कृपापूर्णलीलं
भजतु भुवनखेलं भक्तसंस्तुत्यशीलम् ॥ ८६

दशरथवरपुत्रं जानकीसत्कलत्रं
दशमुखहरदक्षं पद्मपत्रायताक्षम्।
करधृतशरचापं चारुमुक्ताकलापं
रघुकुलनृपवर्ण्यं राममीडे शरण्यम्॥ ८७

रामं वीरासनस्थं विमलरविनिभं भासमानस्वरूपं
श्यामं सीतासमेतं स्मित रुचिरमुखं कुण्डलोद्दीप्तगण्डम्।
श्रीवत्सं श्रीनिवासं सुरविटपितटन्यस्तसिंहासनस्थं
दिव्याकल्पोज्ज्वलाङ्गं दिविजपतिनुतं ध्यानयज्ञेन यक्ष्ये॥ ८८

श्रीरामभद्राश्रयसद्गुरूणां पादारविन्दं भजतां नराणाम्।
आरोग्यमैश्वर्यमनन्तकीर्तिं अन्ते च विष्णोःपदमस्ति सत्यम्॥ ८९

रणहतदनुजेन्द्रो राजराजात्मचन्द्रः
समदरिपुमृगेन्द्रः सन्मनोऽम्भोधिचन्द्रः।
ललितघननगेन्द्रो लक्ष्मणानन्दसान्द्रो
महितसुजनचन्द्रो मैथिलीप्राणचन्द्रः॥९०

नमः कोदण्डहस्ताय सन्धीकृतशराय च।
दण्डिताखिलदैत्याय रामायापन्निवारिणे॥ ९१

न जानन् जानकीजानौ रामे तत्वमपि प्रभौ।
धिक् कुर्याद्यमदूतान् स यो नरस्तत्वमीहते॥९२

रामो मे हृदि सन्निधिं रमयतां रामं भजे दुष्कृतं
रामेणापहृतं नमो भगवते रामाय रामाच्छुभम्।
वक्ष्ये श्रीरघुनन्दनस्य सुकृतेर्दासोस्म्यहं सर्वदा
नित्यं कोसलकन्यकाप्रियसुते रामे मनो वर्तताम्॥ ९३

कोदण्डनिर्मुक्त शराग्रखण्डनं प्रचण्डविष्वग्भुजदण्डमण्डनम्।
प्रचण्डचण्डांशुसमानमण्डनं भजामि रामं रणरङ्गमण्डनम्॥ ९४

सिंहासनस्थं मुनिसिद्धसेव्यं रक्तोत्पलालंकृतपादपद्मम्।
सीतासमेतं शशिसूर्यनेत्रं रामं भजे राघवरामचन्द्रम्॥ ९५

दयारूपे भूपे रघुकुलकलापे सुहृदये
भुजस्तंभे दंभेतरविजयगुंभे विहरताम्।
महावीरे धीरे दशरथकुमारे परिसरद्
गुणारामे रामे दशमुखविरामे मम मनः॥ ९६

गतेष्वनेकेषु भवेषु पापव्रतेष्वमूर्तेषु न योगतीर्थैः।
वित्रस्तसर्वेषु नृणां कुलेशे संजायते भक्तिरनन्तमीडे॥ ९७

श्रीरामभद्राश्रितयोगिवर्य पादाब्जयुग्मं सततं भजेऽहम्।
यच्चक्षुषी धाम जनप्रवेशं तच्चक्षुषी पश्यति यस्य चेतः॥ ९८

न ग्रस्तस्तमसा न चाह्नि मलिनो दर्शैन नो कर्शितो
नैवास्तं गतवान् न चाङ्किततनुर्नो पाक्षिकश्रीरपि।
लोकालोक नगेन्द्रलङ्घनविधौ नो पङ्गुभावङ्गतो
निर्दोषो गुणसागरद्रघुपतेस्तेजो यशश्चन्द्रमाः॥ ९९

नागानामयुतं तुरङ्गनियुतं सार्धं रथानां शतं
पादाताः शतकोटियुद्ध दलिता नृत्यत्कबन्धो रणे।
एवं कोटिसहस्रनर्तनविधौ चञ्चच्चलद्घण्टिका
यामार्धं परमात्मनो रघुपतेः कोदण्डघण्टारवः॥ १००

भजेहं सदा राममिन्दीवराभं भवारण्यदावानलाभाभिधेयम्।
भवानीहृदा भावितानंदरूपं भवाभावहेतुं भवानीप्रसन्नम्॥ १०१

सुरानीक दुःखौघनाशैक हेतुं नराकारदेहं निराकारमीड्यम्।
परेशं परानन्दरूपं वरेण्यं हरिं राममीशं भजे भारनाशम्॥ १०२



१३ वासुदेवः पूर्णचन्द्रनिभः पञ्चायुधधरः सर्वाभीष्टप्रदायिनीयुतः ।

प्रपन्नाखिलानन्द दोहप्रपन्नं प्रपन्नार्तिनिःशेषनाशाभिधानम्।
तपोयोग योगीशभावाभिभाव्यं कपीशादिमित्रं भजे रामचन्द्रम्॥ १०३

स्फुरद्रत्न केयूर हाराभिरामं धराभारभूतासुरानीकदावम्।
शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं दुरासाद्यपारं भजे रामचन्द्रम्॥ १०४

सुराधीशनीलाभनीलाङ्गकान्तिं विराधादिरक्षोगणानीकनाशम्।
किरीटादिशोभं पुरारातिलाभं भजे रामचन्द्रं रघूनामधीन्द्रम्॥ १०५

लसच्चन्द्रकोटिप्रकाशादि पीठे
समासीनमङ्के समादाय सीतम्।
स्फुरद्धेमवर्णां लसत्कञ्जपुञ्जां
भजे रामचन्द्रं निवृत्त्यादितन्त्रम्॥ १०६

सदा भोगमाजां सुदूरे विभान्तं मुदा योगभाजामदूरे विभान्तं।
चिदानन्दकन्दं सदा राघवेशं विदेहात्मजानन्दकन्दं प्रपद्ये॥ १०७

महायोगमायाविशेषानुयुक्तो विभासीश लीलानराकारवृत्तिः।
त्वदानन्दलीलाकथापूर्णकण्ठाः सदानन्दरूपा वन्तीह लोके॥ १०८

यस्य प्राणनिवारणावनकृते स्यातां निदानौ विभोः
ऐन्द्र ध्वांक्षपतेः कृपा जलनिधौः कोपप्रसादौ मुदे।
भूयाद् वासवनीलसन्निभतनुर्वामाङ्कसेव्यद्वधूः
सोऽयं दुष्टनिशाटपाटनपटुः श्रीराघवो नः सदा॥ १०९

दुष्टो वा कलुषात्मकोऽ पि पिशुनो दुर्मार्गसञ्चारि वा
मातृघ्नोऽपि पितृघ्नवर्तनरतः सन्मौनिनिन्दापरः।
योयं स्मृत्यमृतं मधुरसं वक्ता च श्रोता लिखेत्
स प्राप्नोति निरन्तरैहिकसुखं निर्वाण सौख्यं ततः॥ ११०

*___*___*

# श्रीकृष्णकर्णामृतम्

## लीलाशुकबिल्वमङ्गलप्रणीतम्

### प्रथमाश्वासः

चिन्तामणिर्जयति सोमगिरिर्गुरुर्मे
शिक्षागुरुश्च भगवान् शिखिपिञ्छमौलिः।
यत्पादकल्पतरु-पल्लवशेखरेषु
लीलास्वयंवररसं लभते जयश्रीः॥ १

अस्ति स्वस्तरुणी-कराग्र-विगलत्कल्प-प्रसूनाप्लुतं
वस्तु प्रस्तुत-वेणुनाद-लहरी-निर्वाण-निर्व्याकुलम्।
स्रस्त-स्रस्त-निरुद्ध-नीवि-विलसद्गोपी-सहस्रावृतं
हस्त-न्यस्त-नतापवर्ग-मखिलोदारं किशोराकृति॥ २

चातुर्यैकनिधानसीम-चपलाऽपाङ्गच्छटा-मन्दरं
लावण्यामृतवीचि-लालितदृशं लक्ष्मीकटाक्षादृतम्।
कालिन्दी -पुलिनाङ्गण-प्रणयिनं कामावतारांकुरं
बालं नीलममी वयं मधुरिम-स्वाराज्य-माराध्नुमः॥ ३

बर्होत्तंस-विलासि-कुन्तलभरं माधुर्यमग्नाननं
प्रोन्मीलन्नवयौवनं प्रविलसद्वेणु-प्रणादामृतम्।
आपीनस्तन-कुड्मलाभिरभितो गोपीभिराराधितं
ज्योतिश्चेतसि नश्चकास्ति जगतामेकाभिरामाद्भुतम्॥ ४

मधुरतर-स्मितामृत-विमुग्ध-मुखाम्बुरुहं
मदशिखि-पिञ्छलाञ्छित-मनोज्ञ-कचप्रचयम्।

विषय-विषामिषग्रसन-गृध्नुषि चेतसि मे
विपुलविलोचनं किमपि धाम चकास्ति चिरम् ॥५
मुकुलायमान-नयनाम्बुजं विभोः मुरलीनिनाद-मकरन्दनिर्भरम् ।
मुकुरायमाण-मृदुगण्डमण्डलं मुखपङ्कजं मनसि मे विजृम्भताम् ॥ ६
कमनीय-किशोर-मुग्ध-मूर्तेः कलवेणु-क्वणितादृतानेन्दोः ।
मम वाचि विजृंभतां मुरारेर्मधुरिम्णः कणिकापि कापि कापि ॥ ७
मदशिखण्डि-शिखण्ड-विभूषणं मदनमन्थर-मुग्ध-मुखाम्बुजम् ।
व्रजवधू-नयनाञ्चल-वञ्चितं विजयतां मम वाङ्मय-जीवितम् ॥८
पल्लवारुण-पाणिपङ्कज-सङ्गिवेणु-रवाकुलं
फुल्लपाटल-पाटलीपरिवादि-पादसरोरुहम् ।
उल्लसन्मधुराधर-द्युति-मञ्जरी-सरसाननं
वल्लवी-कुचकुम्भकुङ्कुम- पङ्किलं प्रभुमाश्रये ॥ ९
अपाङ्गरेखाभि-रभंगुराभिरनङ्गलीला-रसरञ्जिताभिः ।
अनुक्षणं वल्लवसुन्दरीभिरभ्यर्च्यमानं विभुमाश्रयामः ॥ १०
हृदये मम हृद्यविभ्रमाणां हृदयं हर्षविशाल-लोलनेत्रम् ।
तरुणं व्रजबालसुन्दरीणां तरलं किञ्चन धाम सन्निधत्ताम् ॥ ११
निखिल-भुवन-लक्ष्मी नित्य-लीलास्पदाभ्यां
कमलविपिनवीथी-गर्वसर्वङ्कषाभ्याम् ।
प्रणमदभयदान-प्रौढिगाढोद्धताभ्यां
किमपि वहतु चेतः कृष्णपादाम्बुजाभ्याम् ॥ १२
प्रणय-परिणताभ्यां प्राभवालम्बनाभ्यां
प्रतिपदललिताभ्यां प्रत्यहं नूतनाभ्याम् ।

प्रतिमुहुरधिकाभ्यां प्रस्नुवल्लोचनाभ्यां
प्रभवतु हृदये नः प्राणनाथः किशोरः ॥ १३

माधुर्य-वारिधि-मदान्ध-तरङ्ग-भङ्गी-
शृंगार-संकलित-शीत-किशोर-वेषम्।
आमन्दहास-ललितानन-चन्द्रबिंबं-
आनन्दसंप्लवमनुप्लवतां मनो मे ॥ १४

अव्याज-मञ्जुल-मुखाम्बुज-मुग्धभावैः
आस्वाद्यमान-निजवेणु-विनोदनादम्।
आक्रीडतामरुणपाद-सरोरुहाभ्यां
आर्द्रे मदीय-हृदये भुवनार्द्रमोजः ॥ १५

मणिनूपुर-वाचालं वन्दे तच्चरणं विभोः।
ललितानि यदीयानि लक्ष्माणि व्रजवीथिषु ॥ १६

मम चेतसि स्फुरतु वल्लवी-विभोः
मणिनूपुर-प्रणयि-मञ्जु-शिञ्जितम्।
कमलावनेचर-कलिन्दकन्यका-
कलहंसकण्ठ-कलकूजितादृतम् ॥ १७

तरुणारुण-करुणामय-विपुलायत-नयनं
कमलाकुच-कलशीभर-पुलकीकृत-हृदयम्।
मुरलीरव-तरलीकृत-मुनिमानस-नलिनं
मम खेलति मदचेतसि मधुराधरममृतम् ॥ १८

आमुग्धमर्धनयनाम्बुज-चुम्ब्यमान-
हर्षाकुल-व्रजवधू-मधुराननेन्दोः।

आरब्धवेणुरवमादि-किशोर-मूर्तेः-

आविर्भवन्ति मम चेतसि केऽपि भावाः ॥ १९

कलक्वणित-कङ्कणं करनिरुद्धपीताम्बरं

क्रमप्रसृत-कुन्तलं कलितबर्हभूषं विभोः ।

पुनः प्रसृति-चापलं प्रणयिनी-भुजायन्त्रितं

मम स्फुरतु मानसे मदनकेलि-शय्योत्थितम् ॥ २०

स्तोक-स्तोक-निरुध्यमान-मृदुल-प्रस्यन्दि-मन्दस्मितं

प्रेमोद्भेद-निरर्गल-प्रसृमर-प्रव्यक्त-रोमोद्गमम् ।

श्रोतृ-श्रोत्र-मनोहर-व्रजवधू-लीला-मिथो-जल्पितं

मिथ्यास्वापमुपास्महे भगवतः क्रीडा-निमीलद्दृशः ॥२१

विचित्र-पत्राङ्कुर-शालि-बालास्तनान्तरं मौनि-मनोऽन्तरं वा ।

अपास्य बृन्दावन-पादपास्यमुपास्यमन्यन्न विलोकयामः ॥ २२

सार्धं समृद्धैरमृतायमानैराध्मायमानैर्मुरली-निनादैः ।

मूर्धाभिषिक्तं मधुराकृतीनां बालं कदा नाम विलोकयिष्ये ॥ २३

शिशिरीकुरुते कदा नु नः शिखिपिञ्छाभरणःशिशुर्दृशोः।

युगलं विगलन्मधुद्रव स्मित-मुद्रामृदुना मुखेन्दुना ॥ २४

कारुण्य-कर्बुर-कटाक्ष-निरीक्षणेन

तारुण्य-संवलित-शैशव-वैभवेन ।

आपुष्णता भुवनमद्भुत-विभ्रमेण

श्रीकृष्णचन्द्र शिशिरीकुरु लोचनं मे ॥ २५

कदा वा कालिन्दी-कुवलयदल-श्यामलतराः

कटाक्षा लक्ष्यन्ते किमपि करुणा-वीचि-निचिताः ।

कदा वा कन्दर्प-प्रतिभट-जटाचन्द्र-शिशिराः
किमप्यन्तस्तोषं ददति मुरली-केलि-निनदाः ॥ २६

अधीरमालोकितमार्द्रजल्पितं गतं च गंभीर-विलास-मन्थरम्।
अमन्दमालिङ्गित-माकुलोन्मद स्मितं च ते नाथ वदन्ति गोपिकाः ॥ २७

अस्तोक-स्मितभर-मायतायताक्षं
निश्शेषस्तन-मृदितं व्रजाङ्गनाभिः।
निस्सीम-स्तबकित-नीलकान्ति-धारं
दृश्यासं त्रिभुवनसुन्दरं महस्ते ॥ २८

मयि प्रसादं मधुरैः कटाक्षैः वंशीनिनादानुचरैर्विधेहि।
त्वयि प्रसन्ने किमिहापरैर्नः त्वय्यप्रसन्ने किमिहापरैर्नः ॥ २९

निबद्ध-मुग्धांजलिरेष याचे नीरन्ध्र-दैन्योन्नत-मुक्तकण्ठम्।
दयाम्बुधे देव भवत्कटाक्ष दाक्षिण्य-लेशेन सकृन्निषिञ्च ॥ ३०

पिञ्छावतंस-रचनोचित-केशपाशे
पीनस्तनी-नयन-पङ्कज-पूजनीये।
चन्द्रारविन्द-विजयोद्यतवक्त्रबिम्बे
चापल्यमेति नयनं तव शैशवे नः ॥ ३१

त्वच्छैशवं त्रिभुवनाद्भुत-मित्यवैमि
यच्चापलं च मम वागविवादगम्यम्।
तत्किं करोमि विरणन्मुरलीविलास-
मुग्धं मुखाम्बुजमुदीक्षितुमीक्षणाभ्याम् ॥ ३२

पर्याचितामृत-रसानि पदार्थभंगी-
फल्गूनि वल्गित-विशाल-विलोचनानि।

बाल्याधिकानि मदवल्लव-भावितानि
भावे लुठन्ति सुदृशां तव जल्पितानि ॥३३

पुनः प्रसन्नेन मुखेन्दु-तेजसा पुरोऽवतीर्णस्य कृपामहाम्बुधेः ।
तदेव लीलामुरली-रवामृतं समाधि-विघ्नाय कदा नु मे भवेत् ॥ ३४

भावेन मुग्धचपलेन विलोकनेन
मन्मानसे किमपि चापल-मुद्वहन्तम् ।
लोलेन लोचन-रसायन-मीक्षणेन
लीला-किशोर-मुपगूहितु-मुत्सुकोऽस्मि ॥ ३५

अधीरबिम्बाधरविभ्रमेण हर्षार्द्रवेणुस्वरसम्पदा च ।
अनेन केनापि मनोहरेण हा हन्त हा हन्त मनो धुनोति ॥ ३६

यावन्न मे निखिल-मर्म-दृढाभिघात-
निस्सन्धि-बन्धनमुदेत्यसवोपतापः ।
तावद्विभो भवतु तावक-वक्त्रचन्द्र-
चन्द्रातप-द्विगुणिता मम चित्तधारा ॥ ३७

यावन्न मे नरदशा दशमी दृशोऽपि
रन्ध्रादुदेति तिमिरीकृत-सर्वभावा ।
लावण्य-केलि-भवनं तव तावदेतु
लक्ष्म्याः समुत्कणित-वेणु-मुखेन्दु-बिम्बम् ॥ ३८

आलोल-लोचन-विलोकित-केलिधारा-
नीराजिताग्र-सरणेः करुणाम्बुराशेः ।
आर्द्राणि वेणुनिनदैः प्रतिनादपूरै-
राकर्णयामि मणिनूपुर-शिञ्जितानि ॥ ३९

हे देव हे दयित हे जगदेकबन्धो
हे कृष्ण हे चपल हे करुणैकसिन्धो।
हे नाथ हे रमण हे नयनाभिराम
हा हा कदा नु भवितासि पदं दृशोर्मे॥ ४०

अमून्यधन्यानि दिनान्तराणि हरे त्वदालोकनमन्तरेण।
अनाथबन्धो करुणैकसिन्धो हा हन्त हा हन्त कथं नयामि॥ ४१

किमिव शृणुमः कस्य ब्रूमः कथं कृतमाशया
कथयत कथां धन्या-मन्यामहो हृदयेशयः।
मधुर-मधुर-स्मेराकारे मनोनयनोत्सवे
कृपणकृपणा कृष्णे तृष्णा चिरं बत लम्बते॥ ४२

आभ्यां विलोचनाभ्यामम्बुजदल-ललित-लोचनं बालम्।
द्वाभ्यामपि परिरब्धुं दूरे मम हन्त दैव-सामग्री॥ ४३

अश्रान्त-स्मित-मरुणारुणाधरोष्ठं
हर्षार्द्रं द्विगुणमनोज्ञवेणुगीतम्।
विभ्राम्य-द्विपुल-विलोचनार्ध-मुग्धं
वीक्षिष्ये तव वदनाम्बुजं कदा नु॥ ४४

लोलायताभ्यां रसशीतलाभ्यां नीलारुणाभ्यां नयनाम्बुजाभ्याम्।
आलोकयेदद्भुत-विभ्रमाभ्यां बालः कदा कारुणिकः किशोरः॥ ४५

बहुल-चिकुरभारं बद्धपिञ्छावतंसं
चपल-चपल-नेत्रं चारु-बिम्बाधरोष्ठम्।
मधुर-मृदुल-हासं मन्थरोदार-लीलं
मृगयति नयनं मे मुग्धवेषं मुरारेः॥ ४६

बहुल जलद-च्छाया-चोरं विलासभरालसं
मदशिखि-शिखा-लीलोत्तंसं मनोज्ञ-मुखाम्बुजम्।
कमपि कमलापाङ्गोदग्र-प्रपन्न-जगज्जितं
मधुरिमपरीपाकोद्रेकं वयं मृगयामहे॥ ४७

परामृश्यं दूरे परिषदि मुनीनां व्रजवधू-
दृशां दृश्यं शश्वत्त्रिभुवनमनोहारि-वपुषम्।
अनामृश्यं वाचामनिदमुदयानामपि कदा
दरीदृश्ये देवं दरदलित-नीलोत्पल-निभम्॥ ४८

लीलाननाम्बुजमधीरमुदीक्षमाणं
नर्माणि वेणु-विवरेषु निवेशयन्तम्।
डोलायमान-नयनं नयनाभिरामं
देवं कदा नु दयितं व्यतिलोकयिष्ये॥ ४९

लग्नं मुहुर्मनसि लम्पट-संप्रदायि-
लेखा-विलेखन-रसज्ञ-मनोज्ञवेषम्।
लज्जन्मृदुस्मित-मधु-स्नपिताधरांशु-
राकेन्दु-लालित-मुखेन्दु-मुकुन्द-बाल्यम्॥ ५०

अहिमकर-करनिकर-मृदु-मृदित-लक्ष्मी-
सरसतर-सरसिरुह-सदृशदृशि देवे।
व्रजयुवति-रतिकलह-विजयि-निजलीला-
मदमुदित-वदन-शशि-मधुरिमणि लीये॥ ५१

करकमल-दलदलित-ललिततर-वंशी-
कलनिनद-गलदमृत-घनसरसि देवे।

सहज-रस-भर-भरित-दरहसित-वीथी-

सततवहदधरमणि-मधुरिमणि लीये ॥ ५२

कुसुमशर-शरसमर-कुपित-मदगोपी-

कुचकलश-घुसृणरस-लसदुरसि देवे ।

मदलुलित-मृदुहसित-मुषितशशि-शोभा-

मुहुरधिक-मुखकमल-मधुरिमणि लीये ॥ ५३

आनम्रामसितभ्रुवोरुपचितामक्षीण-पक्ष्माङ्कुरे-

ष्वालोलामनुरागिणोर्नयनयोरार्द्रां मृदौ जल्पिते ।

आताम्रा-मधरामृते मदकलामम्लान-वंशीरवे-

ष्वाशास्ते मम लोचनं व्रजशिशोर्मूर्तिं जगन्मोहिनीम् ॥ ५४

तत्कैशोरं तच्च वक्त्रारविन्दं तत्कारुण्यं ते च लीलाकटाक्षाः ।

तत्सौन्दर्यं सा च मन्दस्मितश्रीः सत्यं सत्यं दुर्लभं दैवतेषु ॥ ५५

विश्वोपप्लव-शमनैक-बद्ध-दीक्षं

विश्वास-स्तबकित-चेतसां जनानाम् ।

पश्यामः प्रतिनवकान्ति-कन्दलार्द्रं

पश्यामः पथि पथि शैशवं मुरारेः ॥ ५६

मौलिश्चन्द्रक-भूषणा मरकत-स्तम्भाभिरामं वपुः

वक्त्रं चित्रविमुग्ध-हासमधुरं बाले विलोले दृशौ ।

वाचश्शैशव-शीतला मदगज-श्लाघ्या विलासस्थितिः

मन्दं मन्दमये ! क एष मथुरावीथीमितो गाहते ॥ ५७

पादौ पादविनिर्जिताम्बुजवनौ पद्मालयालङ्कृतौ

पाणी वेणुविनोदन-प्रणयिनौ पर्याप्त-शिल्पश्रियौ ।

बाहू दोहदभाजनं मृगदृशां माधुर्यधारा गिरो
वक्त्रं वाग्विभवातिलङ्घितमहो बालं किमेतन्महः । ५८
बर्हं नाम विभूषणं बहुमतं वेषाय शेषैरलं
वक्त्रं द्वित्रिविशेषकान्तिलहरी-विन्यास-धन्याधरम् ।
शीलैरल्पधियामगम्यविभवैः शृङ्गारभङ्गीमयं
चित्रं चित्रमहो विचित्रितमहो चित्रं विचित्रं महः ॥ ५९
अग्रे समग्रयति कामपि केलिलक्ष्मीं
अन्यासु दिक्ष्वपि विलोचनमेव साक्षी ।
हा हन्त हस्त-पथ-दूरमहो किमेतद्
आसीत् किशोरमयमम्ब जगत्त्रयं मे ॥ ६०
चिकुरं बहुलं विरलं भ्रमरं मृदुलं वचनं विपुलं नयनम् ।
अधरं मधुरं वदनं ललितं चपलं चरितन्नु कदाऽनुभवे ॥ ६१
परिपालय नः कृपालयेत्यसकृज्जल्पितमात्मबान्धवः ।
मुरलीमृदुल-स्वनान्तरे विभुराकर्णयिता कदा नु नः ॥ ६२
कदा नु कस्यां नु विपद्दशायां कैशोरगन्धिः करुणाम्बुधिर्नः ।
विलोचनाभ्यां विपुलायताभ्यां व्यालोकयिष्यन् विषयीकरोति ॥ ६३
मधुरमधरबिम्बे मञ्जुलं मन्दहासे
शिशिरममृतवाक्ये शीतलं दृष्टिपाते ।
विपुल-मरुणनेत्रे विश्रुतं वेणुनादे
मरकतमणि-नीलं बालमालोकये नु ॥ ६४
माधुर्यादपि मधुरं मन्मथ-तातस्य किमपि कैशोरम् ।
चापल्यादपि चपलं चेतो मम हरति हन्त किं कुर्मः ॥ ६५

वक्षःस्थले च विपुलं नयनोत्पले च
मन्दस्मिते च मृदुलं मदजल्पिते च।
बिम्बाधरे च मधुरं मुरलीरवे च
बालं विलास-निधिमाकलये कदा नु ॥ ६६

आर्द्रावलोकित-दयापरिणद्धनेत्रं
आविष्कृत-स्मित-सुधा-मधुराधरोष्ठम्।
आद्यं पुमांस-मवतंसित-बर्हिबर्हं
आलोकयन्ति कृतिनः कृतपुण्य-पुंजाः ॥ ६७

मारः स्वयं नु मधुरद्युतिमण्डलं नु
माधुर्यमेव नु मनोनयनामृतं नु।
वाणीमृजा नु मम जीवितवल्लभो नु
बालोऽयमभ्युदयते मम लोचनाय ॥ ६८

बालोऽयमालोल-विलोचनेन वक्त्रेण चित्रीकृत-दिङ्मुखेन।
वेषेण घोषोचित-भूषणेन मुग्धेन दुग्धे नयनोत्सुकं नः ॥ ६९

आन्दोलिताग्र-भुजमाकुल-नेत्रलीलं
आर्द्र-स्मितार्द्र-वदनाम्बुज-चन्द्रबिम्बम्।
शिञ्जान-भूषणशतं शिखिपिञ्छ-मौलिं
शीतं विलोचन-रसायनमभ्युपैति ॥ ७०

पशुपाल-पाल-परिषद्विभूषणं
शिशुरेष शीतल-विलोल-लोचनः।
मृदुल-स्मितार्द्र-वदनेन्दु-सम्पदा
मदयन्मदीय-हृदयं विगाहते ॥ ७१

तदिद-मुपनतं तमालनीलं
तरल-विलोचन-तारकाभिरामम्।
मुदित-मुदित-वक्त्र-चन्द्रबिम्बं
मुखरित-वेणु-विलास-जीवितं मे ॥ ७२

चापल्यसीम चपलानुभवैकसीम
चातुर्यसीम चतुरानन-शिल्पसीम।
सौरभ्यसीम सकलाद्भुत-केलिसीम
सौभाग्यसीम तदिदं व्रजभाग्यसीम ॥ ७३

माधुर्येण द्विगुण-शिशिरं वक्त्रचन्द्रं वहन्ती
वंशी-वीथी-विगलदमृत-स्रोतसा सेचयन्ती।
मद्वाणीनां विहरणपदं मत्तसौभाग्यभाजां
मत्पुण्यानां परिणतिरहो नेत्रयोस्सन्निधत्ते ॥ ७४

तेजसेऽस्तु नमो धेनुपालिने लोकपालिने ॥
राधापयोधरोत्सङ्गशायिने शेषशायिने ॥ ७५

धेनुपाल-दयिता-स्तनस्थली धन्यकुङ्कुम-सनाथ-कान्तये।
वेणुगीत-गति-मूल-वेधसे तेजसे तदिदमों नमो नमः ॥७६

मृदुक्वणन्नूपुर-मन्थरेण बालेन पादाम्बुज-पल्लवेन।
अनुक्वणन्मञ्जुल-वेणुगीत-मायाति मे जीवितमात्तकेलि॥ ७७

सोऽयं विलास-मुरली-निनदामृतेन
सिञ्चन्नुदञ्चितमिदं मम कर्णयुग्मम्।
आयाति मे नयनबन्धुरनन्यबन्धुः
आनन्दकन्दलित-केलिकटाक्ष-लक्ष्यः ॥ ७८

दूराद्विलोकयति वारणखेलगामी
धाराकटाक्ष-भरितेन विलोचनेन।
आरादुपैति हृदयङ्गमवेणुनाद-
वेणीदुघेन दशनावरणेन देवः ॥ ७९

त्रिभुवन-सरसाभ्यां दीप्तभूषापदाभ्यां
दृशि दृशि शिशिराभ्यां दिव्यलीलाकुलाभ्याम्।
अशरण-शरणाभ्यामद्भुताभ्यां पदाभ्यां
अयमयमनुकूजद्वेणुरायाति देवः ॥ ८०

सोऽयं मुनीन्द्र-जनमानस-तापहारी
सोऽयं मदव्रज-वधू-वसनापहारी।
सोऽयं तृतीय-भुवनेश्वर-दर्पहारी
सोऽयं मदीय-हृदयाम्बुरुहापहारी ॥ ८१

सर्वज्ञत्वे च मौग्ध्ये च सार्वभौममिदं मम।
निर्विशन्नयनं तेजो निर्वाणपदमश्नुते ॥ ८२

कृष्णानमेतत्पुनरुक्त-शोभमुष्णेतरांशोरुदयं मुखेन्दोः।
तृष्णाम्बुराशिं द्विगुणीकरोति कृष्णाह्वयं किञ्चन जीवितं मे ॥ ८३

तदेतदाताम्र-विलोचनश्री-सम्भाविताशेष-विनम्र-वर्गम्।
मुहुर्मुरारेर्मधुराधरोष्ठ मुखाम्बुजं चुम्बति मानसं मे ॥ ८४

करौ शरदुदञ्चिताम्बुज-विलास-शिक्षागुरू
पदौ विबुध-पादप-प्रथमपल्लवोल्लङ्घिनौ।
दृशौ दलित-दुर्मद-त्रिभुवनोपमानश्रियौ
विलोक्य सुविलोचनामृतमहो महच्छैशवम् ॥ ८५

आचिन्वानमहन्यहन्यहनि साकारान् विहारक्रमान्
आरुन्धानमरुन्धती-हृदयमप्यार्द्रस्मितास्यश्रिया।
आतन्वानमनन्यजन्म-नयन-श्लाघ्यामनर्घ्यां दशां
आमन्दं व्रजसुन्दरी-स्तनतटी साम्राज्यमुज्जृम्भते॥ ८६
समुच्छसित-यौवनं तरल-शैशवालङ्कृतं
मदच्छुरित-लोचनं मदनमुग्ध-हासामृतम्।
प्रतिक्षण-विलोकनं प्रणय-पीत-वंशी-मुखं
जगत्त्रय-विमोहनं जयति मामकं जीवितम्॥८७
चित्रं तदेतच्चरणारविन्दं चित्रं तदेतन्नयनारविन्दम्।
चित्रं तदेतद्वदनारविन्दं चित्रं तदेतत्पुनरम्ब चित्रम्॥ ८८
अखिल-भुवनैक-भूषमधिभूषित-जलधि-दुहितृ-कुचकुम्भम्।
व्रजयुवती-हारावलि-मरकत-नायक-महामणिं वन्दे॥ ८९
कान्ता- कचग्रहण-विग्रह-बद्ध-लक्ष्मी-
खण्डाङ्गराग-रसरंजित-मंजुलश्रीः।
गण्डस्थली-मुकुर-मण्डल-खेलमान-
घर्माङ्कुरं किमपि खेलति कृष्णतेजः॥ ९०
मधुरं मधुरं वपुरस्य विभोर्मधुरं मधुरं वदनं मधुरम्।
मधुगन्धि मृदुस्मित-मेतदहो मधुरं मधुरं मधुरं मधुरम्॥ ९१
शृङ्गार-रस-सर्वस्वं शिखिपिञ्छ-विभूषणम्।
अङ्गीकृत-नराकारमाश्रये भुवनाश्रयम्॥ ९२
नाद्यापि पश्यति कदाचन दर्शनेन
चित्तेन चोपनिषदा सुदृशां सहस्रम्।

स त्वं चिरं नयनयोरनयोः पदव्यां
स्वामिन् कया नु कृपया मम सन्निधत्से ॥ ९३

केयं कान्तिः केशव त्वन्मुखेन्दोः
कोऽयं वेषः कोऽपि वाचामभूमिः ।
सेयं सोऽयं स्वादुता मंजुलश्रीः
भूयो भूयो भूयशस्तां नमामि ॥ ९४

वदनेन्दु-विनिर्जितश्शशी दशधा देव पदं प्रपद्यते ।
अधिकां श्रियमश्नुतेतरां तव कारुण्य-विजृम्भितं कियत् ॥ ९५

तत्त्वन्मखं कथमिवाब्ज-समानकक्ष्यं
वाङ्माधुरी-बहुलपर्व-कलासमृद्धम् ।
तत् किं ब्रुवे किमपरं भुवनैक-कान्तं
यस्य त्वदाननसमा सुषमा सदा स्यात् ॥ ९६

शुश्रूषसे यदि वचः शृणु मामकीनं
पूर्वैरपूर्व-कविभिर्न कटाक्षितं यत् ।
नीराजनक्रम-धुरं भवदाननेन्दोः
निर्व्याजमर्हति चिराय शशि-प्रदीपः ॥ ९७

अखण्ड-निर्वाण-रस-प्रवाहै-र्विखण्डिताशेष-रसान्तराणि ।
अयन्त्रितोद्वान्त-सुधार्णवानि जयन्ति शीतानि तव स्मितानि ॥ ९८

कामं सन्तु सहस्रशः कतिपये स्वारस्यधौरेयकाः
कामं वा कमनीयता-परिणति-स्वाराज्यबद्धव्रताः ।
तैर्नैवं विवदामहे न च वयं देव प्रियं ब्रूमहे
यत्सत्यं रमणीयता-परिणतिस्त्वय्येव पारंगता ॥ ९९

मन्दारमूले मदनाभिरामं बिम्बाधरापूरित-वेणुनादम्।
गोगोपगोपीजन-मध्यसंस्थं गोपं भजे गोकुल-पूर्णचन्द्रम्॥ १००

गलद्व्रीडा लोला मदनवनिता गोपवनिता
मधुस्फीतं गीतं किमपि मधुरा चापल-धुराः।
समुज्जृम्भा गुम्भा मधुरिमगिरां मादृशगिरां
त्वयि स्थाने जाते दधति चपलं जन्म च फलम्॥ १०१

भुवनं भवनं विलासिनी श्रीस्तनयस्तामरसासनः स्मरश्च।
परिचार-परम्पराः सुरेन्द्रास्तदपि त्वच्चरितं विभो विचित्रम्॥ १०२

देवस्त्रिलोक-सौभाग्य-कस्तूरी-तिलकाङ्कुरः।
जीयाद्व्रजाङ्गनानङ्गकेली-ललितविभ्रमः॥ १०३

प्रेमदं च मे कामदं च मे वेदनं च मे वैभवं च मे।
जीवनं च मे जीवितं च मे दैवतं च मे देव नापरम्॥ १०४

माधुर्येण विजृम्भन्तां वाचो नस्तव वैभवे।
चापल्येन विवर्धन्तां चिन्ता नस्तव शैशवे॥ १०५

यानि त्वच्चरितामृतानि रसनालेह्यानि धन्यात्मनां
ये वा चापल-शैशव-व्यतिकरा राधापराधोन्मुखाः।
या वा भावित-वेणुगीत-गतयो लीलामुखाम्भोरुहे
धारावाहिकया वहन्तु हृदये तान्येव तान्येव मे॥ १०६

भक्तिस्त्वयि स्थिरतरा भगवन् यदि स्यात्
दैवेन नः फलितदिव्य-किशोरवेषे।
मुक्तिः स्वयं मुकुलिताञ्जलि सेवतेऽस्मान्
धर्मार्थ-काम-गतयः समयप्रतीक्षाः॥ १०७

जय जय जय देव देव-देव त्रिभुवनमङ्गल-दिव्यनामधेय।
जय जय जय बालकृष्ण-देव श्रवणमनोनयनामृतावतार॥ १०८
तुभ्यं निर्भर-हर्षवर्ष-विवशावेश-स्फुटाविर्भवद्
भूयश्चापलभूषितेषु सुकृतां भावेषु निर्भासते।
श्रीमद्गोकुल-मण्डनाय महते वाचां विदूर-स्फुटन्
माधुर्यैक-रसार्णवाय महसे कस्मैचिदस्मै नमः॥ १०९
ईशान-देव चरणाभरणेन नीवी-
दामोदरस्थिरयशःस्तबकोद्गमेन।
लीलाशुकेन रचितं तव देव कृष्ण-
कर्णामृतं वहतु कल्पशतान्तरेऽपि॥ ११०

* * *

॥ द्वितीयाश्वासः ॥

अभिनव-नवनीत-स्निग्ध-मापीत-दुग्धं
दधिकण-परिदिग्धं मुग्धमङ्गं मुरारेः।
दिशतु भुवनकृच्छ्रच्छेदि तापिञ्छ-गुच्छ-
च्छवि नवशिखिपिञ्छा-लाञ्छितं वाञ्छितं नः॥ १
यां दृष्ट्वा यमुनां पिपासुरनिशं व्यूहो गवां गाहते
विद्युत्त्वानिति नीलकण्ठ-निवहो यां द्रष्टुमुत्कण्ठते।
उत्तंसाय तमाल-पल्लवमिति च्छिन्दन्ति यां गोपिकाः
कान्तिः कालियशासनस्य वपुषः सा पावनी पातु नः॥ २
देवः पायात्पयसि विमले यामुने मज्जतीनां
याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि।

लज्जालोलैरलस-विलसैरुन्मिषत्पञ्चबाणैः
गोपस्त्रीणां नयनकुसुमैरर्चितः केशवो नः ।। ३
मातर्नातः परमनुचितं यत्खलानां पुरस्ताद्
अस्ताशङ्कं जठरपिठरी-पूर्तये नर्तितासि।
तत्क्षन्तव्यं सहजसरले वत्सले वाणि कुर्यां
प्रायश्चित्तं गुणगणनया गोपवेषस्य विष्णोः ।।४
अङ्गुल्यग्रै-ररुणकिरणै-र्मुक्तसंरुद्ध-रन्ध्रं
वारं वारं वदनमरुता वेणु-मापूरयन्तम्।
व्यत्यस्ताङ्घ्रिं विकच-कमलच्छाय-विस्तार-नेत्रं
वन्दे बृन्दावन-सुचरितं नन्दगोपालसूनुम्।। ५
मन्दं मन्दं मधुर-निनदै-र्वेणु मापूरयन्तं
बृन्दं बृन्दावनभुवि गवां चारयन्तं चरन्तम्।
छन्दोभागे शतमख-मुख-ध्वंसिनां दानवानां
हन्तारं तं कथय रसने गोपकन्या-भुजङ्गम्।। ६
वेणीमूले विरचित-घनश्याम-पिञ्छावचूडो
विद्युल्लेखावलयित इव स्निग्ध-पीताम्बरेण।
मामालिङ्गन्मरकतमणि-स्तम्भ-गम्भीर-बाहुः
स्वप्ने दृष्ट-स्तरुण-तुलसीभूषणो नीलमेघः ।। ७
कृष्णे हृत्वा वसन-निचयं कूलकुञ्जाधिरूढे
मुग्धा काचिन्मुहु-रनुनयैः किन्विति व्याहरन्ती।
सभ्रूभङ्गं सदरहसितं सत्रपं सानुरागं
छायाशौरेः करतल-गतान्यंबराण्याचकर्ष।। ८

अपि जनुषि परस्मिन्नात्तपुण्यो भवेयं
तटभुवि यमुनायास्तादृशो वंशनालः ।
अनुभवति य एषः श्रीमदाभीर सूनोः
अधरमणि-समीपन्यास-धन्या-मवस्थाम् ।। ९

अयि परिचिनु चेतः प्रातरम्भोज-नेत्रं
कबर-कलित-चञ्चत्पिञ्छदामाभिरामम् ।
वलभिदुपलनीलं वल्लवी-भागधेयं
निखिल-निगमवल्ली-मूलकन्दं मुकुन्दम् ।। १०

अयि मुरलि मुकुन्द-स्मेर-वक्त्रारविन्द-
श्वसन-मधु-रसज्ञे त्वां प्रणम्याद्य याचे ।
अधरमणिसमीपं प्राप्तवत्यां भवत्यां
कथय रहसि कर्णे मद्दशां नन्दसूनोः ।। ११

सजल-जलदनीलं वल्लवी-केलि-लोलं
श्रित-सुरतरु-मूलं विद्यु-दुल्लासि-चेलम् ।
सुररिपु-कुल-कालं सन्मनोबिम्ब-लीलं
नतसुर-मुनिजालं नौमि गोपाल बालम् ।। १२

अधरबिम्ब-विडम्बित-विद्रुमं मधुर-वेणु-निनाद-विनोदिनम् ।
कमल-कोमल-कम्र-मुखांबुजं कमपि गोपकुमार-मुपास्महे ।। १३

अधरे विनिवेश्य वंशनालं विवराण्यस्य सलील-मङ्गुलीभिः ।
मुहुरन्तरयन्मुहुर्विवृण्वन् मधुरं गायति माधवो वनान्ते ।। १४

वदने नवनीत-गन्धवाहं वचने तस्कर-चातुरी-धुरीणम् ।
नयने कुहनाश्रुमाश्रयेथाश्चरणे कोमल-ताण्डवं कुमारम् ।। १५

अमुनाऽखिल-गोप-गोपनार्थं यमुना-रोधसि नन्दनन्दनेन ।
दमुना वनसम्भवः पपे नः किमु नासौ शरणार्थिनां शरण्यः ।। १६

जगदादरणीय-जारभावं जलजापत्य-वचो-विचारगम्यम्।
तनुतां तनुतां शिवेतराणां सुरनाथोपल-सुन्दरं महो नः ॥ १७

या शेखरे श्रुतिगिरां हृदि योगभाजां
पादाम्बुजे च सुलभा ब्रजसुन्दरीणाम्।
सा काऽपि सर्वजगता-मभिराम-सीमा
कामाय नो भवतु गोप-किशोर-मूर्तिः ॥ १८

अत्यन्त-बालमतसीकुसुम-प्रकाशं
दिग्वाससं कनक-भूषण-भूषिताङ्गम्।
विस्रस्त-केश-मरुणाधर-मायताक्षं
कृष्णं नमामि मनसा वसुदेवसूनुम् ॥ १९

हस्ताङ्घ्रि-निक्वणित-कङ्कण-किङ्किणीकं
मध्ये नितम्ब-मवलम्बित-हेमसूत्रम्।
मुक्ताकलाप-मुकुलीकृत-काकपक्षं
वन्दामहे व्रजचरं वसुदेव-भाग्यम् ॥ २०

बृन्दावनद्रुमतलेषु गवां गणेषु
वेदावसान-समयेषु च दृश्यते यत्।
तद्वेणुनादनपरं शिखिपिञ्छचूडं
ब्रह्म स्मरामि कमलेक्षण-मभ्रनीलम् ॥ २१

व्यत्यस्तपाद-मवतंसित-बर्हिबर्हं
साचीकृतानन-निवेशित-वेणुरन्ध्रम्।
तेजः परं परमकारुणिकं पुरस्तात्
प्राण-प्रयाण-समये मम सन्निधत्ताम् ॥ २२

घोषप्रघोष-शमनाय मथोगुणेन
मध्ये बबन्ध जननी नवनीत-चोरम्।
तद्बन्धनं त्रिजगतामुदराश्रयाणां
आक्रोश-कारणमहो नितरां बभूव ॥ २३
शैवा वयं न खलु तत्र विचारणीयं
पञ्चाक्षरी-जपपरा नितरां तथापि।
चेतो मदीय-मतसी-कुसुमावभासं
स्मेराननं स्मरति गोपवधूकिशोरम् ॥ २४
राधा पुनातु जग-दच्युत-दत्तचित्ता
मन्थान-माकलयती दधिरिक्त-पात्रे।
तस्याः स्तन-स्तवक-चञ्चल-लोलदृष्टिः
देवोऽपि दोहनधिया वृषभं निरुन्धन् ॥ २५
गोधूलि-धूसरित-कोमल-कुन्तलाग्रं
गोवर्धनोद्धरण-केलि -कृतप्रयासम्।
गोपीजनस्य कुचकुङ्कुम-मुद्रिताङ्गं
गोविन्द-मिन्दुवदनं शरणं भजामः ॥ २६
यद्रोमरन्ध्र-परिपूर्ति-विधावदक्षाः
वाराह-जन्मनि बभूवुरमी समुद्राः।
तं नाम नाथ-मरविन्द-दृशं यशोदा
पाणिद्वयान्तरजलैः स्नपयांबभूव ॥ २७
वरमिम-मुपदेश-माद्रियध्वं निगमवनेषु नितान्त-चारखिन्नाः।
निचिनुत भवनेषु वल्लवीनामुपनिषदर्थ-मुलूखले निबद्धम् ॥ २८

देवकीतनय-पूजन-पूतः पूतनारि-चरणोदक-धौतः ।
यद्यहं स्मृत-धनंजयसूतः किं करिष्यति स मे यमदूतः ।। २९
भासतां भवभयैक-भेषजं मानसे मम मुहुर्मुहुर्मुहुः ।
गोपवेष-मुपसेदुषस्स्वयं यापि कापि रमणीयता विभोः ।। ३०
कर्णलम्बित-कदम्बमञ्जरी केसरारुण-कपोलमण्डलम् ।
निर्मलं निगमवागगोचरं नीलिमानमवलोकयामहे ।। ३१
साचि-सञ्चलित-लोचनोत्पलं सामिकुट्मलित-कोमलाधरम् ।
वेगवल्गित-कराङ्गुलीमुखं वेणुनादरसिकं भजामहे ।। ३२
स्यन्दने गरुडमण्डितध्वजे कुण्डिनेश-तनयाऽधिरोपिता ।
केनचिन्नव-तमाल-पल्लव-श्यामलेन पुरुषेण नीयते ।। ३३
मा यात पान्थाः पथि भीमरथ्याः दिगम्बरः कोऽपि तमालनीलः ।
विन्यस्त-हस्तोऽपि नितम्बबिम्बे धूर्तस्समाकर्षति चित्तवित्तम् ।। ३४
अङ्गनामङ्गनामन्तरे माधवो माधवं माधवं चान्तरेणाङ्गना ।
इत्थमाकल्पिते मण्डले मध्यगः संजगौ वेणुना देवकीनन्दनः ।। ३५
केकिकेकादृतानेक-पङ्केरुहालीन-हंसावली-हृद्यता हृद्यता ।
कंसवंशाटवी-दाहदावानलः संजगौ वेणुना देवकीनन्दनः ।। ३६
कापि वीणभिराराविणा कम्पितःकापि वीणाभिरा-किङ्किणी-नर्तितः ।
कापि वीणाभिरामान्तरं गापितः सञ्जगौ वेणुना देवकीनन्दनः ।। ३७
चारुचन्द्रावली-लोचनैश्चुम्बितो गोपगोबृन्द-गोपालिका-वल्लभः ।
वल्लवीबृन्द-बृन्दारकः कामुकः सञ्जगौ वेणुना देवकीनन्दनः ३८
मौलि-मालामिलन्मत्त-भृङ्गीलता भीत-भीत-प्रिया-विभ्रमालिङ्गितः ।
स्रस्तगोपीकुचाभोग-सम्मेलितः सञ्जगौ वेणुना देवकीनन्दनः ।। ३९

चारु-चामीकराभास-भामा-विभुर्वैजयन्तीलता-वासितोरःस्थलः।
नन्दबृन्दावने वासिता-मध्यगः सञ्जगौ वेणुना देवकी-नन्दनः ॥ ४०
बालिका-तालिका-ताल-लीलालया-सङ्गसन्दर्शित-भ्रूलताविभ्रमः।
गोपिका-गीत-दत्तावधानस्स्वयं सञ्जगौ वेणुना देवकीनन्दनः ॥४१
पारिजातं समुद्धृत्य राधावरो रोपयामास भामागृहस्याङ्गणे।
शीतशीते वटे यामुनीये तटे संजगौ वेणुना देवकीनन्दनः ॥ ४२

अग्रे दीर्घतरोऽयमर्जुनतरु-स्तस्याग्रतो वर्त्मनी
सा घोषं समुपैति तत्परिसरे देशे कलिन्दात्मजा।
तस्यास्तीर-तमालकाननतले चक्रं गवां चारयन्
गोपः क्रीडति दर्शयिष्यति सखे पन्थानमव्याहतम् ॥ ४३

गोधूलि-धूसरित-कोमल-गोपवेषं
गोपाल-बालकशतै-रनुगम्यमानम्।
सायन्तने प्रतिगृहं पशुबन्धनार्थं
गच्छन्तमच्युतशिशुं प्रणतोऽस्मि नित्यम् ॥ ४४

निधिं लावण्यानां निखिल-जगदाश्चर्य-निलयं
निजावासं भासां निरवधिक-निश्श्रेयस-रसम्।
सुधाधारासारं सुकृत-परिपाकं मृगदृशां
प्रपद्ये माङ्गल्यं प्रथम-मधिदैवं कृतधियाम् ॥ ४५

आताम्रपाणि-कमल-प्रणय-प्रतोदं
आलोल-हार-मणि-कुण्डल-हेमसूत्रम्।
आविश्रमाम्बुकण-मम्बुद-नील-मव्याद्
आद्यं धनञ्जय-रथाभरणं महो नः ॥ ४६

नख-नियमित-कण्डूनू पाण्डव-स्यन्दनाश्वा-
ननुदिन-मभिषिञ्चन्नञ्जलिस्थैः पयोभिः ।
अवतु वितत-गात्रस्तोत्र-निष्ठ्यूत-मौलिः
दशन-विधृत-रश्मि-र्देवकीपुण्यराशिः ॥ ४७
व्रजयुवति-सहाये यौवनोल्लासिकाये
सकल-शुभविलासे कुन्दमन्दार-हासे ।
निवसतु मम चित्तं तत्पदायत्तवृत्तं
मुनिसरसिजभानौ नन्दगोपालसूनौ ॥ ४८
अरण्यानीमार्द्र-स्मित-मधुर-बिम्बाधर-सुधा–
सरण्या संक्रान्तैस्सपदि मदयन् वेणु-निनदैः ।
धरण्या सानन्दोत्पुलक-मुपगूढाङ्घ्रिकमलः
शरण्यानामाद्यस्स जयतु शरीरी मधुरिमा ॥ ४९
विदग्ध-गोपाल-विलासिनीनां संभोग-चिह्नाङ्कित-सर्वगात्रम् ।
पवित्र-माम्नायगिरा-मगम्यं ब्रह्म प्रपद्ये नवनीतचोरम् ॥ ५०
अन्तर्गृहे कृष्ण-मवेक्ष्य चोरं बध्वा कवाटं जननीं गतैका ।
उलूखले दामनिबद्ध-मेनं तत्रापि दृष्ट्वा स्तिमिता बभूव ॥ ५१
रत्नस्थले जानुचरः कुमारः सङ्क्रान्त-मात्मीय-मुखारविन्दम् ।
आदातु-काम-स्तदलाभ-खेदा- द्विलोक्य धात्री-वदनं रुरोद ॥ ५२
आनन्देन यशोदया समदनं गोपाङ्गनाभिश्चिरं
साशङ्कं बलविद्विषा सकुसुमैः सिद्धैः पृथिव्याऽऽकुलम् ।
सेर्ष्यं गोपकुमारकैस्सकरुणं पौरैर्जनैः सस्मितं
यो दृष्टः स पुनातु नो मुररिपुः प्रोत्क्षिप्त-गोवर्धनः ॥ ५३

उपासता-मात्मविदः पुराणाः परं पुमांसं निहितं गुहायाम्।
वयं यशोदा-शिशु-बाललीला-कथा-सुधा-सिन्धुषु लीलयामः ।। ५४
विक्रेतु-कामा किल गोपकन्या मुरारि-पादार्पित-चित्तवृत्तिः ।
दध्यादिकं मोहवशादवोचद्गोविन्द दामोदर माधवेति ।।५५
उलूखलं वा यमिनां मनो वा गोपाङ्गनानां कुचकुट्मलं वा ।
मुरारि-नाम्नः कलभस्य नूनमालान-मासीत् त्रयमेव भूमौ ।। ५६
करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ।। ५७
शम्भो स्वागत-मास्यतामित इतो वामेन पद्मासन

क्रौञ्चारे कुशलं सुखं सुरपते वित्तेश नो दृश्यसे ।

इत्थं स्वप्नगतस्य कैटभजितश्श्रुत्वा यशोदा गिरः

किं किं बालक जल्पसीति रचितं धूधूकृतं पातु नः ।। ५८

मातः किं यदुनाथ देहि चषकं किं तेन पातुं पयः

तन्नास्त्यद्य कदाऽस्ति वा निशि निशा का वाऽन्धकारोदये ।

आमील्याक्षियुगं निशाप्युप-गता देहीति मातु-र्मुहुः

वक्षोजांशुक-कर्षणोद्यत-करः कृष्णस्स पुष्णातु नः ।। ५९

कालिन्दी-पुलिनोदरेषु मुसली यावद्गतः खेलितुं

तावत्कार्परिकं पयः पिब हरे वर्धिष्यते ते शिखा ।

इत्थं बालतया प्रतारणपराः श्रुत्वा यशोदा-गिरः

पायान्नस्स्वशिखां स्पृशन् प्रमुदितः क्षीरेऽर्धपीते हरिः ।। ६०

कैलासो नवनीतति क्षितिरियं प्राग्जग्धमृल्लोष्टति

क्षीरोदोऽपि निपीतदुग्धति लसत् स्मेरे प्रफुल्ले मुखे ।

मात्राऽजीर्णधिया दृढं चकिततया नष्टाऽस्मि दृष्टः कया
धूधू वत्सक ! जीव जीव चिरमित्युक्तोऽवतान्नो हरिः ॥ ६१
किञ्चित्कुञ्चित-लोचनस्य पिबतः पर्याय-पीतस्तनं
सद्यः प्रस्नुत-दुग्धबिन्दु-मपरं हस्तेन सम्मार्जतः ।
मात्रैकाङ्गुलिलालितस्य चुबुके स्मेराननस्याधरे
शौरेः क्षीरकणान्विता निपतिता दन्तद्युतिः पातु नः ॥ ६२
उत्तुङ्गस्तन-मण्डलोपरिलसत्प्रालम्ब-मुक्तामणेः
अन्तर्बिम्बितमिन्द्रनील-निकर-च्छायानुकारिद्युतेः ।
लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः
पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ ६३
कृष्णेनाम्ब गतेन रन्तु-मधुना मृद्भक्षिता स्वेच्छया
तथ्यं कृष्ण क एवमाह मुसली मिथ्याऽम्ब पश्याननम् ।
व्यादेहीति विदारिते शिशुमुखे दृष्ट्वा समस्तं जगत्
माता यस्य जगाम विस्मयपदं पायात् स नः केशवः ॥ ६४
स्वाती सपत्नी किल तारकाणां मुक्ताफलानां जननीति रोषात् ।
सा रोहिणी नीलमसूत रत्नं कृतास्पदं गोपवधूकुचेषु ॥ ६५
नृत्यन्त-मत्यन्त-विलोकनीयं कृष्णं मणिस्तम्भगतं मृगाक्षी ।
निरीक्ष्य साक्षादिव कृष्णमग्रे द्विधा वितेने नवनीतमेकम् ॥ ६६
वत्स जागृहि विभात-मागतं जीव कृष्ण शरदां शतं शतम् ।
इत्युदीर्य सुचिरं यशोदया दृश्यमान-वदनं भजामहे ॥ ६७
ओष्ठं जिघ्रन् शिशुरिति धिया चुंबितो वल्लवीभिः
कण्ठं गृह्णन्नरुणितपदं गाढमालिङ्गिताङ्गः ।

दोष्णा लज्जापदमभिमृशन्नङ्कमारोपितात्मा
धूर्तस्वामी हरतु दुरितं दूरतो बालकृष्णः ॥ ६८
एते लक्ष्मण जानकी-विरहितं मां खेदयन्त्यम्बुदा
मर्माणीव च घट्टयन्त्यलममी क्रूराः कदम्बानिलाः ।
इत्थं व्याहृत-पूर्वजन्मचरितं यो राधया वीक्षितः
सेर्ष्यं शङ्कितया स नस्सुखयतु स्वप्नायमानो हरिः ॥ ६९
ओष्ठं मुञ्च हरे बिभेमि भवता पानैर्हृता पूतना
कण्ठाश्लेषममुं जहीहि दलितावालिङ्गनेनार्जुनौ ।
मा देहि च्छुरितं हिरण्यकशिपु-र्नीतो नखैः पञ्चतां
इत्थं वारित-रात्रि-केलिरवताल्लक्ष्म्याऽपहासाद्धरिः ॥ ७०
रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितुः
वाचा पञ्चवटीतटे विहरतस्तस्याहरद्रावणः ।
निद्रार्थं जननीकथामिति हरेर्हुङ्कारतः शृण्वतः
सौमित्रे क्व धनुर्धनुर्धनुरिति व्यग्रा गिरः पातु नः ॥ ७१
बालोऽपि शैलोद्धरणाग्रपाणिर्नीलोऽपि नीरन्ध्रतमःप्रदीपः ।
धीरोऽपि राधा-नयनावबद्धो जारोऽपि संसारहरः कुतस्त्वम् ॥ ७२
बालाय नीलवपुषे नवकिङ्किणीक-
जालाभिराम-जघनाय दिगम्बराय ।
शार्दूल-दिव्य-नख-भूषण-भूषिताय
नन्दात्मजाय नवनीत-मुषे नमस्ते ॥ ७३
पाणौ पायस-भक्तमाहित-रसं बिभ्रन्मुदा दक्षिणे
सव्ये शारद-चन्द्रमण्डलनिभं हय्यंगवीनं दधत् ।

कण्ठे कल्पित-पुण्डरीक नखमप्युद्दाम-दीप्तिं वहन्
देवो दिव्य-दिगम्बरो दिशतु नस्सौख्यं यशोदा-शिशुः ॥ ७४
किङ्किणि-किणिकिणि-रभसैरङ्गणभुवि रिङ्खणैः सदाऽटन्तम्।
कुङ्कुणु-कुणु-पदयुगलं कङ्कण-करभूषणं हरिं वन्दे ॥ ७५
सम्बाधे सुरभीणामम्बामायासयन्त-मनुयान्तीम्।
लम्बालक-मवलम्बे तं बालं तनुविलग्नजम्बालम्॥ ७६
अञ्चित-पिञ्छाचूडं सञ्चित-सौजन्य-वल्लवी-वलयम्।
अधरमणि-निहित-वेणुं बालं गोपाल-मनिश-मवलम्बे ॥ ७७
प्रह्लाद-भागधेयं निगम-महाद्रेर्गुहान्तराधेयम्।
नरहरि-पदाभिधेयं विबुध-विधेयं ममानुसंधेयम्॥ ७८
संसारे किं सारं कंसारेश्चरणकमल-परिभजनम्।
ज्योतिः किमन्धकारे यदन्धकारेरनुस्मरणम्॥ ७९
कलश-नवनीत-चोरे कमला-दृक्कुमुद-चन्द्रिकापूरे।
विहरतु नन्दकुमारे चेतो मम गोपसुन्दरी-जारे ॥ ८०
कस्त्वं बाल बलानुजः किमिह ते मन्मन्दिराशङ्कया
युक्तं तन्नवनीत-पात्रविवरे हस्तं किमर्थं न्यसेः।
मातः कञ्चन वत्सकं मृगयितुं मा गा विषादं क्षणा-
दित्येवं वरवल्लवी-प्रतिवचः कृष्णस्य पुष्णातु नः ॥ ८१
गोपालाजिरकर्दमे विहरसे विप्राध्वरे लज्जसे
ब्रूषे गोकुलहुङ्कृतैः स्तुतिशतैर्मौनं विधत्से विदाम्।
दास्यं गोकुल-पुंश्चलीषु कुरुषे स्वाम्यं न दान्तात्मसु
ज्ञातं कृष्ण तवाङ्घ्रि-पङ्कजयुगं प्रेम्णाचलं मञ्जुलम्॥ ८२

नमस्तस्मै यशोदाया दायादायास्तु तेजसे।
यद्धि राधामुखाम्भोजं भोजं भोजं व्यवर्धत ॥ ८३

अवताराः सन्त्वन्ये सरसिज-नयनस्य सर्वतोभद्राः।
कृष्णादन्यः को व प्रभवति गोगोपगोपिका-मुक्त्यै ॥ ८४

मध्ये गोकुलमण्डलं प्रतिदिशं चाम्बारवोज्जृम्भिते
प्रातर्दोह-महोत्सवे नवघनश्यामं रणन्नूपुरम्।
फाले फालविभूषणं कटिरणत्सत्किङ्किणी-मेखलं
कण्ठे व्याघ्रनखं च शैशवकला-कल्याण-कार्त्स्न्यं भजे ॥ ८५

सजलजलद-नीलं दर्शितोदार-लीलं
करतल-धृतशैलं वेणुनादै-रसालम्।
व्रजजन-कुल-पालं कामिनी-केलि-लोलं
कलित-ललित-मालं नौमि गोपाल-बालम् ॥ ८६

स्मित-ललित-कपोलं स्निग्ध-सङ्गीत-लोलं
ललित-चिकुर-जालं चौर्य-चातुर्य-लीलम्।
शतमखरिपुकालं शातकुम्भाभचेलं
कुवलयदल-नीलं नौमि गोपालबालम् ॥ ८७

मुरलि-निनद-लोलं मुग्ध-मायूर-चूडं
दलित-दनुज-जालं धन्य-सौजन्य-लीलम्।
परहित-नवहेलं पद्मसद्मानुकूलं
नवजलधर-नीलं नौमि गोपालबालम् ॥ ८८

सरसगुण-निकायं सच्चिदानन्दकायं
शमित-सकलमायं सत्यलक्ष्मी-सहायम्।

शमदमसमुदायं शान्त-सर्वान्तरायं
सुहृदय-जनदायं नौमि गोपालरायम् ॥ ८९
लक्ष्मीकलत्रं ललिताब्जनेत्रं पूर्णेन्दुवक्त्रं पुरुहूतमित्रम् ।
कारुण्यपात्रं कमनीयगात्रं वन्दे पवित्रं वसुदेवपुत्रम् ॥ ९०
मदमयमदमयदुरगं यमुनामवतीर्य वीर्यशाली यः ।
मम रतिममरतिरस्कृति-शमनपरस्स क्रियात् कृष्णः ॥ ९१
मौलौ मायूरबर्हं मृगमद-तिलकं चारु लालाटपट्टे
कर्णद्वन्द्वे च तालीदल-मतिमृदुलं मौक्तिकं नासिकायाम् ।
हारो मन्दारमाला-परिमलभरिते कौस्तुभस्योपकण्ठे
पाणौ वेणुश्च यस्य व्रजयुवति-युतः पातु पीताम्बरो नः ॥ ९२
मुरारिणा वारिविहार-काले मृगेक्षणानां मुषितांशुकानाम् ।
करद्वयं वा कचसम्हतिर्वा प्रमीलनं वा परिधान-मासीत् ॥ ९३
यासां गोपाङ्गनानां लसदसिततरालोल-लीलाकटाक्षा
यन्नासा चारु-मुक्तामणि-रुचिनिकर-व्योमगङ्गा-प्रवाहे ।
मीनायन्तेऽपि तासा-मतिरभस-चलच्चारु-नीलालकान्ता
भृङ्गायन्ते यदंघ्रिद्वय-सरसिरुहे पातु पीताम्बरो नः ॥ ९४
यद्वेणु-श्रेणिरूपस्थितसुषिर-मुखोद्गीर्ण-नादप्रभिन्नाः
एणाक्ष्यस्तत्क्षणेन त्रुटित-निजपति-प्रेमबन्धा बभूवुः ।
अस्तव्यस्तालकान्ताः स्फुरदधर-कुचद्वन्द्व-नाभि-प्रदेशाः
कामावेश-प्रकर्ष-प्रकटित- पुलकाः पातु पीताम्बरो नः ॥ ९५
देवक्या जठराकरे समुदितः क्रीतो गवां पालिना
नन्देनानकदुन्दुभेर्निजसुतापण्येन पुण्यात्मना ।

गोपालावलि-मुग्ध-हारतरलो गोपीजनालङ्कृतिः
स्थेयान्नो हृदि सन्ततं सुमधुरः कोऽपीन्द्रनीलो मणिः ॥ ९६

पीठे पीठनिषण्ण-बालकगले तिष्ठन् स गोपालको
यन्त्रान्तः स्थित-दुग्धभाण्ड-मपकृष्याच्छाद्य घण्टारवम्।
वक्त्रोपान्त-कृताञ्जलिः कृतशिरःकम्पं पिबन् यः पयः
पाया-दागत-गोपिका-नयनयोर्गण्डूष-फूत्कारकृत् ॥ ९७

यज्ञैरीजिमहे धनं ददिमहे पात्रेषु नूनं वयं
वृद्धान् भेजिमहे तपश्चकृमहे जन्मान्तरे दुश्चरम्।
येनास्माकमभूदनन्यसुलभा भक्ति-र्भवद्वेषिणी
चाणूरद्विषि भक्तकल्मषमुषि श्रेयःपुषि श्रीजुषि ॥ ९८

त्वयि प्रसन्ने मम किं गुणेन त्वय्यप्रसन्ने मम किं गुणेन।
रक्ते विरक्ते च वरे वधूनां निरर्थकः कुङ्कुम-पत्र-भङ्गः ॥ ९९

गायन्ति क्षणदावसान-समये सानन्द-मिन्दुप्रभा
रुन्धन्त्यो निजदन्तकान्ति-निवहै-र्गोपाङ्गना गोकुले।
मथ्नन्त्यो दधि पाणि-कङ्कण-झणत्कारानुकारं जवाद्-
व्यावल्गद्वसनाञ्चला यमनिशं पीताम्बरोऽव्यात्स नः ॥ १००

अंसालम्बित-वामकुण्डलभरं मन्दोन्नत-भ्रूलतं
किञ्चित्कुञ्चित-कोमलाधरपुटं साचि प्रसारेक्षणम्।
आलोलाङ्गुलि-पल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गिललितं जाने जगन्मोहनम् ॥ १०१

मल्लैश्शैलेन्द्रकल्पः शिशुरितरजनैःपुष्पचापोऽङ्गनाभिः
गोपैस्तु प्राकृतात्मा दिवि कुलिशभृता विश्वकायोऽप्रमेयः।

क्रुद्धः कंसेन कालो भयचकितदृशा योगिभिर्ध्येय मूर्तिः
दृष्टो रङ्गावतारे हरिरमरगणानन्दकृत् पातु युष्मान् ।। १०२

संविष्टो मणिविष्टरेऽङ्कतलमध्यासीन लक्ष्मीमुखे
कस्तूरीतिलकं मुदा विरचयन् हर्षात्कुचौ संस्पृशन् ।।
अन्योन्य-स्मित-चन्द्रिका-किसलयैराराधयन्मन्मथं
गोपी-गोप-परीवृतो यदुपतिः पायाज्जगन्मोहनः ।। १०३

आकृष्टे वसनाञ्चले कुवलयश्यामा त्रपाधःकृता
दृष्टिः संवलिता रुचा कुचयुगे स्वर्णप्रभे श्रीमति ।
बालः कश्चन चूतपल्लव इति प्रान्तस्मितास्यश्रियं
श्लिष्यंस्तामथ रुक्मिणीं नतमुखीं कृष्णस्स पुष्णातु नः१०४

उर्व्यां कोऽपि महीधरो लघुतरो दोर्भ्यां धृतो लीलया
तेन त्वं दिवि भूतले च सततं गोवर्धनोद्धारकः ।
त्वां त्रैलोक्यधरं वहामि कुचयोरग्रे न तद्गण्यते
किं वा केशव भाषणेन बहुना पुण्यैर्यशो लभ्यते ।। १०५

सन्ध्यावन्दन भद्रमस्तु भवते भोः स्नान तुभ्यं नमो
भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम् ।
यत्र क्वापि निषीद्य यादव-कुलोत्तंसस्य कंसद्विषः
स्मारं स्मार-मघं हरामि तदलं मन्ये किमन्येन मे ।। १०६

हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते
हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां
हे गोपीजननाथ पालय परं जानामि न त्वां विना ।। १०७

कस्तरीतिलकं ललाट-फलके वक्षःस्थले कौस्तुभं
नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम्।
सर्वाङ्गे हरिचन्दनं च कलयन् कण्ठे च मुक्तावलिं
गोपस्त्री-परिवेष्टितो विजयते गोपालचूडामणिः ।। १०८
लोकानुन्मदयन् श्रुतीर्मुखरयन् क्षोणीरुहान्हर्षयन्
शैलान्विद्रवयन् मृगान्विवशयन् गोबृन्दमानन्दयन्।
गोपान् संभ्रमयन् मुनीन्मुकुलयन् सप्तस्वरान् जृम्भयन्
ओंकारार्थ-मुदीरयन् विजयते वंशीनिनादः शिशोः ।। १०९

*___*___*

॥ तृतीयाश्वासः ॥

अस्ति स्वस्त्ययनं समस्त जगता-मभ्यस्त-लक्ष्मीस्तनं
वस्तु ध्वस्त-रजस्तमोभिरनिशं न्यस्तं पुरस्तादिव।
हस्तोदस्त-गिरीन्द्र-मस्तक-तरुप्रस्तार-विस्तारित-
स्रस्त-स्वस्तरु-सून-संस्तरलसत्प्रस्तावि राधास्तुतम्।। १
राधाराधित-विभ्रमाद्भुतरसं लावण्यरत्नाकरं
साधारण्य-पदव्यतीत-सहज-स्मेराननाम्भोरुहम्।
आलम्बे हरिनीलगर्व-गुरुता-सर्वस्व-निर्वापणं
बालं वैणविकं विमुग्धमधुरं मूर्धाभिषिक्तं महः।। २
करिणा-मलभ्यगतिवैभवं भजे करुणावलम्बित-किशोर-विग्रहम्।
यमिना-मनारतविहारि मानसे यमुनावनान्तरसिकं परं महः ।। ३
अतन्त्रित-त्रिजगदपि व्रजाङ्गनानियन्त्रितं विपुलविलोचनाज्ञया।
निरन्तरं मम हृदये विजृम्भतां समन्ततः सरसतरं परं महः ।। ४

कन्दर्प-प्रतिमल्ल-कान्ति-विभवं कादम्बिनी-बान्धवं
बृन्दारण्य-विलासिनी-व्यसनिनं वेषेण भूषामयम्।
मन्दस्मेर-मुखांबुजं मधुरिम-व्यामृष्ट-बिम्बाधरं
वन्दे कन्दलितार्द्र-यौवन-वनं कैशोरकं शार्ङ्गिणः ॥ ५

आमुक्त-मानुष-ममुक्तनिजानुभावं
आरूढ-यौवन-मगूढ-विदग्धलीलम्।
आमृष्ट-यौवन-मनष्टकिशोरभावं
आद्यं महः किमपि माद्यति मानसे मे ॥ ६

ते ते भावास्सकलजगती-लोभनीय-प्रभावाः
नानातृष्णा-सुहृदि हृदि मे काममाविर्भवन्तु।
वीणा-वेणु-क्वणित-लसित-स्मेरवक्त्रारविन्दात्
नाहं जाने मधुरमपरं नन्दपुण्यांबुराशेः ॥ ७

सुकृतिभिराद्दते सरसवेणु-निनादसुधा-
रसलहरी-विहार-निरवग्रह-कर्णपुटे।
व्रजवरसुन्दरी-मुखसरोरुह-सन्मधुपे
महसि कदा नु मज्जति मदीयमिदं हृदयम्॥ ८

तृष्णातुरे चेतसि जृम्भमाणं मुष्णन्मुहु-र्मोह-महान्धकारम्।
पुष्णातु नः पुण्यदयैक-सिन्धोः कृष्णस्य कारुण्य-कटाक्षकेलिः ॥ ९

निखिलागम-मौलिलालितं पदकमलं परमस्य तेजसः।
व्रजभुवि बहुमन्महेतरां सरसकरीष-विशेष-रूषितम्॥ १०

उदार-मृदुलस्मित-व्यतिकराभिरामाननं
मुदा मुहुरुदीर्णया मुनिमनोऽम्बुजाम्रेडितम्।

मदालस-विलोचन-व्रजवधूमुखास्वादितं
कदा नु कमलेक्षणं कमपि बाल-मालोकये ॥ ११

व्रजजन-मदयोषिल्लोचनोच्छिष्ट-शेषी-
कृत-मतिचपलाभ्यां लोचनाभ्यामुभाभ्याम् ।
सकृदपि परिपातुं ते वयं पारयामः
कुवलयदलनीलं कान्तिपूरं कदा नु ॥ १२

घोषयोषि-दनुगीत-यौवनं कोमल-स्तनित-वेणु-निस्वनम् ।
सारभूत-मभिरामसंपदां धाम तामरस-लोचनं भजे ॥ १३

लीलया ललितयाऽवलम्बितं मूलगेहमिव मूर्तिसंपदाम् ।
नीलनीरद-विकास-विभ्रमं बालमेव वयमाद्रियामहे ॥ १४

वन्दे मुरारेश्चरणारविन्द- द्वन्द्वं दयादर्शित-शैशवस्य ।
वन्दारु-बृन्दारक-बृन्द-मौलि मन्दारमालाविनिमर्दभीरु ॥ १५

यस्मिन् नृत्यति यस्य शेखरभरैः क्रौञ्चद्विषश्चन्द्रकी
यस्मिन् दृप्यति यस्य घोषसुरभिं जिघ्रन् वृषो धूर्जटेः ।
यस्मिन् सज्जति यस्य विभ्रमगतिं वाच्छन् हरेस्सिन्धुरः
तद्बृन्दावन-कल्पकद्रुमवनं तं वा किशोरं भजे ॥ १६

अरुणाधरामृत-विशेषित-स्मितं वरुणालयानुगत-वर्णवैभवम् ।
तरुणारविन्द-दल-दीर्घ-लोचनं करुणामयं कमपि बालमाश्रये ॥ १७

लावण्यवीचीरचिताङ्गभूषां भूषापदारोपित-पुण्यबर्हाम् ।
कारुण्यधाराल-कटाक्षमालां बालां भजे वल्लववंशलक्ष्मीम् ॥ १८

मधुरैकरसं वपुर्विभो र्मथुरा-वीथिचरं भजामहे ।
नगरी-मृगशाबलोचना नयनेन्दीवर-वर्ष-वर्षितम् ॥ १९

पर्याकुलेन नयनान्त-बिजृम्भितेन वक्त्रेण कोमल-दरस्मित-विभ्रमेण।
मन्द्रेण मंजुलतरेण च जल्पितेन नन्दस्य हन्त तनयो हृदयं धुनोति ॥२०

कन्दर्प-कण्डूल-कटाक्षबन्धीरिन्दीवराक्षीरभिलाषमाणान्।
मन्दस्मिताधार-मुखारविन्दान् वन्दामहे वल्लवधूर्त-पादान्॥ २१

लीलाटोप-कटाक्षनिर्भर-परिष्वङ्गप्रसङ्गाधिक-
प्रीते गीतिविभङ्ग-सङ्गतलस-द्वेणुप्रणादामृते।
राधालोचन-लालितस्य ललितस्मेरे मुरारेर्मुदा
माधुर्यैकरसे मुखेन्दुकमले मग्नं मदीयं मनः॥ २२

शरणागत-वज्रपञ्जरे शरणे शार्ङ्गधरस्य वैभवे।
कृपया धृतगोपविग्रहे कियदन्यन्मृगयामहे वयम्॥ २३

जगत्त्रयैकान्त-मनोज्ञभूमि चेतस्यजस्रं मम सन्निधत्ताम्।
रमा-समास्वादित-सौकुमार्यं राधास्तनाभोग-रसज्ञमोजः॥ २४

वयमेते विश्वसिमः करुणाकरमूर्ति-किंवदन्त्याङ्गे।
अपि च विभो तव ललिते चपलतरा मतिरियं बाल्ये॥ २५

वत्सपालचरः कोऽपि वत्सः श्रीवत्सलाञ्छनः।
उत्सवाय कदा भावीत्युत्सुके मम लोचने॥ २६

मधुरिमभरिते मनोभिरामे मृदुलतरस्मितमुद्रिताननेन्दौ।
त्रिभुवननयनैकलोभनीये महसि वयं व्रजभाजि लालसाः स्मः ॥२७

मुखारविन्दे मकरन्दबिन्दु निष्यन्द-लीला-मुरलीनिनादे।
व्रजांगनापांग-तरंगभृंग- संग्रामभूमौ तव लालसाः स्मः॥ २८

आताम्रायत-लोचनांशुलहरी-लीलासुधाप्यायितैः
गीताम्रेडित-दिव्यकेलिभरितैः स्फीतं व्रजस्त्रीजनैः।

स्वेदाम्भः-कणभूषितेन किमपि स्मेरेण वक्त्रेन्दुना
पादाम्भोज-मृदुप्रचारसुभगं पश्यामि दृश्यं महः ॥ २९

पाणौ वेणुः प्रकृतिसुकुमाराकृतौ बाल्यलक्ष्मीः
पार्श्वे बालाः प्रणयसरसा-लोकितापाङ्ग-लीलाः ।
मौलौ बर्हं मधुरवदनाम्भोरुहे मौग्ध्य-मुद्रे-
त्यार्द्राकारं किमपि कितवं ज्योतिरन्वेषयामः ॥ ३०

आरूढ-वेणु-तरुणाधर-विभ्रमेण
माधुर्यशालि-वदनाम्बुजमुद्वहन्ती ।
आलोक्यतां किमनया वनदेवता वः
कैशोरके वयसि कापि च कान्तियष्टिः ॥ ३१

अनन्यसाधारण-कान्तिकान्त-
माक्रान्त-गोपी नयनारविन्दम् ।
पुंसः पुराणस्य नवं विलासं
पुण्येन पूर्णेन विलोकयिष्ये ॥ ३२

साष्टाङ्गपातमभिवन्द्य समस्तभावैः
सर्वान् सुरेन्द्र-निकरानिदमेव याचे ।
मन्दस्मितार्द्र-मधुराजन-चन्द्रबिम्बे
नन्दस्य पुण्यनिचये मम भक्तिरस्तु ॥ ३३

एषु प्रवाहेषु स एव मन्ये क्षणोऽपि गण्यः पुरुषायुषेषु ।
आस्वाद्यते यत्र कयापि भक्त्या नीलस्य बालस्य निजं चरित्रम् ॥ ३४

निसर्गसरसाधरं निजदयार्द्र-दिव्येक्षणं
मनोज्ञमुख-पङ्कजं मधुर-सार्द्र-मन्दस्मितम् ।

रसज्ञ हृदयास्पदं रमित-वल्लवी-लोचनं
पुनः पुनरुपास्महे भुवन-लोभनीयं महः ॥ ३५
स कोऽपि बालस्सरसीरुहाक्षः सा च व्रजस्त्रीजन-पादधूलिः ।
मुहुस्तदेतद्युगलं मदीये मोमुह्यमानेऽपि मनस्युदेतु ॥ ३६
मयि प्रयाणाभिमुखे च वल्लवी-स्तनद्वयीदुर्ललितस्स बालकः ।
शनैश्शनैः श्रावित-वेणुनिस्वनो विलास-वेषेण पुरः प्रतीयताम् ॥ ३७
अतिभूमि-मभूमिमेव वा वचसां वासितवल्लवीस्तनम् ।
मनसाममरं रसायनं मधुराद्वैत-मुपास्महे महः ॥ ३८
जननान्तरेऽपि जगदेकमण्डने
कमनीयधाम्नि कमलायतेक्षणे ।
व्रजसुन्दरी-जन-विलोचनामृते
चपलानि सन्तु सकलेन्द्रियाणि मे ॥ ३९
मुनि-श्रेणीवन्द्यं मदभरलसद्वल्लववधू-
स्तनश्रोणी-बिम्ब-स्तिमित-नयनाम्भोजसुभगम् ।
पुनः श्लाघाभूमिं पुलकितगिरां नैगमगिरां
घनश्यामं वन्दे किमपि कमनीयाकृतिमहः ॥ ४०
अनुचुम्बता-मविचलेन चेतसा मनुजाकृते-र्मधुरिमश्रियं विभोः ।
अयि देव कृष्ण दयितेति जल्पतामपि नो भवेयुरपि नाम तादृशाः ॥४१
किशोरवेषेण कृशोदरीदृशां विशेष-दृश्येन विशाललोचनम् ।
यशोदया लब्ध-यशोनवाम्बुधे-र्निशामये नीलनिशाकरं कदा ॥ ४२
प्रकृति रवतु नो विलास-लक्ष्म्याः प्रकृतिजडं प्रणतापराधवीथ्याम् ।
सुकुतिकृतपदं किशोरभावे सुकृतिमनः प्रणिधान-पात्र-मोजः ॥ ४३

अपहसित-सुधामदावलेपै-रतिसुमनोहर-मार्द्रमन्दहासैः ।
व्रजयुवति-विलोचनावलेह्यं रमयतु धाम रमावरोधनं नः ।।४४
अङ्कूरित-स्मेर-दशाविशेषैरश्रान्त-हर्षामृत-वर्ष-मक्ष्णाम् ।
संक्रीडतां चेतसि गोपकन्या-घनस्तन-स्वस्त्ययनं महो नः ।। ४५
मृगमद-पङ्क-सङ्कर-विशेषित-वन्य-महा-
गिरितट-गण्डगैरिक-घनद्रव-विद्रुमितम् ।
अजित-भुजान्तरं भजत हे व्रजगोपवधू-
स्तन-कलशस्थली-घुसृण-मर्दन-कर्दमितम् ।। ४६
आमूल-पल्लवित-लील-मपाङ्गजालैः
आसिञ्चती भुवनमादृत-गोपवेषा ।
बालाकृति-र्मृदुल-मुग्ध-मुखेन्दुबिम्बा
माधुर्य-सिद्धिरवतान्मधुविद्धिषो नः ।। ४७
विरणन् मणिनूपुरं व्रजे चरणाम्भोज-मुपास्स्व शार्ङ्गिणः ।
सरसे सरसि श्रियाश्रितं कमलं वा कलहंसनादितम् ।। ४८
शरण-मशरणानां शारदाम्भोजनेत्रं
निरवधि-मधुरिम्णा नीलवेषेण रम्यम् ।
स्मरशर-परतन्त्र-स्मेरनेत्राम्बुजाभिः
व्रजयुवतिभिरव्याद् ब्रह्म संवेष्टितं नः ।। ४९
सुव्यक्त-कान्तिभर-सौरभ-दिव्यगात्रं
अव्यक्तयौवन-परीत-किशोरभावम् ।
गव्यानुपालन-विधावनुशिष्ट-मव्याद्
अव्याज-रम्य-मखिलेश्वरवैभवं नः ।। ५०

अनुगतममरीणामम्बरालम्बिनीनां
नयन-मधुरिमश्री-नर्म-निर्माण-सीम्नाम्।
व्रजयुवति-विलास-व्यापृतापाङ्ग-मव्यात्
त्रिभुवन-सुकुमारं देवकैशोरकं नः ॥ ५१

आपाद-माचूड-मतिप्रसक्तै-रापीयमाना यमिनां मनोभिः।
गोपीजन-ज्ञात-रसाऽवतान्नो गोपालभूपाल-कुमारमूर्तिः ॥ ५२

दिष्ट्या बृन्दावन-मृगदृशां विप्रयोगाकुलानां
प्रत्यासन्नं प्रणयचपलापाङ्ग-वीचीतरङ्गैः।
लक्ष्मीलीला-कुवलयदल-श्यामलं धाम कामान्
पुष्णीयान्नः पुलक-मुकुलाभोग-भूषाविशेषम्॥ ५३

जयति गुहशिखीन्द्र-पिञ्छमौलिः
सुरगिरिगैरिक-कल्पिताङ्गरागः।
सुरयुवति-विकीर्णसूनवर्ष-
स्नपित-विभूषित-कुन्तलः कुमारः ॥ ५४

मधुर-मन्द-शुचिस्मितमञ्जुलं वदनपङ्कजमङ्गजवेल्लितम्।
विजयतां व्रज-बालवधूजन- स्तनतटी-विलुठन्नयनं विभोः ॥ ५५

अलसविलसन्मुग्ध-स्निग्धस्मितं व्रजसुन्दरी-
मदनकदन-स्विन्नं धन्यं महद्वदनाम्बुजम्।
तरुण-मरुणज्योत्स्नाऽकात्स्न्यस्मित-स्नपिताधरं
जयति विजयश्रेणी-मेणीदृशां मदयन्महः ॥ ५६

राधाकेलि-कटाक्ष-वीक्षित-महा-वक्षःस्थली-मण्डनाः
जीयासुः पुलकाङ्कुरास्त्रिभुवन-स्वादीयसस्तेजसः।

क्रीडान्त-प्रति-सुप्त-दुग्धतनया-मुग्धावबोधक्षण-
त्रासारूढ-दृढोपगूहन-महासाम्राज्य-सान्द्रश्रियः ॥ ५७

स्मित-स्नुत-सुधाधरामदशिखण्डि-बर्हाङ्किताः
विशाल-नयनाम्बुजा व्रजविलासिनी-वासिताः ।
मनोज्ञ-मुखपङ्कजा मधुरवेणु-नाद-द्रवा
जयन्ति मम चेतसश्चिरमुपासिता वासनाः ॥ ५८

जीयादसौ शिखिशिखण्डकृतावतंसा
सांसिद्धिकी सरसकान्ति-सुधासमृद्धिः ।
यद्बिन्दुलेश-कणिका-परिमाण-भाग्य-
सौभाग्य-सीम-पदमश्चति पञ्चबाणः ॥ ५९

आयामेन दृशोर्विशालतरयो-रक्षय्य-मार्द्रस्मित-
च्छायाधर्षित-शारदेन्दु-ललितं चापल्यमात्रं शिशोः ।
आयासा-नपरान्विधूय रसिकै-रास्वाद्यमानं मुहुः
जीयादुन्मद-वल्लवीकुच-भराधारं किशोरं महः ॥ ६०

स्कन्धावारसदः प्रजाः कतिपये गोपास्सहायादयः
स्कन्धालम्बिनि वत्सदाम्नि धनदा गोपाङ्गनाः स्वाङ्गनाः ।
शृङ्गारा गिरिगैरिकं शिव शिव श्रीमन्ति बर्हाणि च
शृङ्गग्राहिकया तथापि तदिदं प्राहुस्त्रिलोकेश्वरम् ॥ ६१

श्रीमद्बर्हि-शिखण्ड-मण्डनजुषे श्यामाभिरामत्विषे
लावण्यैक-रसावसिक्तवपुषे लक्ष्मीसरः-प्रावृषे ।
लीलाकृष्टरसज्ञ-धर्ममनसे लीलामृतस्रोतसे
के वा न स्पृहयन्ति हन्त महसे गोपीजनप्रेयसे ॥ ६२

आपाटलाधर-मधीर-विलोल-नेत्रं
आमोद-निर्भरित-मद्भुतकान्तिपूरम्।
आविस्मितामृत-मनुस्मृति-लोभनीयं
आमुद्रितानन महो मधुरं मुरारेः ॥ ६३
जागृहि जागृहि चेतश्चिराय चरितार्थता भवतः।
अनुभूयतामिदमिदं पुरः स्थितं पूर्णनिर्वाणम्॥ ६४
चरणयोररुणं करुणार्द्रयोः
कचभरे बहुलं विपुलं दृशोः।
वपुषि मंजुल-मंजनमेचके
वयसि बालमहो मधुरं महः॥ ६५
मालाबर्ह-मनोज्ञ-कुन्तलभरां वन्यप्रसूनोक्षितां
शैलेयद्रव-क्लृप्त-चित्रतिलकां शश्वन्मनोहारिणीम्।
लीलावेणु-रवामृतैक-रसिकां लावण्यलक्ष्मीमयीं
बालां बालतमाल-नीलवपुषं वन्दे परां देवताम्॥ ६६
गुरु मृदुपदे गूढं गुल्फे घनं जघनस्थले
नलिनमुदरे दीर्घं बाह्वोर्विशालमुरस्स्थले।
मधुरमधरे मुग्धं वक्त्रे विलासि विलोचने
बहु कचभरे वन्यं वेषे मनोज्ञमहो महः॥ ६७
जिहानं जिहानं सुजानेन मौग्ध्यं
दुहानं दुहानं सुधां वेणुनादैः।
लिहानं लिहानं सुदीर्घैरपाङ्गैः
महानन्द-सर्वस्वमेतन्नमस्ताम्॥ ६८

लसद्बर्हापीडं ललित-ललित-स्मेरवदनं
भ्रमत्क्रीडापाङ्गं प्रणतजनता-निर्वृतिपदम्।
नवाम्भोद-श्यामं निजमधुरिमाभोगभरितं
परं देवं वन्दे परिमलित-कैशोरकरसम्॥ ६९

सारस्य-सामग्र्यमिवाननेन माधुर्य-चातुर्यमिव स्मितेन।
कारुण्य-तारुण्यमिवेक्षितेन चापल्य-साफल्यमिदं दृशोर्मे॥ ७०

यत्र वा तत्र वा देव यदि विश्वसिमस्त्वयि।
निर्वाणमपि दुर्वारमर्वाचीनानि किं पुनः॥ ७१

रागान्धगोपीजन-वन्दिताभ्यां
योगीन्द्रभृङ्गेन्द्र-निषेविताभ्याम्।
आताम्र-पङ्केरुह-विभ्रमाभ्यां
स्वामिन् पदाभ्या-मयमंजलिस्ते॥ ७२

अर्थानुलापान्व्रजसुन्दरीणा-मकृत्रिमाणाञ्च सरस्वतीनाम्।
आर्द्राशयेन श्रवणाञ्चलेन संभावयन्तं तरुणं गृणीमः॥ ७३

मनसि मम सन्निधत्तां मधुरमुखा मन्थरापाङ्गा।
करकलित-ललितवंशा कापि किशोरा कृपालहरी॥ ७४

रक्षन्तु नः शिक्षित-पाशुपाल्याः
बाल्यावृता बर्हिशिखावतंसाः।
प्राणप्रियाः प्रस्तुतवेणुगीताः
शीता दृशोः शीतलगोपकन्याः॥ ७५

स्मित-स्तवकिताधरं शिशिरवेणुनादामृतं
मुहुस्तरललोचनं मदकटाक्षमालाकुलम्।

उरःस्थलविलीनया कमलया समालिङ्गितं
भुवःस्थल-मुपागतं भुवनदैवतं पातु नः ॥ ७६
नयनाम्बुजे भजत कामदुघं हृदयाम्बुजे किमपि कारुणिकम्।
चरणाम्बुजे मुनिकुलैकधनं वदनाम्बुजे व्रजवधूविभवम्॥ ७७
निर्वासनं हन्त रसान्तराणां
निर्वाणसाम्राज्य-मिवावतीर्णम्।
अव्याजमाधुर्य-महानिधानं
अव्याद्व्रजाना-मधिदैवतं नः ॥७८
गोपीना-मभिमत-गीतवेषहर्षा-
दापीनस्तनभर-निर्भरोपगूढम्।
केलीनामवतु रसैरुपास्यमानं
कालिन्दी-पुलिनचरं परं महो नः ॥ ७९
खेलतां मनसि खेचराङ्गना-माननीय-मृदुवेणुनिस्वनैः।
कानने किमपि नः कृपास्पदं कालमेघ-कलहोद्वहं महः॥ ८०
एणीशाब-विलोचनाभि-रलसश्रोणीभर-प्रौढिभिः
वेणीभूत-रसक्रमाभि-रभित-श्श्रेणीकृताभिर्वृतः।
पाणी द्वौ च विनोदयन् रतिपते-स्तूणीशयैस्सायकैः
वाणीनामपदं परं व्रजजन-क्षोणीपतिः पातु नः॥ ८१
कालिन्दीपुलिने तमालनिबिडच्छाये पुरः-संचरत्
तोये तोयजपत्रपात्रनिहितं दध्यन्नमश्नाति यः।
वामे पाणितले निधाय मधुरं वेणुं विषाणं कटि-
प्रान्ते गाश्च विलोकयन् प्रतिकलं तं बालमालोकये॥८२

यद्गोपीवदनेन्दु-मण्डनमभूत् कस्तूरिकापत्रकं
यल्लक्ष्मीकुचशातकुंभकलश-व्याकोशमिन्दीवरम्।
यन्निर्वाणनिधान-साधनविधौ सिद्धांजनं योगिनां
तन्नः श्यामल-माविरस्तु हृदये कृष्णाभिधानं महः ॥ ८३

फुल्लेन्दीवरकान्ति-मिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्क-मुदारकौस्तुभधरं पीताम्बरं सुन्दरम्।
गोपीनां नयनोत्पलार्चिततनुं गोगोप-सङ्घावृतं
गोविन्दं कलवेणुनादनिरतं दिव्याङ्गभूषं भजे ॥ ८४

यन्नाभीसरसीरुहान्तरपुटे भृंगायमानो विधिः
यद्वक्षः कमलाविलास-सदनं यच्चक्षुषी चेंद्रिनौ।
यत्पादाब्ज-विनिःसृता सुरनदी शंभोः शिरोभूषणं
यन्नामस्मरणं धुनोति दुरितं पायात् स नः केशवः ॥ ८५

रक्षन्तु त्वा-मसितजलजै-रंजलिः पादमूले
मीना नाभीसरसि हृदये मारबाणा मुरारेः।
हाराः कण्ठे हरिमणिमया वक्त्रपद्मे द्विरेफाः
पिञ्छाचूडाश्चिकुरनिचये घोषयोषित्कटाक्षाः ॥ ८६

दधिमथन-निनादै-स्त्यक्तनिद्रः प्रभाते
निभृतपदमगारं वल्लवीनां प्रविष्टः।
मुखकमलसमीरैराशु निर्वाप्य दीपान्
कबलित-नवनीतः पातु गोपालबालः ॥ ८७

प्रातः स्मरामि दधिघोषविनीत-निद्रं
निद्रावसान-रमणीय-मुखारविन्दम्।

हृद्यानवद्य-वपुषं नयनाभिरामं
उन्निद्र-पद्मनयनं नवनीतचोरम्॥ ८८
फुल्ल-हल्लक-वतंसकोल्लसद्गल्लमागमगवी-गवेषितम्।
वल्लवी-चिकुर-वासितांगुली-पल्लवं कमपि वल्लवं भजे॥ ८९
स्तेयं हरेर्हरति यन्नवनीतचौर्यं
जारत्व-मस्य गुरुतल्पकृतापराधम्।
हत्यां दशाननहतिर्मधुपानदोषं
यत्पूतनास्तनपयः स पुनातु कृष्णः॥ ९०
मार मा वस मदीय-मानसे माधवैकनिलये यदृच्छया।
श्रीरमापति-रिहागमेदसौ कः सहेत निजवेश्म-लङ्घनम्॥ ९१
आकुंचितं जानु करं च वामं न्यस्य क्षितौ दक्षिणहस्तपद्मे।
आलोकयन्तं नवनीतखण्डं बालं मुकुन्दं मनसा स्मरामि॥ ९२
जानुभ्यामभिधावन्तं पाणिभ्यामतिसुन्दरम्।
सुकुण्डलालकं बालं गोपालं चिन्तयेदुषः॥ ९३
विहाय कोदण्डशरौ मुहूर्तं गृहाण पाणौ मणिचारुवेणुम्।
मायूरबर्हं च निजोत्तमाङ्गे सीतापते त्वां प्रणमामि पश्चात्॥ ९४
अयं क्षीराम्भोधेः पतिरिति गवां पालक इति
श्रितोऽस्माभिः क्षीरोपनयनधिया गोपतनयः।
अनेन प्रत्यूहो व्यरचि सततं येन जननी-
स्तनादप्यस्माकं सकृदपि पयो दुर्लभमभूत्॥ ९५
हस्त-माक्षिप्य यातोऽसि बलात्कृष्ण किमद्भुतम्।
हृदयाद्यदि निर्यासि पौरुषं गणयामि ते॥ ९६
तमसि रविरिवोद्यन्मज्जता-मम्बुराशौ
प्लव इव तृषितानां स्वादुवर्षीव मेघः।

निधिरिव विधनानां दीर्घतीव्रामयानां
भिषगिव कुशलं नो दातुमायातु शौरिः ॥ ९७

कोदण्डं मसृणं सुगन्धि विशिखं चक्राब्ज-पाशाङ्कुशं
हैमीं वेणुलतां करैश्च दधतं सिन्दूरपुंजारुणम्।
कन्दर्पाधिकसुन्दरं स्मितमुखं गोपाङ्गनावेष्टितं
गोपालं सततं भजामि वरदं त्रैलोक्य-रक्षामणिम्॥ ९८

सायङ्काले वनान्ते कुसुमित-समये सैकते चन्द्रिकायां
त्रैलोक्याकर्षणाङ्गं सुरनर-गणिका- मोहनापाङ्गमूर्तिम्।
सेव्यं शृङ्गारभावै-र्नवरस भरितै- र्गोपकन्या-सहस्रैः
वन्देऽहं रासकेलीरत-मतिसुभगं वश्य-गोपालकृष्णम्॥ ९९

कदम्बमूले क्रीडन्तं वृन्दावननिवेशनम्।
पद्मासन-स्थितं वन्दे वेणुं गायन्त-मच्युतम्॥ १००

बालं नीलाम्बुदाभं नवमणि-विलसत्किङ्किणी-जालबद्ध-
श्रोणी-जङ्घान्तयुग्मं विपुल-गुरुनख-प्रोल्लसत्कण्ठभूषम्।
फुल्लाम्भोजाभवक्त्रं हतशकट-मरुत्पूतनाद्यं प्रसन्नं
गोविन्दं वन्दितेन्द्रा-द्यमरवर-मजं पूजयेद्वासरादौ॥ १०१

वन्द्यं देवै-र्मुकुन्दं विकसित-कुरुविन्दाभ-मिन्दीवराक्षं
गो-गोपीबृन्दवीतं जितरिपु-निवहं कुन्दमन्दारहासम्।
नीलग्रीवाग्रपिञ्छाकलन-सुविलसत्कुन्तलं भानुमन्तं
देवं पीताम्बराढ्यं जप जप दिनशो मध्यमाह्ने रमायै॥ १०२

चक्रान्तध्वस्त-वैरि-व्रजमजित-मपास्तावनीभार-माद्यैः
आवीतं नारदाद्यै-र्मुनिभिरभिनुतं तत्त्वनिर्णीति-हेतोः।

सायाह्ने निर्मलाङ्गं निरुपमरुचिरं चिन्तयेन्नीलभासं
मन्त्री विश्वोदय-स्थित्यपहरणपदं मुक्तिदं वासुदेवम्।। १०३
कोदण्ड-मैक्षव-मखण्डमिषुं च पौष्पं
चक्राब्ज-पाश-सृणि-काञ्चन-वंशनालम्।
बिभ्राण-मष्टविध-बाहुभिरर्कवर्णं
ध्यायेद्धरिं मदनगोपविलासवेषम्।। १०४
अङ्गुल्या कः कवाटं प्रहरति कुटिले माधवः किं वसन्तो
नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणीन्द्रः।
नाहं धाराहिमर्दी किमसि खगपति-र्नो हरिः किं कपीन्द्र
इत्येवं गोपकन्या प्रतिवचन-जितः पातु वश्चक्रपाणिः।। १०५
राधा-मोहन-मन्दिरादुपगत-श्चन्द्रावलीमूचिवान्
राधे क्षेममयेऽस्ति तस्य वचनं श्रुत्वाऽऽह चन्द्रावली।
कंस क्षेममये विमुग्धहृदये कंसः क्व दृष्टस्त्वया
राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु नः।। १०६
या प्रीतिर्विदुरार्पिते मुररिपो कुन्त्यर्पिते यादृशी
या गोवर्धनमूर्ध्नि या च पृथुके स्तन्ये यशोदार्पिते।
भारद्वाजसमर्पिते शबरिका- दत्तेऽधरे योषितां
या प्रीतिर्मुनिपत्निभक्तिरचितेऽप्यत्रापि तां तां कुरु।। १०७
कृष्णानुस्मरणादेव पादसङ्घातपंजरः।
शतधा भेदमायाति गिरिर्वज्रहतो यथा।। १०८
यस्यात्मभूतस्य गुरोः प्रसादा-दहं विमुक्तोऽस्मि शरीरबन्धात्।
सर्वोपदेष्टुः पुरुषोत्तमस्य तस्यांघ्रिपद्मं प्रणतोऽस्मि नित्यम्।। १०९

कृष्णकर्णामृतं समाप्तम्

॥श्रीः॥

# ककारादि कृष्णसहस्रनामस्तोत्रम्

व्यास उवाच-

कृतार्थोऽहं मुनिश्रेष्ठ त्वत्प्रसादान्न संशयः ।
यतो मया परं ज्ञानं ब्रह्मगीतात्मकं श्रुतम् ॥ १ ॥

परं तु येन मे जन्म न भवेत्कर्हिचिन्मुने ।
पूर्णब्रह्मैकविज्ञानविरहो न च जायते ॥ २ ॥

येन मे दृढविश्वासो भक्तावुत्पद्यते हरेः ।
कालपाशविनिर्मुक्तिः कर्मबंधविमोचनम् ॥ ३ ॥

जन्ममृत्युजराव्याधिक्लेशक्षोभनिवारणम् ।
कलिकालभयध्वंसो ब्रह्मज्ञानं दृढं हृदि ॥ ४ ॥

कीर्तिः श्रीः सन्मतिः शांतिर्भक्तिर्मुक्तिश्च शाश्वती ।
जायते तदुपायं मे वद वेदविदां वर ॥ ५ ॥

नारद उवाच-

तत्त्वमेकं त्रिलोकेषु पूर्णानंदो जगद्गुरुः ।
दैवतं सर्वदेवानां प्राणिनां मुक्तिकारणम् ॥ ६ ॥

तारणं भवपाथोधेर्दुःखदारिद्र्यहारणम् ।
तद्रूपं सर्वदा ध्येयं योगिभिर्ज्ञानिभिस्तथा ॥ ७ ॥

ज्ञेयमेव सदा सिद्धैः सिद्धांतेन दृढीकृतम् ।
वेदांते गीतमाप्तानां हितकृत्कष्टनाशनम् ॥ ८ ॥

सर्वेषामेव जीवानां कर्मपाशविमोचनम् ।
सत्यज्ञानदयासिंधोःकादिनामसहस्रकम् ॥ ९ ॥

अतिगुह्यतरं लोके नाकेऽपि ब्रह्मवादिनाम् ।
कालपाशविनिर्मुक्तेर्हेतुभूतं सनातनम् ।। १० ।।

कामार्तिशमनं पुंसां दुर्बुद्धिक्षयकारकम् ।
सर्वव्याध्याधिहरणं शरणं साधुवादिनाम् ।। ११ ।।

कपटच्छलपाखंडक्रोधलोभविनाशनम् ।
अज्ञानाधर्मविध्वंसि श्रितानन्दविवर्धनम् ।। १२

विज्ञानोद्दीपनं दिव्यं सेव्यं सर्वजनैरिह ।
पठनीयं प्रयत्नेन सर्वमंत्रैकदोहनम् ।। १३ ।।

मोहमात्सर्यमूढानामगोचरमलौकिकम् ।
पूर्णानन्दप्रसादेन लभ्यमेतत्सुदुर्लभम् ।। १४ ।।

पूर्णानन्दःस्वयं ब्रह्म भक्तोद्धाराय भूतले ।
अक्षराकारमाविश्य स्वेच्छयाऽनन्तविक्रमः ।। १५ ।।

कृष्णनाम्नात्र विख्यातः स्वयं निर्वाणदायकः ।
अत एवात्र वर्णानां ककारस्तन्मयो मतः ।। १६ ।।

कादिनामानि लोकेऽस्मिन्दुर्लभानि दुरात्मनाम् ।
भक्तानां सुलभानीह निर्मलानां यतात्मनाम् ।। १७ ।।

ज्ञेय एव स्वयं कृष्णो ध्येय एव निरंतरम् ।
अमेयोऽप्यनुमानेन मेय एवात्मभावतः ।। १८ ।।

ब्रह्मगीतादिभिर्गेयः सेवनीयो मुमुक्षभिः ।
कृष्ण एव गतिः पुंसां संसारेऽ स्मिन्सुदुस्तरे ।। १९ ।।

कालास्ये पतितं सर्वं कालेन कवलीकृतम् ।
कालाधीनं कालसंस्थं कालोत्पन्नं जगत्त्रयम् ।। २० ।।

स कालस्तस्य भृत्योऽस्ति तदधीनस्तदुद्भवः ।
तस्मात्सर्वेषु कालेषु कृष्ण एव गतिर्नृणाम् ।। २१ ।।

अन्ये देवास्त्रिलोकेषु कृष्णाश्रयपरायणाः ।
कृष्णमाश्रित्य तिष्ठंति कृष्णस्यानुचरा हि ते ।। २२ ।।

यथा सूर्योदये सर्वास्तारकाःक्षीणकांतयः ।
सर्वे देवास्तथा व्यास हतवीर्या हतौजसः ।। २३ ।।

न कृष्णादितरत्तत्वं न कृष्णादितरत्सुखम् ।
न कृष्णादितरज्ज्ञानं न कृष्णादितरत्पदम् ।। २४ ।।

कृष्ण एव जगन्मित्रं कृष्ण एव जगद्गुरुः ।
कृष्ण एव जगत्त्राता कृष्ण एव जगत्पिता ।। २५ ।।

कृष्ण कृष्णेति ये जीवाः प्रवदन्ति निरंतरम् ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।। २६ ।।

कृष्णे तुष्टे जगन्मित्रं कृष्णे रुष्टे हि तद्रिपुः ।
कृष्णात्मकं जगत्सर्वं कृष्णमाश्रित्य तिष्ठति ।। २७

यथा सूर्योदये सर्वे पदार्थज्ञानिनो नराः ।
कृष्णसूर्योदयेऽन्तःस्थे तथाऽऽत्मज्ञानिनो बुधाः ।। २८ ।।

तस्मात्त्वं सर्वभावेन कृष्णस्य शरणं व्रज ।
नान्योपायस्त्रिलोकेषु भवाब्धिं तरितुं सताम् ।। २९ ।।

श्रीव्यास उवाच-

कृतार्थोऽहं मुनिश्रेष्ठ त्वत्प्रसादादतंद्रितः ।
यस्मात्श्रुतं मया ज्ञानं श्रीकृष्णस्य महात्मनः ।। ३० ।।

परं तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।
नैवास्ति त्वत्समो ज्ञानी त्रिषु लोकेषु कुत्रचित् ।। ३१ ।।

कथं मे करुणासिंधुः प्रसन्नो जायते हरिः ।
केनोपायेन तद्भक्तिर्निश्चला जायते मयि ।। ३२ ।।

केनोपायेन तद्दास्यं सखित्वं देवदुर्लभम् ।
तदधीनत्वमेवाथ तत्स्वरूपैकता तथा ।। ३३ ।।

एतन्मे वद देवर्षे सर्वशास्त्रार्थदोहनम् ।
विना कृष्णं गतिर्नाऽस्ति कृष्ण एव गतिर्मम ।। ३४ ।।

नारद उवाच-

श्रीकृष्णः करुणासिंधुर्दीनबंधुर्जगद्गुरुः ।
कादिनामहस्रेण विना नान्यैश्च साधनैः ।। ३५ ।।

प्रसन्नो जायते नूनं तस्मात्तानि वदामि ते ।
अवाच्यान्यपि ते वच्मि त्रिषु लोकेषु कुत्रचित् ।। ३६ ।।

न प्रसिद्धानि दुष्टानां दुर्लभानि महीतले ।
सुलभानीह भक्तानां भविष्यंति तदाज्ञया ।। ३७ ।।

पुरा सारस्वते कल्पे रम्ये वृन्दावने निशि ।
निजभक्तहितार्थाय वेणुनादं हरिः स्वयम् ।। ३८ ।।

चकारोच्चैर्मनोहारी विहारी वैरिनाशनः ।
तदा गोपीजनः सर्वः सहसोत्थाय विह्वलः ।। ३९ ।।

निशीथे सकलं त्यक्त्वाऽगच्छद्वेणुवशीकृतः ।
तेन सार्धं कृता क्रीडा स्वप्नवद्रासमंडले ।। ४० ।।

तत्रांतर्धानमगमत्तच्चित्तमपहृत्य सः ।
तदा ता गोपिकाः सर्वाः दिङ्मूढा इव गोगणाः ।। ४१ ।।

समीपस्थमपि भ्रांत्या तं नापश्यन्नरोत्तमम् ।
इतस्ततो विचिन्वन्त्यः कस्तूरीमृगवद्वने ।। ४२ ।।

अत्यंतव्याकुलीभूताः खंडिताः श्रुतयो यथा।
ब्रह्मज्ञानाद्यथा विप्राः कालमायावशानुगाः ।। ४३ ।।

तथैता गोपिका व्यास कृष्णदर्शनलालसाः।
अत्यंतविरहाक्रांतास्तच्चित्तास्तत्परायणाः ।। ४४ ।।

भ्रमरीकीटवल्लीना नान्यत्पश्यंति तद्विना।
विरहानलदग्धांग्यः कामांधा भयविह्वलाः ।। ४५ ।।

स्वात्मानं न विदुर्दीना ज्ञानहीना नरा इव।
तल्लीनमानसाकारा विकारादिविवर्जिताः ।। ४६ ।।

तदातिकृपया कृष्णो भक्ताधीनो निरंकुशः।
आविर्बभूव तत्रैव यथा सूर्यो निशात्यये ।। ४७ ।।

तदा ता गोपिकाः सर्वा दृष्ट्वा प्राणपतिं हरिम्।
जन्मांतरनिभं हित्वा विरहाग्निं सुदुःसहम् ।। ४८ ।।

तवावतारवन्मत्वा हर्षनिर्भरमानसाः।
पद्मिन्य इव कृष्णार्कं दृष्ट्वा विकसितास्तदा ।। ४९ ।।

पपुर्नेत्रपुटैरेनं न च तृप्तिमुपाययुः।
क्रीडायाः शांतिमापन्ना मत्वा कृष्णं जगद्गुरुम् ।। ५० ।।

तं प्रत्यूचुःप्रीतियुक्ता विरक्ता विरहानलात्।
आसक्तास्तत्पदे नित्यं विरक्ता इव योगिनः ।। ५१ ।।
गोप्य ऊचुः -
हे नाथ याहि नो दीनास्त्वन्नाथास्त्वत्परायणाः।
तवालंबेन जीवंत्यस्तव दास्यो वयं सदा ।। ५२ ।।

केनोपायेन भो कृष्ण न भवेद्विरहस्तव।
न भवेत्पुनरावृत्तिर्न च संसारवासना ।। ५३

त्वयि भक्तिर्दृढा केन सखीत्वं जायते तव ।
तदुपायं हि नो ब्रूहि कृपां कृत्वा दयानिधे ॥ ५४ ॥
श्रीकृष्ण उवाच-
अत्यंतदुर्लभः प्रश्नस्त्वदीयः कलिनाशनः ।
न कदापि मया प्रोक्तः कस्याप्यग्रे व्रजाङ्गनाः ॥ ५५ ॥

तथाप्यत्यंतभावेन युष्मद्भक्त्या वशीकृतः ।
रहस्यं कथयाम्यद्य मदीयं मद्गतिप्रदम् ॥ ५६ ॥

कादिनामसहस्राख्यमविख्यातं धरातले ।
गुह्याद्गुह्यतरं गोप्यं वेदशास्त्रार्थदोहनम् ॥ ५७ ॥

अलौकिकमिदं पुंसां सद्यः श्रेयस्करं सताम् ।
शब्दब्रह्ममयं लोके सूर्यवच्चित्प्रकाशनम् ॥ ५८ ॥

संसारसागरे घोरे प्लवतुल्यं मनीषिणाम् ।
सर्वसिद्धिप्रदं पुंसामज्ञानार्णवशोषणम् ॥ ५९ ॥

जातिस्मृतिप्रदं विद्यावर्धनं मोहनाशनम् ।
ब्रह्मज्ञानरहस्यं मे कादिनामसहस्रकम् ॥ ६० ॥

तदेवाहं प्रवक्ष्यामि शृणुध्वं भक्तिपूर्वकम् ।
यस्य स्मरणमात्रेण जीवन्मुक्तिः प्रजायते ॥ ६१ ॥

ओं अस्य श्रीपुराणपुरुषोत्तमश्रीकृष्णकादिसहस्रनाममंत्रस्य नारद ऋषिः अनुष्टुप्छन्दः, सर्वात्मस्वरूपी श्रीपरमात्मा देवता । ओं इति बीजं, नम इति शक्तिः, कृष्णायेति कीलकं, धर्मार्थिकाममोक्षार्थे श्रीकृष्णप्रीत्यर्थे जपे विनियोगः ॥ अथ करन्यासः ॥ ओं कालात्मेत्यंगुष्ठाभ्यां नमः । ओं कीर्तिवर्द्धन इति तर्जनीभ्यां नमः । ओं कूटस्थसाक्षीति मध्यमाभ्यां नमः । ओं कैवल्यज्ञानसाधन इति

अनामिकाभ्यां नमः । ओं कौस्तुभोद्भासितोरस्क इति कनिष्ठकाभ्यां नमः । ओं कंदर्पज्वरनाशन इति करतलकरपृष्ठाभ्यां नमः । ओं कालात्मेति हृदयाय नमः । ओं कीर्तिवर्धन इति शिरसे स्वाहा । ओं कूटस्थसाक्षीति शिखायै वषट् । ओं कैवल्यज्ञानसाधन इति कवचाय हुम् । ओं कौस्तुभोद्भासितोरस्क इति नेत्रत्रयाय वौषट् । ओं कन्दर्पज्वरनाशन इत्यस्त्राय फट् । अथ ध्यानम्-

वंदे कृष्णं कृपालुं कलिकुलदलनं केशवं कंसशत्रुं
धर्मिष्ठं ब्रह्मनिष्ठं द्विजवरवरदं कालमायातिरिक्तम् ।
कालिंदीकेलिसक्तं कुवलयनयनं कुंडलोद्भासितास्यं
कालातीतस्वधामाश्रितनिजयुवतीवल्लभं कालकालम् ।। ६२ ।।

श्रीकृष्ण उवाच-

ओं कृष्णः कृष्णात्मकः कृष्णस्वरूपः कृष्णनामधृत् ।
कृष्णाङ्गः कृष्णदैवत्यः कृष्णारक्तविलोचनः ।। ६३ ।।

कृष्णाश्रयःकृष्णवर्त्मा कृष्णालक्ताभिरक्षकः ।
कृष्णेशप्रीतिजनकः कृष्णेशप्रियकारकः ।। ६४ ।।

कृष्णेशारिष्टसंहर्ता कृष्णेशप्राणवल्लभः ।
कृष्णेशानन्दजनकः कृष्णेशायुर्विवर्द्धनः ।। ६५ ।।

कृष्णेशारिसमूहघ्नः कृष्णेशाभीष्टसिद्धिदः ।
कृष्णाधीशः कृष्णकेशः कृष्णानन्दविवर्द्धनः ।। ६६ ।।

कृष्णागरुसुगंधाढ्यः कृष्णागरुसुगंधवित् ।
कृष्णागरुविवेकज्ञः कृष्णागरुविलेपनः ।। ६७ ।।

कृतज्ञः कृतकृत्यात्मा कृपासिंधुः कृपाकरः ।
कृष्णानन्दैकवरदः कृष्णानन्दपदाश्रयः ।। ६८ ।।

कमलावल्लभाकारः कलिघ्नः कमलापतिः ।
कमलानन्दसंपन्नः कमलासेविताकृतिः ॥ ६९ ॥

कमलामानसोल्लासी कमलामानदायकः ।
कमलालंकृताकारः कमलाश्रितविग्रहः ॥ ७० ॥

कमलामुखपद्मार्कः कमलाकरपूजितः ।
कमलाकरमध्यस्थः कमलाकरतोषितः ॥ ७१ ॥

कमलाकरसंसेव्यः कमलाकरभूषितः ।
कमलाकरभावज्ञः कमलाकरसंयुतः ॥ ७२ ॥

कमलाकरपार्श्वस्थः कमलाकररूपवान् ।
कमलाकरशोभाढ्यः कमलाकरपंकजः ॥ ७३ ॥

कमलाकरपापघ्नः कमलाकरपुष्टिकृत् ।
कमलारूपसौभाग्यवर्द्धनः कमलेक्षणः ॥ ७४ ॥

कमलाकलितांघ्र्यब्जः कमलाकलिताकृतिः ।
कमलाहृदयानन्दवर्द्धनः कमलाप्रियः ॥ ७५ ॥

कमलाचलचित्तात्मा कमलालंकृताकृतिः ।
कमलाचलभावज्ञः कमलालिंगिताकृतिः ॥ ७६ ॥

कमलामलनेत्रश्रीः कमलाचलमानसः ।
कमलापरमानन्दवर्द्धनः कमलाननः ॥ ७७ ॥

कमलानन्तसौभग्यवर्द्धनः कमलाश्रयः ।
कमलाविलसत्पाणिः कमलामललोचनः ॥ ७८ ॥

कमलामलभालश्रीः कमलाकरपल्लवः ।
कमलेशः कमलभूः कमलानन्ददायकः ॥ ७९ ॥

कमलोद्भवभीतिघ्नः कमलोद्भवसंस्तुतः ।
कमलाकरपाशाढ्यः कमलोद्भवपालकः ॥ ८० ॥

कमलासनसंसेव्यः कमलासनसंस्थितः ।
कमलासनरोगघ्नः कमलासनपापहा ॥ ८१ ॥

कमलोदरमध्यस्थः कमलोदरदीपनः ।
कमलोदरसंपन्नः कमलोदरसुंदरः ॥ ८२ ॥

कनकालंकृताकारः कनकालंकृतांबरः ।
कनकालंकृतागारः कनकालंकृतासनः ॥ ८३ ॥

कनकालंकृतास्यश्रीः कनकालंकृतास्पदः ।
कनकालंकृतांघ्र्यब्जः कनकालंकृतोदरः ॥ ८४ ॥

कनकांबरशोभाढ्यः कनकाम्बरभूषणः ।
कनकोत्तमभालश्रीः कनकोत्तमरूपधृक् ॥ ८५ ॥

कनकागारमध्यस्थः कनकागारकारकः ।
कनकाचलमध्यस्थः कनकाचलपालकः ॥ ८६ ॥

कनकाचलशोभाढ्यःकनकाचलभूषणः ।
कनकैकप्रजाकर्ता कनकैप्रदायकः ॥ ८७ ॥

कलाननः कलरवः कलस्त्रीपरिवेष्टितः ।
कलहंसपरित्राता कलहंसपराक्रमः ॥ ८८ ॥

कलहंससमानश्रीः कलहंसप्रियंकरः ।
कलहंसस्वभावस्थः कलहंसैकमानसः ॥ ८९ ॥

कलहंससमारूढः कलहंससमप्रभः ।
कलहंसविवेकज्ञः कलहंसगतिप्रदः ॥ ९० ॥

कलहंसपरित्राता कलहंससुखास्पदः ।
कलहंसकुलाधीशः कलहंसकुलास्पदः ॥ ९१

कलहंसकुलाधारः कलहंसकुलेश्वरः ।
कलहंसकुलाचारी कलहंसकुलप्रियः ॥ ९२ ॥

कलहंसकुलत्राता कलहंसकुलात्मकः ।
कवीशः कविभावस्थः कविनाथः कविप्रियः ॥ ९३ ॥

कविमानसहंसात्मा कविवंशविभूषणः ।
कविनायकसंसेव्यःकविनायकपालकः ॥ ९४ ॥

कविवंशैकवरदः कविवंशशिरोमणिः ।
कविवंशविवेकज्ञः कविवंशप्रबोधकः ॥ ९५ ॥

कविवंशपरित्राता कविवंशप्रभाववित् ।
कवित्वामृतसंसिद्धः कवित्वामृतसागरः ॥ ९६ ॥

कवित्वाकारसंयुक्तः कवित्वाकारपालकः ।
कवित्वाद्वैतभावस्थः कवित्वाश्रयकारकः ॥ ९७ ॥

कवींद्रहृदयानन्दी कवीन्द्रहृदयास्पदः ।
कवीन्द्रहृदयांतःस्थः कवीन्द्रज्ञानदायकः ॥ ९८ ॥

कवीन्द्रहृदयांभोजप्रकाशैकदिवाकरः ।
कवीन्द्रहृदयांभोजाह्लादनैकनिशाकरः ॥ ९९ ॥

कवीन्द्रहृदयाब्जस्थः कवीन्द्रप्रतिबोधकः ।
कवीन्द्रानन्दजनकः कवीन्द्राश्रितपंकजः ॥ १०० ॥

कविशब्दैकवरदः कविशब्दैकदोहनः ।
कविशब्दैकभावस्थः कविशब्दैकारणः ॥ १०१ ॥

कविशब्दैकसंस्तुत्यः कविशब्दैकभूषणः ।
कविशब्दैकरसिकः कविशब्दविवेकवित् ॥ १०२॥

कवित्वब्रह्मविख्यातः कवित्वब्रह्मगोचरः ।
कविवाणीविवेकज्ञः कविवाणीविभूषणः ॥ १०३ ॥

कविवाणीसुधास्वादी कविवाणीसुधाकरः ।
कविवाणीविवेकस्थः कविवाणीविवेकवित् ॥ १०४ ॥

कविवाणीपरित्राता कविवाणीविलासवान् ।
कविशक्तिप्रदाता च कविशक्तिप्रवर्तकः ॥ १०५ ॥

कविशक्तिसमूहस्थः कविशक्तिकलानिधिः ।
कलाकोटिसमायुक्तः कलाकोटिसमावृतः ॥ १०६ ॥

कलाकोटिप्रकाशस्थः कलाकोटिप्रवर्तकः ।
कलानिधिसमाकारः कलानिधिसमन्वितः ॥ १०७ ॥

कलाकोटिपरित्राता कलाकोटिप्रवर्धनः ।
कलानिधिसुधास्वादी कलानिधिसमाश्रितः ॥ १०८ ॥

कलंकरहिताकारः कलंकरहितास्पदः ।
कलंकरहितानन्दः कलंकरहितात्मकः ॥ १०९ ॥

कलंकरहिताभासः कलंकरहितोदयः ।
कलंकरहितोद्देशः कलंकरहिताननः ॥ ११० ॥

कलंकरहितश्रीशः कलंकरहितस्तुतिः ।
कलंकरहितोत्साहः कलंकरहितप्रियः ॥ १११ ॥

कलंकरहितोच्चारः कलंकरहितेन्द्रियः ।
कलंकरहिताकारः कलंकरहितोत्सवः ॥ ११२ ॥

कलंकांकितदुष्टघ्नः कलंकांकितधर्महा।
कलंकांकितकर्मारिः कलंकांकितमार्गहृत्॥ ११३॥

कलंकांकितदुर्दर्शः कलंकांकितदुःसहः।
कलंकांकितदूरस्थः कलंकांकितदूषणः॥ ११४॥

कलहोत्पत्तिसंहर्ता कलहोत्पत्तिकृद्रिपुः।
कलहातीतधामस्थः कलहातीतनायकः॥ ११५॥

कलहातीततत्त्वज्ञः कलहातीतवैभवः।
कलहातीतभावस्थः कलहातीतसत्तमः॥ ११६॥

कलिकालबलातीतः कलिकालविलोपकः।
कलिकालैकसंहर्ता कलिकालैकदूषणः॥ ११७॥

कलिकालकुलध्वंसी कलिकालकुलापहः।
कलिकालभयच्छेत्ता कलिकालमदापहः॥ ११८॥

कलिक्लेशविनिर्मुक्तः कलिक्लेशविनाशनः।
कलिग्रस्तजनत्राता कलिग्रस्तनिजार्तिहा॥ ११९॥

कलिग्रस्तजगन्मित्रः कलिग्रस्तजगत्पतिः।
कलिग्रस्तजगत्त्राता कलिपाशविनाशनः॥ १२०॥

कलिमुक्तिप्रदाता कःकलिमुक्तकलेवरः।
कलिमुक्तमनोवृत्तिः कलिमुक्तमहामतिः॥ १२१॥

कलिकालमतातीतः कलिधर्मविलोपकः।
कलिधर्माधिपध्वंसी कलिधर्मैकखण्डनः॥ १२२॥

कलिधर्माधिपालक्ष्यः कलिकालविकारहा।
कलिकर्मकथातीतः कलिकर्मकथारिपुः॥ १२३॥

कलिकष्टैकशमनः कलिकष्टविवर्जितः ।
कलिघ्नः कलिधर्मघ्नः कलिधर्माधिकारिहा ॥ १२४ ॥

कर्मवित्कर्मकृत्कर्मी कर्मकांडैकदोहनः ।
कर्मस्थः कर्मजनकः कर्मीष्टः कर्मसाधनः ॥ १२५ ॥

कर्मकर्ता कर्मभर्ता कर्महर्ता च कर्मजित् ।
कर्मजातजगत्त्राता कर्मजातजगत्पतिः ॥ १२६ ॥

कर्मजातजगन्मित्रः कर्मजातजगद्गुरुः ।
कर्मभूतभवच्छत्रः कर्मभूतभवार्तिहा ॥ १२७ ॥

कर्मकांडपरिज्ञाता कर्मकांडप्रवर्त्तकः ।
कर्मकांडपरित्राता कर्मकांडप्रमाणकृत् ॥ १२८ ॥

कर्मकांडविवेकज्ञः कर्मकांडप्रकारकः ।
कर्मकांडविवेकस्थः कर्मकांडैकदोहनः ॥ १२९ ॥

कर्मकांडरताभीष्टप्रदाता कर्मतत्परः ।
कर्मबद्धजगत्त्राता कर्मबद्धजगद्गुरुः ॥ १३० ॥

कर्मबंधार्तिशमनः कर्मबंधविमोचनः ।
कर्मिष्ठद्विजवर्यस्थः कर्मिष्ठद्विजवल्लभः ॥ १३१ ॥

कर्मिष्ठद्विजजीवात्मा कर्मिष्ठद्विजजीवनः ।
कर्मिष्ठद्विजभावज्ञः कर्मिष्ठद्विजपालकः ॥ १३२ ॥

कर्मिष्ठद्विजजातिस्थः कर्मिष्ठद्विजकामदः ।
कर्मिष्ठद्विजसंसेव्यः कर्मिष्ठद्विजपापहा ॥ १३३ ॥

कर्मिष्ठद्विजबुद्धिस्थः कर्मिष्ठद्विजबोधकः ।
कर्मिष्ठद्विजभीतिघ्नः कर्मिष्ठद्विजमुक्तिदः ॥ १३४ ॥

कर्मिष्ठद्विजदोषघ्नः कर्मिष्ठद्विजकामधुक्।
कर्मिष्ठद्विजसंपूज्यः कर्मिष्ठद्विजतारकः ॥ १३५ ॥

कर्मिष्ठारिष्टसंहर्ता कर्मिष्ठाभीष्टसिद्धिदः।
कर्मिष्ठादृष्टमध्यस्थः कर्मिष्ठादृष्टवर्धनः ॥ १३६ ॥

कर्ममूलजगद्धेतुः कर्ममूलनिकंदनः।
कर्मबीजपरित्राता कर्मबीजविवर्द्धनः ॥ १३७ ॥

कर्मद्रुमफलाधीशः कर्मद्रुमफलप्रदः।
कस्तूरीद्रवलिप्तांगः कस्तूरीद्रववल्लभः ॥ १३८ ॥

कस्तूरीसौरभग्राही कस्तूरीमृगवल्लभः।
कस्तूरीतिलकानंदी कस्तूरीतिलकप्रियः ॥ १३९ ॥

कस्तूरीतिलकाश्लेषी कस्तूरीतिलकांकितः।
कस्तूरीवासनालीनः कस्तूरीवासनाप्रियः ॥ १४० ॥

कस्तूरीवासनारूपः कस्तूरीवासनात्मकः।
कस्तूरीवासनांतःस्थः कस्तूरीवासनास्पदः ॥ १४१ ॥

कस्तूरीचन्दनग्राही कस्तूरीचन्दनार्चितः।
कस्तूरीचन्दनागारः कस्तूरीचन्दनान्वितः ॥ १४२ ॥

कस्तूरीचन्दनाकारः कस्तूरीचन्दनासनः।
कस्तूरीचर्चितोरस्कः कस्तूरीचर्विताननः ॥ १४३ ॥

कस्तूरीचर्वितश्रीशः कस्तूरीचर्चितांबरः।
कस्तूरीचर्चितास्यश्रीः कस्तूरीचर्चितप्रियः ॥ १४४ ॥

कस्तूरीमोदमुदितः कस्तूरीमोदवर्द्धनः।
कस्तूरीमोददीप्तांगः कस्तूरीसुन्दराकृतिः ॥ १४५ ॥

कस्तूरीमोदरसिकः कस्तूरीमोदलोलुपः ।
कस्तूरीपरमानन्दी कस्तूरीपरमेश्वरः ॥ १४६ ॥

कस्तूरीदानसंतुष्टः कस्तूरीदानवल्लभः ।
कस्तूरीपरमाह्लादः कस्तूरीपुष्टिवर्द्धनः ॥ १४७ ॥

कस्तूरीमुदितात्मा च कस्तूरीमुदिताशयः ।
कदलीवनमध्यस्थः कदलीवनपालकः ॥ १४८ ॥

कदलीवनसंचारी कदलीवनवल्लभः ।

कदलीदर्शनानंदी कदलीदर्शनोत्सुकः ॥ १४९ ॥

कदलीपल्लवास्वादी कदलीपल्लवाश्रयः ।
कदलीफलसंतुष्टः कदलीफलदायकः ॥ १५० ॥

कदलीफलसंपुष्टः कदलीफलभोजनः ।
कदलीफलवर्याशी कदलीफलतोषितः ॥ १५१ ॥

कदलीफलमाधुर्यवल्लभः कदलीप्रियः ।
कपिध्वजसमायुक्तः कपिध्वजपरिस्तुतः ॥ १५२ ॥

कपिध्वजपरित्राता कपिध्वजसमाश्रितः ।
कपिध्वजपदान्तस्थः कपिध्वजजयप्रदः ॥ १५३ ॥

कपिध्वजरथारूढः कपिध्वजयशःप्रदः ।
कपिध्वजैकपापघ्नः कपिध्वजसुखप्रदः ॥ १५४ ॥

कपिध्वजारिसंहर्ता कपिध्वजभयापहः ।
कपिध्वजमनोऽभिज्ञः कपिध्वजमतिप्रदः ॥ १५५ ॥

कपिध्वजसुहृन्मित्रः कपिध्वजसुहृत्सखः ।
कपिध्वजांगनाराध्यः कपिध्वजगतिप्रदः ॥ १५६ ॥

कपिध्वजांगनारिघ्नः कपिध्वजरतिप्रदः ।
कपिध्वजकुलत्राता कपिध्वजकुलारिहा ॥ १५७ ॥

कपिध्वजकुलाधीशः कपिध्वजकुलप्रियः ।
कपीन्द्रसेवितांघ्र्यब्जः कपीन्द्रस्तुतिवल्लभः ॥ १५८ ॥

कपीन्द्रानन्दजनकः कपीन्द्रश्रितविग्रहः ।
कपीन्द्राश्रितपादाब्जः कपीन्द्राश्रितमानसः ॥ १५९ ॥

कपीन्द्राराधिताकारः कपीन्द्राभीष्टसिद्धिदः ।
कपीन्द्रारातिसंहर्ता कपीन्द्रातिबलप्रदः ॥ १६० ॥

कपीन्द्रैकपरित्राता कपीन्द्रैकयशःप्रदः ॥ १६१ ॥

कपीन्द्रानन्दसंपन्नः कपीन्द्रानंदवर्द्धनः ।
कपीन्द्रध्यानगम्यात्मा कपीन्द्रज्ञानदायकः ॥ १६२ ॥

कल्याणमंगलाकारः कल्याणमंगलास्पदः ।
कल्याणमंगलाधीशः कल्याणमंगलप्रदः ॥ १६३ ॥

कल्याणमंगलागारः कल्याणमंगलात्मकः ।
कल्याणनन्दसपन्नः कल्याणानन्दवर्धनः ॥ १६४ ॥

कल्याणानन्दसहितः कल्याणानन्ददायकः ॥ १६५ ॥

कल्याणानन्दसंतुष्टः कल्याणानन्दसंयुतः ।
कल्याणीरागसंगीतः कल्याणीरागवल्लभः ॥ १६६ ॥

कल्याणीरागरसिकः कल्याणीरागकारकः ।
कल्याणीकेलिकुशलः कल्याणीप्रियदर्शनः ॥ १६७ ॥

कल्पशास्त्रपरिज्ञाता कल्पशास्त्रार्थदोहनः ।
कल्पशास्त्रसमुद्धर्ता कल्पशास्त्रपरिस्तुतः ॥ १६८ ॥

कल्पकोटिशतातीतः कल्पकोटिशतोत्तरः ।
कल्पकोटिशतज्ञानी कल्पकोटिशतप्रभुः ॥ १६९ ॥

कल्पवृक्षसमाकारः कल्पवृक्षसमप्रभः ।
कल्पवृक्षसमोदारः कल्पवृक्षसमस्थितः ॥ १७० ॥

कल्पवृक्षपरित्राता कल्पवृक्षसमावृतः ।
कल्पवृक्षवनाधीशः कल्पवृक्षवनास्पदः ॥ १७१ ॥

कल्पांतदहनाकारः कल्पांतदहनोपमः ।
कल्पांतकालशमनः कल्पांतातीतविग्रहः ॥ १७२ ॥

कलशोद्भवसंसेव्यः कलशोद्भववल्लभः ।
कलशोद्भवभीतिघ्नः कलशोद्भवसिद्धिदः ॥ १७३ ॥

कपिलःकपिलाकारः कपिलप्रियदर्शनः ।
कर्द्दमात्मजभावस्थः कर्द्दमप्रियकारकः ॥ १७४ ॥

कन्यकानीकवरदः कन्यकानीकवल्लभः ।
कन्यकानीकसंस्तुत्यः कन्यकानीकनायकः ॥ १७५ ॥

कन्यादानप्रदत्राता कन्यादानप्रदप्रियः ।
कन्यादानप्रभावज्ञः कन्यादानप्रदायकः ॥ १७६ ॥

कश्यपात्मजभावस्थः कश्यपात्मजभास्करः ।
कश्यपात्मजशत्रुघ्नः कश्यपात्मजपालकः ॥ १७७ ॥

कश्यपात्मजमध्यस्थः कश्यपात्मजवल्लभः ।
कश्यपात्मजभीतिघ्नः कश्यपात्मजदुर्लभः ॥ १७८ ॥

कश्पयात्मजभावस्थः कश्यपात्मजभाववित् ।
कश्यपोद्भवदैत्यारिः कश्यपोद्भवदेवराट् ॥ १७९ ॥

कश्पयानन्दजनकः कश्यपानन्दवर्द्धनः ।
कश्यपारिष्टसंहर्ता कश्यपाभीष्टसिद्धिदः ॥ १८० ॥

कर्तृकर्मक्रियातीतः कर्तृकर्मक्रियान्वयः ।
कर्तृकर्मक्रियालक्ष्यः कर्तृकर्मक्रियास्पदः ॥ १८१ ॥

कर्तृकर्मक्रियाधीशः कर्तृकर्मक्रियात्मकः ।
कर्तृकर्मक्रियाभासः कर्तृकर्मक्रियाप्रदः ॥ १८२ ॥

कृपानाथः कृपासिंधुः कृपाधीशः कृपाकरः ।
कृपासागरमध्यस्थः कृपापात्रःकृपानिधिः ॥ १८३ ॥

कृपापात्रैकवरदः कृपापात्रभयापहः ।
कृपाकटाक्षपापघ्नः कृतकृत्यः कृतांतकः ॥ १८४ ॥

कदम्बवनमध्यस्थः कदम्बकुसुमप्रियः ।
कदंबवनसंचारी कदंबवनवल्लभः ॥ १८५ ॥

कर्पूरामोदमुदितः कर्पूरामोदवल्लभः ।
कर्पूरवासनासक्तः कर्पूरागरुचर्चितः ॥ १८६ ॥

करुणारससंपूर्णः करुणारसवर्धनः ।
करुणाकरविख्यातः करुणाकरसागरः ॥ १८७ ॥

कालात्मा कालजनकः कालाग्निः कालसंज्ञकः ।
कालः कालकलातीतः कालस्थः कालभैरवः ॥ १८८ ॥

कालज्ञः कालसंहर्ता कालचक्रप्रवर्तकः ।
कालरूपः कालनाथः कालकृत्कालिकाप्रियः ॥ १८९ ॥

कालैकवरदः कालः कारणः कालरूपभाक् ।
कालमायाकलातीतः कालमायाप्रवर्तकः ॥ १९० ॥

कालमायाविनिर्मुक्तः कालमायाबलापहः ।
कालत्रयगतिज्ञाता कालत्रयपराक्रमः ।। १९१ ।।

कालज्ञानकलातीतः कालज्ञानप्रदायकः ।
कालज्ञः कालरहितः कालाननसमप्रभः ।। १९२ ।।

कालचक्रैक हेतुस्थः कालरात्रिदुरत्ययः ।
कालपाशविनिर्मुक्तः कालपाशविमोचनः ।। १९३ ।।

कालव्यालैकदलनः कालव्यालभयापहः ।
कालकर्मकलातीतः कालकर्मकलाश्रयः ।। १९४ ।।

कालकर्मकलाधीशः कालकर्मकलात्मकः ।
कालव्यालपरिग्रस्तनिजभक्तैकमोचनः ।। १९५ ।।

काशिराजशिरश्छेत्ता काशीशप्रियकारकः ।
काशीस्थार्तिहरः काशीमध्यस्थः काशिकाप्रियः ।। १९६ ।।

काशीवासिजनानंदी काशीवासिजनप्रियः ।
काशीवासिजनत्राता काशीवासिजनस्तुतः ।। १९७ ।।

काशीवासिविकारघ्नः काशीवासिविमोचनः ।
काशीवासिजनोद्धर्ता काशीवासकुलप्रदः ।। १९८ ।।

काशीवास्याश्रितांघ्र्यब्जः काशीवासिसुखप्रदः ।
काशीस्थाभीष्टफलदः काशीस्थारिष्टनाशनः ।। १९९ ।।

काशीस्थद्विजसंसेव्यः काशीस्थद्विजपालकः ।
काशीस्थद्विजसद्बुद्धिप्रदाता काशिकाश्रयः ।। २०० ।।

कांतीशः कांतिदः कांतः कान्तारप्रियदर्शनः ।
कांतिमान्कांतिजनकः कान्तिस्थः कांतिवर्धनः ।। २०१ ।।

कालागरुसुगंधाढ्यः कालागरुविलेपनः ।
कालागरुसुगंधज्ञः कालागरुसुगंधकृत् ॥ २०२ ॥

कापट्यपटलच्छेत्ता कायस्थः कायवर्धनः ।
कायभाग्भयभीतिघ्नः कायरोगापहारकः ॥ २०३ ॥

कार्यकारणकर्तृस्थः कार्यकारणकारकः ।
कार्यकारणसंपन्नः कार्यकारणसिद्धिदः ॥ २०४ ॥

काव्यामृतरसास्वादी काव्यामृतरसात्मकः ।
काव्यामृतरसाभिज्ञः काव्यामृतरसप्रियः ॥ २०५ ॥

कादिवर्णैकजनकः कादिवर्णप्रवर्तकः ।
कादिवर्णविवेकज्ञः कादिवर्णविनोदवान् ॥ २०६ ॥

कादिहादिमनुज्ञाता कादिहादिमनुप्रियः ।
कादिहादिमनूद्धारकारकः कादिसंज्ञकः ॥ २०७ ॥

कालुष्यरहिताकारः कालुष्यैकविनाशनः ।
कारागृहविमुक्तात्मा कारागृहविमोचनः ॥ २०८ ॥

कामात्मा कामदः कामी कामेशः कामपूरकः ।
कामहृत्कामजनकः कामिकामप्रदायकः ॥ २०९ ॥

कामपालः कामभर्ता कामकेलिकलानिधिः ।
कामकेलिकलासक्तः कामकेलिकलाप्रियः ॥ २१० ॥

कामबीजैकवरदः कामबीजसमन्वितः ।
कामजित्कामवरदः कामक्रीडातिलालसः ॥ २११ ॥

कामार्तिशमनः कामालंकृतः कामसंस्तुतः ।
कामिनीकामजनकः कामिनीकामवर्धनः ॥ २१२ ॥

कामिनीकामरसिकः कामिनीकामपूरकः ।
कामिनीमानदः कामकलाकौतूहलप्रियः ॥ २१३ ॥

कामिनीप्रेमजनकः कामिनीप्रेमवर्धनः ।
कामिनीहावभावज्ञः कामिनीप्रीतिवर्धनः ॥ २१४ ॥

कामिनीरूपरसिकःकामिनीरूपभूषणः ।
कामिनीमानसोल्लासी कामिनीमानसास्पदः ॥ २१५ ॥

कामिभक्तजनत्राता कामिभक्तजनप्रियः ।
कामेश्वरः कामदेवः कामबीजैकजीवनः ॥ २१६ ॥

कालिन्दीविषसंहर्ता कालिन्दीप्राणजीवनः ।
कालिन्दीहृदयानन्दी कालिंदीनीरवल्लभः ॥ २१७ ॥

कालिन्दीकेलिकुशलः कालिन्दीप्रीतिवर्धनः ।
कालिन्दीकेलिरसिकः कालिन्दीकेलिलालसः ॥ २१८ ॥

कालिन्दीनीरसंखेलद्गोपीयूथसमावृतः ।
कालिंदीनीरमध्यस्थः कालिंदीनीरकेलिकृत् ॥ २१९ ॥

कालिंदीरमणासक्तः कालिनागमदापहः ।
कामधेनुपरित्राता कामधेनुसमावृतः ॥ २२० ॥

काञ्चनाद्रिसमानश्रीः कांचनाद्रिनिवासकृत् ।
कांचनाभूषणासक्तः कांचनैकविवर्धनः ॥ २२१ ॥

कांचनाभश्रियासक्तः कांचनाभश्रियाश्रितः ।
कार्तिकेयैकवरदः कार्तवीर्यमदापहः ॥ २२२ ॥

किशोरीनायिकासक्तः किशोरीनायिकाप्रियः ।
किशोरीकेलिकुशलः किशोरीप्राणजीवनः ॥ २२३ ॥

किशोरीवल्लभाकारः किशोरीप्राणवल्लभः ।
किशोरीप्रीतिजनकः किशोरीप्रियदर्शनः ॥ २२४ ॥

किशोरीकेलिसंसक्तः किशोरीकेलिवल्लभः ।
किशोरीकेलिसंयुक्तः किशोरीकेलिलोलुपः ॥ २२५ ॥

किशोरीहृदयानन्दी किशोरीहृदयास्पदः ।
किशोरीशः किशोरात्मा किशोरः किंशुकाकृतिः ॥ २२६ ॥

किंशुकाभरणालक्ष्यः किंशुकाभरणान्वितः ।
कीतिमान्कीर्तिजनकः कीर्तनीयपराक्रमः ॥ २२७ ॥

कीर्तनीययशोराशिः कीर्तिस्थः कीर्तनप्रियः ।
कीर्तिश्रीमतिदः कीशः कीर्तिज्ञः कीर्तिवर्धनः ॥ २२८ ॥

क्रियात्मकः क्रियाधारः क्रियाभासः क्रियास्पदः ।
कीलालामलचिद्वृत्तिःकीलालाश्रयकारणः ॥ २२९ ॥

कुलधर्माधिपाधीशः कुलधर्माधिपप्रियः ।
कुलधर्मपरित्राता कुलधर्मपतिस्तुतः ॥ २३० ॥

कुलधर्मपदाधारः कुलधर्मपदाश्रयः ।
कुलधर्मपतिप्राणः कुलधर्मपतिप्रियः ॥ २३१ ॥

कुलधर्मपतित्राता कुलधर्मैकरक्षकः ।
कुलधर्मसमासक्तः कुलधर्मैकदोहनः ॥ २३२ ॥

कुलधर्मसमुद्धर्ता कुलधर्मप्रभाववित् ।
कुलधर्मसमाराध्यः कुलधर्मधुरंधरः ॥ २३३ ॥

कुलमार्गरतासक्तः कुलमार्गरताश्रयः ।
कुलमार्गसमासीनः कुलमार्गसमुत्सुकः ॥ २३४ ॥

कुलधर्माधिकारस्थः कुलधर्मविवर्धनः ।
कुलाचारविचारज्ञः कुलाचारसमाश्रितः ।। २३५ ।।

कुलाचारसमायुक्तः कुलाचारसुखप्रदः ।
कुलाचारातिचतुरः कुलाचारातिवल्लभः ।। २३६ ।।

कुलाचारपवित्राङ्गः कुलाचारप्रमाणकृत् ।
कुलवृक्षैकजनकः कुलवृक्षविवर्धनः ।। २३७ ।।

कुलवृक्षपरित्राता कुलवृक्षफलप्रदः ।
कुलवृक्षफलाधीशः कुलवृक्षफलाशनः ।। २३८ ।।

कुलमार्गकलाभिज्ञः कुलमार्गकलान्वितः ।
कुकर्मनिरतातीतः कुकर्मनिरतांतकः ।। २३९ ।।

कुकर्ममार्गरहितः कुकर्मैकनिषूदनः ।
कुकर्मरहिताधीशः कुकर्मरहितात्मकः ।। २४० ।।

कुकर्मरहिताकारः कुकर्मरहितास्पदः ।
कुकर्मरहिताचारःकुकर्मरहितोत्सवः ।। २४१ ।।

कुकर्मरहितोद्देशः कुकर्मरहितप्रियः ।
कुकर्मरहितांतःस्थः कुकर्मरहितेश्वरः ।। २४२ ।।

कुकर्मरहितस्त्रीशः कुकर्मरहितप्रजः ।
कुकर्मोद्भवपापघ्नः कुकर्मोद्भवदुःखहा ।। २४३ ।।

कुतर्करहिताधीशः कुतर्करहिताकृतिः ।
कूटस्थसाक्षी कूटात्मा कूटस्थाक्षरनायकः ।। २४४ ।।

कूटस्थाक्षरसंसेव्यः कूटस्थाक्षरकारणः ।
कुबेरबंधुः कुशलः कुंभकर्णविनाशनः ।। २४५ ।।

कूर्माकृतिधरः कूर्मः कूर्मस्थावनिपालकः ।
कुमारीवरदः कुस्थः कुमारीगणसेवितः ॥ २४६ ॥

कुशस्थलीसमासीनः कुशदैत्यविनाशनः ।
केशवः क्लेशसंहर्ता केशिदैत्यविनाशनः ॥ २४७ ॥

क्लेशहीनमनोवृत्तिः क्लेशहीनपरिग्रहः ।
क्लेशातीतपदाधीशः क्लेशातीतजनप्रियः ॥ २४८ ॥

क्लेशातीतशुभाकारः क्लेशातीतसुखास्पदः ।
क्लेशातीतसमाजस्थः क्लेशातीतमहामतिः ॥ २४९ ॥

क्लेशातीतजनत्राता क्लेशहीनजनेश्वरः ।
क्लेशहीनस्वधर्मस्थः क्लेशहीनविमुक्तिदः ॥ २५० ॥

क्लेशहीननराधीशःक्लेशहीननरोत्तमः ।
क्लेशातिरिक्तसदनः क्लेशमूलनिकंदनः ॥ २५१ ॥

क्लेशातिरिक्तभावस्थः क्लेशहीनैकवल्लभः ।
क्लेशहीनपदांतस्थःक्लेशहीनजनार्दनः ॥ २५२ ॥

केसरांकितभालश्रीः केसरांकितवल्लभः ।
केसरालिप्तहृदयः केसरालिप्तसद्भुजः ॥ २५३ ॥

केसरांकितवासश्रीः केसरांकितविग्रहः ।
केसराकृतिगोपीशः केसरामोदवल्लभः ॥ २५४ ॥

केसरामोदमधुपः केसरामोदसुंदरः ।
केसरामोदमुदितःकेसरामोदवर्धनः ॥ २५५ ॥

केसरार्चितभालश्रीः केसरार्चितविग्रहः ।
केसरार्चितपादाब्जः केसरार्चितकुण्डलः ॥ २५६ ॥

केसरामोदसंपन्नःकेसरामोदलोलुपः ।
केतकीकुसुमासक्तःकेतकीकुसुमप्रियः ॥ २५७ ॥

केतकीकुसुमाधीशःकेतकीकुसुमांकितः ।
केतकीकुसुमामोदवर्धनः केतकीप्रियः ॥ २५८ ॥

केतकीशोभिताकारः केतकीशोभिताम्बरः ।
केतकीकुसुमामोदवल्लभः केतकीश्वरः ॥ २५९ ॥

केतकीसौरभानन्दी केतकीसौरभप्रियः ।
केयूरालंकृतभुजःकेयूरालंकृतात्मकः ॥ २६० ॥

केयूरालंकृतश्रीशःकेयूरप्रियदर्शनः ।
केदारेश्वरसंयुक्तः केदारेश्वरवल्लभः ॥ २६१ ॥

केदारेश्वरपार्श्वस्थः केदारेश्वरभक्तपः ।
केदारकल्पसारज्ञः केदारस्थलवासकृत् ॥ २६२ ॥

केदाराश्रितभीतिघ्नः केदाराश्रितमुक्तिदः ।
केदारावासिवरदः केदाराश्रितदुःखहा ॥ २६३ ॥

केदारपोषकः केशः केदारान्नविवर्द्धनः ।
केदारपुष्टिजनकः केदारप्रियदर्शनः ॥ २६४ ॥

कैलासेशसमाजस्थः कैलासेशप्रियंकरः ।
कैलासेशसमायुक्तः कैलासेशप्रभाववित् ॥ २६५ ॥

कैलासाधीशशत्रुघ्नः कैलासपतितोषकः ।
कैलासाधीशसहितः कैलासाधीशवल्लभः ॥ २६६ ॥

कैवल्यमुक्तिजनकः कैवल्यपदवीश्वरः ।
कैवल्यपदवीत्राता कैवल्यपदवीप्रियः ॥ २६७ ॥

कैवल्यज्ञानसंपन्नः कैवल्यज्ञानसाधनः ।
कैवल्यज्ञानगम्यात्मा कैवल्यज्ञानदायकः ।। २६८ ।।

कैवल्यज्ञानसंसिद्धः कैवल्यज्ञानदीपकः ।
कैवल्यज्ञानविख्यातःकैवल्यैकप्रदायकः ।। २६९ ।।

क्रोधलोभभयातीतः क्रोधलोभविनाशनः ।
क्रोधारिः क्रोधहीनात्मा क्रोधहीनजनप्रियः ।। २७० ।।

क्रोधहीनजनाधीशः क्रोधहीनप्रजेश्वरः ।
कोपतापोपशमनः कोपहीनवरप्रदः ।। २७१ ।।

कोपहीननरत्राता कोपहीनजनाधिपः ।
कोपहीननरांतःस्थःकोपहीनप्रजापतिः ।। २७२ ।।

कोपहीनप्रियासक्तः कोपहीनजनार्तिहा ।
कोपहीनपदाधीशः कोपहीनपदप्रदः ।। २७३ ।।

कोपहीननरस्वामी कोपहीनस्वरूपधृक् ।
कोकिलालापसंगीतः कोकिलालापवल्लभः ।। २७४ ।।

कोकिलालापलीनात्मा कोकिलालापकारकः ।
कोकिलालापकांतेशः कोकिलालापभाववित् ।। २७५ ।।

कोकिलागानरसिकः कोकिलास्वरवल्लभः ।
कोटिसूर्यसमानश्रीः कोटिचन्द्रामृतात्मकः ।। २७६ ।।

कोटिदानवसंहर्ता कोटिकंदर्पदर्पहा ।
कोटिदेवेन्द्रसंसेव्यः कोटिब्रह्मार्चिताकृतिः ।। २७७ ।।

कोटिब्रह्माण्डमध्यस्थः कोटिविद्युत्समद्युतिः ।
कोटयश्वमेधपापघ्नः कोटिकामेश्वराकृतिः ।। २७८ ।।

कोटिमेघसमोदारः कोटिवह्निसुदुःसहः ।
कोटिपाथोधिगंभीरः कोटिमेरुसमस्थिरः ॥ २७९ ॥

कोटिगोपीजनाधीशः कोटिगोपांगनावृतः ।
कोटिदैत्येशदप्रघ्नः कोटिरुद्रपराक्रमः ॥ २८० ॥

कोटिभक्तार्तिशमनः कोटिदुष्टविमर्दनः ।
कोटिभक्तजनोद्धर्ता कोटियज्ञफलप्रदः ॥ २८१ ॥

कोटिदेवर्षिसंसेव्यः कोटिब्रह्मर्षिमुक्तिदः ।
कोटिराजर्षिसंस्तुत्यः कोटिब्रह्मांडमंडनः ॥ २८२ ॥

कोट्याकाशप्रकाशात्मा कोटिवायुमहाबलः ।
कोटितेजोमयाकारः कोटिभूमिसमक्षमी ॥ २८३ ॥

कोटिनीरसमस्वच्छः कोटिदिग्ज्ञानदायकः ।
कोटिब्रह्मांडजनकः कोटिब्रह्मांडपालकः ॥ २८४ ॥

कोटिब्रह्मांडसंहर्ता कोटिब्रह्मांडबोधकः ।
कोटिवाक्पतिवाचालःकोटिशुक्रकवीश्वरः ॥ २८५ ॥

कोटिद्विजसमाचारः कोटिहेरम्बविघ्नहा ।
कोटिमानसहंसात्मा कोटिमानससंस्थितः ॥ २८६ ॥

कोटिच्छलकरारातिः कोटिदांभिकनाशनः ।
कोटिशून्यपथच्छेत्ता कोटिपाखंडखंडनः ॥ २८७ ॥

कोटिशेषधराधारः कोटिकालप्रबोधकः ।
कोटिवेदांतसंवेद्यः कोटिसिद्धांतनिश्चयः ॥ २८८ ॥

कोटियोगीश्वराधीशः कोटियोगैकसिद्धिदः ।
कोटिधामाधिपाधीशः कोटिलोकैकपालकः ॥ २८९ ॥

कोटियज्ञैकभोक्ता च कोटियज्ञफलप्रदः ।
कोटिभक्तहृदंतस्थः कोटिभक्ताभयप्रदः ॥ २९० ॥

कोटिजन्मार्तिशमनः कोटिजन्माघनाशनः ।
कोटिजन्मांतरज्ञानप्रदाता कोटिभक्तपः ॥ २९१ ॥

कोटिशक्तिसमायुक्तः कोटिचैतन्यबोधकः ।
कोटिचक्रावृताकारः कोटिचक्रप्रवर्तकः ॥ २९२ ॥

कोटिचक्रार्चनत्राता कोटिवीरावलीवृतः ।
कोटितीर्थजलांतस्थः कोटितीर्थफलप्रदः ॥ २९३ ॥

कोमलामलचिद्वृत्तिः कोमलामलमानसः ।
कौस्तुभोद्भासितोरस्कः कौस्तुभोद्भासिताकृतिः ॥ २९४ ॥

कौरवानीकसंहर्ता कौरवार्णवकुंभभूः ।
कौंतेयाश्रितपादाब्जः कौन्तेयाभयदायकः ॥ २९५ ॥

कौन्तेयारातिसंहर्ता कौन्तेयप्रतिपालकः ।
कौन्तेयानन्दजनकः कौन्तेयप्राणजीवनः ॥ २९६ ॥

कौन्तेयाचलभावज्ञः कौन्तेयाचलमुक्तिदः ।
कौमुदीमुदिताकारः कौमुदीमुदिताननः ॥ २९७ ॥

कौमुदीमुदितप्राणः कौमुदीमुदिताशयः ।
कौमुदीमोदमुदितः कौमुदीमोदवल्लभः ॥ २९८ ॥

कौमुदीमोदमधुपःकौमुदीमोदवर्धनः ।
कौमुदीमोदमानात्मा कौमुदीमोदसुंदरः ॥ २९९ ॥

कौमुदीदर्शनानन्दी कौमुदीदर्शनोत्सुकः ।
कौसल्यापुत्रभावस्थः कौसल्यानंदवर्धनः ॥ ३०० ॥

कंसारिः कंसहीनात्मा कंसपक्षनिकंदनः।
कंकालः कंकवरदःकंटकक्षयकारकः ॥ ३०१ ॥

कन्दर्पदर्पशमनः कंदर्पाभिमनोहरः।
कंदर्पकामनाहीनः कंदर्पज्वरनाशनः ॥ ३०२ ॥
कन्दर्पज्वरनाशन ओं नम इति
इति श्रीसर्वसौभाग्यवर्धनं श्रीपतिप्रियम्।
नाम्नामक्षरकादीनां सहस्रं परिकीर्तितम् ॥ ३०३ ॥

सर्वापराधशमनं रहस्यं श्रुतिगोचरम्।
कलिकालैकदमनं क्रूरशत्रुनिकंदनम् ॥ ३०४ ॥

क्रूरपापसमूहघ्नं क्रूरकर्मविनाशनम्।
क्रूरासुरौघसंहारकारकं क्लेशनाशनम् ॥ ३०५ ॥

कुमार्गदलनं कष्टहरणं कल्मषापहम्।
कुबुद्धिशमनं क्रोधकंदनं कांतिवर्द्धनम् ॥ ३०६ ॥

कुविद्यादमनं काममर्दनं कीर्तिदायकम्।
कुतर्कनाशनं कांतं कुपथार्णवशोषणम् ॥ ३०७ ॥

कोटिजन्मार्जितारिष्टहरं कालभयापहम्।
कोटिजन्मार्जिताज्ञाननाशनैकदिवाकरम् ॥ ३०८ ॥

कापटचपटलध्वंसिकार्पण्यैकहुताशनम्।
कालुष्यभावशमनं कीर्तिश्रीमतिदं सताम् ॥ ३०९ ॥

कोपोपतापशमनं कंसारिस्मृतिदायकम्।
कुलाचारविचारस्थं कुलधर्मप्रवर्तकम् ॥ ३१० ॥

कुलधर्मरताभीष्टसिद्धिदं कुलदीपकम्।
कुत्सामार्गनिराकर्तृ कुपथाचारवर्जितम् ॥ ३११ ॥

कल्याणमंगलागारं कल्पवृक्षसमं सताम्।
कौटिल्यभावशमनं काशीवासफलप्रदम्।। ३१२ ।।

अतिगुह्यतरं पुंसां भोगमोक्षैकसाधनम्।
अत्यंतस्नेहभावेन युष्मदग्रेप्रकाशितम्।। ३१३ ।।

न वक्तव्यं न वक्तव्यं न वक्तव्यं कदाचन।
पाप्यग्रे कुटिलाग्रे च राग्यग्रे पिशुनाय वै।। ३१४ ।।

द्रोह्यग्रेमलिनाग्रे च कपट्यग्रे विशेषतः।
लंपटाग्रेऽभिमान्यग्रे काम्यते क्रोधिने तथा।। ३१५ ।।

लोभ्यग्रे तस्कराग्रे च गर्वाहंकारभाजिने।
संसारासक्तचित्ताग्रे वाद्यग्रे घातिनेऽपि वा।। ३१६ ।।

मताभिमानिने गोप्यं मदीयं स्तोत्रमुत्तमम्।
वाच्यं शांताय भक्ताय निर्मलाय दयालवे।। ३१७ ।।

संतोषिणे सुशीलाय सुपात्राय द्विजातये।
विवेकिने ज्ञानिने च मद्भक्ताय विशेषतः।। ३१८ ।।

य इदं शृणुते नित्यं पठतेऽहर्निशं जनः।
माहात्म्यं तस्य पुण्यस्य मया वक्तुं न शक्यते।। ३१९ ।।

एकवारमिदं स्तोत्रं यः शृणोति नरोत्तमः।
भोगमोक्षप्रधानः स भविष्यति न संशयः।। ३२० ।।

किं पुनः पठनादस्य सर्वसिद्धिःकरेस्थिता।
भोगार्थी लभते भोगान्योगार्थी योगसाधनाम्।। ३२१ ।।

कामार्थी लभते कामान्प्रजार्थी लभते प्रजाम्।
विद्यार्थी लभते विद्यां मोक्षार्थी मोक्षमव्ययम्।। ३२२ ।।

द्रव्यार्थी लभते द्रव्यं प्रियार्थी लभते प्रियम् ।
मानार्थी लभते मानं राज्यार्थी राज्यमुत्तमम् ।। ३२३ ।।

ज्ञानार्थी लभते ज्ञानं सुखार्थी लभते सुखम् ।
कीर्त्यर्थी लभते कीर्तिं ब्रह्मार्थी ब्रह्म निर्गुणम् ।। ३२४ ।।

पुष्ट्यर्थी लभते पुष्टिं तुष्ट्यर्थी तुष्टिमात्मनि ।
निरीहो लभते नूनं मत्पदं देवदुर्लभम् ।। ३२५ ।।

किं दानैः किं व्रतैस्तीर्थैर्यज्ञयागादिभिस्तथा ।
अस्य श्रवणमात्रेण सर्वयज्ञफलं लभेत् ।। ३२६ ।।

नातःपरतरं ज्ञानं नातःपरतरं तपः ।
नातःपरतरं ध्यानं नातः परतरो जपः ।। ३२७ ।।

नातः परतरा सिद्धिर्नातःपरतरो मखः ।
नातःपरतरं द्रव्यं नातःपरतरा क्रिया ।। ३२८ ।।

य इदं पठते भक्त्या शृणुयाद्वा समाहितः ।
स ज्ञानी स तपस्वी च स ध्यानी जयतत्परः ।। ३२९ ।।

स सिद्धोभाग्यवाञ्श्रीमान् क्रियावान्बुद्धिमानपि ।
जितं तेन जगत्सर्वं येनेदं पठितं श्रुतम् ।। ३३० ।।

किं पुनर्भक्तिभावेन भोगमोक्षप्रदं द्रुतम् ।
कोटिजन्मार्जितैः पुण्यैर्लभ्यते भाग्यतो यदाः ।। ३३१ ।।

तदा भाग्योदयः पुंसां नात्र कार्या विचारणा ।
सारात्सारतरं शास्त्रं तत्रापि ज्ञानदायकम् ।। ३३२ ।।

ज्ञानाद्ध्यानं परं श्रेष्ठं तत्रापि लयता यथा ।
तथैवेदं महास्तोत्रं विना मत्कृपया किल ।। ३३३ ।।

दुर्लभं त्रिषु लोकेषु सर्वसिद्धिप्रदं सताम्।
यथा भक्तिस्त्रिलोकेषु दुर्लभा मम देहिनाम्।। ३३४ ।।

तथैवेदं महास्तोत्रं सद्यः सायुज्यदायकम्।
सर्वापराधशमनं लोके कल्पद्रुमप्रभम्।। ३३५ ।।

यथा सुदर्शनं लोके दुष्टदैत्यनिबर्हणम्।
तथैवेदं परं स्तोत्रं कामादिकभयापहम्।। ३३६ ।।

अस्यैकावर्तनात्पापं नश्यत्याजन्मसंचितम्।
दशावर्तनतः पुंसां शतजन्मांतरार्चितम्।। ३३७ ।।

शतावर्तनमात्रेण देवरूपो भवेन्नरः।
आवर्तनसहस्रैश्च मद्गतिं लभतेऽचलाम्।। ३३८ ।।

लक्षतो मम सायुज्यं दशलक्षात्स्वयं हरिः।
तस्मान्नैव प्रदातव्यं मदीयं स्तोत्रमुत्तमम्।। ३३९ ।।

पुत्रकामोऽयुतान्पाठान्कारयित्वा ममालये।
सहस्रनामभिर्दिव्यैर्जुहुयाद्घृतपायसैः ।। ३४० ।।

शर्करामधुसंयुक्तैर्बिल्वीदलसमन्वितैः।
ब्राह्मणान्भोजयेद्भक्त्या नामसंख्यामितानिह।। ३४१ ।।

राज्यकामोऽयुतान्नित्यं पठेद्वा पाठयेद्द्विजान्।
शिवालये सहस्रैश्च होमयेदाज्यपायसैः ।। ३४२ ।।

ब्राह्मणान्भोजयेन्नूनमयुतैकं यथाविधि।
दक्षिणां दापयेच्छक्त्या वित्तशाठ्यं न कारयेत्।। ३४३

सहस्रमेकं कन्यार्थी पठेद्वा पाठयेत्किल।
देव्यालये तथा नित्यं धनकामोपि पाठयेत्।। ३४४

कीर्तिकामोऽयुतं भक्त्या पठेद्वृन्दावने सदा ।
जयकामो हि दुर्गायां शत्रुसंहारकारकः ।
आयुःकामो नदीतीरे ज्ञानार्थी पर्वतोपरि ॥ ३४५ ॥

मोक्षार्थी भक्तिभावेन मंदिरे मम सन्निधौ ।
पाठसंख्यान्द्विजान्भोज्यान्पायसैः शर्कराप्लुतैः ॥ ३४६ ॥

जुहुयाद्घृतधाराभिर्मम प्रीतिविवर्धनैः ।
सर्वकामप्रदं नाम्नां सहस्रं मम दुर्लभम् ॥ ३४७ ॥

कामनारहितानां च मुक्तिदं भवसागरात् ।
इदं सहस्रनामाख्यं स्तोत्रमानंदवर्द्धनम् ॥ ३४८ ॥

सर्वापराधशमनं पठितव्यमहर्निशम् ।
अन्यथा न गतिर्नूनं त्रिषु लोकेषु कुत्रचित् ॥ ३४९ ॥

वैष्णवानां विशेषेण वैष्णवा मामका जनाः ।
दुर्लभं दुष्टजीवानां मदीयं स्तोत्रमद्भुतम् ॥ ३५० ॥

लोकेऽस्मिन्दुर्लभो गोप्यो मुक्तिमार्गो मनीषिणम् ।
सुलभो मम भक्तानां स्तोत्रेणानेन निश्चितम् ॥ ३५१ ॥

तावद्गर्जंति पापानि तावद्गर्जन्ति शत्रवः ।
तावद्गर्जति दारिद्र्यं यावत्स्तोत्रं न लभ्यते ॥ ३५२ ॥

किमत्र बहुनोक्तेन त्वदग्रे गोपिका मया ।
मम प्राणाधिकं स्तोत्रं सदानन्दविवर्धनम् ॥ ३५३ ॥

अत्यन्तस्नेहभावेन त्वदीयेन व्रजांगनाः ।
मया प्रकाशितं स्तोत्रं त्वद्भक्तयाऽहं वशीकृतः ॥ ३५४ ॥

एवमुक्त्वा हृषीकेशः शरणागतवत्सलः ।
प्रहसन्सहसोत्थाय क्रीडां चक्रे पुनर्जले ॥ ३५५ ॥

नारद उवाच-
एतद्गुह्यतरं स्तोत्रं दुर्लभं देहधारिणाम्।
मया तदाज्ञया प्रोक्तं तवाग्रे व्यासभावन ॥ ३५६ ॥

त्वयैतन्नैव वक्तव्यं कस्याग्रेऽपि विनाऽऽज्ञया।
स्वशिष्याग्रे शुकाग्रे वा गोपनीयं धरातले ॥ ३५७ ॥

एतदेव स्वयं साक्षादगतीनां गतिप्रदः।
बुद्ध्याविष्टनिजांशेन पूर्णानन्दः स्वलीलया ॥ ३५८ ॥

कलिग्रस्तान् जनान्स्वीयानुद्धर्तुं करुणानिधिः।
स्वयमेवात्र विख्यातं करिष्यति न संशयः ॥ ३५९ ॥

एतद्दिव्यसहस्रनाम परमानन्दैकसंवर्धनं
लोकेस्मिन्किल कादिनामरचनालंकारशोभान्वितम्।
येषां कर्णपुटे पतिष्यति महाभाग्यादिहालौकिकं
तेषां नैव किमप्यलभ्यमचिरात्कल्पद्रुमाभं सताम्॥ ३६०

(श्रीब्रह्मांडपुराणेऽध्यात्मकभागवते श्रुतिरहस्ये)

॥ श्रीः ॥

## ककारादिश्रीकृष्णसहस्रनामावलिः

ओं कृष्णाय नमः । कृष्णात्मकाय । कृष्णस्वरूपाय । कृष्णनामधृते । कृष्णाङ्गाय । कृष्णदैवत्याय । कृष्णारक्तविलोचनाय । कृष्णाश्रयाय । कृष्णवर्त्मने । कृष्णालक्ताभिरक्षकाय । कृष्णेशप्रीतिजनकाय । कृष्णेशप्रियकारकाय । कृष्णेशारिष्टसंहर्त्रे । कृष्णेशप्राणवल्लभाय । कृष्णेशानन्दजनकाय । कृष्णेशायुर्विवर्धनाय ।

कृष्णेशारिसमूहघ्नाय । कृष्णेशाभीष्टसिद्धिदाय । कृष्णाधीशाय । कृष्णकेशाय नमः ।२०

ओं कृष्णानन्दविवर्धनाय नमः । कृष्णागरुसुगन्धाढ्याय । कृष्णागरुसुगन्धविदे । कृष्णागरुविवेकज्ञाय । कृष्णागरुविलेपनाय । कृतज्ञाय । कृतकृत्यात्मने । कृपासिन्धवे । कृपाकराय । कृष्णानन्दैकवरदाय । कृष्णानन्दपदाश्रयाय । कमलावल्लभाकाराय । कलिघ्नाय । कमलापतये । कमलानन्दसंपन्नाय । कमलासेविताकृतये । कमलामानसोल्लासिने । कमलामानदायकाय । कमलालंकृताकाराय । कमलाश्रितविग्रहाय नमः । ४०

ओं कमलामुखपद्मार्काय नमः । कमलाकरपूजिताय । कमलाकरमध्यस्थाय । कमलाकरतोषिताय । कमलाकरसंसेव्याय । कमलाकरभूषिताय । कमलाकरभावज्ञाय । कमलाकरसंयुताय । कमलाकरपार्श्वस्थाय । कमलाकररूपवते । कमलाकरशोभाढ्याय । कमलाकरपङ्कजाय । कमलाकरपापघ्नाय । कमलाकरपुष्टिकृते । कमलारूपसौभाग्यवर्धनाय । कमलेक्षणाय । कमलाकलितांघ्र्यब्जाय । कमलाकलिताकृतये । कमलाहृदयानन्दवर्धनाय । कमलाप्रियाय नमः । ६०

ओं कमलाचलचित्तात्मने नमः । कमलालंकृताकृतये । कमलाचलभावज्ञाय । कमलालिङ्गिताकृतये । कमलामलनेत्रश्रिये । कमलाचलमानसाय । कमलापरमानन्दवर्धनाय । कमलाननाय । कमलानन्दसौभाग्यवर्धनाय । कमलाश्रयाय । कमलाविलसत्पाणये । कमलामललोचनाय । कमलामलफालश्रिये । कमलाकरपल्लवाय । कमलेशाय । कमलभुवे । कमलानन्ददायकाय । कमलोद्भवभीतिघ्नाय । कमलोद्भवसंस्तुताय । कमलाकरपाशाढ्याय नमः । ८०

ओं कमलोद्भवपालकाय नमः । कमलासनसंसेव्याय । कमलासनसंस्थिताय । कमलासनरोगघ्नाय । कमलासनपापघ्ने । कमलोदरमध्यस्थाय । कमलोदरदीपनाय । कमलोदरसंपन्नाय । कमलोदरसुन्दराय । कनकालंकृताकाराय । कनकालङ्कृताम्बराय । कनकालंकृतागाराय । कनकालंकृतासनाय । कनकालङ्कृतास्यश्रिये । कनकालंकृतास्पदाय । कनकालंकृतांघ्र्यब्जाय । कनकालङ्कृतोदराय । कनकाम्बरशोभाढ्याय । कनकांबरभूषणाय । कनकोत्तमभालश्रिये नमः । १००

ओं कनकोत्तमरूपधृषे नमः । कनकागारमध्यस्थाय । कनकागारकारकाय । कनकाचलमध्यस्थाय । कनकाचलपालकाय । कनकाचलशोभाढ्याय । कनकाचलभूषणाय । कनकैकप्रजाकर्त्रे । कनकैकप्रदायकाय । कलाननाय । कलरवाय । कलस्त्रीपरिवेष्टिताय । कलहंसपरित्रात्रे । कलहंसपराक्रमाय । कलहंससमानश्रिये । कलहंसप्रियङ्कराय । कलहंसस्वभावस्थाय । कलहंसैकमानसाय । कलहंससमारूढाय । कलहंससमप्रभाय नमः । १२०

ओं कलहंसविवेकज्ञाय नमः । कलहंसगतिप्रदाय । कलहंसपरित्रात्रे । कलहंससुखास्पदाय । कलहंसकुलाधीशाय । कलहंसकुलास्पदाय । कलहंसकुलाधाराय । कलहंसकुलेश्वराय । कलहंसकुलाचारिणे । कलहंसकुलप्रियाय । कलहंसकुलत्रात्रे । कलहंसकुलात्मकाय । कवीशाय । कविभावस्थाय । कविनाथाय । कविप्रियाय । कविमानसहंसात्मने । कविवंशविभूषणाय । कविनायकसंसेव्याय । कविनायकपालकाय नमः । १४०

ओं कविवंशैकवरदाय नमः । कविवंशशिरोमणाये । कविवंशविवेकज्ञाय । कविवंशप्रबोधकाय । कविवंशपरित्रात्रे । कविवंशप्रभावविदे । कवित्वामृतसंसिद्धाय । कवित्वामृतसागराय । कवित्वाकारसंयुक्ताय । कवित्वाकारपालकाय । कवित्वाद्वैतभावस्थाय । कवित्वाश्रयकारकाय । कवीन्द्रहृदयानन्दिने । कवीन्द्रहृदयास्पदाय । कवीन्द्रहृदयान्तःस्थाय । कवीन्द्रज्ञानदायकाय । कवीन्द्रहृदयांभोजप्रकाशैकदिवाकराय । कवीन्द्रहृदयांभोजाह्लादनैकनिशाकराय । कवीन्द्रहृदयाब्जस्थाय । कवीन्द्रप्रतिबोधकाय नमः ।१६०

ओं कवीन्द्रानन्दजनकाय नमः । कवीन्द्राश्रितपङ्कजाय । कविशब्दैकवरदाय । कविशब्दैकदोहनाय । कविशब्दैकभावस्थाय । कविशब्दैककारणाय । कविशब्दैकसंस्तुत्याय । कविशब्दैकभूषणाय । कविशब्दैकरसिकाय । कविशब्दविवेकविदे । कवित्वब्रह्मविख्याताय । कवित्वब्रह्मगोचराय । कविवाणीविवेकज्ञाय । कविवाणीविभूषणाय । कविवाणीसुधास्वादिने । कविवाणीसुधाकराय । कविवाणीविवेकस्थाय । कविवाणीविवेकविदे । कविवाणीपरित्रात्रे । कविवाणीविलासवते । नमः । १८०

ओं कविशक्तिप्रदात्रे नमः । कविशक्तिप्रवर्तकाय । कविशक्तिसमूहस्थाय । कविशक्तिकलानिधये । कलाकोटिसमायुक्ताय । कलाकोटिसमावृताय । कलाकोटिप्रकाशस्थाय । कलाकोटिप्रवर्तकाय । कलानिधिसमाकाराय । कलानिधिसमन्विताय । कलाकोटिपरित्रात्रे । कलाकोटिप्रवर्धनाय । कलानिधिसुधास्वादिने । कलानिधिसमाश्रिताय । कलङ्करहिताकाराय । कलङ्करहितास्पदाय । कलङ्करहितानन्दाय । कलङ्करहितात्मकाय । कलङ्करहिताभासाय । कलङ्करहितोदयाय नमः ।२००

ओं कलङ्करहितोद्देशाय नमः । कलङ्करहिताननाय । कलङ्करहितश्रीशाय । कलङ्करहितस्तुतये । कलङ्करहितोत्साहाय । कलङ्करहितप्रियाय । कलङ्करहितोच्चाराय । कलङ्करहितेन्द्रियाय । कलङ्करहिताकाराय । कलङ्करहितोत्सवाय । कलङ्काङ्कितदुष्टघ्नाय । कलङ्काङ्कितधर्मघ्ने । कलङ्काङ्कितकर्मारये । कलङ्काङ्कितमार्गहृते । कलङ्काङ्कितदुर्दर्शाय । कलङ्काङ्कितदुस्सहाय । कलङ्काङ्कितदूरस्थाय । कलङ्काङ्कितदूषणाय । कलहोत्पत्तिसंहर्त्रे । कलहोत्पत्तिकृद्रिपवे नमः । २२०

ओं कलहातीतधामस्थाय नमः । कलहातीतनायकाय । कलहातीततत्त्वज्ञाय । कलहातीतवैभवाय । कलहातीतभावस्थाय । कलहातीतसत्तमाय । कलिकालबलातीताय । कलिकालविलोपकाय । कलिकालैकसंहर्त्रे । कलिकालैकदूषणाय । कलिकालकुलध्वंसिने । कलिकालकुलापहाय । कलिकालभयच्छेत्रे । कलिकालमदापहाय । कलिक्लेशविनिर्मुक्ताय । कलिक्लेशविनाशनाय । कलिग्रस्तजनत्रात्रे । कलिग्रस्तनिजार्तिघ्ने । कलिग्रस्तजगन्मित्राय । कलिग्रस्तजगत्पतये नमः । २४०

ओं कलिग्रस्तजगत्त्रात्रे नमः । कलिपाशविनाशनाय । कलिमुक्तिप्रदात्रे । काय । कलिमुक्तकलेवराय । कलिमुक्तमनोवृत्तये । कलिमुक्तमहामतये । कलिकालमतातीताय । कलिधर्मविलोपकाय । कलिधर्माधिपध्वंसिने । कलिधर्मैकखण्डनाय । कलिधर्माधिपालक्ष्याय । कलिकालविकारघ्ने । कलिकर्मकथातीताय । कलिकर्मकथारिपवे । कलिकष्टैकशमनाय । कलिकष्टविवर्जिताय । कलिघ्नाय । कलिधर्मघ्नाय । कलिधर्माधिकारघ्ने नमः । २६०

ओं कर्मविदे नमः । कर्मकृते । कर्मिणे । कर्मकाण्डैकदोहनाय । कर्मस्थाय । कर्मजनकाय । कर्मीष्टाय । कर्मसाधनाय । कर्मकर्त्रे । कर्मभर्त्रे । कर्महर्त्रे । कर्मजिते । कर्मजातजगत्त्रात्रे । कर्मजातजगत्पतये । कर्मजातजगन्मित्राय । कर्मजातजगद्गुरवे । कर्मभूतभवच्छत्राय । कर्मभूतभवार्तिघ्ने । कर्मकाण्डपरिज्ञात्रे । कर्मकाण्डप्रवर्तकाय नमः । २८०

ओं कर्मकाण्डपरित्रात्रे नमः । कर्मकाण्डप्रमाणकृते । कर्मकाण्डविवेकज्ञाय । कर्मकाण्डप्रकारकाय । कर्मकाण्डविवेकस्थाय । कर्मकाण्डैकदोहनाय । कर्मकाण्डरताभीष्टप्रदात्रे । कर्मतत्पराय । कर्मबद्धजगत्त्रात्रे । कर्मबद्धजगद्गुरवे । कर्मबन्धार्तिशमनाय । कर्मबन्धविमोचनाय । कर्मिष्ठद्विजवर्यस्थाय । कर्मिष्ठद्विजवल्लभाय । कर्मिष्ठद्विजजीवात्मने । कर्मिष्ठद्विजजीवनाय । कर्मिष्ठद्विजभावज्ञाय । कर्मिष्ठद्विजपालकाय । कर्मिष्ठद्विजजातिस्थाय । कर्मिष्ठद्विजकामदाय नमः ।३००

ओं कर्मिष्ठद्विजसंसेव्याय नमः । कर्मिष्ठद्विजपापघ्ने । कर्मिष्ठद्विजबुद्धिस्थाय । कर्मिष्ठद्विजबोधकाय । कर्मिष्ठद्विजभीतिघ्नाय । कर्मिष्ठद्विजमुक्तिदाय । कर्मिष्ठद्विजदोषघ्नाय । कर्मिष्ठद्विजकामदुहे । कर्मिष्ठद्विजसंपूज्याय । कर्मिष्ठद्विजतारकाय । कर्मिष्ठारिष्टसंहर्त्रे । कर्मिष्ठाभीष्टसिद्धिदाय । कर्मिष्ठादृष्टमध्यस्थाय । कर्मिष्टादृष्टवर्धनाय । कर्ममूलजगद्धेतवे । कर्ममूलनिकन्दनाय । कर्मबीजपरित्रात्रे । कर्मबीजविवर्धनाय । कर्मद्रुमफलाधीशाय । कर्मद्रुमफलप्रदाय नमः । ३२०

ओं कस्तूरीद्रवलिप्तांगाय नमः । कस्तूरीद्रववल्लभाय । कस्तूरीसौरभग्राहिणे । कस्तूरीमृगवल्लभाय । कस्तूरीतिलकानन्दिने ।

कस्तूरीतिलकप्रियाय। कस्तूरीतिलकाश्लेषिणे। कस्तूरीतिलकाङ्किताय। कस्तूरीवासनालीनाय। कस्तूरीवासनाप्रियाय। कस्तूरीवासनारूपाय। कस्तूरीवासनात्मकाय। कस्तूरीवासनान्तःस्थाय। कस्तूरीवासनास्पदाय। कस्तूरीचन्दनग्राहिणे। कस्तूरीचन्दनार्चिताय। कस्तूरीचन्दनागाराय। कस्तूरीचन्दनान्विताय। कस्तूरीचन्दनाकाराय। कस्तूरिचन्दनासनाय नमः। ३४०

ओं कस्तूरीचर्चितोरस्काय नमः। कस्तूरीचर्वितानानाय। कस्तूरीचर्वितश्रीशाय। कस्तूरीचर्चितांबराय। कस्तूरीचर्चितास्यश्रिये। कस्तूरीचर्चितप्रियाय। कस्तूरीमोदमुदिताय। कस्तूरीमोदवर्धनाय। कस्तूरीमोददीप्ताङ्गाय। कस्तूरीसुन्दराकृतये। कस्तूरीमोदरसिकाय। कस्तूरीमोदलोलुपाय। कस्तूरीपरमानन्दिने। कस्तूरीपरमेश्वराय। कस्तूरीदानसन्तुष्टाय। कस्तूरीदानवल्लभाय। कस्तूरीपरमाह्लादाय। कस्तूरीपुष्टिवर्धनाय। कस्तूरीमुदितात्मने। कस्तूरीमुदिताशयाय नमः। ३६०

ओं कदलीवनमध्यस्थाय नमः। कदलीवनपालकाय। कदलीवनसंचारिणे। कदलीवनवल्लभाय। कदलीदर्शनानन्दिने। कदलीदर्शनोत्सुकाय। कदलीपल्लवास्वदिने। कदलीपल्लवाश्रयाय। कदलीफलसन्तुष्टाय। कदलीफलदायकाय। कदलीफलसंपुष्टाय। कदलीफलभोजनाय। कदलीफलवर्याशिने। कदलीफलतोषिताय। कदलीफलमाधुर्यवल्लभाय। कदलीप्रियाय। कपिध्वजसमायुक्ताय। कपिध्वजपरिस्तुताय। कपिध्वजपरित्रात्रे। कपिध्वजसमाश्रिताय नमः। ३८०

ओं कपिध्वजपदान्तस्थाय नमः। कपिध्वजजयप्रदाय। कपिध्वजरथारूढाय। कपिध्वजयशःप्रदाय। कपिध्वजैकपापघ्नाय।

कपिध्वजसुखप्रदाय । कपिध्वजारिसंहर्त्रे । कपिध्वजभयापहाय । कपिध्वजमनोऽभिज्ञाय । कपिध्वजमतिप्रदाय । कपिध्वजसुहृन्मित्राय । कपिध्वजसुहृत्सखाय । कपिध्वजाङ्गनाराध्याय । कपिध्वजगतिप्रदाय । कपिध्वजाङ्गनारिघ्नाय । कपिध्वजरतिप्रदाय । कपिध्वजकुलत्रात्रे । कपिध्वजकुलारिघ्ने । कपिध्वजकुलाधीशाय । कपिध्वजकुलप्रियाय नमः । ४००

ओं कपीन्द्रसेवितांघ्र्यब्जाय नमः । कपीन्द्रस्तुतिवल्लभाय । कपीन्द्रानन्दजनकाय । कपीन्द्रश्रितविग्रहाय । कपीन्द्राश्रितपादाब्जाय । कपीन्द्राश्रितमानसाय । कपीन्द्राराधिताकाराय । कपीन्द्राभीष्टसिद्धिदाय । कपीन्द्रारातिसंहर्त्रे । कपीन्द्रातिबलप्रदाय । कपीन्द्रैकपरित्रात्रे । कपीन्द्रैकयशःप्रदाय । कपीन्द्रानन्दसंपन्नाय । कपीन्द्रानन्दवर्धनाय । कपीन्द्रध्यानगम्यात्मने । कपीन्द्रज्ञानदायकाय । कल्याणमङ्गलाकाराय । कल्याणमङ्गलास्पदाय । कल्याणमङ्गलाधीशाय । कल्याणमङ्गलप्रदाय नमः । ४२०

ओं कल्याणमङ्गलागाराय नमः । कल्याणमङ्गलात्मकाय । कल्याणानन्दसंपन्नाय । कल्याणानन्दवर्धनाय । कल्याणानन्दसहिताय । कल्याणानन्ददायकाय । कल्याणानन्दसन्तुष्टाय । कल्याणानन्दसंयुताय । कल्याणीरागसंगीताय । कल्याणीरागवल्लभाय । कल्याणीरागरसिकाय । कल्याणीरागकारकाय । कल्याणीकेलिकुशलाय । कल्याणीप्रियदर्शनाय । कल्पशास्त्रपरिज्ञात्रे । कल्पशास्त्रार्थदोहनाय । कल्पशास्त्रसमुद्धर्त्रे । कल्पशास्त्रपरिस्तुताय । कल्पकोटिशतातीताय । कल्पकोटिशतोत्तराय नमः । ४४०

ओं कल्पकोटिशतज्ञानिने नमः । कल्पकोटिशतप्रभवे । कल्पवृक्षसमाकाराय । कल्पवृक्षसमप्रभाय । कल्पवृक्षसमोदाराय ।

कल्पवृक्षसमस्थिताय । कल्पवृक्षपरित्रात्रे । कल्पवृक्षसमावृताय । कल्पवृक्षवनाधीशाय । कल्पवृक्षवनास्पदाय । कल्पान्तदहनाकाराय । कल्पन्तादहनोपमाय । कल्पान्तकालशमनाय । कल्पान्तातीतविग्रहाय । कलशोद्भवसंसेव्याय । कलशोद्भववल्लभाय । कलशोद्भवभीतिघ्नाय । कलशोद्भवसिद्धिदाय । कपिलाय । कपिलाकाराय नमः । ४६०

ॐ कपिलप्रियदर्शनाय नमः । कर्दमात्मजभावस्थाय । कर्दमप्रियकारकाय । कन्यकानीकवरदाय । कन्यकानीकवल्लभाय । कन्यकानीकसंस्तुत्याय । कन्यकानीकनायकाय । कन्यादानप्रदत्रात्रे । कन्यादानप्रदप्रियाय । कन्यादानप्रभावज्ञाय । कन्यादानप्रदायकाय । कश्यपात्मजभावस्थाय । कश्यपात्मजभास्कराय । कश्यपात्मजशत्रुघ्नाय । कश्यपात्मजपालकाय । कश्यपात्मजमध्यस्थाय । कश्यपात्मजवल्लभाय । कश्यपात्मजभीतिघ्नाय । कश्यपात्मजदुर्लभाय । कश्यपात्मजभावस्थाय नमः । ४८०

ॐ कश्यपात्मजभावविदे नमः । कश्यपोद्भवदैत्यारये । कश्यपोद्भवदेवराजे । कश्यपानन्दजनकाय । कश्यपानन्दवर्धनाय । कश्यपारिष्टसंहर्त्रे । कश्यपाभीष्टसिद्धिदाय । कर्तृकर्मक्रियातीताय । कर्तृकर्मक्रियान्वयाय । कर्तृकर्मक्रियालक्ष्याय । कर्तृकर्मक्रियास्पदाय । कर्तृकर्मक्रियाधीशाय । कर्तृकर्मक्रियात्मकाय । कर्तृकर्मक्रियाभासाय । कर्तृकर्मक्रियाप्रदाय । कृपानाथाय । कृपासिन्धवे । कृपाधीशाय । कृपाकराय । कृपासागरमध्यस्थाय नमः । ५००

ॐ कृपापात्राय नमः । कृपानिधये । कृपापात्रैकवरदाय । कृपापात्रभयापहाय । कृपाकटाक्षपापघ्नाय । कृतकृत्याय । कृतान्तकाय । कदंबवनमध्यस्थाय । कदंबकुसुमप्रियाय । कदम्बवनसञ्चारिणे । कदम्बवनवल्लभाय । कर्पूरामोदमुदिताय । कर्पूरामोदवल्लभाय ।

कर्पूरवासनासक्ताय । कर्पूरागरुचर्चिताय । करुणारससंपूर्णाय । करुणारसवर्धनाय । करुणाकरविख्याताय । करुणाकरसागराय । कालात्मने नमः । ५२०

ओं कालजनकाय नमः । कालाग्नये । कालसंज्ञकाय । कालाय । कालकलातिताय । कालस्थाय । कालभैरवाय । कालज्ञाय । कालसंहर्त्रे । कालचक्रप्रवर्तकाय । कालरूपाय । कालनाथाय । कालकृते । कालिकाप्रियाय । कालैकवरदाय । कालाय । कारणाय । कालरूपभाजे । कालमायाकलातीताय । कालमायाप्रवर्तकाय नमः । ५४०

ओं कालमायाविनिर्मुक्ताय नमः । कालमायाबलापहाय । कालत्रयगतिज्ञात्रे । कालत्रयपराक्रमाय । कालज्ञानकलातीताय । कालज्ञानप्रदायकाय । कालज्ञाय । कालरहिताय । कालानन समप्रभाय । कालचक्रैकहेतुस्थाय । कालरात्रिदुरत्ययाय । कालपाशविनिर्मुक्ताय । कालपाशविमोचनाय । कालव्यालैकदलनाय । कालव्यालभयापहाय । कालकर्मकलातीताय । कालकर्मकलाश्रयाय । कालकर्मकलाधीशाय । कालकर्मकलात्मकाय । कालव्यालपरिग्रस्त निजभक्तैकमोचनाय नमः । ५६०

ओं काशिराजशिरश्छेत्रे नमः । काशीशप्रियकारकाय । काशीस्थार्तिहराय । काशीमध्यस्थाय । काशिकाप्रियाय । काशीवासिजनानन्दिने । काशीवासिजनप्रियाय । काशीवासिजनत्रात्रे । काशीवासिजनस्तुताय । काशीवासिविकारघ्नाय । काशीवासिविमोचनाय । काशीवासिजनोद्धर्त्रे । काशीवासिकुलप्रदाय । काशीवास्याश्रितांघ्र्यब्जाय । काशीवासिसुखप्रदाय । काशीस्थाभीष्टफलदाय । काशीस्थारिष्टनाशनाय । काशीस्थद्विजसंसेव्याय । काशीस्थद्विजपालकाय । काशीस्थद्विजसद्बुद्धिप्रदात्रे नमः । ५८०

ओं काशिकाश्रयाय नमः । कान्तीशाय । कान्तिदाय । कान्ताय । कान्तारप्रियदर्शनाय । कान्तिमते । कान्तिजनकाय । कान्तिस्थाय । कान्तिवर्धनाय । कालागुरुसुगन्धाढ्याय । कालागरुविलेपनाय । कालागरुसुगन्धज्ञाय । कालागरुसुगन्धकृते । कापट्यपटलच्छेत्रे । कायस्थाय । कायवर्धनाय । कायभाग्भयभीतिघ्नाय । कायरोगापहारकाय । कार्यकारणकर्तृस्थाय । कार्यकारणकारकाय नमः । ६००

ओं कार्यकारणसंपन्नाय नमः । कार्यकारणसिद्धिदाय । काव्यामृतरसास्वादिने । काव्यामृतरसात्मकाय । काव्यामृतरसाभिज्ञाय । काव्यामृतरसप्रियाय । कादिवर्णैकजनकाय । कादिवर्णप्रवर्तकाय । कादिवर्णविवेकज्ञाय । कादिवर्णविनोदवते । कादिहादिमनुज्ञात्रे । कादिहादिमनुप्रियाय । कादिहादिमनूद्धारकारकाय । कादिसंज्ञकाय । कालुष्यरहिताकाराय । कालुष्यैकविनाशनाय । कारागारविमुक्तात्मने । कारागृहविमोचनाय । कामात्मने । कामदाय नमः । ६२०

ओं कामिने नमः । कामेशाय । कामपूरकाय । कामहृते । कामजनकाय । कामिकामप्रदायकाय । कामपालाय । कामभर्त्रे । कामकेलिकलानिधये । कामकेलिकलासक्ताय । कामकेलिकलाप्रियाय । कामबीजैकवरदाय । कामबीजसमन्विताय । कामजिते । कामवरदाय । कामक्रीडातिलालसाय । कामार्तिशमनाय । कामालङ्कृताय । कामसंस्तुताय । कामिनीकामजनकाय नमः । ६४०

ओं कामिनीकामवर्धनाय नमः । कामिनीकामरसिकाय । कामिनीकामपूरकाय । कामिनीमानदाय । कामकलाकौतूहलप्रियाय । कामिनीप्रेमजनकाय । कामिनीप्रेमवर्धनाय । कामिनीहावभावज्ञाय । कामिनीप्रीतिवर्धनाय । कामिनीरूपरासिकाय । कामिनीरूपभूषणाय ।

कामिनीमानसोल्लासिने। कामिनीमानसास्पदाय। कामिभक्तजनत्रात्रे। कामिभक्तजनप्रियाय । कामेश्वराय । कामदेवाय । कामबीजैकजीवनाय । कालिन्दीविषसंहर्त्रे। कालिन्दीप्राणजीवनाय नमः।६६०

ओं कालिन्दीहृदयानन्दिने नमः । कालिन्दीनीरवल्लभाय । कालिन्दीकेलिकुशलाय । कालिन्दीप्रीतिवर्धनाय । कालिन्दीकेलिरसिकाय । कालिन्दीकेलिलालसाय । कालिन्दीनीरसंखेलद्गोपीयूथसमावृताय। कालिन्दीनीरमध्यस्थाय। कालिन्दीनीरकेलिकृते। कालिन्दीरमणासक्ताय। कालिनागमदापहाय। कामधेनुपरित्रात्रे। कामधेनुसमावृताय। काञ्चनाद्रिसमानश्रिये। काञ्चनाद्रिनिवासकृते। काञ्चनाभूषणासक्ताय। काञ्चनैकविवर्धनाय। काञ्चनाभश्रियासक्ताय। काञ्चनाभश्रियाश्रिताय। कार्तिकेयैकवरदाय नमः। ६८०

ओं कार्तवीर्यमदापहाय नमः । किशोरीनायिकासक्ताय । किशोरीनायिकाप्रियाय । किशोरीकेलिकुशलाय । किशोरीप्राणजीवनाय। किशोरीवल्लभाकाराय। किशोरीप्राणवल्लभाय। किशोरीप्रीतिजनकाय। किशोरीप्रियदर्शनाय। किशोरीकेलिसंसक्ताय। किशोरीकेलिवल्लभाय । किशोरीकेलिसंयुक्ताय । किशोरीकेलिलोलुपाय । किशोरीहृदयानन्दिने । किशोरीहृदयास्पदाय । किशोरीशाय । किशोरात्मने । किशोराय । किंशुकाकृतये । किंशुकाभरणालक्ष्याय नमः । ७००

ओं किंशुकाभरणान्विताय नमः । कीर्तिमते । कीर्तिजनकाय । कीर्तनीयपराक्रमाय । कीर्तनीययशोराशये । कीर्तिस्थाय । कीर्तनप्रियाय । कीर्तिश्रीमतिदाय । कीशाय । कीर्तिज्ञाय । कीर्तिवर्धनाय । क्रियात्मकाय । क्रियाधाराय । क्रियाभासाय । क्रियास्पदाय ।

कीलालामलच्चिद्वृत्तये । कीलालाश्रयकारणाय । कुलधर्माधिपाधीशाय । कुलधर्माधिपप्रियाय । कुलधर्मपरित्रात्रे नमः । ७२०

ओं कुलधर्मपतिस्तुताय नमः । कुलधर्मपदाधाराय । कुलधर्मपदाश्रयाय । कुलधर्मपतिप्राणाय । कुलधर्मपतिप्रियाय । कुलधर्मपतित्रात्रे । कुलधर्मैकरक्षकाय । कुलधर्मसमासक्ताय । कुलधर्मैकदोहनाय । कुलधर्मसमुद्धर्त्रे । कुलधर्मप्रभावविदे । कुलधर्मसमाराध्याय । कुलधर्मधुरन्धराय । कुलमार्गरतासक्ताय । कुलमार्गरताश्रयाय । कुलमार्गसमासीनाय । कुलमार्गसमुत्सुकाय । कुलधर्माधिकारस्थाय । कुलधर्मविवर्धनाय । कुलाचारविचारज्ञाय नमः । ७४०

ओं कुलाचारसमाश्रिताय नमः । कुलाचारसमायुक्ताय । कुलाचारसुखप्रदाय । कुलाचारातिच्चतुराय । कुलाचारातिवल्लभाय । कुलाचारपवित्राङ्गाय । कुलाचारप्रमाणकृते । कुलवृक्षैलजनकाय । कुलवृक्षविवर्धनाय । कुलवृक्षपरित्रात्रे । कुलवृक्षफलप्रदाय । कुलवृक्षफलाधीशाय । कुलवृक्षफलाशनाय । कुलमार्गकलाभिज्ञाय । कुलमार्गकलान्विताय । कुकर्मनिरतातीताय । कुकर्मनिरतान्तकाय । कुकर्ममार्गरहिताय । कुकर्मैकनिषूदनाय । कुकर्मरहिताधीशाय नमः । ७६०

ओं कुकर्मरहितात्मकाय नमः । कुकर्मरहिताकाराय । कुकर्मरहितास्पदाय । कुकर्मरहिताचाराय । कुकर्मरहितोत्सवाय । कुकर्मरहितोद्देशाय । कुकर्मरहितप्रियाय । कुकर्मरहितान्तस्थाय । कुकर्मरहितेश्वराय । कुकर्मरहितस्त्रीशाय । कुकर्मरहितप्रजाय । कुकर्मोद्भवपापघ्नाय । कुकर्मोद्भवदुःखघ्ने । कुतर्करहिताधीशाय ।

कुतर्करहिताकृतये । कूटस्थसाक्षिणे । कूटात्मने । कूटस्थाक्षरनायकाय । कूटस्थाक्षरसंसेव्याय । कूटस्थाक्षरकारणाय नमः । ७८०

ओं कुबेरबन्धवे नमः । कुशलाय । कुंभकर्णविनाशनाय । कूर्माकृतिधराय । कूर्माय । कूर्मस्थावनिपालकाय । कुमारीवरदाय । कुस्थाय । कुमारीगणसेविताय । कुशस्थलीसमासीनाय । कुशदैत्यविनाशनाय । केशवाय । क्लेशसंहर्त्रे । केशिदैत्यविनाशनाय । क्लेशहीनमनोवृत्तये । क्लेशहीनपरिग्रहाय । क्लेशातीतपदाधीशाय । क्लेशातीतजनप्रियाय । क्लेशातीतशुभाकाराय । क्लेशातीतसुखस्पदाय नमः ।८००

ओं क्लेशातीतसमाजस्थाय नमः । क्लेशातीतमहामतये । क्लेशातीतजनत्रात्रे । क्लेशहीनजनेश्वराय । क्लेशहीनस्वधर्मस्थाय । क्लेशहीनविमुक्तिदाय । क्लेशहीननराधीशाय । क्लेशहीननरोत्तमाय । क्लेशातिरिक्तसदनाय । क्लेशमूलनिकन्दनाय । क्लेशातिरक्तभावस्थाय । क्लेशहीनैकवल्लभाय । क्लेशहीनपदान्तस्थाय । क्लेशहीनजनार्दनाय । केसरांकितभालश्रिये । केसरांकितवल्लभाय । केसरालिप्तहृदयाय । केसरालिप्तसद्भुजाय । केसरांकितवासश्रिये । केसरांकितविग्रहाय नमः । ८२०

ओं केसराकृतिगोपीशाय नमः । केसरामोदवल्लभाय । केसरामोदमधुपाय । केसरामोदसुन्दराय । केसरामोदमुदिताय । केसरामोदवर्धनाय । केसरार्चितभालश्रिये । केसरार्चितविग्रहाय । केसरार्चितपादाब्जाय । केसरार्चितकुण्डलाय । केसरामोदसंपन्नाय । केसरामोदलोलुपाय । केतकीकुसुमासक्ताय । केतकीकुसुमप्रियाय । केतकीकुसुमाधीशाय । केतकीकुसुमाङ्किताय । केतकीकुसुमबामोद-वर्धनाय । केतकीप्रियाय । केतकीशोभिताकाराय । केतकीशोभितांबराय

नमः ।८४०

ओं केतकीकुसुमामोदवल्लभाय नमः । केतकीश्वराय । केतकीसौरभानन्दिने । केतकीसौरभप्रियाय । केयूरालङ्कृतभुजाय । केयूरालङ्कृतात्मकाय । केयूरालङ्कृतश्रीशाय । केयूरप्रियदर्शनाय । केदारेश्वरसंयुक्ताय । केदारेश्वरवल्लभाय । केदारेश्वरपार्श्वस्थाय । केदारेश्वरभक्तपाय । केदारकल्पसारज्ञाय । केदारस्थलवासकृते । केदाराश्रितभीतिघ्नाय । केदाराश्रितमुक्तिदाय । केदारावासिवरदाय । केदाराश्रित दुःखघ्ने । केदारपोषकाय । केशाय नमः । ८६०

ओं केदारान्नविवर्धनाय नमः । केदारपुष्टिजनकाय । केदारप्रियदर्शनाय । कैलासेशसमाजस्थाय । कैलासेशप्रियङ्कराय । कैलासेशसमायुक्ताय । कैलासेशप्रभावविदे । कैलासाधीशशत्रुघ्नाय । कैलासपतितोषकाय । कैलासाधीशसहिताय । कैलासाधीशवल्लभाय । कैवल्यमुक्तिजनकाय । कैवल्यपदवीश्वराय । कैवल्यपदवीत्रात्रे । कैवल्यपदवीप्रियाय । कैवल्यज्ञानसंपन्नाय । कैवल्यज्ञानसाधनाय । कैवल्यज्ञानगम्यात्मने । कैवल्यज्ञानदायकाय । कैवल्यज्ञानसंसिद्धाय नमः । ८८०

ओं कैवल्यज्ञानदीपकाय नमः । कैवल्यज्ञानविख्याताय । कैवल्यैकप्रदायकाय । क्रोधलोभभयातीताय । क्रोधलोभविनाशनाय । क्रोधारये । क्रोधहीनात्मने । क्रोधहीनजनप्रियाय । क्रोधहीनजनाधीशाय । क्रोधहीनप्रजेश्वराय । कोपतापोपशमनाय । कोपहीनवरप्रदाय । कोपहीननरत्रात्रे । कोपहीनजनाधिपाय । कोपहीननरान्तःस्थाय । कोपहीनप्रजापतये । कोपहीनप्रियासक्ताय । कोपहीनजनार्तिघ्ने । कोपहीनपदाधीशाय । कोपहीनपदप्रदाय नमः । ९००

ओं कोपहीननरस्वामिने नमः । कोपहीनस्वरूपधृषे । कोकिलालापसङ्गीताय । कोकिलालापवल्लभाय । कोकिलालापलीनात्मने । कोकिलालापकारकाय । कोकिलालापकान्तेशाय । कोकिलालापभावविदे । कोकिलागानरसिकाय । कोकिलास्वरवल्लभाय । कोटिसूर्यसमानश्रिये । कोटिचन्द्रामृतात्मकाय । कोटिदानवसंहर्त्रे । कोटिकन्दर्पदर्पघ्ने । कोटिदेवेन्द्रसंसेव्याय । कोटिब्रह्मार्चिताकृतये । कोटिब्रह्माण्डमध्यस्थाय । कोटिविद्युत्समद्युतये । कोटचश्वमेधपापघ्नाय । कोटिकामेश्वराकृतये नमः । ९२०

ओं कोटिमेघसमोदाराय नमः । कोटिवह्निसुदुःसहाय । को टिपाथोधिगंभीराय । को टिमेरुसमस्थिराय । को टिगोपीजनाधीशाय । कोटिगोपाङ्गनावृताय । कोटिदैत्येशदर्पघ्नाय । कोटिरुद्रपराक्रमाय । कोटिभक्तार्तिशमनाय । कोटिदुष्टविमर्दनाय । कोटिभक्तजनोद्धर्त्रे । कोटियज्ञफलप्रदाय । कोटिदेवर्षिसंसेव्याय । कोटिब्रह्मर्षिमुक्तिदाय । कोटिराजर्षिसंस्तुत्याय । कोटिब्रह्माण्डमण्डनाय । कोटचाकाशप्रकाशात्मने । कोटिवायुमहाबलाय । कोटितेजोमयाकाराय । कोटिभूमिसमक्षमिणे नमः । ९४०

ओं कोटिनीरसमस्वच्छाय । कोटिदिग्ज्ञानदायकाय । कोटिब्रह्माण्डजनकाय । कोटिब्रह्माण्डबोधकाय । कोटिब्रह्माण्डपालकाय । कोटिब्रह्माण्डसंहर्त्रे । कोटिवाक्यतिवाचालाय । कोटिशुक्रकवीश्वराय । कोटिद्विजसमाचाराय । कोटिहेरम्बविघ्नघ्ने । कोटिमानसहंसात्मने । कोटिमानससंस्थिताय । कोटिच्छलकरारातये । कोटिदांभिकनाशनाय । कोटिशून्यपथच्छेत्रे । कोटिपाखण्डखण्डनाय । कोटिशेषधराधाराय । कोटिकालप्रबोधकाय । कोटिवेदान्तसंवेद्याय । कोटिसिद्धान्तनिश्चयाय नमः । ९६०

ओं कोटियोगीश्वराधीशाय नमः । कोटियोगैकसिद्धिदाय । कोटिधामाधिपाधीशाय । कोटिलोकैकपालकाय । कोटियज्ञैकभोक्त्रे । कोटियज्ञफलप्रदाय । कोटिभक्तहृदन्तस्थाय । कोटिभभक्ताभयप्रदाय । कोटिजन्मार्तिशमनाय । कोटिजन्माघनाशनाय । कोटिजन्मान्तरज्ञान-प्रदात्रे । कोटिभक्तपाय । कोटिशक्तिसमायुक्ताय । कोटिचैतन्य-बोधकाय । कोटिच्चक्रावृताकाराय । कोटिच्चक्रप्रवर्तकाय । कोटिच्चक्रा-र्चनत्रात्रे । कोटिवीरावलीवृताय । कोटितीर्थजलान्तस्थाय । कोटितीर्थफलप्रदाय नमः । ९८०

ओं कोमलामलचिद्वृत्तये नमः । कोमलामलमानसाय । कौस्तुभोद्भासितोरस्काय । कौस्तुभोद्भासिताकृतये । कौरवानीकसंहर्त्रे । कौरवार्णवकुंभभुवे । कौन्तेयाश्रित पादाब्जाय । कौन्तयाभयदायकाय । कौन्तेयारातिसंहर्त्रे । कौन्तेयप्रतिपालकाय । कौन्तेयानन्दजनकाय । कौन्तेयप्राणजीवनाय । कौन्तयाच्चलभावज्ञाय । कौन्तयाचलमुक्तिदाय । कौमुदीमुदिताकाराय । कौमुदीमुदिताननाय । कौमुदीमुदितप्राणाय । कौमुदीमुदिताशयाय । कौमुदीमोदमुदिताय । कौमुदीमोदवल्लभाय नमः । १०००

ओं कौमुदीमोदमधुपाय नमः । कौमुदीमोदवर्धनाय । कौमुदीमोदमानात्मने । कौमुदीमोदसुन्दराय । कौमुदीदर्शनानन्दिने । कौमुदीदर्शनोत्सुकाय । कौसल्यापुत्रभावस्थाय । कौसल्यानन्दवर्धनाय । कंसारये । कंसहीनात्मने । कंसपक्षनिकन्दनाय । कङ्कालाय । कङ्कवरदाय । कण्टकक्षयकारकाय । कन्दर्पदर्पशमनाय । कन्दर्पाभिमनोहराय । कन्दर्पकामनाहीनाय । कन्दर्पज्वरनाशनाय नमः । १०१८

# कृष्णसहस्रनामावलिः

ओं हरये नमः । देवकीनन्दनाय । कंसहन्त्रे । परात्मने । पीताम्बराय । पूर्णदेवाय । रमेशाय । कृष्णाय । परेशाय । पुराणाय । सुरेशाय । अच्युताय । वासुदेवाय । देवाय । धराभारहर्त्रे । कृतिने । राधिकेशाय । परस्मै । भूवराय । दिव्यगोलोकनाथाय नमः । २०

ओं सुदाम्नोराधिकायाःशापहेतवे नमः । घृणिने । मानिनीमानदाय । दिव्यलोकाय । लसद्गोपवेशाय । अजाय । राधिकात्मने । चलत्कुण्डलाय । कुन्तलिने । कुन्तलस्रजे । कदाचिद्-राधाया रथस्थाय । दिव्यरत्नाय । सुधासौधभूचारणाय । दिव्यवाससे । बृन्दकारण्यचारिणे । स्वलोके महारत्नसिंहासनस्थाय । प्रशान्ताय । महाहंसाभैश्चामरैर्वीज्यमानाय । चलच्छत्रमुक्तावलीशोभमानाय । सुखिने नमः । ४०

ओं कोटिकन्दर्पलीलाभिरामाय नमः । क्वणन्नूपुरालङ्कृताङ्घ्रये । शुभाङ्घ्रये । सुजानवे । रंभाशुभोरवे । कृशाङ्गाय । प्रतापिने । इभशुण्डासुदोर्दण्डखण्डाय । जपापुष्पहस्ताय । शातोदरश्रिये । महापद्मवक्षःस्थलाय । चन्द्रहासाय । लसत्कुन्ददन्ताय । विम्बाधरश्रिये । शरत्पद्मनेत्राय । किरीटोज्ज्वलाभाय । सखीकोटिभिर्वर्तमानाय । निकुञ्जे प्रियाराधया रासक्ताय । नवाङ्गाय । धराब्रह्मरुद्रादिप्रार्थितधराभारदूरीक्रियार्थप्रजाताय नमः । ६०

ओं यदवे नमः । देवकीसौख्यदाय । बन्धनच्छिदे । सशेषाय । विभवे । योगमायिने । विष्णवे । व्रजे नन्दपुत्राय । यशोदासुताख्याय । महासौख्यदाय । बालरूपाय । शुभाङ्गाय । पूतनामोक्षदाय । श्यामरूपाय । दयालवे । अनोभञ्जनाय । पल्लवाङ्घ्रये । तृणावर्त्तसंहारकारिणे । गोपाय । यशोदायशसे नमः । ८०

ओं विश्वरूपदर्शिने नमः । गर्गादिष्टाय । भाग्योदयश्रिये । लसद्बालकेलये । सरामाय । सुवाचाय । क्वणन्नूपुरैःशब्दयुजे । जानुहस्तैर्व्रजेशाङ्गणे रिङ्गमाणाय । दधिस्पृशे । हैयङ्गवीदुग्धभोक्त्रे । दधिस्तेयकृते । दुग्धभुजे । भाण्डभेत्रे । मृद्भुक्तवते । गोपजाय । विश्वरूपाय । प्रचण्डांशुचण्डप्रभामण्डिताङ्गाय । यशोदाकरैर्बन्धन-प्राप्ताय । आद्याय । मणिग्रीवमुक्तिप्रदाय ॥ १००

ओं दामबद्धाय नमः । कदा ब्रजे गोपिकाभिः नृत्यमानाय । कदा नन्दसन्नन्दकैर्लाल्यमानाय । कदा गोपनन्दाङ्काय । गोपालरूपिणे । कलिन्दाङ्गजाकूलगाय । वर्तमानाय । घनैर्मारुतैश्छन्नभाण्डीर-देशे नन्दहस्ताद् राधया गृहीतवराय । गोलोकलोकागते महारत्नसंघैर्युते कदम्बावृतनिकुञ्जे राधिकासद्विवाहे ब्रह्मणा प्रतिष्ठानगताय । साममन्त्रपूजिताय । रसिने । मालतीनां वनेऽपि प्रियाराधया सह राधिकार्थं रासयुजे । रमेशधरानाथाय । आनन्दाय । अनिकेताय । वनेशाय । धनिने । सुन्दराय । गोपिकेशाय । कदा राधया नन्दगेहे प्रापिताय नमः । १२०

यशोदाकरैर्लालिताय नमः । मन्दहासाय । क्वापि भयिने । बृन्दारकारण्यवासकृते । महामन्दिरवासकृते । देवपूज्याय । वने वत्सचारिणे । महावत्सहारिणे । बकारये । सुरपूजिताय । अघारिनाम्ने । वने वत्सकृते । गोपकृते । गोपवेशाय । कदा ब्रह्मणा संस्तुताय । पद्मनाभाय । विहारिणे । तालभुजे । धेनुकारये । सदा रक्षकाय नमः । १४०

गोविषार्ति-प्रणाशिकलिन्दाङ्गजाकूलगाय नमः । कालियस्य दमिने । फणेषु नृत्यकारिणे । प्रसिद्धाय । सलीलाय । शमिने । ज्ञानदाय । कामपूराय । गोपयुजे । गोपाय । आनन्दकारिणे । स्थिराय । अग्नियुजे ।

पालकाय । बाललीलाय । सुरागाय । वंशीधराय । पुष्पशीलाय । प्रलम्बप्रभानाशकाय। गौरवर्णाय नमः। १६०

ओं बलाय नमः । रोहिणीजाय । रामाय । शेषाय । बलिने । पद्मनेत्राय । कृष्णाग्रजाय । धरेशाय । फणीशाय । महासौख्यदाय । नीलाम्बराभाय । अग्निहारकाय । व्रजेशाय । शरद्ग्रीष्मवर्षाकराय । कृष्णवर्णाय । व्रजे गोपिकापूजिताय । चीरहर्त्रे । कदम्बस्थिताय । चीरदाय। सुन्दरीशाय। सुधानाशकृते नमः। १८०

ओं यज्ञपत्नीमनःस्पृशे नमः । कृपाकारकाय । केलिकर्त्रे । अवनीशाय । व्रजे शक्रयागप्रणाशाय । अमिताशिने । शुनासीरमोह-प्रदाय । बालरूपिणे । गिरिपूजकाय । नन्दपुत्राय । अगधराय । कृपाकृते । गोवर्द्धनोद्धारिनाम्ने। वातवर्षाहराय। रक्षकाय। व्रजाधीश-गोपाङ्गनाशङ्किताय । अगेन्द्रोपरिशक्रपूज्याय । प्राक्स्तुताय । मृषाशिक्षकाय। गोविन्ददेवनाम्ने नमः। २००

ओं व्रजाधीशरक्षाकराय नमः । पाशिपूज्याय । अनुगैर्गोपजैर्दिव्यवैकुण्ठदर्शिने । चलच्चारुवंशीक्वाणाय । कामिनीशाय । व्रजे कामिनीमोहदाय। कामरूपाय। रसाक्ताय। रसी-रासकृते । राधिकेशाय । महामोहदाय । मानिनीमानहारिणे । विहारीवराय। मानहृताय। राधिकाङ्गाय। धराद्वीपगाय। खण्डचारिणे। वनस्थाय। प्रियाय। अष्टावक्रर्षिद्रष्ट्रे नमः। २२०

ओं सराधाय नमः । महामोक्षदाय । प्रियार्थ-पद्महारिणे । वटस्थाय। सुराय। चन्दनाक्ताय। प्रसक्ताय। राधया व्रजमागताय। मोहिनीषु महामोहकृते । गोपिकागीतकीर्त्तये । रसस्थाय । पटिने । दुःखिताकामिनीशाय । वने गोपिकात्यागकृते । पादचिह्नप्रदर्शिने ।

कलाकारकाय। काममोहिने। वशिने। गोपिकामध्यगाय। पेशवाचे नमः। २४०

ओं प्रियाप्रीतिकृते नमः । रासरक्ताय । कलेशाय । रसारक्तचित्ताय । अनन्तस्वरूपाय । स्रजासंवृताय । वल्लवीमध्यसंस्थाय । सुबाहवे । सुपादाय । सुवेशाय । सुकेशव्रजेशाय । सख्ये । वल्लभेशाय । सुदेशाय । क्वणत्किङ्किणीजालभृते । नूपुराढ्याय । लसत्कङ्कणाय । अङ्गदिने । हारभाराय । किरीटिने नमः । २६०

ओं चलत्कुण्डलाय नमः । अङ्गुलीयस्फुरत्कौस्तुभाय । मालतीमण्डिताङ्गाय । महानृत्यकृते । रासरङ्गाय । कालाढ्याय । चलद्धारभाय । भामिनीनृत्ययुक्ताय । कलिन्दाङ्गजाकेलिकृते । कुङ्कुमश्रिये। नायिकानायकसुरैर्गीयमानाय। सुखाढ्याय। राधापतये। पूर्णबोधाय। कुटिलकटाक्षस्मितिने। वल्गितभ्रूविलासाय। सुरम्याय। अलिभिःकुन्तलालोलकेशाय । स्फुरद्बर्हकुन्दस्रजाचारुवेशाय । महासर्पतो नन्दरक्षापरांघ्रये नमः। २८०

ओं सदा मोक्षदाय नमः। शङ्खचूडप्रणाशिने। प्रजारक्षकाय। गोपिकागीयमानाय । कुब्जिप्रणाशप्रयासाय । सुरेज्याय । कलये । क्रोधकृते। कंसमन्त्रोपदेष्ट्रे। अक्रूरमन्त्रोपदेशिने। सुरार्थाय। केशिघ्ने। पुष्पवर्षामलश्रिये । अमलश्रिये । नारदादेशतो व्योमहन्त्रे । अक्रूरसेवापराय । सर्वदर्शिने । व्रजे गोपिकामोहदाय । कूलवर्त्तिने । सतीराधिकाबोधदाय नमः। ३००

ओं स्वप्नकर्त्रे नमः। विलासिने। महामोहनाशिने। स्वबोधाय। व्रजेशापतस्त्यक्तराधासकाशाय । महामोहदावाग्निदग्धापतये । सखीबन्धनान्मोचिताक्रूराय । आरात्सखीकङ्कणैस्ताडिताक्रूररक्षिणे ।

व्रजे राधया रथस्थाय । कृष्णचन्द्राय । गोपकैःसुगुप्तगामिने । चारुलीलाय । जले अक्रूरसंदर्शिताय । दिव्यरूपाय । दिदृक्षवे । पुरीमोहिनीचित्तमोहिने । रङ्गकारप्रणाशिने । सुवस्त्राय । स्रजिने । वायकप्रीतिकृते नमः । ३२०

ओं मालिपूज्याय नमः । महाकीर्त्तिदाय । कुब्जाविनोदिने । स्फुरच्चण्डकोदण्डरुग्णाय । प्रचण्डाय । भटार्त्तिप्रदाय । कंसदुःस्वप्नकारिणे । महामल्लवेशाय । करीन्द्रप्रहारिणे । महामात्यघ्ने । रङ्गभूमिप्रवेशिने । रसाढ्याय । यशःस्पृशे । बलीवाक्पटुश्रिये । महामल्लघ्ने । युद्धकृते । स्त्रीवचोऽर्थिने । धरानायककंसहन्त्रे । प्राग्यदवे । सदापूजिताय नमः । ३४०

ओं उग्रसेनप्रसिद्धाय नमः । धराराज्यदाय । यादवैर्मण्डिताङ्गाय । गुरोः पुत्रदाय । ब्रह्मविदे । ब्रह्मपाठिने । महाशङ्खघ्ने । दण्डधृक्पूज्याय । व्रजे उद्धवप्रेषिताय । गोपमोहिने । यशोदाघृणिने । गोपिकाज्ञानदेशिने । सदास्नेहकृते । कुब्जापूजिताङ्गाय । अक्रूरगेहगमिने । मन्त्रवेत्त्रे । पाण्डवप्रेषिताक्रूराय । सुखिसर्वदर्शिने । नृपानन्दकारिणे । महाक्षौहिणीघ्ने नमः । ३६०

ओं जरासन्धमानोद्धराय नमः । द्वारकाकारकाय । मोक्षकर्त्रे । रणिने । सार्वभौमस्तुताय । ज्ञानदात्रे । जरासन्धसङ्कल्पकृते । धावदङ्घ्रये । नगादुत्पतद्द्वारकामध्यवर्त्तिने । रेवतीभूषणाय । तालचिह्नयदवे । रुक्मिणीहारकाय । चैद्यभेद्याय । रुक्मिरूपप्रणाशिने । सुखाशिने । अनन्ताय । माराय । कार्ष्णिने । कामाय । मनोजाय नमः । ३८०

ओं शम्बरारये नमः । रतीशाय । रथिने । मन्मथाय । मीनकेतवे । शरिणे । स्मराय । दर्पकाय । मानघ्ने । पञ्चबाणाय । प्रियसत्यभामापतये । यादवेशाय । सत्राजित्प्रेमपूराय । प्रहासाय । महारत्नदाय । जाम्बवद्युद्धकारिणे । महाचक्रधृषे । खड्गधृषे । रामसन्धये । विहारस्थिताय नमः । ४००

ओं पाण्डवप्रेमकारिणे नमः । कलिन्दाङ्गजामोहनाय । खाण्डवार्थिने । फाल्गुनप्रीतिकृत्सख्ये । नम्रकर्त्रे । मित्रविन्दापतये । क्रीडनार्थिने । नृपप्रेमकृते । सप्तरूपगोजयिने । सत्यापतये । पारिबर्हिणे । यथेष्टाय । नृपैःसंवृताय । भद्रापतये । मधोर्विलासिने । मानिनीशाय । जनेशाय । शुनासीरमोहावृताय । सत्याभार्याय । सताक्ष्र्याय नमः । ४२०

ओं मुरारये नमः । पुरीसंघभेत्रे । सुवीरशिरःखण्डनाय । दैत्यनाशिने । शरिणे भौमघ्ने । चण्डवेगाय । प्रवीराय । धरासंस्तुताय । कुण्डलछत्रहर्त्रे । महारत्नयुजे । राजकन्याभिरामाय । शचीपूजिताय । शक्रजिते । मानहर्त्रे । पारिजातापहारिरमेशाय । गृहीतचामरैः शोभिताय । भीष्मककन्यापतये । हास्यकृते । मानिनीमानकारिणे । रुक्मिणीवाक्पटवे नमः । ४४०

ओं प्रेमगेहाय नमः । सतीमोहनाय । कामदेवापरश्रिये । सुदेष्णाय । सुचारवे । चारुदेष्णाय । चारुदेहाय । बलीचारुगुप्ताय । सुतीभद्रचारवे । चारुचन्द्राय । विचारवे । चारवे । रथिपुत्ररूपाय । सुभानवे । प्रभानवे । चन्द्रभानवे । बृहद्भानवे । अष्टभानवे । साम्बाय । सुमित्राय नमः । ४६०

ओं क्रतवे नमः । चित्रकेतवे । वीराश्वसेनाय । वृषाय । चित्रगवे । चन्द्रबिम्बाय । विशङ्कवे । वसवे । श्रुताय । भद्राय । सुबाहवे वृषाय ।

पूर्णमासाय। सोमावराय। शान्तये। प्रघोषाय। सिंहाय। बलोर्ध्वगाय। वर्धनाय। उन्मादाय। महाशाय नमः। ४८०

ओं वृकाय नमः। पावनाय। वह्निमित्राय। क्षुधये। हर्षकाय। अनिलाय। अमित्रजिते। सुभद्राय। जयाय। सत्यकाय। वामाय। आयुषे यदवे। कोटिशः पुत्रपौत्रप्रसिद्धाय। हलिने दण्डधृषे। रुक्मघ्ने। अनिरुद्धाय। राजभिर्हास्यगाय। द्यूतकर्त्रे। मधवे। ब्रह्मसुवे नमः। ५००

ओं बाणपुत्रीपतये नमः। महासुन्दराय। कामपुत्राय। बलीशाय। महादैत्यसंग्रामकृद्यादवेशाय। पुरीभंजनाय। भूतसंत्रासकारिणे। मृधे रुद्रजिते। रुद्रमोहिने। मृधार्थिने। स्कन्दजिते। कूपकर्णप्रहारिणे। धनुर्भंजनाय। बाणमानप्रहारिणे। ज्वरोत्पत्तिकृते। ज्वरेण संस्तुताय। भुजाच्छेदकृते। बाणसंत्रासकर्त्रे। मृडप्रस्तुताय। युद्धकृते नमः। ५२०

ओं भूमिभर्त्रे नमः। नृगमुक्तिदाय। यादवानां ज्ञानदाय। रथस्थाय। व्रजप्रेमपाय। गोपमुख्याय। महासुन्दरीक्रीडिताय। पुष्पमालिने। कलिन्दाङ्गजाभेदनाय। सीरपाणये। महादम्भिघ्ने। पौण्ड्रमानप्रहारिणे। शिरश्छेदकाय। काशिराजप्रणाशिने। महाक्षौहिणीध्वंसकृते। चक्रहस्ताय। पुरीदीपकाय। राक्षसीनाशकर्त्रे। अनन्ताय। महीध्राय नमः। ५४०

ओं फणिने नमः। वानरारये। स्फुरद्-गौरवर्णाय। महापद्मिनेत्राय। कुरुग्रामतिर्यग्गतये। गौरवार्थकौरवस्तुताय। ससाम्बपारिबर्हिणे। महावैभविने। द्वारकेशाय। अनेकाय। चलन्नारदाय। श्रीप्रभादर्शकाय। महर्षिस्तुताय। ब्रह्मदेवाय। पुराणाय। सदा षोडशस्त्रीसहस्रस्थिताय। गृहिणे। लोकरक्षापराय। लोकरीतये। प्रभवे नमः। ५६०

ओं उग्रसेनावृताय नमः । दुर्गयुक्ताय । राजदूतस्तुताय । बन्धभेत्तृस्थिताय । नारदप्रस्तुताय । पाण्डवार्थिने । नृपैर्मन्त्रकृते । उद्धवप्रीतिपूर्णाय । पुत्रपौत्रैर्वृताय । कुरुग्रामगन्त्रे घृणिने । धर्मराजस्तुताय । भीमयुक्ताय । परानन्ददाय ।धर्मजेन मन्त्रकृते । दिशाजिता बलिने । राजसूयार्थकारिणे । जरासन्धघ्ने । भीमसेनस्वरूपाय । विप्ररूपाय । गदायुद्धकर्त्रे नमः । ५८०

ओं कृपालवे नमः । महाबन्धनच्छेदकारिणे । नृपैःसंस्तुताय । धर्मगेहमागताय । द्विजैःसंवृताय । यज्ञसंभारकर्त्रे । जनैःपूजिताय । चैद्यदुर्वाकूक्षमाय । महामोक्षदाय । अरेःशिरश्छेदकारिणे । महायज्ञशोभाकराय । चक्रवर्तिने नृपानन्दकारिणे । सुहारिणे विहारिणे । सभासंवृताय । कौरवाय । शाल्वसंहारकाय । यानहन्त्रे । सभोजाय । वृष्णये । मधवे नमः । ६००

ओं शूरसेनाय नमः । दाशार्हाय । यदवे अन्धकाय । लोकजिते । द्युमन्मानहारिणे । वर्मधृषे । दिव्यशस्त्रिणे । स्वबोधाय । सदारक्षकाय । दैत्यहन्त्रे । दन्तवक्त्रप्रणाशिने । गदाधृषे । जगत्तीर्थयात्राकराय । पद्महाराय । कुशीसूतहन्त्रे । कृपाकृते । स्मृतीशाय । अमलाय । बल्वलाङ्गप्रभाखण्डकारिणे । भीमदुर्योधनज्ञानदात्रे नमः । ६२०

ओं अपराय नमः । रोहिणीसौख्यदाय । रेवतीशाय । महादानकृते । विप्रदारिद्र्यघ्ने । सदाप्रेमयुजे । श्रीसुदाम्नःसहायाय । सरामाय भार्गवक्षेत्रगन्त्रे । श्रुते सूर्योपरागे सर्वदर्शिने । महासेनास्थिताय । स्नानयुक्ताय महादानकृते । मित्रसम्मेलनार्थिने । पाण्डवप्रीतिदाय । कुन्तिजार्थिने । विशालाक्षमोहप्रदाय । शान्तिदाय । सखीकोटिभिर्गोपिकाभिः सह वटे राधिकाऽऽराधनाय । राधिकाप्राणनाथाय । सखीमोहदावाग्निघ्ने । वैभवेशाय नमः । ६४०

ओं स्फुरत्कोटिकन्दर्पलीलाविशेषाय नमः । सखीराधिकादुःखनाशिने । विलासिने । सखीमध्यगाय । शापघ्ने । माधवीशाय । शतवर्षविक्षेपहृते । नन्दपुत्राय । नन्दवक्षोगताय । शीतलाङ्गाय । यशोदाशुचःस्नानकृते । दुःखहन्त्रे । सदागोपिकानेत्रलग्नव्रजेशाय । देवकीरोहिणीस्तुताय । सुरेन्द्राय । रहो गोपिकाज्ञानदाय । मानदाय । पट्टराज्ञीभिःआरात्संस्तुताय । सदालक्ष्मणाप्राणनाथाय । सदाषोडस्त्रीसहस्रस्तुताङ्गाय नमः। ६६०

ओं शुकाय नमः । व्यासदेवाय । सुमन्तवे । सिताय । भरद्वाजकाय । गौतमाय । आसुरये । सद्वशिष्ठाय । शतानन्दाय । आद्यरामाय । पर्वतमुनये । नारदाय । धौम्याय । इन्द्राय । असिताय । अत्रये । विभाण्डाय । प्रचेतसे । कृपाय । कुमाराय नमः । ६८०

ओं सनन्दाय नमः । याज्ञवल्क्याय । ऋभवे । अङ्गिरसे । देवलाय । श्रीमृकण्डाय । मरीचये । क्रतवे । और्वकाय । लोमशाय । पुलस्त्याय । भृगवे । ब्रह्मरातवशिष्ठाय । नरनारायणाय । दत्ताय । पाणिनये । पिङ्गलाय । भाष्यकाराय । कात्यायनाय । विप्रपातञ्जलिने नमः । ७००

ओं गर्गाय नमः । गुरवे । गीष्पतये । गौतमीशाय । मुनिजाजलिने । कश्यपाय । गालवाय । द्विजसौभरये । ऋष्यशृङ्गाय । कण्वाय । द्विताय । एकताय । जातूद्भवाय । धनाय । कर्दमात्मजाय । कर्दमाय । भार्गवाय । कौत्साय । आरुणये । शुचिपिप्पलादाय नमः । ७२०

ओं मृकण्डपुत्राय नमः । पैलाय । जैमिनये । सत्सुमन्तवे । वरो गाङ्गलाय । स्फोटगेहफलादाय । सदापूजितब्राह्मणाय । सर्वरूपिणे । महामोहनाशमुनीशाय । प्रागमराय । मुनीशस्तुताय । शौरिविज्ञानदात्रे ।

महायज्ञकृते। अवभृथस्नानपूज्याय। सदादक्षिणादाय। नृपैःपारिबर्हिषे। व्रजानन्ददाय। द्वारकागेहदर्शिने। महाज्ञानदाय। देवकीपुत्रदाय नमः। ७४०

ओं असुरैः पूजिताय नमः । इन्द्रसेनादृताय । सदाफाल्गुनप्रीतिकृते । सत्सुभद्राविवाहद्विपाश्वप्रदाय । मानयानाय । भुवे । मैथिलेन प्रयुक्ताय । आशु ब्राह्मणैः सह राज्ञा स्थित-ब्राह्मणैश्च स्थिताय। मैथिले कृतिने। लोकवेदोपदेशिने। सदावेदवाक्यैः स्तुताय। शेषशायिने । अमरेषु ब्राह्मणैः परीक्षावृताय । भृगुप्रार्थिताय । दैत्यघ्ने । ईशरक्षिणे । अर्जुनसख्ये । अर्जुनस्यापि मानप्रहारिणे । विप्रपुत्रप्रदाय । धामगन्त्रे नमः। ७६०

ओं माधवीभिर्विहारस्थिताय नमः । कलाङ्गाय । महामोहदावाग्निदग्धाभिरामाय । यदवे उग्रसेननृपाय । अक्रूराय । उद्धवाय । शूरसेनाय । शूराय । हृदीकाय । सत्राजिते । अप्रमेयाय । गदाय । सारणाय। सात्यकये। देवभागाय। मानसाय। सञ्जयाय। श्यामकाय। वृकाय। वत्सकाय नमः। ७८०

ओं देवकाय नमः । भद्रसेनाय । नृपायाजातशत्रवे । जयाय । माद्रीपुत्राय । भीष्माय । कृपाय । बुद्धिचक्षुषे । पाण्डवे । शन्तनवे । देवबाह्लीकाय । भूरिश्रवसे । चित्रवीर्याय । विचित्राय । शलाय । दुर्योधनाय। कर्णाय। सुभद्रासुताय। प्रसिद्धविष्णुराताय। जनमेजयाय नमः। ८००

ओं पाण्डवाय नमः। कौरवाय। सर्वतेजोहरये। सर्वरूपिणे राधया व्रजं ह्यागताय । पूर्णदेवाय । वराय । रासलीलापराय । दिव्यरूपिणे । रथस्थाय । नवद्वीपखण्डप्रदर्शिने । महामानदाय । गोपजाय ।

विश्वरूपाय । सनन्दाय । नन्दाय । वृषाय । वल्लवेशाय । सुदाम्ने । अर्जुनाय । सौबलाय नमः । ८२०

ओं सकृष्णस्तोकाय नमः । अंशुकाय । सद्विशालर्षभाख्याय । सुतेजस्विकाय । कृष्णमित्रवरूथाय । कुशेशाय । वनेशाय । वृन्दावनेशाय । माथुरेशाधिपाय । गोकुलेशाय । सदा गोगणाय । गोपतये । गोपिकेशाय । गोवर्धनाय । गोपतये । कन्यकेशाय । अनादये । आत्मने । हरये । परस्मै पुरुषाय नमः । ८४०

ओं निर्गुणाय नमः । ज्योतीरूपाय । निरीहाय । सदा निर्विकाराय । प्रपंचात्पराय । ससत्याय । पूर्णाय । परेशाय । सूक्ष्माय । द्वारकायां नृपेण अश्वमेधकर्त्रे । अपि पौत्रेण भूभारहर्त्रे । पुनःश्रीव्रजे राधया रासरङ्गकर्त्रे हरये । गोपिकानां च भर्त्रे । सदैकस्मै । अनेकाय । प्रभापूरिताङ्गाय । योगमायाकराय । कालजिते । सुदृष्टये । महत्तत्त्वरूपाय नमः । ८६०

ओं प्रजाताय नमः । कूटस्थाय । आद्याङ्कुराय । वृक्षरूपाय । विकारस्थिताय । वैकारिकतैजसतामसाहङ्काराय । नभसे । दिशे । समीराय । सूर्याय । प्रचेतोऽश्विवह्नये । शक्राय । उपेन्द्राय । मित्राय । श्रुतये । त्वचे । दृग्भ्यां । घ्राणाय । जिह्वायै । गिरे नमः । ८८०

ओं भुजाभ्यां नमः । मेढ्राय । पायवे । अङ्घ्रये । सचेष्टाय । धरायै । व्योम्ने । वारे । मारुताय । तेजसे । रूपाय । रसाय । गन्धाय । शब्दाय । स्पर्शाय । सचित्ताय । बुद्ध्यै । विराजे । कालरूपाय । वासुदेवाय नमः । ९००

ओं जगत्कृते नमः । अण्डेशयनाय । सशेषाय । सहस्रस्वरूपाय । रमानाथाय । आद्यायावताराय । सदासर्गकृते । पद्मजाय । कर्मकर्त्रे ।

नाभिपद्मोद्भवाय । दिव्यवर्णाय । कवये । लोककृते । कालकृते । सूर्यरूपाय । अनिमेषाय । अभवाय । वत्सरान्ताय । महीयसे । तिथिभ्यो नमः । ९२०

ओं वारेभ्यो नमः । नक्षत्रेभ्यः । योगेभ्यः । लग्नेभ्यः । मासेभ्यः । घटीभ्यः । क्षणेभ्यः । काष्ठिकाभ्यः । मुहूर्त्तेभ्यः । यामेभ्यः । ग्रहेभ्यः । यामिनीभ्यः । दिनेभ्यः । ऋक्षमालागताय । देवपुत्राय । कृतेभ्यः । त्रेताभ्यः । द्वापरेभ्यः । अस्मै कलये । युगानां सहस्राय नमः । ९४०

ओं मन्वन्तरेभ्यो नमः । लयाय । पालनाय । सत्कृतये । परार्द्धाभ्यां । सदोत्पत्तिकृते । द्व्यक्षरब्रह्मरूपाय । रुद्रसर्गाय । कौमारसर्गाय । मुनेःसर्गकृते । देवकृते । प्राकृताय । श्रुतिभ्यः । स्मृतिभ्यः । स्तोत्रेभ्यः । पुराणेभ्यः । धनुर्वेदाय । इज्यायै । गान्धर्ववेदाय । विधात्रे नमः । ९६०

ओं नारायणाय नमः । सनत्कुमाराय । वराह-नारदाभ्यां । धर्मपुत्राय । मुनिकर्दमस्यात्मजाय । सयज्ञदत्ताय । अमराय नाभिजाय । श्रीपृथवे । सुमत्स्याय । कूर्माय । धन्वन्तरये । मोहिन्यै । प्रतनारसिंहाय । द्विजवामनाय । रेणुकापुत्ररूपाय । श्रुतिस्तोत्रमुनिव्यासदेवाय । धनुर्वेदभाग्-रामचन्द्रावताराय । सीतापतये । भारहृते । रावणारये नमः । ९८०

ओं नृपसेतुकृते नमः । वानरेन्द्रप्रहारिणे । महायज्ञकृते । प्रचण्डराघवेन्द्राय । बलाय कृष्णचन्द्राय । कल्किकलेशाय । प्रसिद्धबुद्धाय । हंसाय । अश्वाय । ऋषीन्द्राय जिताय । देववैकुण्ठ-नाथाय । अमूर्तये । मन्वन्तरस्यावताराय । गजोद्धारणाय । ब्रह्मपुत्रश्रीमनवे । दानशीलाय । दुष्यन्तजाय नृपेन्द्राय । संदृष्टाय श्रुताय भूताय भविष्यते भवते । स्थावरजङ्गमाय । अल्पाय महते नमः । १०००

# श्रीरामाष्टोत्तरशतनामस्तोत्रम्

(आनन्दरामायणतः)

अस्य श्रीरामाष्टोत्तरशतनाममहामन्त्रस्य, ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । जानकीवल्लभः श्रीरामचन्दो देवता । ओं बीजं, नमः शक्तिः, श्रीरामचन्द्र इति कीलकम् । श्रीरामचन्द्र प्रीत्यर्थे पारायणे विनियोगः । अंगन्यासः- ओं नमो भगवते राजाधिराजाय परमात्मने अंगुष्ठाभ्यां नमः । ओं नमो भगवते विद्याधिराजाय हयग्रीवाय तर्जनीभ्यां नमः । ओं नमो भगवते जानकीवल्लभाय मध्यमाभ्यां नमः । ओं नमो भगवते रघुनन्दनाय अमिततेजसे अनामिकाभ्यां नमः । ओं नमो भगवते क्षीराब्धि मध्यस्थाय नारायणाय कनिष्ठिकाभ्यां नमः । ओं नमो भगवते सत्प्रकाशाय रामाय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ध्यानं-

मन्दाराकृतिपुण्यधाम विलसद्वक्षःस्थलं कोमलं
शान्तं कान्तमहीन्द्रनीलरुचिराभासं सहस्राननम् ।
वन्देऽहं रघुनन्दनं सुरपतिं कोदण्डदीक्षागुरुं
रामं सर्वजगत्सुसेवितपदं सीतामनोवल्लभम् ॥

सहस्रशीर्ष्णे वै तुभ्यं सहस्राक्षाय ते नमः ।
नमः सहस्रहस्ताय सहस्रचरणाय च ॥ १ ॥

नमो जीमूतवर्णाय नमस्ते विश्वतोमुख ।
अच्युताय नमस्तुभ्यं नमस्ते शेषशायिने ॥ २ ॥

नमो हिरण्यगर्भाय पञ्चभूतात्मने नमः ।
नमो मूलप्रकृतये देवानां हितकारिणे ॥ ३ ॥

नमस्ते सर्वलोकेश सर्वदुःखनिषूदन ।
शंखचक्रगदापद्मजटामुकुटधारिणे ॥ ४ ॥

नमो गर्भाय तत्त्वाय ज्योतिषां ज्योतिषे नमः ।
ओं नमो वासुदेवाय नमो दशरथात्मज ॥ ५ ॥

नमो नमस्ते राजेन्द्र सर्वसंपत्प्रदाय च ।
नमः कारुण्य रूपाय कैकयीप्रियकारिणे ॥ ६ ॥

नमो दान्ताय शान्ताय विश्वामित्रप्रियाय ते ।
यज्ञेशाय नमस्तुभ्यं नमस्ते क्रतुपालक ॥ ७ ॥

नमो नमः केशवाय नमो नाथाय शार्ङ्गिणे ।
नमस्ते रामचन्द्राय नमो नारायणाय च ॥ ८ ॥

नमस्ते रामभद्राय माधवाय नमो नमः ।
गोविन्दाय नमस्तुभ्यं नमस्ते परमात्मने ॥ ९ ॥

नमो विष्णुस्वरूपाय रघुनाथाय ते नमः ।
नमस्तेऽ नाथनाथाय नमस्ते मधुसूदन ॥ १० ॥

त्रिविक्रम नमस्तेऽस्तु सीतायाः पतये नमः ।
वामनाय नमस्तुभ्यं नमस्ते राघवाय च ॥ ११ ॥

नमो नमः श्रीधराय जानकीवल्लभाय च ।
नमस्तेऽस्तु हृषीकेश कन्दर्पाय नमो नमः ॥ १२ ॥

नमस्ते पद्मनाभाय कौसल्याहर्षकारिणे ।
नमो राजीवनयन नमस्ते लक्ष्मणाग्रज ॥ १३ ॥

नमो नमस्ते काकुत्स्थ नमो दामोदराय च ।
विभीषणपरित्रातः नमः संकर्षणाय च ॥ १४ ॥

वासुदेव नमस्तेऽस्तु नमस्ते शंकरप्रिय ।
प्रद्युम्नाय नमस्तुभ्यं अनिरुद्धाय ते नमः ॥ १५ ॥

सदसद्भक्तिरूपाय नमस्ते पुरुषोत्तम ।
अधोक्षज नमस्तेऽस्तु सप्ततालहराय च ॥ १६ ॥
खरदूषण संहर्त्रे श्रीनृसिंहाय ते नमः ।
अच्युताय नमस्तुभ्यं नमस्ते सेतुबन्धक ॥ १७ ॥
जनार्दन नमस्तेऽस्तु नमो हनुमदाश्रय ।
उपेन्द्रचन्द्रवन्द्याय मारीचमथनाय च ॥ १८ ॥
नमो वालिप्रहरण नमः सुग्रीवराज्यद ।
जामदग्न्यमहादर्पहराय हरये नमः ॥ १९ ॥
नमो नमस्ते कृष्णाय नमस्ते भरताग्रज ।
नमस्ते पितृभक्ताय नमः शत्रुघ्नपूर्वज ॥ २० ॥
अयोध्याधिपते तुभ्यं नमः शत्रुघ्नसेवित ।
नमो नित्याय सत्याय बुद्ध्यादिज्ञानरूपिणे ॥ २१ ॥
अद्वैतब्रह्मरूपाय ज्ञानगम्याय ते नमः ।
नमः पूर्णाय रम्याय माधवाय चिदात्मने ॥ २२ ॥
अयोध्येशाय श्रेष्ठाय चिन्मात्राय परात्मने ।
नमोऽहल्योद्धारणाय नमस्ते चापभंगिने ॥ २३ ॥
सीतारामाय सेव्याय स्तुत्याय परमेष्ठिने ।
नमस्ते बाणहस्ताय नमः कोदण्डधारिणे ॥ २४ ॥
नमः कबन्धहन्त्रे च वालिहन्त्रे नमोऽस्तु ते ।
नमस्तेऽस्तु दशग्रीवप्राणसंहारकारिणे ॥ २५ ॥
अष्टोत्तरशतं नाम्नां रामचन्द्रस्य पावनम् ।
एतत्प्रोक्तं मया श्रेष्ठं सर्वपातकनाशनम् ॥ २६ ॥
अस्य संकीर्तनादेव सर्वान्कामान् लभेन्नरः ।

# श्रीरामाष्टोत्तरशतनामावलिः

ओं सहस्रशीर्ष्णे नमः । सहस्राक्षाय । सहस्रहस्ताय । सहस्रचरणाय । जीमूतवर्णाय । विश्वतोमुखाय । अच्युताय । शेषशायिने । हिरण्यगर्भाय । पञ्चभूतात्मने । मूलप्रकृतये । देवानां हितकारिणे । सर्वलोकेशाय । सर्वदुःखनिषूदनाय । शंखचक्रगदापद्मजटामकुटधारिणे । गर्भाय । तत्त्वाय । ज्योतिषां ज्योतिषे । वासुदेवाय । दशरथात्मजाय नमः ।। २०

ओं राजेन्द्राय नमः । सर्वसंपत्प्रदाय । कारुण्यरूपाय । कैकयीप्रियकारिणे । दान्ताय । शान्ताय । विश्वामित्रप्रियाय । यज्ञेशाय । क्रतुपालकाय । केशवाय । नाथाय । शार्ङ्गिणे । रामचन्द्राय । नारायणाय । रामभद्राय । माधवाय । गोविन्दाय । परमात्मने । विष्णुस्वरूपाय । रघुनाथाय नमः ।। ४०

ओं अनाथनाथाय नमः । मधुसूदनाय । त्रिविक्रमाय । सीतायाः पतये । वामनाय । राघवाय । श्रीधराय । जानकीवल्लभाय । हृषीकेशाय । कन्दर्पाय । पद्मनाभाय । कौसल्याहर्षकारिणे । राजीवनयनाय । लक्ष्मणाग्रजाय । काकुत्स्थाय । दामोदराय । विभीषणपरित्रात्रे । संकर्षणाय । वासुदेवाय । शंकरप्रियाय नमः ।। ६०

ओं प्रद्युम्नाय नमः । अनिरुद्धाय । सदसद्भक्तिरूपाय । पुरुषोत्तमाय । अधोक्षजाय । सप्ततालहराय । खरदूषणसंहर्त्रे । श्रीनृसिंहाय । अच्युताय । सेतुबन्धकाय । जनार्दनाय । हनुमदाश्रयाय । उपेन्द्रचन्द्रवन्द्याय । मारीचमथनाय । वालिप्रहरणाय । सुग्रीवराज्यदाय । जामदग्न्यमहादर्पहराय । हरये । कृष्णाय । भरताग्रजाय नमः । ८०

ओं पितृभक्ताय नमः । शत्रुघ्नपूर्वजाय । अयोध्याधिपतये । शत्रुघ्नसेविताय । नित्याय । सत्याय । बुद्ध्यादिज्ञानरूपिणे ।

अद्वैतब्रह्मरूपाय । ज्ञानगम्याय । पूर्णाय । रम्याय । माधवाय । चिदात्मने । अयोध्येशाय । श्रेष्ठाय । चिन्मात्राय । परात्मने । अहल्योद्धारणाय । चापभंगिने । सीतारामाय नमः ॥ १००

ओं सेव्याय नमः । स्तुत्याय । परमेष्ठिने । बाणहस्ताय । कोदण्डधारिणे । कबन्धहन्त्रे । वालिहन्त्रे । दशग्रीवप्राणसंहारकारिणे नमः । १०८

# श्रीसीताष्टोत्तरशतनामस्तोत्रम्

(आनन्दरामायणतः)

अस्य श्रीसीताष्टोत्तर शतनाममहामन्त्रस्य; अगस्त्य ऋषिः । अनुष्टुप् छन्दः । रमेति बीजम् । मातुलिंगीति शक्तिः । पद्माक्षाजेति कीलकम् । अवनिजेत्यस्त्रम् । जनकजेति कवचम् । मूलकासुरमर्दिनीति परमो मन्त्रः । श्रीसीतारामचन्द्रप्रीत्यर्थे पारायणे विनियोगः । करन्यासः- ओं सीतायै अंगुष्ठाभ्यां नमः । ओं रमायै तर्जनीभ्यां नमः । ओं मातुलिंग्यै मध्यमाभ्यां नमः । ओं पद्माक्षजायै अनामिकाभ्यां नमः । ओं अवनिजायै कनिष्ठिकाभ्यां नमः । ओं जनकजायै करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ओं मूलकासुरमर्दिन्यै इति दिग्बन्धः । ध्यानम्-

वामाङ्गे रघुनायकस्य रुचिरे या संस्थिता शोभना
या विप्राधिपयानरम्यनयना या विप्रपालानना ।
विद्युत्पुञ्जविराजमानवसना भक्तार्तिसंखण्डना
श्रीमद्राघवपादपद्मयुगलन्यस्तेक्षणा साऽवतु ॥

श्रीसीता जानकी देवी वैदेही राघवप्रिया ।
रमाऽवनिसुता रामा राक्षसान्तप्रकारिर्णी ॥ १ ॥

रत्नगुप्ता मातुलिङ्गी मैथिली भक्ततोषदा।
पद्माक्षजा कञ्जनेत्रा स्मितास्या नूपुरस्वना॥ २॥

वैकुण्ठनिलया मा श्रीः मुक्तिदा कामपूरणी।
नृपात्मजा हेमवर्णा मृदुलांगी सुभाषिणी॥ ३॥

कुशांबिका दिव्यदा च लवमाता मनोहरा।
हनूमद्वन्दितपदा मुग्धा केयूरधारिणी॥ ४॥

अशोकवनमध्यस्था रावणादिकमोहिनी।
विमानसंस्थिता सुभ्रूः सुकेशी रशनान्विता॥ ५॥

रजोरूपा सत्वरूपा तामसी वह्निवासिनी।
हेममृगासक्तचित्ता वाल्मीकाश्रमवासिनी॥ ६॥

पतिव्रता महामाया पीतकौशेयवासिनी।
मृगनेत्रा च बिम्बोष्ठी धनुर्विद्याविशारदा॥ ७॥

सौम्यरूपा दशरथस्नुषा चामरवीजिता।
सुमेधादुहिता दिव्यरूपा त्रैलोक्यपालिनी॥ ८॥

अन्नपूर्णा महालक्ष्मीः धीर्लज्जा च सरस्वती।
शान्तिः पुष्टिः शमा गौरी प्रभाऽयोध्यानिवासिनी॥ ९॥

वसन्तशीतला गौरी स्नानसन्तुष्टमानसा।
रमानामभद्रसंस्था हेमकुंभपयोधरा॥ १०॥

सुरार्चिता धृतिः कान्तिः स्मृतिर्मेधा विभावरी।
लघूदरा वरारोहा हेमकङ्कणमण्डिता॥ ११॥

द्विजपत्न्यर्पितनिजभूषा राघवतोषिणी।
श्रीरामसेवनरता रत्नताटङ्कधारिणी॥ १२॥

रामवामाङ्कसंस्था च रामचन्द्रैकरञ्जिनी।
सरयूजलसंक्रीडाकारिणी राममोहिनी ॥ १३ ॥

सुवर्णतुलिता पुण्या पुण्यकीर्तिः कलावती।
कलकण्ठा कम्बुकण्ठा रंभोरूर्गजगामिनी ॥ १४ ॥

रामार्पितमना रामवन्दिता रामवल्लभा।
श्रीरामपदचिह्नाङ्का राम रामेति भाषिणी ॥ १५ ॥

रामपर्यङ्कशयना रामांघ्रिक्षालिनी वरा।
कामधेन्वन्नसन्तुष्टा मातुलिङ्गकरादृता ॥ १६ ॥

दिव्यचन्दनसंस्था श्रीमूलकासुरमर्दिनी।
एवमष्टोत्तरशतं सीतानाम्नां सुपुण्यदम् ॥ १७ ॥

नरैः प्रातः समुत्थाय पठितव्यं प्रयत्नतः।
सीतापूजनकालेऽपि सर्ववाञ्छितदायकम् ॥ १८ ॥

## सीताऽष्टोत्तरशतनामावलिः

ओं श्रीसीतायै नमः। जानक्यै। देव्यै। वैदेह्यै। राघवप्रियायै। रमायै। अवनिसुतायै। रामायै। राक्षसान्तप्रकारिण्यै। रत्नगुप्तायै। मातुलिंग्यै। मैथिल्यै। भक्ततोषदायै। पद्माक्षजायै। कञ्जनेत्रायै। स्मितास्यायै। नूपुरस्वनायै। वैकुण्ठनिलयायै। मायै। श्रियै नमः। २०

ओं मुक्तिदायै नमः। कामपूरण्यै। नृपात्मजायै। हेमवर्णायै। मृदुलांग्यै। सुभाषिण्यै। कुशांबिकायै। दिव्यदायै। लवमात्रे। मनोहरायै। हनुमद्वन्दितपदायै। मुग्धायै। केयूरधारिण्यै। अशोकवनमध्यस्थायै। रावणादिकमोहिन्यै। विमानसंस्थितायै। सुभ्रुवे। सुकेश्यै। रशनन्वितायै। रजोरूपायै नमः। ४०

ओं सत्वरूपायै नमः । तामस्यै । वह्निवासिन्यै । हेममृगासक्तचित्तायै । वाल्मीकाश्रमवासिन्यै । पतिव्रतायै । महामायायै । पीतकौशेयवासिन्यै । मृगनेत्रायै । बिम्बोष्ठ्यै । धनुर्विद्याविशारदायै । सौम्यरूपायै । दशरथस्नुषायै । चामरवीजितायै । सुमेधादुहित्रे । दिव्यरूपायै । त्रैलोक्यपालिन्यै । अन्नपूर्णायै । महालक्ष्म्यै । धियै नमः । ६०

ओं लज्जायै नमः । सरस्वत्यै । शान्त्यै । पुष्ट्यै । शमायै । गौर्यै । प्रभायै । अयोध्यानिवासिन्यै । वसन्तशीतलायै । गौर्यै । स्नानसन्तुष्टमानसायै । रमानामभद्रसंस्थायै । हेमकुंभपयोधरायै । सुरार्चितायै । धृत्यै । कान्त्यै । स्मृत्यै । मेधायै । विभावर्यै । लघूदरायै नमः । ८०

ओं वरारोहायै नमः । हेमकङ्कणमण्डितायै । द्विजपत्न्यर्पितनिजभूषायै । राघवतोषिण्यै । श्रीरामसेवनरतायै । रत्नताटङ्कधारिण्यै । रामवामाङ्कसंस्थायै । रामचन्द्रैकरञ्जिन्यै । सरयूजलसंक्रीडाकारिण्यै । राममोहिन्यै । सुवर्णतुलितायै । पुण्यायै । पुण्यकीर्त्यै । कलावत्यै । कलकण्ठायै । कंबुकण्ठायै । रंभोरवे । गजगामिन्यै । रामार्पितमनसे । रामवन्दितायै नमः । १००

ओं रामवल्लभायै नमः । श्रीरामपदचिह्नाङ्कायै । रामरामेति भाषिण्यै । रामपर्यङ्कशयनायै । रामांघ्रिक्षालिन्यै । वरायै । कामधेन्वन्नसन्तुष्टायै । मातुलिंगकराद्दतायै । दिव्यचन्दनसंस्थायै । श्रीमूलकासुरमर्दिन्यै नमः । ११०

## द्वादशमूर्तिस्तुतिः

तत्र वैष्णवलोके तु विष्णुः साक्षात्सनातनः ।
चतुर्धा दशधा चैव तथा द्वादशधा पुनः ॥ १ ॥
विभिन्नमूर्तिः सततं वर्तते माधवः सदा ।
जांबूनदप्रभश्चक्री पूर्वस्यां दिशि केशवः ॥ २ ॥
पश्चान्नारायणः शंखी नीलजीमूत सन्निभः ।
इन्दीवरदलश्यामो मधुमान्माधवेऽवति ॥ ३ ॥
गोविन्दो दक्षिणे पार्श्वे धन्वी चन्द्रप्रभो महान् ।
उत्तरे हलधृग्विष्णुः पद्मकिञ्जल्क संनिभः ॥ ४ ॥
आग्नेय्यामरविन्दाभो मुसली मधुसूदनः ।
त्रिविक्रमः खड्गपाणिः नैरृत्ये ज्वलनप्रभः ॥ ५ ॥
वायव्यां वामनो वज्री तरुणादित्यदीप्तिमान् ।
ईशान्यां पुण्डरीकाभः श्रीधरः पट्टिशायुधः ॥ ६ ॥
विद्युत्प्रभो हृषीकेशो ह्यवाच्यां दिशि मुद्गरी ।
पद्मनाभः शार्ङ्गपाणिः सहस्रार्कसमप्रभः ॥ ७ ॥
माणिक्यमण्टपस्थानमानुलोम्येन वेष्टते ।
सर्वायुधः सर्वशक्तिः सर्वज्ञः सर्वतो मुखः ॥ ८ ॥
इन्द्रगोपक सङ्काशः पाशहस्तोऽपराजितः ।
दामोदरस्तु सर्वात्मा परमानन्दनिर्भरः ॥ ९ ॥
माणिक्यमण्टपस्थानं विलोमेन विवेष्टते ।
इत्थं द्वादशभिर्देहैः भगवानंबुजेक्षणः।
माणिक्यमण्टपगतो विष्णु लोके विराजते ॥ १० ॥

(ब्रह्माण्डपुराणतः)

(एतेषां विभवमूर्तीनां केशवादीनां, समष्टिरूपस्य वासुदेवस्य च शक्तयः (पत्न्यः) कीर्तिः कान्तिः तुष्टिः पुष्टिः धृतिः क्षान्तिः क्रिया, दया, मेधा हर्षा, श्रद्धा लज्जा लक्ष्मीरिति क्रमदीपिकायाम्।)

# द्वादशमूर्तिस्तुतिः

चतुश्चक्रं नमस्यामि केशवं कनकप्रभम्।
नारायणं घनश्यामं चतुःशंखं नमाम्यहम्॥ १॥

माधवं मणिभङ्गाभं चिन्तयामि चतुर्गदम्।
चन्द्रभासं चतुःशार्ङ्गं गोविन्दमपि संश्रये॥ २॥

विष्णुं चतुर्हलं वन्दे पद्मकिञ्जल्कसन्निभम्।
चतुर्मुसलमब्जाभं संश्रये मधुसूदनम्॥ ३॥

अग्निवर्णं चतुःखड्गं भावयामि त्रिविक्रमम्।
वामनं बालसूर्याभं चतुर्वज्रं विभावये॥ ४॥

श्रीधरं पुण्डरीकाभं चतुःपट्टसमाश्रये।
चतुर्मुद्गरमभ्येमि हृषीकेशं तटित्प्रभम्॥ ५॥

पञ्चायुधं पद्मनाभं प्रणमाम्यर्करोचिषम्।
दामोदरं चतुःपाशं इन्द्रगोपनिभं भजे॥ ६॥

वासुदेवमुपासेऽहं पूर्णेन्द्वयुतसन्निभम्।

(श्रीदेवी, अमृतोद्भवा, कमला, चन्द्रसोदरी, वरारोहा, हरिवल्लभा, विष्णुपत्नी, वैष्णवी, शार्ङ्गिणी, देवदेविका, महालक्ष्मीः, सुरसुन्दरी, सर्वाभीष्टप्रदायिनी इति देव्यः केशवादीनां सवासुदेवानाम्।)

अच्युताय नमोऽनन्ताय नमो गोविन्दाय नमः इति त्रिनामा।

# श्रीहनूमत्कवचम्

अस्य श्रीहनुमत्कवचस्य, श्रीरामचन्द्र ऋषिः, अनुष्टुप् छन्दः, श्रीहनुमान्देवता । मारुतात्मजेति बीजम्, अंजनीसूनुरिति शक्तिः, आत्मनः सकलकार्यसिद्ध्यर्थे जपे विनियोगः ।

ओं हनुमते अङ्गुष्ठाभ्यां नमः । ओं पवनात्मजाय तर्जनीभ्यां नमः । ओं अक्षपघ्नाय मध्यमाभ्यां नमः । विष्णुभक्ताय अनामिकाभ्यां नमः । ओं लङ्काग्निदाहकाय कनिष्ठिकाभ्यां नमः । श्रीरामकिङ्कराय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः ।

ओं ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहम्
देवेन्द्रपुमुखैः प्रशंसियशसं देदीप्यमानं रुचा ।
सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं
संरक्तारुणलोचनं पवनजं पीताम्बरालङ्कृतम् ॥ १

वज्राङ्गं पिङ्गकेशाढ्यं स्वर्णकुण्डलमण्डितम् ।
नियुद्धमुपसंक्रम्य पारावारपराक्रमम् ॥ २

वामहस्ते गदायुक्तं पाशहस्तं कमण्डलुम् ।
ऊर्ध्वदक्षिणदोर्दण्डं हनुमन्तं विचिन्तयेत् ॥ ३

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम् ।
कुण्डलद्वयसंशोभिमुखाम्बुजहरिं भजेत् ॥ ४

हनुमान्पूर्वतः पातु दक्षिणे पवनात्मजः ।
पातु प्रतीच्यामक्षघ्नः पातु सागरपारगः ॥ ५

उदीच्यामूर्ध्वगः पातु केसरीप्रियनन्दनः ।
अधस्ताद्विष्णुभक्तश्च पातु मध्ये च पावनिः ॥ ६

अवान्तरदिशः पातु सीताशोकविनाशनः ।
लङ्काविदाहकः पातु सर्वापद्भ्यो निरन्तरम् ॥ ७

सुग्रीवसचिवः पातु मस्तकं वायुनन्दनः ।
भालं पातु महावीरो भ्रुवोर्मध्ये निरन्तरम् ॥ ८

नेत्रे छायापहारी च पातु नः प्लवगेश्वरः ।
कपोलौ कर्णमूले च पातु श्रीरामकिङ्करः ॥ ९

नासाग्रमञ्जनीसूनुः पातु वक्त्रं कपीश्वरः ।
पातु कण्ठं च दैत्यारिः स्कन्धौ पातु सुरार्चितः ॥ १०

भुजौ पातु महातेजाः करौ तु चरणायुधः ।
नखान्नखायुधः पातु कुक्षौ पातु कपीश्वरः ॥ ११

वक्षो मुद्रापहारी च पार्श्वे पातु भुजायुधः ।
लङ्काविभञ्जकः पातु पृष्ठदेशे निरन्तरम् ॥ १२

नाभिं च रामदूतश्च कटिं पात्वनिलात्मजः ।
गुह्यं पातु कपीशस्तु गुल्फौ पातु महाबलः ॥ १३

अचलोद्धारकः पातु पादौ भास्करसन्निभः ।
अङ्गान्यमितसत्त्वाढ्यः पातु पादाङ्गुलीः सदा ॥ १४

सर्वाङ्गानि महाशूरः पातु रोमाणि चात्मवान् ॥ १५

हनुमत्कवचं यस्तु पठेद्विद्वान् विचक्षणः ।
स एव पुरुषश्रेष्ठो भुक्तिं मुक्तिं च विन्दति ॥ १६

त्रिकालमेककालं वा पठेन्मासत्रयं पुनः ।
सर्वारिष्टं क्षणे जित्वा स पुमान् श्रियमाप्नुयात् ॥ १७

अर्धरात्रौ जले स्थित्वा सप्तवारं पठेद्यदि।
क्षयापस्मारकुष्ठादितापज्वरनिवारणम्॥ १८

अश्वत्थमूलेऽर्कवारे स्थित्वा पठति यः पुमान्।
स एव जयमाप्नोति संग्रामेष्वभयं तथा॥ १९

यः करे धारयेन्नित्यं सर्वान्कामानवाप्नुयात्।
लिखित्वा पूजयेद्यस्तु तस्य ग्रहभयं हरेत्॥ २०

कारागृहे प्रयाणे च संग्रामे देशविप्लवे।
यः पठेद्धनुमत्कवचं तस्य नास्ति भयं तथा॥ २१

यो वारां निधिमल्पपल्वलमिवोल्लंध्य प्रतापान्वितो
वैदेहीघनतल्पशोकहरणो वैकुण्ठभक्तप्रियः।
अक्षाद्यूर्जितराक्षसेश्वरमहादर्पापहारी रणे
सोऽयं वानरपुङ्गवोऽवतु सदा चास्मान्समीरात्मजः॥ २२

(श्रीब्रह्माण्डपुराणतः)

## पञ्चमुखहनुमत्कवचम्

ओं श्रीगणेशाय नमः। ओं श्रीपञ्चवदनायाञ्जनेयाय नमः। ओं अस्य श्रीपञ्चमुखहनुमत्कवचमन्त्रस्य ब्रह्मा ऋषिः, गायत्रीछन्दः, पञ्चमुखविराट्हनुमान् देवता, ह्रीं बीजं, श्रीं शक्तिः, क्रौं कीलकं, क्रूं कवचं, क्रैं अस्त्राय फट् इति दिग्बन्धः।

श्री गरुड उवाच—

अथ ध्यानं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि।
यत्कृतं देवदेवेन ध्यानं हनुमतः प्रियम्॥ १

पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम्।
बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम्॥ २

पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम्।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम्॥ ३

अस्यैव दक्षिणं वक्त्रं नारसिंहं महाद्भुतम्।
अत्युग्रतेजोवपुषं भीषणं भयनाशनम्॥ ४

पश्चिमं गारुडं वक्त्रं वक्रतुण्डं महाबलम्।
सर्वनागप्रशमनं विषभूतादिकृन्तनम्॥ ५

उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं नभोपमम्।
पातालसिंहवेतालज्वररोगादिकृन्तनम्॥ ६

ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम्।
येन वक्त्रेण विप्रेन्द्र तारकाख्यं महासुरम्॥ ७

जघान शरणं तत्स्यात्सर्वशत्रुहरं परम्।
ध्यात्वा पञ्चमुखं रुद्रं हनुमन्तं दयानिधिम्॥ ८

खड्गं त्रिशूलं खट्वाङ्गं पाशमङ्कुशपर्वतम्।
मुष्टिं कौमोदकीं वृक्षं धारयन्तं कमण्डलुम्॥ ९

भिन्दिपालं ज्ञानमुद्रां दशभिर्मुनिपुङ्गवम्।
एतान्यायुधजालानि धारयन्तं भजाम्यहम्॥ १०

प्रेतासनोपविष्टं तं सर्वाभरणभूषितम्।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्॥ ११

पञ्चास्यमच्युतमनेकविचित्रवर्णं वक्त्रं शशाङ्कशिखरं कपिराजवर्यम्।
पीताम्बरादिमुकुटैरुपशोभिताङ्गं पिङ्गाक्षमाद्यमनिशं मनसा स्मरामि॥ १२

मर्कटेशं महोत्साहं सर्वशत्रुहरं परम्।
शत्रुं संहर मां रक्ष श्रीमन्नापदमुद्धर॥ १३

ओं हरिमर्कटमर्कटमन्त्रमिदं
परिलिख्यति लिख्यति वामतले।
यदि नश्यति नश्यति शत्रुकुलं
यदि मुञ्चति मुञ्चति वामलता॥ १४

ओं हरिमर्कटाय स्वाहा। ओं नमो भगवते पञ्चवदनाय पूर्वकपिमुखाय सकलशत्रुसंहरणाय स्वाहा। ओं नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय नरसिंहाय सकलभूतप्रमथनाय स्वाहा। ओं नमो भगवते पञ्चवदनाय पश्चिममुखाय गरुडाननाय सकलविषहराय स्वाहा। ओं नमो भगवते पञ्चवदनाय उत्तरमुखाय आदिवराहाय सकलसम्पत्कराय स्वाहा। ओं नमो भगवते पञ्चवदनायोर्ध्वमुखाय हयग्रीवाय सकलजनवशंकराय स्वाहा।

ओं अस्य श्रीपञ्चमुखहनुमन्मत्रस्य श्रीरामचन्द्र ऋषिः अनुष्टुपूछन्दः, पञ्चमुखवीरहनुमान् देवता, हनुमानिति बीजं, वायुपुत्र इति शक्तिः, अञ्जनीसुत इति कीलकं, श्रीरामदूतहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः। इति ऋष्यादिकं विन्यसेत्। ओं अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः। ओं रुद्रमूर्तये तर्जनीभ्यां नमः। ओं वायुपुत्राय मध्यमाभ्यां नमः। ओं अग्निगर्भाय अनामिकाभ्यां नमः। ओं रामदूताय कनिष्ठिकाभ्यां नमः। इति करन्यासः। ओं अञ्जनीसुताय हृदयाय नमः। ओं रुद्रमूर्तये शिरसे स्वाहा। ओं वायुपुत्राय शिखायै वषट्। ओं अग्निगर्भाय कवचाय हुं। ओं रामदूताय नेत्रत्रयाय वौषट्। ओं पञ्चमुखहनुमते अस्त्राय फट्। पञ्चमुख-हनुमते स्वाहा इति दिग्बन्धः। अथ ध्यानम्—

वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं
दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा।
हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भांकुशाद्रिं हलं
खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिवीरापहम्॥ १ इति

अथ मन्त्रः—

ओं श्रीरामदूतायञ्जनेयाय वायुपुत्राय महाबलपराक्रमाय सीतादुःखनिवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय फाल्गुन-सखाय कोलाहलाय सकलब्रह्माण्डविश्वरूपाय सप्तसमुद्रनिर्लङ्घनाय पिङ्गलनयनायामितविक्रमाय सूर्यबिम्बफलसेवनाय दुष्टनिवारणाय दृष्टिनिरालङ्कृताय सञ्जीविनीसञ्जीविताङ्गदलक्ष्मणमहाकपिसैन्य-प्राणदाय दशकण्ठविध्वंसनाय रामेष्टाय महाफाल्गुनसखाय सीतासहित-रामवरप्रदाय । षट्प्रयोगागमपञ्चमुखवीरहनुमन्मन्त्रजपे विनियोगः ।

ओं हरिमर्कटमर्कटाय बंबंबंबंबं वौषट् स्वाहा। ओं हरिमर्कटमर्कटाय फंफंफंफंफं फट् स्वाहा । ओं हरिमर्कयमर्कटाय खेंखेंखेंखेंखें मारणाय स्वाहा । ओं हरिमर्कटमर्कटाय लुंलुंलुंलुंलुं आकर्षितसकलसम्पत्कराय स्वाहा। ओं हरिमर्कटमर्कटाय धंधंधंधंधं शत्रुस्तम्भनाय स्वाहा। ओं टंटंटंटंटं कूर्ममूर्तये वीरहनुमते परयन्त्र परतन्त्रोच्चाटनाय स्वाहा । ओं कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंबंभंमं यंरंलंवं शंषंसंहंलंक्षं (ज्ञं) स्वाहा। इति दिग्बन्धः । ओं पूर्वकपिमुखाय पञ्चमुखहनुमते टंटंटंटंटं सकलशत्रुहरणाय स्वाहा। ओं दक्षिणमुखाय पञ्चमुखहनुमते करालवदनाय नरसिंहाय स्वाहा । ओं ह्रां ह्रींह्रूंह्रैंह्रौंह्रः सकलभूतप्रेतदमनाय स्वाहा । ओं पश्चिममुखाय गरुडाननाय पञ्चमुखहनुमते मंमंमंमंमं सकलविषहराय स्वाहा । ओं उत्तरमुखायादिवराहाय लंलंलंलंलं नृसिंहाय नीलकण्ठमूर्तये

पञ्चमुखहनुमते स्वाहा। ओं ऊर्ध्वमुखाय हयग्रीवाय रुंरुंरुंरुंरुं रुद्रमूर्तये सकलप्रयोजननिर्वाहकाय स्वाहा। ओं अञ्जनीसुताय वायुपुत्राय महाबलाय सीताशोकनिवारणाय श्रीरामचन्द्रकृपापादुकाय महावीर्यप्रमथनाय ब्रह्मराक्षसशाकिनीडाकिन्यन्तरिक्षग्रहपरयन्त्रपरतन्त्रोच्चाटनाय स्वाहा। सकलप्रयोजननिर्वाहकाय पञ्चमुखवीरहनुमते श्रीरामचन्द्रवर-प्रसादाय जंजंजंजंजं स्वाहा।

इदं कवचं पठित्वा तु महाकवचं पठेन्नरः।
एकवारं जपेत्स्तोत्रं सर्वशत्रुनिवारणम्॥ १५

द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्धनम्।
त्रिवारं च पठेन्नित्यं सर्वसम्पत्करं शुभमं॥ १६

चतुर्वारं पठेन्नित्यं सर्वरोगनिवारणम्।
पञ्चवारं पठेन्नित्यं सर्वलोकवशङ्करम्॥ १७

षड्वारं च पठेन्नित्यं सर्वदेववशङ्करम्।
सप्तवारं पठेन्नित्यं सर्वसौभाग्यदायकम्॥ १८

अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम्।
नववारं पठेन्नित्यं राजभोगमवाप्नुयात्॥ १९

दशवारं पठेन्नित्यं त्रैलोक्यज्ञानदर्शनम्।
रुद्रावृत्तिं पठेन्नित्यं सर्वसिद्धिर्भवेद्ध्रुवम्॥ २०

निर्बलो रोगयुक्तश्च महाव्याध्यादिपीडितः।
कवचस्मरणेनैव महाबलमवाप्नुयात्॥ २१

(सुदर्शनसंहितातः)

* * *

# सप्तमुखीहनुमत्कवचम्

(अथर्वणरहस्यतः)

ओं अस्य श्रीसप्तमुखीवीरहनुमत्कवचस्तोत्रमन्त्रस्य नारद ऋषिः । अनुष्टुप्छन्दः श्री सप्तमुखीकपिः परमात्मा देवता। ह्रां बीजम्। ह्रीं शक्तिः ह्रूं कीलकम्। मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः। ओं ह्रां अङ्गुष्ठाभ्यां नमः। ओं ह्रीं तर्जनीभ्यां नमः। ओं ह्रूं मध्यमाभ्यां नमः। ओं ह्रैं अनामिकाभ्यां नमः। ओं ह्रौं कनिष्ठिकाभ्यां नमः। ओं ह्रः करतलकर-पृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। अथ ध्यानम् —

वन्दे वानरसिंहसर्परिपुवाराहाश्वगोमानुषैः
युक्तं सप्तमुखैः करैर्दुमगिरिं चक्रं गदां खेटकम्।
खड्गाङ्गं हलमंकुशं फणिसुधाकुम्भौ शराब्जाभयान्
शूलं सप्तशिखं दधानममरैः सेव्यं कपिं कामदम्॥

ब्रह्मोवाच—

सप्तशीर्ष्णः प्रवक्ष्यामि कवचं सर्वसिद्धिदम्।
जप्त्वा हनुमतो नित्यं सर्वपापैः प्रमुच्यते॥ १

सप्तस्वर्गपतिः पायाच्छिखां मे मारुतात्मजः।
सप्तमूर्धा शिरोऽव्यान्मे सप्तचर्माऽलिदेशकम्॥ २

त्रिः सप्तनेत्रो नेत्रेऽव्यात्सप्तस्वरगतिःश्रुती।
नासां सप्तपदार्थोऽव्यान्मुखं सप्तमुखोऽवतु॥ ३

सप्तजिह्वस्तु रसनां रदान्सप्तहयोऽवतु।
सप्तच्छदो हरिः पातु कण्ठं बाहू गिरिस्थितः॥ ४

करौ चतुर्दशकरो भूधरोऽव्यान्ममाङ्गुलीः ।
सप्तापात्प्रातु हृदयमुदरं कुक्षिसागरः ।। ५

सप्तद्वीपपतिश्चित्तं सप्तव्याहृतिरूपवान् ।
कटिं मे सप्तसंस्थोऽर्थदायकः सक्थिनी मम ।। ६

सप्तग्रहस्वरूपी मे जानुनी जङ्घयोस्तथा ।
सप्तधान्यप्रियः पादौ सप्तपातालधारकः ।। ७

पशून्धनं च धान्यं च लक्ष्मीं लक्ष्मीप्रदोऽवतु ।
दारान् पुत्रांश्च कन्याश्च कुटुम्बं विश्वपालकः ।। ८

अनुक्तस्थानमपि पायाद्वायुसुतः सदा ।
चौरेभ्यो व्यालदंष्ट्रिभ्यः शृङ्गिभ्यो भूतराक्षसात् ।। ९

दैत्येभ्योऽप्यथ यक्षेभ्यो ब्रह्मरासक्षजाद्भयात् ।
दंष्ट्राकरालवदनो हनुमान्मां सदाऽवतु ।। १०

परशस्त्रमन्त्रयन्त्रतन्त्राग्निभ्योऽथ विद्युतः ।
रुद्रांशः शत्रुसंग्रामात्सर्वावस्थासु सर्वभृत् ।। ११

ओम् नमो भगवते सप्तवदनाय, आद्यकपिमुखाय, वीरहनुमते सर्वशत्रुसंहारणाय, ठंठंठंठंठंठंठं ओं नमः स्वाहा ।। १२

ओं नमो भगवते सप्तवदनाय, द्वितीयनारसिंहास्याय अत्युग्रतेजोवपुषे भीषणाय भयनाशनाय, हंहंहंहंहंहंहं नमः स्वाहा ।। १३

ओं नमो भगवते सप्तवदनाय तृतीयगरुडवक्त्राय वज्रदंष्ट्राय महाबलाय सर्वरोगविनाशिने मंमंमंमंमंमंमं ओं नमः स्वाहा ।। १४

ओं नमो भगवते सप्तवदनाय चतुर्थक्रोडतुण्डाय सौमित्ररक्षकाय पुत्राद्यभिवृद्धिकराय लंलंलंलंलंलंलं ओं नमः स्वाहा ।। १५

ओं नमो भगवते सप्तवदनाय पञ्चमाश्ववदनाय रुद्रमूर्तये
सर्ववशीकरणाय
सर्वागमस्वरूपाय रुंरुंरुंरुंरुंरुंरुं ओं नमः स्वाहा ॥ १६

ओं नमो भगवते सप्तवदनाय षष्ठगोमुखाय सूर्यस्वरूपाय सर्वरोगहराय
मुक्तिदात्रे ओं ओं ओं ओं ओं ओं ओं नमः स्वाहा ॥ १७

ओं नमो भगवते सप्तवदनाय सप्तममानुषमुखाय रुद्रावताराय अंजनीसुताय सकलदिग्यशोविस्तारकाय वज्रदेहाय सुग्रीवसाह्यकराय उदधिलङ्घनाय सीतासुधाकराय लङ्कादाहनाय अनेकराक्षसान्तकाय रामानन्ददायकाय अनेकपर्वतोत्पाटकाय सेतुबन्धकाय कपिसैन्यनायकाय रावणान्तकाय ब्रह्मचर्याश्रमिणे कौपीनब्रह्मसूत्रधारकाय रामहृदयाय सर्वदुष्टग्रहनिवारणाय शाकिनीडाकिनीवेतालब्रह्मराक्षसभैरवग्रह यक्षग्रहपिशाचग्रहब्रह्मग्रह-क्षत्रियग्रहवैश्यग्रह शूद्रग्रहान्त्यजग्रहम्लेच्छग्रहसर्पग्रहोच्चाटकाय मम सर्वकार्यसाधकाय सर्वशत्रुसंहारकाय सिंहव्याघ्रादिदुष्टसत्वाकर्षकाय ऐकाहिकादिविविधज्वरच्छेदकाय परयन्त्रनाशकाय सर्वव्याधिनिकृन्तकाय सर्पादिसर्वस्थावरजंगमविषस्तंभनकराय सर्वराजभयचोरभयाग्निभय-प्रशमनाय आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयनिवारणाय सर्व-विद्यासर्वसंपत्सर्वपुरुषार्थदायकाद्यकार्यसाधकाय सर्ववरप्रदाय सर्वाभीष्ट-कराय ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रः ओं नमः स्वाहा ॥ १८

य इदं कवचं नित्यं सप्तास्यस्य हनुमतः ।
त्रिसन्ध्यं जपते नित्यं सर्वशत्रुविनाशनम् ॥ १९

पुत्रपौत्रप्रदं सर्वसंपद्राज्यप्रदं परम् ।
सर्वपापहरं चायुःकीर्तिदं पुण्यवर्धनम् ॥ २०

राजानं स्ववशं नीत्वा त्रैलोक्यविजयी भवेत् ।
इदं हि परमं गोप्यं देयं भक्तियुताय च ॥ २१

ने देयं भक्तिहीनाय दत्वा स निरयं व्रजेत् ॥ २२

नामानि सर्वाण्यषडङ्गदानि रूपाणि विश्वानि च यस्य सन्ति ।
कर्माणि देवैरपि दुर्घटानि तं मारुतिं सप्तमुखं प्रपद्ये ॥ २३

## एकादशमुखहनुमत्कवचम्

लोपामुद्रोवाच—

कुम्भोद्भव दयासिन्धो श्रुतं हनुमतः परम् ।
यन्त्रमन्त्रादिकं सर्वं त्वन्मुखोदीरितं मया ॥ १

दयां कुरु मयि प्राणनाथ वेदितुमुत्सहे ।
कवचं वायुपुत्रस्य एकादशमुखात्मनः ॥ २

इत्येवं वचनं श्रुत्वा प्रियायाः प्रश्रयान्वितम् ।
वक्तुं प्रचक्रमे तत्र लोपामुद्रां प्रति प्रभुः ॥ ३

अगस्त्य उवाच—

नमस्कृत्वा रामदूतं हनुमन्तं महामतिम् ।
ब्रह्मप्रोक्तं तु कवचं शृणु सुन्दरि सादरम् ॥ ४

सनन्दनाय सुमहच्चतुराननभाषितम् ।
कवचं कामदं दिव्यं सर्वरक्षोनिबर्हणम् ॥ ५

सर्वसंपत्प्रदं पुण्यं मर्त्यानां मधुरस्वरे ।
ओं अस्य श्रीकवचस्यैकादशाचक्रस्य धीमतः ॥ ६

हनुमत्कवचमन्त्रस्य सनन्दन ऋषिः स्मृतः ।
प्रसन्नात्मा हनूमांश्च देवताऽत्र प्रकीर्तिता ॥ ७

छन्दोऽनुष्टुप् समाख्यातं बीजं वायुसुतस्तथा।
मुख्यः प्राणः शक्तिरिति विनियोगः प्रकीर्तितः ॥ ८

सर्वकामार्थसिद्ध्यर्थे जप एवमुदीरयेत्।
ओं स्फ्रें बीजं शक्तिधृक् पातु शिरो मे पवनात्मजः ॥ ९

क्रौं बीजात्मा नयनयोः पातु मां वानरेश्वरः।
क्ष्रौं बीजरूपी कर्णौ मे सीताशोकविनाशनः ॥ १०

ग्लौं बीजवाच्यो नासां मे लक्ष्मणप्राणदायकः।
वं बीजार्थश्च कण्ठं मे पातु चाक्षयकारकः ॥ ११

रां बीजवाच्यो हृदयं पातु मे कपिनायकः।
वां बीजकीर्तितः पातु बाहू मे चाञ्जनीसुतः ॥ १२

ह्रौं बीजं राक्षसेन्द्रस्य दर्पहा पातु चोदरम्।
ह्सौं बीजमयो मध्यं पातु लङ्काविदाहकः ॥ १३

ओं ह्रीं बीजधरः पातु गुह्यं देवेन्द्रवन्दितः।
रं बीजात्मा सदा पातु चोरू वारिधिलङ्घनः ॥ १४

सुग्रीवसचिवः पातु जानुनी मे मनोजवः।
पादौ पादतले पातु द्रोणाचलधरो हरिः ॥ १५

आपादमस्तकं पातु रामदूतो महाबलः।
पूर्वे वानरवक्त्रो मामाग्नेय्यां क्षत्रियान्तकृत् ॥ १६

दक्षिणे नारसिंहस्तु नैरृत्यां गणनायकः।
वारुण्यां दिशि मामव्यात्खगवक्त्रो हरीश्वरः ॥ १७

वायव्यां भैरवमुखः कौबेर्यां पातु मां सदा।
क्रोडास्यः पातु मां नित्यमीशान्यां रुद्ररूपधृक् ॥ १८

ऊर्ध्वं हयाननः पातु त्वधः शेषमुखस्तथा ।
रामास्यः पातु सर्वत्र सौम्यरूपी महाभुजः ।। १९

इत्येवं रामदूतस्य कवचं प्रपठेत्सदा ।
एकादशमुखस्यैतद्गोप्यं वै कीर्तितं मया ।। २०

रक्षोघ्नं कामदं सौम्यं सर्वसम्पद्विधायकम् ।
पुत्रदं धनदं चोग्रशत्रुसङ्घविमर्दनम् ।। २१

स्वर्गापवर्गदं दिव्यं चिन्तितार्थप्रदं शुभम् ।
एतत्कवचमज्ञात्वा मन्त्रसिद्धिर्न जायते ।। २२

चत्वारिंशत्सहस्राणि पठेच्छुद्धात्मको नरः ।
एकवारं पठेन्नित्यं कवचं सिद्धिदं पुमान् ।। २३

द्विवारं वा त्रिवारं वा पठन्नायुष्यमाप्नुयात् ।
क्रमादेकादशादेवमावर्तनजपात्सुधीः ।। २४

वर्षांते दर्शनं साक्षाल्लभते नात्र संशयः ।
यं यं चिन्तयते चार्थं तं तं प्राप्नोति पूरुषः ।। २४

ब्रह्मोदीरितमेतद्धि तवाग्रे कथितं महत् ।। २६

इत्येवमुक्त्वा वचनं महर्षिस्तूष्णींबभूवेन्दुमुखीं निरीक्ष्य ।
संहृष्टचित्ताऽपि तदा तदीयपादौ ननामातिमुदा स्वभर्तुः ।। २७

अथ मन्त्रः—

स्फ्रें क्रों क्षौं ग्लौं क्षीं क्षौं दुं हां हलौं हसौं ह्रीं रं । स्फ्रें क्रों क्षौं ग्लौं क्षीं क्षौं दुं हां ह्लौं ह्रीं रं ।

—अगस्त्यसारसंहितातः

ओं तत्सत् । ब्रह्मार्पणमस्तु

